झलि किम्? मन्यते ॥ **अनुस्वारस्य ययि परसवर्णः** ।८।४।५८। स्पष्टम् । शान्तः ॥ **वा पदान्तस्य** ।८।४।५९। त्वङ्करोषि-त्वं करोषि ॥ **मो राजि समः क्वौ** ।८।३।२५। क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥ **हे मपरे वा** ।८।३।२६। मपरे हकारे परे मस्य मो वा । किम्ह्मलयति-किंह्मलयति । **( यवलपरे यवला वा )** । कियँ ह्यः-किंह्यः, किवँ ह्वलयति-किंह्वलयति, किलँ-

---

'हरिं वन्दे' इति जायते । नश्चापदान्तस्येति । चकारान्मस्येत्यनुकृष्यते अनुस्वार इति च । यशांसीति । 'यशान्-सि' इत्यत्र "नश्चापदान्तस्य झलि" इत्यनेन पदान्तरहितस्य नकारस्य झल्प्रत्याहारान्तःपातिनि सकारे परे नस्यानुस्वारे कृते 'यशांसि' इति । 'आक्रम्स्यते' इत्यवस्थायां मकारस्य अपदान्तत्वात् "नश्चापदान्तस्य झलि" इत्यनेनैव झलि परे सत्यनुस्वारे विहिते-'आक्रंस्यते' इति जायते । स्पष्टमिति । अनुवर्त्यपदान्तराभावादिति-भावः । अनुस्वारस्य परसवर्णो भवति ययि परे इत्यर्थः । शान्त इति । 'शाम्-तः' इति स्थिते अत्र "नश्चापदान्तस्य झलि" इत्यनेन 'म्' इत्यस्यानुस्वारे कृते 'शां-तः' इति जाते "अनुस्वारस्य ययि परसवर्णः" इत्यनेन परसवर्णे नकारे विहिते 'शान्तः' इति सिद्धम् । एवमेव अङ्कितः, अञ्चितः, कुण्ठितः, गुम्फितः, इत्यत्रापि बोध्यम् । वा पदान्तस्येति । "अनुस्वारस्य ययि परसवर्णः" इति सम्पूर्णं सूत्रमनुवर्तते । 'त्वम्-करोषि' इति स्थिते "मोऽनुस्वारः" इत्यनेन पदान्तस्य मस्यानुस्वारे विहिते सति तस्य स्थाने "वा पदान्तस्य" इत्यनेन विकल्पेन परस्य ककारस्य सवर्णे क ख ग घ ङ इति सर्वस्मिन् प्राप्ते "स्थानेऽन्तरतमः" इत्यनेन अनुस्वारस्य नासिकास्थानत्वात् तत्स्थानतुल्यो ङकारो जातः । तेन 'त्वङ्करोषि' इति भवति । पक्षे-अनुस्वारात्मकम्-'त्वं करोषि' इति रूपम् । मो राजीति । म इति प्रथमान्तम् । "मोऽनुस्वारः" इत्यतो म इति स्थानषष्ठ्यन्तमनुवर्तते । समः इत्यवयवषष्ठी । प्रत्ययग्रहणपरिभाषया क्विग्रहणेन क्विप्रत्ययान्तलाभः । तदाह—क्विबन्त इत्यादिना । 'सम्-राड्' इति स्थितेऽत्र "मोऽनुस्वारः" इत्यनेन मकारस्य स्थाने अनुस्वारे प्राप्ते तं बाधित्वा "मो राजि समः क्वौ" इत्यनेन मकारस्य स्थाने म एव विधीयते । तेन 'सम्राट्' इति भवति । मकारस्य स्थाने मकारविधानमनुस्वारनिवृत्त्यर्थमिति भावः । हे मपर इति । "मोऽनुस्वारः" इत्यतः म इति षष्ठ्यन्तमनुवर्तते । "मो राजि समः क्वौ" इत्यतः म इति प्रथमान्तमनुवर्तते । मः परो यस्मादिति विग्रहस्तदाह—मपरे इत्यादिना । 'किम्—ह्मलयति' इत्यत्र "मोऽनुस्वारः" इत्यनेनानुस्वारे प्राप्ते तं प्रबाध्य "हे मपरे वा" इत्यनेन मस्य मत्वे कृते । 'किम् ह्मलयति' इति भवति । पक्षे—"मोऽनुस्वारः" इत्यनेनानुस्वारे 'किंह्मलयति' इति भवति । यवलपरे इति । यवलाः परे यस्मादिति विग्रहः । यवलपरके हकारे परे मस्य क्रमेण यवला एव वा स्युरित्यर्थः । कियँह्य इति । 'किम्—ह्यः' इत्यत्र "यवलपरे यवला वा" इत्यनेन वार्तिकेन यपरके हकारे परे "मोऽनुस्वारः" इति

ह्लादयति-किंह्लादयति ॥ नपरे नः ।८।३।२७। नपरे हकारे मस्य नो वा । किन्ह्नुते, किंह्नुते ॥ ङः सि धुट् ।८।३।२९। ङात्परस्य सस्य धुड् वा ॥ आद्यन्तौ टकितौ ।१।१।४६। टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः-षट्सन्तः ॥ ङ्णोः कुक् टुक् शरि ।८।३।२८। वा स्तः । प्राङ्क्षष्ठः-प्राङ्षष्ठः-(चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् )। प्राङ्ख्षष्ठः, सुगण्ठ्षष्ठः,

---

प्राप्तमनुस्वारं बाधित्वा मकारस्यानुनासिके यकारे विकल्पेन विहिते 'कियँ ह्यः' इति भवति । पक्षे-अनुस्वारे 'किंह्यः' इति । एवमेव-'किम्-ह्वलयति' 'किम्-ह्लादयति इत्यत्र वपरके वँ इति; लपरके लँ इति चानुनासिके कृते 'किवँ ह्वलयति' इति 'किलँ ह्लादयति' इति च भवतः । पक्षे-"मोऽनुस्वारः" इत्यनेनानुस्वारे 'किं ह्वलयति' किं ह्लादयति' च जायेते । नपरे न इति । हे इति वेति म इति चानुवर्तते । नः परो यस्मादिति विग्रहस्तदाह-नपरे हकार इत्यादिना । किन्ह्नुते इति । 'किम्-ह्नुते' इत्यत्र "नपरे नः" इत्यनेन सूत्रेण नपरे हकारे परे मस्य नत्वे कृते 'किन्ह्नुते' इति रूपम् । पक्षे—मस्यानुस्वारे 'किंह्नुते' इति । ङः सीति । ङः इति पञ्चमी । 'सि' इति सप्तमी । अत्र "तस्मादित्युत्तरस्य" इति "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति च परिभाषयोः प्राप्तयोः "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् इति न्यायेन "तस्मादित्युत्तरस्य" इति परिभाषया सीति सप्तमी षष्ठी सम्पद्यते-ङात्परस्य सस्येति । "हे मपरे वा" इत्यतो वेत्यनुवर्तते तदाह-ङात्परस्येत्यादिना । षट्त्सन्त इति । 'षड्-सन्तः' इत्यत्र "ङः सि धुट्" इत्यनेन ङात् परस्य धुट्प्राप्तिः, स क्व स्यादित्याशङ्कायामाह-"आद्यन्तौ टकितौ" इति टित्वात्सस्यादौ धुटि जाते 'षड् धुट् सन्तः, इति जातम् । अत्र टस्य "हलन्त्यम्" इत्यनेनेत्संज्ञायां धकारोत्तरवर्तिन उकारस्य च "उपदेशेऽजनुनासिक इत्" इत्यनेनेत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे च कृते 'षड् ध् सन्तः' इति भूतम् । अत्र "खरि च" इत्यनेन धस्य तकारे डकारस्य टकारे च कृते 'षट्त्सन्तः' इति जातम् । धुडभावपक्षे-"खरि च" इति डस्य चर्त्वे टत्वे कृते 'षट्सन्तः' इति जायते । अत्र "ष्टुना ष्टुः" इत्यनेन ष्टुत्वं न शङ्क्यम् । "न पदान्ताट्टोरनाम्" इति निषेधात् । ङ्णोः कुगिति । "हे मपरे वा" इत्यतो वेत्यनुवर्तते । कुक् च टुक् चेति समाहारद्वन्द्वः । ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि इत्यर्थः । उभयत्र ककार इत्संज्ञकः । उकार उच्चारणार्थः । 'प्राङ्-षष्ठः' इति स्थिते, अत्र "ङ्णोः कुक्टुक् शरि" इत्यनेन ङकारस्य कुगागमे "आद्यन्तौ टकितौ" इत्यनेन ङकारस्यान्ते जाते 'प्राङ् कुक् षष्ठः' इति निष्पन्ने सति 'क्' इत्यस्य "हलन्त्यम्" इत्यनेनेत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे च 'प्राङ्क्षष्ठः' इति जाते । तत्र विकल्पेन "चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्" इति वार्तिकेन खत्वे विहिते 'प्राङ्ख्षष्ठः' इत्यभवत् । द्वितीयाक्षराभावे क्ष्संयोगे 'प्राङ्क्षष्ठः' इति भवति । कुगागमाभावे 'प्राङ्षष्ठः' इति । एवम् 'सुगण्-षष्ठः' इति दशायां "ङ्णोः

सगण्ट्षष्ठः--सुगण्षष्ठः । **नश्च ।८।३।३०।** नान्तात्परस्य सस्य धुड् वा । सन्त्सः-सन्सः ॥ **शि तुक् ।८।३।३१।** पदान्तस्य नस्य शे परे तुग्वा । सञ्छम्भुः-सञ्च्छम्भुः-सञ्च्शम्भुः-सञ्शम्भुः ॥ **ङमो ह्रस्वादचि ङमुण्नित्यम् ।८।३।३२।** ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुट् । प्रत्यङ्ङात्मा,

---

कुक्टुक् शरि" इत्यनेन णकारस्य टुगागमे "आद्यन्तौ टकितौ" इत्यनेन अन्तावयवे जाते 'सुगण्-टुक् षष्ठः' इति जाते उकारे निवृत्ते ककारस्येत्संज्ञायां लोपे च 'सुगण्ट्—षष्ठः' इति । तत्र "चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्" इत्यनेन द्वितीयाक्षरे ठकारे विकल्पेन जाते 'सुगण् ठ् षष्ठः" इत्यभवत् । द्वितीयाक्षराभावे 'सुगण्ट्षष्ठः' इति भवति । टुगागमाभावे 'सुगण् षष्ठः' इति रूपम्बोध्यम् । नश्चेति । सि धुट् इति, वेति चानुवर्तते । न इति पञ्चमी, "तस्मादित्युत्तरस्य" इति परिभाषया सीति षष्ठी सम्पद्यते तदाह—नान्तात्परस्येत्यादिना । सन्त्स इति । 'सन्—सः' इत्यवस्थायाम् "नश्च" इति सूत्रेण धुटि विहिते क भवति इति शङ्कायाम् "आद्यन्तौ टकितौ" इत्यनेन सस्याद्यावयवे 'सन् धुट् स' इति जाते । तत्र उकारस्य निवृत्तिः । टकारस्य "हलन्त्यम्" इत्यनेनेत्संज्ञायाम् "तस्य लोपः" इत्यनेन लोपे च 'सन् ध् स इति जाते । तत्र "खरि च" इत्यनेन धकारस्य चर्त्वेन तकारे कृते सति 'सन्त्सः' इति जायते । धुडागमाभावे 'सन्सः' इति भवति । शि तुगिति । पूर्वसूत्रात् न इति पञ्चम्यन्तमनुवृत्तमिह षष्ठ्यन्तमाश्रीयते; शब्दाधिकाराश्रयणात् । 'पदस्य' इत्यधिकृतम् अवयवषष्ठ्यन्तमाश्रीयते । "हे मपरे वा" इत्यतो वेत्यनुवर्तते तदाह—पदान्तस्य नस्येत्यादिना । 'सन्—शम्भुः' इत्यत्र कस्य सूत्रस्य प्राप्तिः ? "शि तुक्" इत्यस्य, तेन पदान्तनस्य तुकि कृते "आद्यन्तौ टकितौ" इत्यनेन नस्यान्तावयवे कृते 'सन् तुक् शम्भुः' इति जाते अत्र "हलन्त्यम्" इत्यनेन कस्येत्संज्ञायाम् "तस्य लोपः" इत्यनेन लोपे उकारनिवृत्तौ सत्याम् 'सन् त् शम्भुः' इति जाते "शश्छोऽटि" इत्यनेन शम्भुरित्यस्य शस्य छत्वे कृते 'सन् त् छम्भुः' इति जाते "स्तोः श्चुना श्चुः" इति तस्य चत्वं पुनः "स्तोः श्चुना श्चुः" इति नस्य ञत्वे च विहिते 'सञ्च्छम्भुः' इति जायते । यत्र "झरो झरि सवर्णे" इति वैकल्पिकचलोपः, तत्र 'सञ्छम्भुः' इति । चलोपाभावे च 'सञ्च्छम्भुः' इति । "शश्छोऽटि" इति छत्वाभावे "स्तोः श्चुना श्चुः" इति तस्य चत्वे पुनः "स्तोः श्चुना श्चुः" इत्यनेन नस्य ञत्वे च विहिते 'सञ्च् शम्भुः' इति तुकश्चाभावे नस्य श्चुत्वे च कृते 'सञ् शम्भुः' इति रूपचतुष्टयमत्र बोध्यम् । तथाहि सङ्ग्रहः—"ञछौ ञचछा ञचशा ञशाविति चतुष्टयम् । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्" । इति । ङमो ह्रस्वादिति । ङम्-प्रत्याहारः । ङमः इति पञ्चम्यन्तम् । तद्विशेषणत्वात्पदस्येत्यधिकृतं पञ्चम्यन्ततया विपरिणम्यते । ङम इति च ह्रस्वादिति विशेषणसम्बन्धमनुभूय पदविशेषणत्वं भजत् तदन्तपरम् । ङम इति पञ्चमीबलात् अचीति सप्तमी षष्ठ्यर्थे । तदाह—ह्रस्वात्पर इत्यादिना । ङमुडागम इति । टकार इत्, उकार उच्चारणार्थः । संज्ञायां कृतं

## वर्णसमाम्नायस्थान्त्येत्सञ्ज्ञकवर्णजन्मनामष्टाध्यायीव्यवहृता-नाम्प्रत्याहाराणां कोष्ठकानि ।

| | | | | | |
|---|---|---|---|---|---|
| १ अक् | ८ अश् | १५ ऐच् | २२ जश् | २९ भष् | ३६ रल् |
| २ अच् | ९ इक् | १६ खय् | २३ झय् | ३० मय् | ३७ वल् |
| ३ अट् | १० इच् | १७ खर् | २४ झर् | ३१ यञ् | ३८ वश् |
| ४ अण् | ११ इण् | १८ ङम् | २५ झल् | ३२ यण् | ३९ शर् |
| ५ अण् | १२ उक् | १९ चय् | २६ झश् | ३३ यम् | ४० शल् |
| ६ अम् | १३ एङ् | २० चर् | २७ झष् | ३४ यय् | ४१ हल् |
| ७ अल् | १४ एच् | २१ छव् | २८ बश् | ३५ यर् | ४२ हश् |

## स्वराणामष्टादशभेदज्ञापकम् ।

| क्रमराशि | अ इ उ ऋ ऌ | | अ इ उ ऋ ए ओ ऐ औ | | अ इ उ ऋ ऌ ए ओ ऐ औ |
|---|---|---|---|---|---|
| १ | ह्रस्वोदात्तानुनासिकः | ७ | दीर्घोदात्तानुनासिकः | १३ | प्लुतोदात्तानुनासिकः |
| २ | ह्रस्वोदात्राननुनासिकः | ८ | दीर्घोदात्ताननुनासिकः | १४ | प्लुतोदात्ताननुनासिकः |
| ३ | ह्रस्वानुदात्तानुनासिकः | ९ | दीर्घानुदात्तानुनासिकः | १५ | प्लुतानुदात्तानुनासिकः |
| ४ | ह्रस्वानुदात्ताननुनासिकः | १० | दीर्घानुदात्ताननुनासिकः | १६ | प्लुतानुदात्ताननुनासिकः |
| ५ | ह्रस्वस्वरितानुनासिकः | ११ | दीर्घस्वरितानुनासिकः | १७ | प्लुतस्वरितानुनासिकः |
| ६ | ह्रस्वस्वरिताननुनासिकः | १२ | दीर्घस्वरिताननुनासिकः | १८ | प्लुतस्वरिताननुनासिकः |

## आभ्यन्तरबाह्यप्रयत्नज्ञानार्थं कोष्ठकम् ।

| बाह्याः | विवार श्वास अघोष अल्पप्राण | विवार श्वास अघोष महाप्राण | | संवार, नाद, घोष, अल्पप्राण | | | | संवार नाद घोष महाप्राण | |
|---|---|---|---|---|---|---|---|---|---|
| | | | | | उदात्त, अनुदात्त स्वरित | | | | |
| अक्षराणि | क च ट त प | ख छ ठ थ फ | श ष स | ग ङ ज ञ ड ण द न ब म | अ | इ ए उ ओ ऋ ऐ लृ औ | य र ल व | घ झ ढ ध भ | ह |
| आभ्यन्तर प्र० | स्पृष्ट | | ईषद्विवृत | स्पृष्ट | संवृत | विवृत | ईषत्स्पृष्ट | स्पृष्ट | ईषद्विवृत |

## वर्णस्थानानि ।

| | | |
|---|---|---|
| अ | क ख ग घ ङ ह | कण्ठः. |
| इ | च छ ज झ ञ य श | तालु. |
| ऋ | ट ठ ड ढ ण र ष | मूर्धा. |
| लृ | त थ द ध न ल स | दन्ताः. |
| उ | प फ ब भ म ᳶप | ओष्ठौ. |
| | ञ म ङ ण न | नासिका. |
| ए ऐ | | कण्ठतालु. |
| ओ औ | | कण्ठोष्ठम् . |
| व | | दन्तोष्ठम् . |
| ᳵक | | जिह्वामूलम् . |
| ं | | नासिकाः |

सुगण्णीशः, सन्नच्युतः ॥ समः सुटि ।८।३।५। समो रुः सुटि ॥ अत्रानुनासिकः पूर्वस्य तु वा ।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा ॥ अनुनासिकात्परोऽनुस्वारः ।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ॥ खरवसानयोर्विसर्जनीयः ।८।३।१५। खरि अवसाने च पदान्तस्य रेफस्य विसर्गः । ( सम्पुंकानां सो वक्तव्यः ) । सँस्कर्ता–संस्कर्ता ॥ पुमः खय्यम्परे ।८।३।६। अम्परे खयि पुमो रुः । पुँस्कोकिलः–पुंस्कोकिलः ॥ नश्छ-

---

टित्वमानर्थक्यात्तदङ्गन्यायात् संज्ञिभिः सम्बध्यते । ततश्च ङुट् णुट् नुट् इति त्रय आगमाः फलिताः इति भावः । प्रत्यङ्ङात्मेति । 'प्रत्यङ्–आत्मा' इत्यत्र "ङमो ह्रस्वादचि ङमुण् नित्यम्" इत्यनेन ह्रस्वात्परस्य ङम्प्रत्याहारान्तःपातिनो ङकारात्परस्याच्प्रत्याहारान्तर्वर्तिन आकारस्य टित्वादादौ ङमुटि जाते प्रत्यङ् ङुट् आत्मेति जातम्, उकारस्योच्चारणार्थत्वात्तन्निवृत्तौ टकारस्येत्संज्ञायां लोपे च 'प्रत्यङ् ङ् आत्मा' इति तत्र सर्वस्मिन् संयुक्ते 'प्रत्यङ्ङात्मा' इति रूपम्भवति । एवं 'सुगण्–ईशः' इत्यत्र "ङमो ह्रस्वादचि ङमुण्नित्यम्" इत्यनेन 'ई' इत्यस्य णुटागमे उकारस्यानुबन्धस्य च निवृत्तौ संयोगे च सति "सुगण्णीशः" इति भवति । एवमेव 'सन्–अच्युतः' इति दशायां "ङमो ह्रस्वादचि०" इत्यनेन पूर्ववत् नुटि 'सन्नच्युतः' इति सिध्यति । समः सुटीति । सम इति षष्ठ्यन्तम् । "मतुवसो रु सम्बुद्धौ" इत्यतो रुग्रहणमनुवर्तते तदाह–समो रुः स्यात् सुटीति । सँस्कर्तेति । 'सम्–कर्ता' इत्यत्र "सम्परिभ्यां करोतौ भूषणे" इति सूत्रेण सुडागमेऽनुबन्धलोपे सति, 'सम् स् कर्ता' इति जाते अत्र "समः सुटि" इति सुट्सम्बन्धिनि सकारे परे सर्वस्य समो रुत्वे प्राप्ते "अलोऽन्त्यस्य" इति योगेनान्त्यस्य मस्य रुत्वे उकारलोपे च विहिते 'स र् स् कर्ता' इति भूते "अत्रानुनासिकः पूर्वस्य तु वा" इत्यनेन रोः पूर्वमनुनासिके जाते 'सँर् स् कर्ता' इति जाते, यस्मिन् पक्षे वाग्रहणादनुनासिको नाभूत् तस्मिन् पक्षे "अनुनासिकात्परोऽनुस्वारः" इति योगेनानुस्वारे कृते 'संर् स् कर्ता' इति जाते अत्र "खरवसानयोर्विसर्जनीयः" इत्यनेन खर्प्रत्याहारान्तःपातिनि सकारे परे रेफस्य विसर्गे विहिते 'सँः कर्ता, संः कर्ता' इति जाते अत्र "विसर्जनीयस्य सः" इति विसर्जनीयस्य सत्वे प्राप्ते "वा शरि" इति विसर्जनीयस्य विसर्जनीयत्वे च लब्धे इहोभयमपि प्रबाध्य "सम्पुंकानां सो वक्तव्यः" इति वार्तिकेन विसर्गस्य सत्वे कृते 'सँस्कर्ता' इति 'संस्कर्ता' इति च रूपद्वयं सिध्यति । पुमः खय्यम्पर इति । "मतुवसो रु सम्बुद्धौ" इत्यतो रुग्रहणमनुवर्तते अम् परो यस्मादिति विग्रहस्तदाह–अम्परे खयीति । पुंस्कोकिल इति । पुमांश्चासौ कोकिलश्चेति कर्मधारयसमासः । 'पुम्–कोकिलः' इत्यत्र "पुमः खय्यम्परे" इत्यनेन पुमो मस्य रुत्वे रेफोत्तरवर्त्युकारलोपे 'पुर् कोकिल' इति जाते "अत्रानुनासिकः पूर्वस्य तु वा" इत्यनुनासिके पुँर्कोकिलः, पक्षे—"अनुनासिकात्परोऽनुस्वारः" इत्यनेनानुस्वारे 'पुंर् कोकिल' इति भूते अत्र "खरवसानयोर्विसर्जनीयः" इति

व्यप्रशान् ।८।३।७। अम्परे छवि नान्तस्य पदस्य रुः ॥ विसर्जनीयस्य सः ।८।३।३४। खरि । चक्रिंश्त्रायस्व–चक्रिंस्त्रायस्व । अप्रशान् किम् ? प्रशान्तनोति । पदान्तस्येति किम् ? हन्ति ॥ नॄन्पे ।८।३।१०। नॄनित्यस्य रुर्वा पे ॥ कुप्वोः ⌣क⌣पौ च ।८।३।३७। कवर्गे पवर्गे च विसर्गस्य ⌣क ⌣पौ स्तः । चाद्विसर्गः । नॄँ ⌣पाहि–नॄं ⌣ पाहि–नॄँ :पाहि–नॄं :पाहि–नॄन्पाहि ॥ तस्य परमाम्रेडितम् ।८।१।२। द्विरुक्तस्य परमाम्रेडितं स्यात् ॥ कानाम्रेडिते ।८।३।१२। कान्नकारस्य रुः

---

रेफस्य विसर्गत्वे "कुप्वो⌣क⌣पौ च" इत्यनेन जिह्वामूलीये प्राप्ते तं बाधित्वा "सम्पुंकानां सो वक्तव्यः" इति विसर्गस्य सत्वे कृते 'पुँस्कोकिलः' 'पुंस्कोकिलः' इति रूपद्वयं सिध्यति । नश्छव्यप्रशानिति । न इति षष्ठ्यन्तं पदस्येत्यधिकृतस्य विशेषणम् । तदन्तविधिः । अम्परे इति रु इति चानुवर्तते तदाह–अम्पर इत्यादिना । चक्रिंस्त्रायस्वेति । 'चक्रिन्–त्रायस्व' इति स्थिते "नश्छव्यप्रशान्" इत्यनेन नान्तस्य पदस्य चक्रिन् इत्यस्य रुत्वे प्राप्ते "अलोऽन्त्यस्य" इत्यनेन 'न्' इत्यस्य स्थाने रु कृते अम्परकछवप्रत्याहारान्तःपातिनि ककारे परे । तथा 'चक्रिरु त्रायस्व' इति जाते रेफोत्तरवर्त्युकारस्येत्संज्ञायां लोपे च 'चक्रिर् त्रायस्व' इति जाते । अत्र "अत्रानुनासिकः पूर्वस्य तु वा" इति अनुनासिके, पक्षे–"अनुनासिकात्परोऽनुस्वारः" इत्यनुस्वारे च 'चक्रिँर् त्रायस्व' 'चक्रिंर् त्रायस्व' इति जाते ' खरवसानयोर्विसर्जनीयः" इति उभयत्र रेफस्य विसर्गे कृते सति "विसर्जनीयस्य सः" इत्यनेन विसर्गस्य सत्वे 'चक्रिँस्त्रायस्व' 'चक्रिंस्त्रायस्व' इति रूपद्वयं बोध्यम् । अप्रशान् किमिति । 'प्रशान्–तनोति' इत्यत्र सूत्रार्थसमन्वयात् नकारस्य रुत्वं प्राप्तम् , तन्नेष्टमिति शास्त्रे 'अप्रशान्' इति पर्युदस्यते । नॄन् पे इति । नॄन् इति द्वितीयान्तं शब्दस्वरूपपरस्त्वोध्यम् । तच्च षष्ठ्यन्तम् । षष्ठ्याः सौत्रो लुक् । नलोपाभावोऽपि सौत्र एव । "मतुवसो रु" इत्यतो रु इत्यनुवर्तते । "उभयथर्क्षु" इत्यत उभयथेत्यनुवर्तते । कदाचिद्भवति, कदाचिन्न भवतीत्येवमुभयथा रुः प्रत्येतव्य इत्यर्थः । विकल्प इति यावत् । तदाह–नॄनित्यस्येत्यादिना । नॄँ ⌣पाहीति । 'नॄन्–पाहि' इत्यत्र "नॄन् पे" इत्यनेन नस्य रुत्वे उकारलोपे "अत्रानुनासिकः पूर्वस्य तु वा" इत्यनुनासिके, पक्षे–"अनुनासिकात्परोऽनुस्वारः" इत्यनुस्वारे "खरवसानयोर्विसर्जनीयः" इति विसर्गे "कुप्वोः⌣क⌣पौ च" इत्युपध्मानीये च नॄँ ⌣पाहि, नॄं ⌣पाहि, इति । उपध्मानीयाभावे सति विसर्गे 'नॄँः पाहि' 'नॄंः पाहि' इति । पक्षे–'नॄन्पाहि' इति पञ्च रूपाणि । सूत्रे पे इत्यत्राकार उच्चारणार्थः । तेन 'नॄन् पुनाति' इत्यादावपि पञ्च रूपाणि बोध्यानि । कानाम्रेडित इति । कानिति द्वितीयान्तं शब्दस्वरूपपरं षष्ठ्यन्तम् । षष्ठ्याश्च सौत्रो लुक् । नलोपाभावोऽपि सौत्र एव । "अलोऽन्त्यस्य"इति परिभाषया कान्शब्दान्तस्येति लभ्यते । रु इत्यनुवर्तते । तदाह—कान्नकारस्येत्यादिना । कान् इत्यस्य वीप्सायां द्विर्वचने 'कान्–कान्' इति स्थिते प्रथमनकारस्य "कानाम्रेडिते" इत्यनेन रुत्वे उकारलोपे

स्यादाम्रेडिते । काँस्कान्-कांस्कान् ॥ छे च ।६।१।७३। ह्रस्वस्य छे तुगागमः । शिवच्छाया ॥ पदान्ताद्वा ।६।१।७६। दीर्घात्पदान्ताच्छे तुग्वा । लक्ष्मीच्छाया-लक्ष्मीछाया ॥ इति हल्सन्धिप्रकरणम् ॥

---

## ॥ अथ विसर्गसन्धिप्रकरणम् ॥

विसर्जनीयस्य सः ।८।३।३४। खरि । विष्णुस्त्राता ॥ वा शरि ।८।३।३६। शरि विसर्गस्य विसर्गो वा । हरिः शेते-हरिश्शेते ॥ ससजुषो रुः ।८।२।६६।

---

"अत्रानुनासिकः पूर्वस्य तु वा" इत्यनुनासिके 'काँर् कान्' इति जाते पक्षे-"अनुनासिकात्परोऽनुस्वारः" इत्यनुस्वारे कांर् कान्' इति भूते अत्र "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गे "कुप्वो ≍क≍पौ च" इत्यनेन जिह्वामूलीये च प्राप्ते तं प्रबाध्य "सम्पुंकानां सो वक्तव्यः" इति वार्तिकेन सत्वे च कृते 'काँस्कान्' 'कांस्कान्' इति । छे चेति । "ह्रस्वस्य पिति कृति तुक्" इत्यतो ह्रस्वस्येति तुगिति चानुवर्तते । संहितायामित्यधिकृतम् । तदाह-ह्रस्वस्येत्यादिना । शिवच्छायेति । 'शिव-छाया' इत्यवस्थायां "छे च" इति सूत्रेण ह्रस्वस्य 'शिव' इत्यत्रस्थवकारोत्तरवर्त्यकारस्य तुक् प्राप्तः छे परे सति । स च कित्वाद् "आद्यन्तौ टकितौ" इत्यनेन अन्तावयवो जातः । तत्र "हलन्त्यम्" इत्यनेन ककारस्येत्संज्ञायाम् "तस्य लोपः" इत्यनेन लोपे उकारस्य निवृत्तौ 'शिव त् छाया' इति जाते । इह "स्तोः श्चुना श्चुः" इत्यनेन तकारस्य चत्वे विहिते 'शिवच्छाया' इति सिद्धम् । एवमेव स्वच्छायेत्यत्र बोध्यम् । पदान्ताद्वेति । तुक्, छे, दीर्घात्, इत्यनुवर्तते । तदाह-दीर्घात्पदान्तादित्यादिना । अत्र दीर्घस्यैवाय तुक् बोध्यः । न च "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" इति परिभाषया छकारस्यात्तावयवस्तुक् स्यादिति वाच्यम् । "सेनासुराच्छाया" इतिपाणिनीयसूत्रनिर्देशेन तस्याः प्रबाधनात् । लक्ष्मीच्छायेति । 'लक्ष्मी—छाया' इत्यवस्थायाम् "पदान्ताद्वा" इत्यनेन तुकि उको लोपे "स्तोः श्चुना श्चुः" इत्यनेन तस्य चत्वे 'लक्ष्मीच्छाया' इति निष्पन्नम् । तुगभावे च 'लक्ष्मीछाया' इति ॥ इति हल्सन्धिप्रकरणम् ॥

विष्णुस्त्रातेति । 'विष्णुः-त्राता' इति स्थिते "विसर्जनीयस्य सः" इति सूत्रेण खर्प्रत्याहारान्तःपातिनि तकारे परे विसर्गस्य सत्वे कृते 'विष्णुस्त्राता' इति रूपम् । वा शरीति । विसर्जनीयस्येति, विसर्जनीय इति चानुवर्तते । विसर्गस्य विसर्गविधानञ्च तस्य सत्वपरिसंख्यानार्थम् । वाग्रहणाच्च सत्वपरिसंख्यानं पाक्षिकम् । तदाह—शरि परे इत्यादिना । हरिः शेते इति । 'हरिः शेते' इत्यत्र "वा शरि" इति सूत्रेण शर्प्रत्याहारान्तःपातिनि शकारे परे सति विसर्गस्य विसर्गे विहिते 'हरिःशेते' इति रूपम् । पक्षे—"विसर्जनीयस्य सः" इत्यनेन विसर्गस्य सत्वे विहिते हरिस् शेते इति जाते, तत्र "स्तोः श्चुना श्चुः" इत्यनेन सकारस्य शकारे च कृते 'हरिश्शेते' इति रूपम् । ससजुष

पदान्तस्य सस्य सजुषश्च रुः स्यात् ॥ **अतो रोरप्लुतादप्लुते ।६।१।११३।** अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ॥ **हशि च ।६।१।११४।** तथा । शिवो वन्द्यः ॥ **भोभगोअघोअपूर्वस्य योऽशि ।८।३।१७।** एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह—देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते । **हलि सर्वेषाम् ।८।३।२२।** भो भगो अघो अपूर्वस्य यस्य लोपः स्याद्धलि । भो देवाः, भगो नमस्ते, अघो याहि ॥ **रोऽसुपि ।८।२।६९।** अह्नो

---

इति । पदस्येत्यधिकृतं सकारेण सजुष्शब्देन च विशेष्यते । अतस्तदन्तविधिः । सकारान्तं सजुष्शब्दान्तं च यत्पदं तस्य रुः स्यादिति । स च "अलोऽन्त्यस्य" इति परिभाषया अन्त्यस्य भवति । ततश्च फलितमाह—पदान्तस्य सस्येत्यादिना । अतो रोरिति । "ऋत उत्" इत्यतः उदित्यनुवर्तते । अतः इति पञ्चमी । "एङः पदान्तादति" इत्यतोऽतीत्यनुवर्तते तदाह–अप्लुतादित्यादिना । शिवोऽर्च्य इति । 'शिवस्–अर्च्यः' इत्यवस्थायां "ससजुषो रुः" इति सस्य रुत्वे "अतो रोरप्लुतादप्लुते" इति सूत्रेण पूर्वपरयोः स्थाने गुणे विहिते 'शिवो अर्च्यः' इति जाते "एङः पदान्तादति" इति सूत्रेणार्च्य इत्यस्याकारस्य पूर्वरूपादेशे च विहिते 'शिवोऽर्च्यः' इति सिद्धम् । हशि चेति । अतो रोरप्लुतादिति पदत्रयं पूर्वसूत्रादनुवर्तते । "ऋत उत्" इत्यतः उदिति च, तेन अप्लुतादतः परस्य रोरुः स्याद्धशि इति सूत्रार्थः । शिवो वन्द्य इति । 'शिवस्–वन्द्यः' इत्यत्र "ससजुषो रुः" इत्यनेन सस्य रुत्वे "हशि च" इत्यनेन हश्प्रत्याहारान्तःपातिनि वन्द्यघटकवकारे परे रोरुत्वे "आद्गुणः" इत्यनेन पूर्वपरयोः स्थाने गुणे च कृते 'शिवो वन्द्यः' इति रूपम् ॥ भो भगो इति । "रोऽसुपि" इत्यतो रोरित्यनुवर्तते । भो भगो अघो अ इत्येतेषां द्वन्द्वः । एते पूर्वे यस्मादिति बहुव्रीहिः । पूर्वशब्दश्च प्रत्येकं सम्बध्यते । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नियमात् । तेन भोपूर्वकस्य, भगोपूर्वकस्य, अघोपूर्वकस्य, अवर्णपूर्वकस्य च रोर्यादेशः स्यादशि इति सूत्रार्थः । देवा इहेति । 'देवास्–इह' इति दशायां "ससजुषो रुः" इति सूत्रेण सस्य रुत्वे "भोभगोअघोअपूर्वस्य योऽशि" इति सूत्रेण रोर्यादेशे 'देवाय् इह' इति जाते तत्र "लोपः शाकल्यस्य" इत्यनेन यलोपे 'देवा इह' इति जायते । शाकल्यग्रहणात्पक्षे 'देवायिह' इति । 'भोस्–देवाः' इत्यत्र "ससजुषो रुः" इति सस्य रुत्वे "भोभगोअघोअपूर्वस्य योऽशि" इत्यनेन रोर्यत्वे "हलि सर्वेषाम्" इति यलोपे च 'भो देवा' इति रूपम् । 'भगोस्–नमस्ते' इति दशायां "ससजुषो रुः" इति सस्य रुत्वे "भोभगो अघो०" इति रोर्यत्वे "हलि सर्वेषाम्" इति यलोपे च 'भगो नमस्ते' इति जायते । 'अघोस्–याहि' इत्यत्र "ससजुषो रुः" इति सस्य रुत्वे "भोभगोअघोअपूर्वस्य योऽशि" इति रोर्यादेशे "हलि सर्वेषाम्" इति यलोपे च कृते 'अघो याहि' इति रूपं सिद्धम् । रोऽसुपीति । रः असुपीति च्छेदः । 'अहन्' इति सूत्रमनुवर्तते । तच्च लुप्तषष्ठीकं पदम् । तदाह—"अह्नो रेफादेश इत्या-

रेफादेशो न तु सुपि । अहरहः, अहर्गणः ॥ रो रि ।८।३।१४। रेफस्य रेफे परे लोपः ॥ ढ्रलोपे पूर्वस्य दीर्घोऽणः ।६।३।१११। ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः । पुना रमते, हरी रम्यः, शम्भू राजते । अणः किम् ? तृढः, वृढः । मनस् रथ इत्यत्र रुत्वे कृते "हशि च" इत्युत्वे "रो रि" इति लोपे च प्राप्ते ॥ विप्रतिषेधे परं कार्यम् ।१।४।२। तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते ।

---

दिना । अहरह इति । "नित्यवीप्सयोः" इति द्विर्वचनम् । 'अहन् अहन्' इति स्थिते "रोऽसुपि" इत्यनेन सर्वस्याहन् शब्दस्य रेफादेशे प्राप्ते "अलोऽन्त्यस्य" इति परिभाषया उभयत्राऽन्त्यस्य नस्य जाते अहर्-अहर् इति जाते तत्र "खरवसानयोर्विसर्जनीयः" इत्यन्त्यस्य विसर्गे कृते च संयोगे-'अहरहः' इति भवति । 'अहन्-गणः' अत्र "रोऽसुपि" इति सर्वस्य रेफादेशे प्राप्ते "अलोऽन्त्यस्य" इति परिभाषया अन्त्यस्य विहिते सयुक्ते च कृते 'अहर्गणः' इति रूपम् । रो रीति । रः इति षष्ठी । "ढो ढे लोपः" इत्यतो लोप इत्यनुवर्तते तदाह-रेफस्येति । ढ्रलोप इति । ढ् च रेफश्च ढ्रौ तौ लोपयतीति ढ्रलोपः । ण्यन्तात्कर्मण्युपपदे अण्, उपपदसमासः । ढलोपनिमित्तं रेफलोपनिमित्तञ्च विवक्षितम् । तच्च ढकाररेफात्मकमेव । "ढो ढे लोपः" "रो रि" इति तयोरेव ढ्रलोपनिमित्तत्वात् । तथा च ढलोपनिमित्ते ढकारे रेफलोपनिमित्ते रेफे च परतः पूर्वस्याणो दीर्घः इति फलति तदाह—ढरेफयोरित्यादिना । पुना रमते इति । 'पुनर्-रमते' इति स्थिते "रो रि" इत्यनेन रेफस्य लोपे 'पुन रमते' इति जाते, अत्र "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति सूत्रेणात्र लोपनिमित्ते रेफे परे पूर्वाण्रूपस्य नकारोत्तरवर्तिनोऽकारस्य दीर्घे च विहिते 'पुना रमते' इति सिद्धम् । 'हरिस्-रम्यः' इत्यत्र "ससजुषो रुः" इत्यनेन सस्य रुत्वे अनुबन्धलोपे 'हरिर् रम्यः' इति जाते तत्र "रो रि" इत्यनेन रेफस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यनेन दीर्घे च कृते 'हरी रम्यः' इति सिद्धम् । 'शम्भुस्-राजते' अत्र "ससजुषो रुः" इत्यनेन रुत्वे उकारस्येत्संज्ञायां लोपे च 'शम्भुर् राजते' इति जाते तत्र "रो रि" इत्यनेन रेफस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोणः" इत्यनेनोकारस्य दीर्घे 'शम्भू राजते' इति भवति। तृहू हिंसायाम् वृहू उद्यमने । आभ्यां क्तप्रत्यये "हो ढः" इति ढत्वे "झषस्तथोः" इति तकारस्य धत्वे तस्य ष्टुत्वेन ढकारे 'तृढ् ढ' 'वृढ् ढ' इति जाते अत्र "ढो ढे लोपः" इत्यनेन पूर्वढस्य लोपे सति "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यस्मिन् सूत्रे अण्ग्रहणाभावे ढलोपनिमित्ते ढकारे परे पूर्वस्य ऋकारस्य दीर्घे प्राप्ते तन्मा भूत् इति 'अण् ग्रहणमत्र कृतम् । तेनात्र न दीर्घस्तदेवाह—अणः किम् ? तृढः वृढ इति । विप्रतिषेध इति । विप्रतिपूर्वात् सेधतेर्घञि उपसर्गवशात् परस्परविरोधे विप्रतिषेधशब्दः । विरोधश्च तुल्यबलयोरेव लोकसिद्धस्तदाह—तुल्यबलेति । द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र लक्ष्ये युगपत्सम्भवस्तुल्यबलविरोधः । कार्यस्य परत्वं परशास्त्रविहित-

"पूर्वत्रासिद्धम्" इति "रो रि" इत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ॥ **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।६।१।१३२।** अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि, न तु नञ्समासे । एष विष्णुः, स शम्भुः । अकोः किम् ? एषको रुद्रः । अनञ्समासे किम् ? असश्शिवः । हलि किम् ? एषोऽत्र ॥ **सोऽचि लोपे चेत्पाद-**

---

त्वम् । मनोरथ इति । 'मनस्-रथः' इति स्थिते "ससजुषो रुः" इति पदान्तस्य सस्य रुत्वे "हशि च" इति रोरुत्वे प्राप्ते "रो रि" इति रेफस्य लोपे च प्राप्ते तर्हि प्राक् केन भाव्यमिति शङ्कायाम् "विप्रतिषेधे परं कार्यम्" इति सूत्रेण परं कर्तव्यम् । तत्र "हशि च" इति सूत्रं षष्ठाध्यायस्थं "रो रि" इति चाष्टमाध्यायस्थम् इति "हशि च" इत्यपेक्षया "रो रि" इत्यस्य परत्वम्, इति "रो रि" इत्यनेन रेफस्य लोपे प्राप्ते । तत्र "पूर्वत्रासिद्धम्" इत्यधिकारसूत्रेण सपादसप्ताध्यायीस्थसूत्रदृष्ट्या त्रैपादिकस्य "रो रि", इत्यस्यासिद्धत्वप्रतिपादनात् न "रो रि" इत्यनेन रेफस्य लोपः, किन्तु "हशि च" इत्यनेन रोरुत्वे 'मन उ रथः' इति जाते । तत्र "आद्गुणः" इत्यनेन पूर्वपरयोः स्थाने ओकाररूपे गुणे कृते 'मनोरथः' इति सिद्धमिति । एतत्तदोरिति । एतत्तच्छब्दयोरनुकरणत्वेन शब्दपरत्वम् । अतः सूत्रे नैकशेषः । सु इति लुप्तषष्ठीकं पदम् एतत्तदोरित्यनेनान्वेति-एतत्तदोः सकारस्येति । अत एव 'सोर्लोपः सुलोप' इति न षष्ठीसमासः, असामर्थ्यात् । अविद्यमानः ककारः ययोस्तौ अकौ तयोः अकोरिति बहुव्रीहिस्तदाह—अककारयोरित्यादिना । एष विष्णुरिति । 'एतद्-सु विष्णुः' इति दशायां "त्यदादीनामः" इत्यनेन अकारान्तादेशे "अतो गुणे" इति पररूपे "तदोः सः सावनन्त्ययोः" इत्यनेन तस्य सत्वे सस्य च षत्वे "एष सु विष्णुः, इति जाते; अत्र एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" इति सूत्रेण सोर्लोपे विहिते सति 'एष विष्णुः' इति सम्पद्यते । स शम्भुरिति । 'तद्-सु शम्भुः' इत्यत्र "त्यदादीनामः" इत्यनेनाकारान्तादेशे "अतो गुणे" इत्यनेन 'पररूपत्वे "तदोः सः सावनन्त्ययोः" इति तस्य सत्वे 'स सु शम्भुः' इति जाते; अत्र "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" इति सोर्लोपे च कृते 'स शम्भुः' इति रूपम् । अकोः किमिति । न च अकचि सति शब्दान्तरत्वात् प्रकृते प्राप्तिरेव नास्तीति वाच्यम् । 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषयात्र प्राप्तेः सत्वात् प्रकृतपरिभाषायामिदमेव ज्ञापकं बोध्यम् । 'एषकस्-रुद्रः' अत्र एतच्छब्दस्य सककारत्वान्न सुलोपः; किन्तु "ससजुषो रुः" इत्यनेन रुत्वे "हशि च" इत्युत्वे "आद्गुणः" इति गुणे 'एषको रुद्रः' इति रूपम् । अत्र 'सको रुद्रः' इत्यपि प्रत्युदाहरणम्बोध्यम् । अनञ्समासे किमिति । अनञ्समासे इति न पर्युदासः; किन्तु प्रसज्यप्रतिषेधः । प्रकृते 'अस सु शिवः' इत्यत्र नञ्समासत्वात् "एतत्तदोः" इति सूत्रस्याप्राप्तौ "ससजुषो रुः" इति सस्य रुत्वे "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गत्वे 'असः शिवः' इति भवति । एषोऽत्रेति । 'एष सु अत्र' इत्यत्र हल्परत्वाभावात् "एतत्तदोः

पूरणम् ।६।१।१३४। स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि प्रभृतिम् । सैष दाशरथी रामः ॥ इति विसर्गसन्धिप्रकरणम् ॥

## ॥ अथाजन्तपुँल्लिङ्गप्रकरणम् ॥

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५। धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वार्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ॥ **कृत्तद्धितसमासाश्च** ।१।२।४६। कृत्तद्धितान्तौ समासाश्च तथा स्युः ॥ **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** ।४।१।२। सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्यां भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ॥ **ङ्याप्प्रातिपदिकात्** ।४।१।१। **प्रत्ययः** ।३।१।१ **परश्च** ।३।१।

---

सुलोपोऽकोरनञ्समासे हलि" इत्यस्याप्राप्तौ सस्य "ससजुषो रुः" इत्यनेन रुत्वे "अतो रोरप्लुतादप्लुते" इत्यनेन उत्वे "आद्गुणः" इत्यनेन गुणे "एङः पदान्तादति" इत्यनेन पूर्वरूपे च कृते 'एषोऽत्र' इति जायते । सोचि लोप इति । स इति प्रथमैकवचनान्तं स्वरूपपरम् । ततः षष्ठ्या लुक् सस् शब्दस्येति लभ्यते । सुलोप इत्यनुवर्तते तदाह—स इत्यस्येत्यादिना । 'सस् इमामविड्ढिप्रभृतिम्' इत्यत्र "सोचि लोपे चेत्पादपूरणम्" इति सकारलोपाभावे पादोऽत्र न पूर्यते अतोऽनेन सकारलोपे "आद्गुणः" इत्यनेन गुणे सति 'सेमामविड्ढिप्रभृतिम्' इति सिद्धम् । एवम्—'सस् एष दाशरथी रामः' इत्यत्र "सोचि लोपे चेत्पादपूरणम्" इत्यनेन पादपूरणार्थं सलोपे विहिते "वृद्धिरेचि" इत्यनेन वृद्धौ 'सैष दाशरथी रामः' इति पादपूरणसिद्धिः ।

इति विसर्गसन्धिप्रकरणम् ।

अथ "स्वौजस्" इत्यादिना स्वादिप्रत्ययान्वक्ष्यति । तत्र 'ङ्याप्प्रातिपदिकात्' इत्यधिकृतम् । किं तत्प्रातिपदिकमिति जिज्ञासायामाह—अर्थवदधातुरिति । अर्थोऽस्यास्तीति अर्थवत् । नपुंसकलिङ्गनिर्देशानुसारात् शब्दस्वरूपमिति विशेष्यमध्याहार्यम् । अधातुरिति, अप्रत्यय इति च तद्विशेषणम् । न धातुरधातुरिति नञ्तत्पुरुषः । "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति पुंस्त्वम् । अप्रत्ययः इत्यावर्तते । प्रत्ययभिन्नं प्रत्ययान्तभिन्नं च विवक्षितम् । न चात्र "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" इति परिभाषया तदन्तविध्यभाव इति शङ्क्यम् । प्रत्ययस्य यत्र संज्ञा तत्रैव तद्विषयात् । तदाह—धातुं प्रत्ययमित्यादिना । कृत्तद्धितेति । कृच्च तद्धितश्च समासश्चेति विग्रहः । पूर्वसूत्राव् प्रातिपदिकमित्यनुवर्तते, बहुवचनान्ततया विपरिणम्यते । 'प्रत्ययग्रहणे तदन्ता ग्राह्याः' इति परिभाषया कृत्तद्धितेति तदन्तग्रहणन्तदाह—कृत्तद्धितान्तावित्यादिना । ङ्याप्प्रातिप-

२। इत्यधिकृत्य। ङ्यन्तादावन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः॥ **सुपः** ।१।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः॥ **द्व्येकयोर्द्विवचनैकवचने** ।१।४।२२। द्वित्वैकत्वयोरेते स्तः॥ **बहुषु बहुवचनम्** ।१।४।२१। बहुत्वविवक्षायां बहुवचनं स्यात्॥ **विरामोऽवसानम्** ।१।४।११०। वर्णानामभावोऽवसानसंज्ञः स्यात्। रुत्वविसर्गौ। रामः॥ **सरूपाणामेकशेष एकविभक्तौ** ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते॥ **प्रथमयोः पूर्वसवर्णः** ।६।१।१०२। अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते॥ **नादिचि** ।६।१।१०४। आदिचि न पूर्वसवर्णदीर्घः। वृद्धिरेचि। रामौ॥ **बहुषु बहुवचनम्** ।१।४।२१। **चुटू** ।१।३।७

---

दिकादिति। ङी च आप् च प्रातिपदिकञ्चेति समाहारद्वन्द्वः। ङीइत्यनेन ङीप्-ङीष्-ङीनां सामान्येन ग्रहणम्। आप् इत्यनेन टाप्डाप्चापां च सामान्येन ग्रहणम्। प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। तदेतदाह—ङ्यन्तादित्यादिना। सुप इति। सुप्प्रत्याहारः, षष्ठ्येकवचनम्। "तान्येकवचनद्विवचनबहुवचनान्येकशः" इति सूत्रे तानीति वर्जमनुवर्तते। "तिङस्त्रीणि त्रीणि" इत्यतः त्रीणीत्यनुवर्तते तदाह—सुपस्त्रीणीत्यादिना। द्व्येकयोरिति। द्व्येकयोरिति भावप्रधाननिर्देशः। अन्यथा द्व्येकेष्विति स्यादित्यभिप्रेत्याह—द्वित्वैकत्वयोरिति। विरामोऽवसानमिति। विरम्यते अस्मिन्निति विरामः सामीपिकेऽधिकरणे घञ्। विरमणम्-क्रियाया अभावः। स च शब्दशास्त्रप्रस्तावात् वर्णानामुच्चारणाभावात्मक इति लभ्यते। तदेतदाह—वर्णानामभाव इत्यादिना। राम इति। 'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि। इतिरामपदेनासौ परं ब्रह्माभिधीयते'॥ इति श्रुतिः। अत्रैव यदि यौगिको रामशब्द आश्रीयते; तदा "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञा। यदि च रूढो दशरथात्मजो रामशब्दस्तदा "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इत्यनेन प्रातिपदिकसंज्ञा। तस्यां कृतायां "ङ्याप्प्रातिपदिकात्" इतिसूत्रेण प्रातिपदिकसंज्ञकरामशब्दात् 'खले कपोतन्यायेन' सर्वे स्वादयः प्राप्ताः, तत्र "सुपः" इत्यनेन प्रथमादिसप्तम्यन्तत्रिके प्रत्येकम् एकद्विबहुवचनसंज्ञाः विहिताः। तेषु प्रथमायाः एकवचनविवक्षायां रामशब्दात् सुप्रत्यये 'राम सु' इति जाते सकारोत्तरवर्त्युकारस्य "उपदेशेऽजनुनासिक इत्" इतीत्संज्ञायाम् "तस्य लोपः" इति लोपे 'रामस्' अत्र "ससजुषो रुः" इत्यनेन रुत्वे रेफोत्तरवर्तिन उकारस्येत्संज्ञायां लोपे च "खरवसानयोर्विसर्जनीयः" इति विसर्गे 'रामः' इति रूपम्। रामशब्दात् द्विवचनविवक्षायां प्रथमाया द्विवचने औ समागते 'राम राम औ' अत्र "सरूपाणामेकशेष एकविभक्तौ" इति एकरामस्य शेषे सति "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घे प्राप्ते "नादिचि" इत्यनेन तस्य निषेधे "वृद्धिरेचि" इति वृद्धौ-'रामौ' इति। चुटू इति। "आदिर्ञिटुडवः"

प्रत्ययाद्यौ चुटू इतौ स्तः ॥ **विभक्तिश्च** ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥ **न विभक्तौ तुस्माः** ।१।३।४। विभक्तिस्थास्तवर्गसमा नेतः । इति सस्य नेत्त्वम् । रामाः ॥ **एकवचनं सम्बुद्धिः** ।२।३।४९। सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ॥ **यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्** ।१।४।१३। यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्नङ्गं स्यात् । **एङ्ह्रस्वात्सम्बुद्धेः** ।६।१।६९। एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे राम, हे रामौ, हे रामाः ॥ **अमि पूर्वः** ।६।१।१०७। अकोऽम्यचि पूर्वरूपमेकादेशः । रामम्,

---

इत्यतः आदिरिति, "पः प्रत्ययस्य" इत्यतः प्रत्ययस्येति चानुवर्तते, तदाह—प्रत्ययाद्याविति। विभक्तिश्चेति। "सुपः" इति पूर्वसूत्रात् सुप, "तिङस्त्रीणि त्रीणि" इति सूत्रात् तिङ् इति चानुवर्तते; एकदेशे स्वरितत्वप्रतिज्ञानबलात्। तदाह—सुप्तिङाविति। रामा इति। रामशब्दात् बहुवचनविवक्षायां प्रथमाबहुवचने जसि कृते 'राम राम राम जस्' इति जाते तत्र "सरूपाणामेकशेष एकविभक्तौ" इति एकरामशब्देऽवशिष्टे 'राम जस्' अत्र "चुटू" इत्यनेन प्रत्ययस्यादिभूतस्य चवर्गान्तःपातिनो जकारस्येत्संज्ञायाम् "तस्य लोपः" इत्यनेन लोपे 'राम अस्' इति दशायाम् अकारोत्तरवर्तिसकारस्य "हलन्त्यम्" इत्यनेनेत्संज्ञा प्राप्ता, सा "विभक्तिश्च" इति विभक्तिसंज्ञायां "न विभक्तौ तुस्माः" इत्यनेन निषिद्धा। अथ च "प्रथमयोः पूर्वसर्णः" इति पूर्वपरयोः पूर्वसवर्णदीर्घादेशे कृते 'रामास्' इति भूते "ससजुषोरुः" इति सस्य रुत्वे अनुबन्धलोपे "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गे 'रामाः' इति रूपम्। एकवचनमिति। "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इत्यतः प्रथमा इत्यनुवृत्तं, तच्च षष्ठ्या विपरिणम्यते। "सम्बोधने च" इत्यतः सम्बोधने इत्यनुवर्तते, तदाह—सम्बोधने इत्यादिना। यस्मात्प्रत्यय इति। यस्मात्प्रत्ययो विधीयते धातोर्वा प्रातिपदिकाद्वा तदादि शब्दरूपं प्रत्यये परतोऽङ्गसंज्ञं भवति। तदादीति। तत्प्रकृतिरूपमादिर्यस्येत्यर्थः। प्रत्यासत्तिन्यायलब्धार्थमाह—तस्मिन्निति। 'गुणः कृतात्मसंस्कारः प्रधानमनुरुध्यते' इति न्यायेनात्रापि "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति परिभाषाप्रवृत्तिर्बोध्या। एङ्ह्रस्वादिति। "लोपो व्योर्वलि" इत्यतो लोप इति "हल्ङ्याब्भ्यो०" इत्यतो हल् इति चानुवर्तते। हे राम इति। रामशब्दात्संबोधनार्थकप्रथमैकवचनविवक्षायां सौ कृते 'राम सु' इति जाते "एकवचनं सम्बुद्धिः" इति सोः सम्बुद्धिसंज्ञायां अनुबन्धलोपे सति "यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" इत्यनेन रामशब्दस्याङ्गत्वे "एङ्ह्रस्वात्सम्बुद्धेः" इत्यनेन सम्बुद्धिसम्बन्धिनि हल्रूपे सकारे लुप्ते सम्बोधनद्योतक हे इत्यस्य पूर्वयोगे कृते 'हे राम' इति सिद्धम्। 'रामौ' इत्यत्र तु पूर्ववत्प्रक्रिया। 'रामाः' इत्यत्र पूर्ववत् प्रक्रिया बोध्या। अमि पूर्व इति। "अकः सवर्णे दीर्घः" इत्यतः अक इति पञ्चम्यन्तमनुवर्तते। "एकः पूर्वपरयोः" इत्यधिकारः। "इको यणचि" इत्यतोऽचि इत्यनुवर्तते, तदाह—अकोऽम्यचीत्यादिना। राम-

रामौ ॥ **लशक्वतद्धिते ।१।३।८।** तद्धितवर्ज्यप्रत्ययाद्या लशकवर्गा इतः स्युः ॥ **तस्माच्छसो नः पुंसि ।६।१।१०३।** पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ॥ **अट्कुप्वाङ्नुम्व्यवायेऽपि ।८।४।२।** अट्, कवर्ग, पवर्ग, आङ्, नुम्, एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे। इति प्राप्ते ॥ **पदान्तस्य ।८।४।३७।** नस्य णो न । रामान् ॥ **टाङसिङसामिनात्स्याः ७।१।१२।** अदन्ताट्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥ सुपि च ।

---

मिति। रामशब्दात् द्वितीयैकवचनविवक्षायां अमि प्रत्यये समागते 'राम अम्' इति दशायाम् "अमि पूर्वः" इत्यनेन पूर्वपरयोः स्थाने पूर्वरूपैकादेशे कृते 'रामम्' इति सिद्धम्। रामाविति। रामशब्दात् द्वितीयाया द्विवचनविवक्षायाम् 'औटि' कृते 'राम राम औ' अत्र "सरूपाणामेकशेष एकविभक्तौ" इति एकरामे अवशिष्टे सति टेरित्संज्ञायां लोपे च 'वृद्धिरेचि" इत्यनेन वृद्धौ प्राप्तायां तां बाधित्वा "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घे प्राप्ते तस्य "नादिचि" इत्यनेन निषेधे कृते "वृद्धिरेचि" इत्यनेन वृद्धौ कृतायाम् 'रामौ' इति सिद्धयति। लशक्वेति। लश्च कुश्च शश्चेति समाहारद्वन्द्वः। "आदिर्ञिटुडवः" इत्यत आदिरित्यनुवर्तते। "षः प्रत्ययस्य" इत्यतः प्रत्ययस्येत्यनुवर्तते तदाह—प्रत्ययाद्या इति। तस्माच्छस इति। तच्छब्देन सन्निहितः पूर्वसवर्णदीर्घः परामृश्यते। शस इत्यवयवषष्ठी। स चावयवः परत्वेन विशेष्यते। तदेतदाह—परो यः शसः स इति। अट्कुप्वाङिति। 'रषाभ्यां नो णः समानपदे' इति सम्पूर्णं सूत्रमनुवर्तते। रषाभ्यामिति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमिदम्। तत्र सर्वैर्व्यवायोऽसम्भवी। एकैकमात्रव्यवाय इत्यपि नार्थः, क्षुभ्नादिषु क्षुभ्नशब्दपाठसामर्थ्यात्सरूपाणामित्यादिनिर्देशाच्चेत्यभिप्रेत्याह—व्यस्तैर्यथासम्भवेत्यादिना। पदान्तस्येति। "न भाभूपूकमिगमिप्यायीवेपाम्" इत्यतो न इत्यनुवर्तते। रामानिति। रामशब्दाद् द्वितीयाबहुवचनविवक्षायां शसि समागते "लशक्वतद्धिते" इति शस्येत्संज्ञायां लोपे च 'राम अस्' इत्यवशिष्टे, अत्र "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे विहिते 'रामास्' इति जाते "तस्माच्छसो नः पुंसि" इति सस्य नत्वे कृते 'रामान्' इति रूपम्। अत्र "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति नस्य णत्वे प्राप्ते "पदान्तस्य" इति निषिद्धे सति णत्वाभावेन 'रामान्' इति जायते। टाङसीति। अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणतम्। "अतो भिस ऐस्" इत्यतोऽत इति पञ्चम्यन्तमनुवृत्तम् अङ्गस्य विशेषणम्, तदन्तविधिः। अदन्तादिति। अकारान्तादङ्गादुत्तरेषां टाङसिङसाम्—इन आत् स्य इत्येते आदेशा भवन्ति यथासंख्यमिति सूत्रार्थः। रामेणेति। रामशब्दात् तृतीयैकवचनविवक्षायाम् टासमागते 'राम टा' अत्र "टाङसिङसामिनात्स्याः" इति टास्थाने इनादेशे कृते "आद्गुणः" इति गुणे च विहिते "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति नस्य णत्वे 'रामेण' इति। सुपि चेति। "अतो दीर्घो यञि"

७।३।१०२। यञादौ सुपि अतोऽङ्गस्य दीर्घः । रामाभ्याम् ॥ **अतो भिस ऐस्** ७।१।९। अनेकाल् शित्सर्वस्य । रामैः ॥ **ङेर्यः** ७।१।१३। अतोऽङ्गात्परस्य ङेर्यादेशः॥ **स्थानिवदादेशोऽनल्विधौ** १।१।५६। आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात्सुपि चेति दीर्घः । रामाय । रामाभ्याम् ॥ **बहुवचने झल्येत्** ७।३।१०३। झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः । रामेभ्यः । सुपि किम् ?

---

इत्यनुवर्तते । यञीत्यनेन सुपीति विशेष्यते । "यस्मिन् विधिः" इति तदादिविधिरित्याह—यञादावित्यादिना । रामाभ्यामिति । रामशब्दात् तृतीयाद्विवचनविवक्षायां भ्यामि प्रत्यये 'राम भ्याम्' इति दशायां "सुपि च" इति यञादिसुवन्तःपातिनि भ्यामि परे अदन्ताङ्गस्य राम इत्यस्य दीर्घे प्राप्ते "अलोन्त्यस्य" इत्यनेनाकारस्य दीर्घे 'रामाभ्याम्' इति । अतो भिस इति । अत इति पञ्चमी । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणस्यते । अत इति तस्य विशेषणम् । विशेषणत्वात्तदन्तविधिस्तेनाकारान्ताङ्गाद्भिस ऐस् इत्यर्थः । रामैरिति । रामशब्दात् तृतीयाबहुवचनविवक्षायां भिसि प्रत्यये 'राम भिस्' इति जाते अत्र "अतो भिस ऐस्" इति भिस ऐसादेशे प्राप्ते क्व स्यादिति जिज्ञासायाम् "अनेकाल्शित्सर्वस्य" इति परिभाषया अनेकाल्त्वात्सर्वादेशे 'राम ऐस्' इति भूते अत्र "वृद्धिरेचि" इति वृद्धौ सस्य रुत्वे विसर्गे च 'रामैः' इति । ङेर्य इति । ङेरिट येकारान्तात् षष्ठ्येकवचनम्, न तु ङि इति सप्तम्येकवचनात्; व्याख्यानात् । "अतो भिस ऐस्" इत्यतः अत इति पञ्चम्यन्तमनुवर्तते । तेन च "अङ्गस्य" इत्यधिकृतं पञ्चम्या विपरिणतं विशेष्यते तदाह—अतोऽङ्गादिति । अदन्तादङ्गादित्यर्थः । रामायेति । रामशब्दात् चतुर्थ्येकवचनविवक्षायां ङे विहिते 'राम ङे' इति जाते तत्र "ङेर्यः" इत्यनेन ङेइत्यस्य स्थाने यकारादेशे कृते 'राम य' इति । अत्र यकारे "स्थानिवदादेशोऽनल्विधौ" इति स्थानिवद्भावेन सुप्त्वमानीय "सुपि च" इत्यनेनादन्ताङ्गस्य दीर्घे प्राप्ते "अलोऽन्त्यस्य" इत्यनेन अन्त्यस्यालो जाते 'रामाय' इति रूपं सिद्धम् ॥ रामाभ्यामिति । रामशब्दात् चतुर्थ्याः द्विवचनविवक्षायां भ्यामि 'राम भ्याम्' अत्र "सुपि च" इति दीर्घे तृतीयाद्विवचनवत् 'रामाभ्याम्' इति रूपम् । बहुवचने इति । "अतो दीर्घो यञि" इत्यतोऽत इति "सुपि च" इत्यतः सुपि इति चानुवर्तते । झलीत्यनेन सुपीति विशेष्यते । "यस्मिन् विधिरि"ति तदादिविधिस्तदाह—झलादाविति । रामेभ्य इति । रामशब्दात् चतुर्थीबहुवचनविवक्षायां भ्यसि प्रत्यये विहिते 'राम भ्यस्' इति जाते, तत्र यञादित्वात्सुप्त्वाच्च "सुपि च" इत्यनेन दीर्घे प्राप्ते तम्बाधित्वा "बहुवचने झल्येत्" इत्यनेन एकारे विहिते "अलोऽन्त्यस्य" इत्यनेनान्त्यस्य मकारोत्तरवर्तिनोऽकारस्यैत्त्वे सस्य रुत्वे अनुबन्धलोपे रेफस्य विसर्गे च कृते 'रामेभ्यः' इति रूपम् । सुपि किमिति । "बहुवचने झल्येत्" अस्मिन् सूत्रे पूर्वसूत्रतो यदि सुपीति नान्ववर्तिष्यत तदा 'पचध्वम्' इत्यत्र झलादिबहुवचने ध्वमि परे अदन्ताङ्गस्य दीर्घोऽभविष्यत् ।

पचध्वम् ॥ वाऽवसाने ८।४।५६। अवसाने झलां चरो वा । रामाद्-रामात् । रामाभ्याम् । रामेभ्यः । रामस्य ॥ ओसि च ७।३।१०४। अतोऽङ्गस्यैकारः । रामयोः ॥ ह्रस्वनद्यापो नुट् ७।१।५४। ह्रस्वान्तान्नद्यन्तादावन्ताच्चाङ्गात्परस्यामो नुडागमः ॥ नामि ६।४।३। अजन्ताङ्गस्य दीर्घः । रामाणाम् । रामे । रामयोः । एत्वे कृते ॥ आदेशप्रत्यययोः ८।३।५९। इण्कुभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च

---

तन्माभूदिति सुपीत्यनुवर्तनमावश्यकम् । वाऽवसाने इति । "झलां जश् झशि" इत्यतो झलामिति "अभ्यासे चर्च" इत्यतश्चरिति चानुवर्तते । तदाह—अवसाने इत्यादिना । रामादिति । रामशब्दात् पञ्चम्येकवचनविवक्षायां ङसौ समागते 'राम ङसि' इत्यत्र "टाङसिङसामिनात्स्याः" इति ङसेरादादेशे कृते "अकः सवर्णे दीर्घः" इति दीर्घे "झलां जशोऽन्ते" इति तस्य दत्वे "वावसाने" इति दस्य विकल्पेन तत्वे "रामात्" इति । पक्षे—'रामाद्' इति । रामाभ्यामिति । 'राम भ्याम्' अत्र "सुपि च" इति दीर्घे 'रामाभ्याम्' इति । रामेभ्य इति । 'राम भ्यस्' अत्र "बहुवचने झल्येत्" इत्येत्वे 'रामेभ्यः' इति । रामस्येति । रामशब्दात् षष्ठ्येकवचनविवक्षायां ङसि 'राम ङस्' अत्र "टाङसिङसामिनात्स्याः" इति ङसः स्यादेशे 'रामस्य' इति रूपम् । ओसि चेति । "अतो दीर्घो यञि" इत्यतोऽत इत्यनुवर्तते । "अङ्गस्य" इत्यधिकृतम् । "बहुवचने झल्येत्" इत्यत एदित्यनुवर्त्यते । रामयोरिति । रामशब्दात् षष्ठीद्विवचनविवक्षायाम् ओसि 'राम ओस्' अत्र "ओसि च" इत्यनेन अदन्ताङ्गस्यैकारे प्राप्ते "अलोऽन्त्यस्य" इत्यनेनाकारस्य जाते 'रामे ओस्' अत्र "एचोऽयवायावः" इत्यनेन अयादेशे सस्य रुत्वे विसर्गे च 'रामयोः' इति । ह्रस्वनद्याप इति । ह्रस्वश्च नदी च आप् चेति समाहारद्वन्द्वाद्दिग्योगे पञ्चमी । 'परस्य' इत्यध्याहार्यम् । 'अङ्गस्य' इत्यधिकृतं पञ्चम्या विपरिणम्य ह्रस्वादिभिर्विशेष्यते । अतस्तदन्तविधिः । "आमिसर्वनाम्नः" इत्यतः 'आमि' इत्यनुवर्तते । तच्च 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायात् "तस्मादित्युत्तरस्य" इति षष्ठ्यन्ते सम्पद्यते । तदाह—ह्रस्वान्तादित्यादिना । नामीति । "ढ्रलोपे" इत्यतो दीर्घ इत्यनुवर्तते । दीर्घश्रुत्या च "अचः" इत्युपस्थितम् । तेन चाङ्गं विशेष्यते । अतस्तदन्तविधिस्तदाह—अजन्ताङ्गस्येत्यादिना । रामाणामिति । रामशब्दात् षष्ठीबहुवचनविवक्षायाम् आमि 'राम आम्' अत्र "ह्रस्वनद्यापो नुट्" इति नुटि टित्वादाद्यावयवे उकारटकारयोरित्संज्ञायां लोपे च 'राम नाम्' इति जाते "नामि" इति दीर्घे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे 'रामाणाम्' इति सिद्धम् । रामे इति । रामशब्दात्सप्तम्येकवचनविवक्षायां ङौ कृते "लशक्वतद्धिते" इति ङकारस्येत्संज्ञायां लोपे च 'राम इ' इति जाते तत्र "आद्गुणः" इति गुणे 'रामे' इति रूपम् । रामयोरिति । रामशब्दात् सप्तमीद्विवचनविवक्षायाम् ओसि प्रत्यये 'राम ओस' अत्र "ओसि च" इत्यनेन एकारे तस्य अयादेशे च कृते परेण संयुक्ते 'रामयोः' इति

षः सस्तस्य मूर्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ॥ **सर्वादीनि सर्वनामानि १।१।२७।** सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ **जसः शी ७।१।१७।** अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे ॥ **सर्वनाम्नः स्मै ७।१।१४।** अतः सर्वनाम्नो ङेः स्मै । सर्वस्मै ॥ **ङसिङ्योः स्मा-**

---

रूपम् । आदेशप्रत्यययोरिति । मूर्धन्य इति वर्तते स इति च । आदेशप्रत्यययोरिति षष्ठी भेदेन सम्बध्यते । प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकस्तदेतदाह—आदेशस्य प्रत्ययावयवस्य चेति । रामेष्विति । रामशब्दात्सप्तमीबहुवचनविवक्षायां सुपि 'राम सुप्' इति तत्र पकारस्य "हलन्त्यम्" इतीत्संज्ञायाम् "तस्य लोपः" इति लोपे "बहुवचने झल्येत्" इत्येकारे 'रामेसु' इति जाते तत्र "आदेशप्रत्यययोः" इति सस्य षत्वे विहिते 'रामेषु' इति सिद्धम् । एवं कृष्णादय इति । कृष्णः, कृष्णौ, कृष्णाः प्रथमा । हे कृष्ण, हे कृष्णौ, हे कृष्णाः, सम्बोधनम् । कृष्णं कृष्णौ कृष्णान् द्वितीया । कृष्णेन कृष्णाभ्यां कृष्णैः तृतीया । कृष्णाय कृष्णाभ्यां कृष्णेभ्यः चतुर्थी । कृष्णात् कृष्णाभ्यां कृष्णेभ्यः पञ्चमी । कृष्णस्य कृष्णयोः कृष्णानाम् षष्ठी । कृष्णे कृष्णयोः कृष्णेषु सप्तमी । प्रक्रिया पूर्ववदूह्या ॥ अथ सर्वादिशब्देषु सर्वनामकार्यं विधास्यन् सर्वनामसंज्ञामाह—सर्वादीनीति । सर्वः आदिः प्रथमावयवो येषां तानि सर्वादीनि । नपुंसकवशात् शब्दरूपाणीति विशेष्यमध्याहार्यम् । तेन सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युरित्यर्थः । जसः शीति । "अतो भिस ऐस्" इत्यस्मादत इत्यनुवर्तते । "सर्वनाम्नः स्मै" इत्यतः सर्वनाम्न इत्यनुवर्तते । तदाह—अदन्तादित्यादिना । सर्वे इति । अत्र प्रथमाया एकवचनद्विवचने रामशब्दवत् 'सर्वः, सर्वौ' इति ज्ञेयम् । सर्वशब्दात् प्रथमाबहुवचनविवक्षायां जसि समागते "सर्वादीनि सर्वनामानि" इति सर्वशब्दस्य सर्वनामसंज्ञायाम् "जसः शि" इति जसः स्थाने "अनेकाल्शित्सर्वस्य" इत्यनेकाल्त्वात्सर्वादेशे 'सर्व शि' इति जाते "लशक्वतद्धिते" इतीत्संज्ञायां लोपे च "आद्गुणः" इति गुणे 'सर्वे' इति रूपम् । द्वितीयायाम्-रामवत् 'सर्वम्, सर्वौ, सर्वान्' इति । तृतीयायाम्-रामवत् 'सर्वेण सर्वाभ्यां सर्वैः' इति । सर्वनाम्नः स्मै इति । "अतो भिस ऐस्" इत्यतोऽत इत्यनुवर्तते । "ङेर्यः" इत्यतो ङेरिति च तदाह—अतः सर्वेत्यादिना । सर्वस्मै इति । सर्वशब्दात् चतुर्थ्येकवचनविवक्षायां ङे समागते "सर्वादीनि सर्वनामानि" इति सर्वनामसंज्ञायां "ङेर्यः" इति यादेशे प्राप्ते तम्बाधित्वा "सर्वनाम्नः स्मै" इत्यनेन 'ङे' इत्यस्य स्थाने स्मै आदेशे 'सर्वस्मै' इति रूपम् ॥ रामशब्दवत् चतुर्थीद्विवचनं बहुवचनञ्च-'सर्वाभ्यां सर्वेभ्यः' इति बोध्यम् । ङसिङ्योरिति । ङसिश्च ङिश्चेति द्वन्द्वः । "अतो भिस" इत्यस्मादत इति, "सर्वनाम्नः

त्स्मिनौ ७।१।१५। अतः सर्वनाम्नः एतयोरेतौ स्तः। सर्वस्मात् ॥ आमि सर्वनाम्नः सुट् ७।१।५२। अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः। एत्त्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः। उभशब्दो द्विवचनान्तः। उभौ २, उभाभ्याम् ३, उभयोः २। तस्येह पाठोऽकजर्थः। डतरडतमौ प्रत्ययौ। प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः। नेम इत्यर्धे। समः सर्वप-

---

स्मै" इत्यतः सर्वनाम्नः इति चानुवर्तते तदाह—अतः सर्वेति। सर्वस्मादिति। सर्वशब्दात्पञ्चम्येकवचनविवक्षायां ङसौ विहिते 'सर्व ङसि' अत्र "ङसिङ्योः स्मात्स्मिनौ" इति ङसेः स्थाने 'स्मात्' आदेशे कृते 'सर्वस्मात्' इति रूपम्। द्विवचनबहुवचनन्तु रामशब्दवत्-'सर्वाभ्याम्, सर्वेभ्यः' इति बोध्यम्। षष्ठ्याः एकवचनं द्विवचनमपि रामशब्दवत्-'सर्वस्य, सर्वयोः' इति। आमि सर्वनाम्न इति। "आज्जसेरसुक्" इत्यत 'आत्' इति पञ्चम्यन्तमनुवर्तते। तदनुरोधेन 'अङ्गस्य' इत्यधिकृतं पञ्चम्या विपरिणतं विशेष्यते, तदन्तविधिः, परस्येत्यध्याहार्यम्। "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" इति न्यायेन "तस्मादित्युत्तरस्य" इति परिभाषया आमि इति सप्तमी आम इति षष्ठ्यन्तमापद्यते। सर्वनाम्नः इति विहितविशेषणन्तदाह—अवर्णान्तादित्यादिना। सर्वेषामिति। सर्वशब्दात् षष्ठीबहुवचनविवक्षायाम् आमि, 'सर्व-आम्' इति स्थिते "आमि सर्वनाम्नः सुट्" इति सुटि उटो लोपे, टित्वादाद्यावयवे 'सर्व स् आम्' इति जाते "बहुवचने झल्येत्" इत्यनेन वकारोत्तरवर्तिनोऽकारस्यैत्वे "आदेशप्रत्यययोः" इति षत्वे च 'सर्वेषाम्' इति रूपम्। सर्वस्मिन्निति। सर्वशब्दात् सप्तम्येकवचनविवक्षायां ङौ सति तस्य स्थाने "ङसिङ्योः स्मात्स्मिनौ" इति स्मिनादेशे कृते सर्वस्मिन् इति रूपम्। शेषं रामवदिति। सर्वयोः सर्वेषु। एवं विश्वादय इति। सर्वशब्दवत् विश्वशब्दः। तथाहि—'विश्वः, विश्वौ विश्वे' 'प्रथमा, विश्वं विश्वौ विश्वान्' द्वितीया। विश्वेन विश्वाभ्यां विश्वैः, तृतीया। विश्वस्मै विश्वाभ्यां विश्वेभ्यः' चतुर्थी। विश्वस्मात् विश्वाभ्याम् विश्वेभ्यः पञ्चमी। विश्वस्य विश्वयोः विश्वेषाम् षष्ठी। विश्वस्मिन् विश्वयोः विश्वेषु' सप्तमी इति ॥ तस्येह पाठोऽकजर्थ इति। उभशब्दो द्वित्वविशिष्टस्य वाचकः। अत एव नित्यं द्विवचनान्तः। ननु एवं सति "जसः शी" "सर्वनाम्नः स्मै" "ङसिङ्योः स्मात्स्मिनौ" "आमि सर्वनाम्नः सुट्" इत्युक्तानां सर्वनामप्रयुक्तकार्याणां द्विवचने अभावादुभशब्दस्य सर्वादिगणे पाठो व्यर्थ इति चेद्, न। "अव्ययसर्वनाम्नामकच्प्राक्टेः" इति अकजर्थं सर्वादिगणे तस्य पाठस्यावश्यकत्वात्। यद्यत्र पाठो न क्रियेत तर्हि सर्वनामसंज्ञा न स्यात्, सर्वनामसंज्ञाभावे तु नाकच्। तेन 'उभकौ' इति न सिद्ध्येतेति भावः। डतरडतमाविति। अत्र "प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति परिभाषया डतरान्तडतमान्तौ ग्राह्यौ। केवलयोः तयोः संज्ञायाः प्रयोजनाभावात्। प्रत्ययाविति। "किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्" "वा बहूनां जातिपरिप्रश्ने डतमच्" "एकाच्च प्राचाम्" इति

र्यायः । तुल्यपर्यायस्तु न । यथासंख्यमनुदेशः समानामिति ज्ञापकात् । **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १।१।३४।** एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे–पूर्वाः । असंज्ञायां किम् । उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् ? दक्षिणा गाथकाः । कुशला इत्यर्थः । **स्वमज्ञातिधनाख्यायाम् १।१।३५।** ज्ञातिधनान्यान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा । स्वे–स्वाः । आत्मीयाः

---

विहितौ । तदन्ता ग्राह्या इति । डतरग्रहणेन कतरादिशब्दानाम्, डतमग्रहणेन कतमादिशब्दानाञ्च ग्रहणमिति भावः । नेम इत्यर्ध इति । 'प्र नेमस्मिन् ददृशे सोमो अन्तः' इत्यृचो तथा दर्शनादिति भावः । समः सर्वपर्याय इति । सर्वशब्दसमानार्थक एव समशब्दः सर्वादिगणे पठित इत्यर्थः । तुल्यपर्यायस्त्विति । तुल्यशब्दसमानार्थक इत्यर्थः । ज्ञापकादिति । अन्यथा तत्र समेपामिति निर्दिशेदिति भावः । पूर्वपर इति । "सर्वनामानि" इति "विभाषा जसि" इति चानुवर्तते । तदाह—एतेषामिति । पूर्वादिसप्तानामिति यावत् । पूर्वे पूर्वा इति । पूर्वशब्दात्प्रथमाबहुवचने जसि समागते "सर्वादीनि सर्वनामानि" इति सर्वनामसंज्ञा नित्या प्राप्ता; तां प्रबाध्य "पूर्वपरावर" इति सूत्रेण जसि विकल्पेन विधाय "जशः शी" इति जसः स्थाने श्यादेशे शस्येत्संज्ञायां लोपे च 'पूर्व–ई' इति जाते "आद्गुणः" इत्यनेन पूर्वपरयोः स्थाने गुणे कृते 'पूर्वे' इति रूपम् । सर्वनामसंज्ञाभावे तु पूर्वसवर्णदीर्घादेशे रुत्वे विसर्गे च 'पूर्वाः' इति रूपम् । असंज्ञायां किमिति । 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति वक्ष्यमाणतया संज्ञायां सर्वनामत्वस्याप्रसक्तेरिति प्रश्नः । उत्तराः कुरव इति । कुरुशब्दो देशविशेषे नित्यं बहुवचनान्तः । सुमेरुमवधीकृत्य तत्रोत्तरशब्दो वर्तते इत्यस्तीह व्यवस्था, किन्तु संज्ञाशब्दत्वान्नास्य सर्वनामता । पूर्वादिशब्दानां तु दिक्षु अनादिस्संकेत इति न ते संज्ञाशब्दाः । कुरुषु तूत्तरशब्दस्याधुनिकस्सङ्केत इति भवत्ययं संज्ञाशब्द इति । स्वाभिधेयेति । अपेक्ष्यत इत्यपेक्षः । स्वस्य–पूर्वादिशब्दस्य, अभिधेयम्–वाच्यम्, तेन अपेक्ष्यस्य–अपेक्ष्यमाणस्य अवधेर्नियमः, व्यवस्थाशब्देन विवक्षित इत्यर्थः । ततश्च नियमेनावधिसापेक्षार्थे वर्तमानानां पूर्वादिशब्दानां जसि सर्वनामसंज्ञाविकल्प इति फलति । व्यवस्थायां किमिति । पूर्वादिशब्दानां नियमेनावधिसापेक्ष एवार्थे विद्यमानत्वादिति प्रश्नः । दक्षिणा गाथका इति । अत्र दक्षिणशब्दो नावध्यपेक्ष इति भावः । स्वमज्ञातीति । अत्रापि सर्वनामानीति विभाषा जसीति चानुवर्तते । ज्ञातिश्च धनञ्च ज्ञातिधने तयोराख्या ज्ञातिधनाख्या, न ज्ञातिधनाख्या, अज्ञातिधनाख्या तस्याम् । स्वमित्यस्य शब्दस्वरूपापेक्षया क्लीबत्वम् । तदाह—ज्ञातिधनान्येत्यादिना । स्वे स्वाः इति । स्वशब्दाज्जसि "स्वमज्ञातिधनाख्यायाम्" इत्यनेन स्वशब्दस्य विकल्पेन सर्वनामसंज्ञायां "जसः शी" इति श्यादेशेऽनुबन्धलोपे गुणे च 'स्वे' इति । पक्षे पूर्वसवर्णदीर्घादेशे 'स्वाः' इति । आत्मीया आत्मान इति वेति ।

आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६।** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा । अन्तरे-अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे-अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा ७।१।१६।** एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्-पूर्वात्, पूर्वस्मिन्-पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १।१।३३।** एते जसि उक्तसंज्ञा वा स्युः ।

---

आत्मा, आत्मीयं, ज्ञातिः, धनश्चेति स्वशब्दस्य चत्वारोऽर्थाः । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ, त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति मेदिनीकोशः । तत्र ज्ञातिधनयोः पर्युदासात् आत्मनि, आत्मीये च सर्वनामत्वं जसि विकल्प्यत इति भावः । ज्ञातिधनपर्युदासस्य प्रयोजनमाह—ज्ञातिधनवाचिनस्त्विति । ज्ञातिवाचिनः धनवाचिनश्च सर्वनामत्वपर्युदासात् जसि 'स्वाः' इत्येव रूपमित्यर्थः । अन्तरमिति । अत्रापि सर्वनामानीति विभाषा जसीतिचानुवर्तते । बहिः—अनावृतप्रदेशः, तेन योगः-सम्बन्धो यस्य स बहिर्योगः, बहिर्विद्यमानोऽर्थः इति यावत् । उपसंवीयते-परिधीयते इति उपसंव्यानम् अन्तरीयं वस्त्रम् । तदाह—बाह्य इत्यादिना । अन्तरे अन्तरा वेति । अन्तरशब्दाज्जसि "अन्तरं बहिर्योगोपसंव्यानयोः" इत्यनेन सर्वनामसंज्ञायां "जसः शी" इति जसः स्थाने श्यादेशे "लशक्वतद्धिते" इतीत्संज्ञायां लोपे च 'अन्तर-ई' इति स्थिते "आद्गुणः" इति गुणे 'अन्तरे' इति । सर्वनामत्वाभावे 'अन्तरा' इति । पूर्वादिभ्य इति । "ङसिङ्योः स्मात्स्मिनौ"वित्यनुवर्तते इत्याह—एभ्य इति । पूर्वपरेत्यादित्रिसूत्रीनिर्दिष्टाः पूर्वादय इह विवक्षिताः । पूर्वस्मादिति । पूर्वशब्दात्पञ्चम्येकवचनविवक्षायां ङसौ समागते "पूर्वादिभ्यो नवभ्यो वा" इति वैकल्पिकेन ङसेः स्थाने स्मादित्यादेशे 'पूर्वस्मात्' इति, पक्षे पूर्वात् इति । पूर्वस्मिन्; पूर्वे इति । पूर्वशब्दात्, सप्तम्येकवचनविवक्षायां ङौ समागते तस्य स्थाने "पूर्वादिभ्यो नवभ्यो वा" इति स्मिन्नादेशे कृते 'पूर्वस्मिन्' इति, पक्षे-'पूर्वे' इति । एवं परादीनामिति । तथाहि-'परस्मात्, परात्, परस्मिन्, परे । अवरस्मात्, अवरात्, अवरस्मिन्, अवरे । दक्षिणस्मात्, दक्षिणात्, दक्षिणस्मिन्, दक्षिणे । उत्तरस्मात्, उत्तरात्, उत्तरस्मिन्, उत्तरे । अपरस्मात्, अपरात्, अपरस्मिन्, अपरे । अधरस्मात्, अधरात्, अधरस्मिन्, अधरे । स्वस्मात्, स्वात्, स्वस्मिन्, स्वे । अन्तरस्मात्, अन्तरात्, अन्तरस्मिन्, अन्तरे' इति । शेषं सर्ववदिति । एषां पूर्वादीनां नवानां सर्वादिगणपठितत्वात् जसि, ङयि, आमि च सर्वनामकार्यत्वमिति विशेषः । प्रथमचरमेति । विभाषा जसीत्यनुवर्तते, सर्वनामानीति च तदाह—एते इति । प्रथमादय इत्यर्थः । प्रथमे प्रथमा इति । प्रथमशब्दात् प्रथमाबहुवचनविवक्षायां जसि समागते "प्रथमचरम-" इति सूत्रेण जसि परे सर्वनामसंज्ञत्वे "जसः शी" इति जसः श्यादेशे शस्य लोपे गुणे

प्रथमे-प्रथमाः। तयः प्रत्ययः। द्वितये-द्वितयाः। शेषं रामवत्। नेमे-नेमाः। शेषं सर्ववत्। (तीयस्य ङित्सु वा) द्वितीयस्मै-द्वितीयायेत्यादि। एवं तृतीयः। निर्जरः॥ जराया जरसन्यतरस्याम् ७।२।१०१। अजादौ विभक्तौ। पदाङ्गाधिकारे तस्य च तदन्तस्य च। निर्दिश्यमानस्यादेशा भवन्ति। एकदेशविकृतमनन्यवदिति जराश-

---

च कृते प्रथमे इति। पक्षे-प्रथमाः। तयशब्दो न प्रातिपदिकमित्याह—तयः प्रत्यय इति। "संख्याया अवयवे तयप्" इति विहितः इति शेषः। अत्र प्रत्ययग्रहणपरिभाषया तदन्ताः-तयवन्ता ग्राह्या इत्यर्थः। द्वितये, द्वितया इति। द्वाववयवावस्येति विग्रहः। द्वितयशब्दात् जसि "प्रथमचरमतय"-इत्यनेन जसः स्थाने श्यादेशे अनुबन्धलोपे गुणे च 'द्वितये' इति। पक्षे-द्वितयाः। शेषं रामवदिति। तथाहि-नेमशब्दस्य जसि सर्वनामसंज्ञा गणे पठितत्वान्नित्या प्राप्ता. तद्विकल्पोऽत्र विधीयते। नेमशब्दव्यतिरिक्तानां प्रथमादिशब्दानान्तु गणे पाठाभावादप्राप्तैव सर्वनामसंज्ञा जसि विकल्पेन विधीयते। अतो नेमशब्दव्यतिरिक्तानां प्रथमादिशब्दानां जसोऽन्यत्र न सर्वनामकार्यमित्याह—शेषं रामवदिति। नेमे, नेमा इति। नेमशब्दात् जसि "सर्वादीनि" इति प्राप्तां सर्वनामसंज्ञां विकल्पेन प्रबाध्य "प्रथमचरमतय" इति विकल्पेन जातायां तस्यां "जसश्शी" इति श्यादेशेऽनुबन्धलोपे गुणे च 'नेमे' इति। पक्षे-नेमाः इति। शेषं सर्ववदिति। नेमशब्दस्य सर्वादिगणे पठितत्वादिति भावः। तीयस्येति। "विभाषा जसि" इत्यधिकारे तीयान्तस्य ङे, ङसि, ङस्, ङि इत्येतेषु ङित्सु परेषु सर्वनामसंज्ञावचनं कर्तव्यमित्यर्थः। द्वितीयस्मै, द्वितीयायेति। द्वयोः पूरणो द्वितीयः। "द्वेस्तीयः" इति पूरणे तीयप्रत्ययः। इत्यादीति। द्वितीयस्मात्, द्वितीयात्, द्वितीयस्मिन् द्वितीये इत्यादिशब्दार्थः। एवं तृतीय इति। ङित्सु उदाहार्य इति शेषः। त्रयाणां पूरणमिति विग्रहः। "त्रेः सम्प्रसारणञ्च" इति पूरणेऽर्थे तीयप्रत्ययः। रेफस्य सम्प्रसारणम्-ऋकारः। "सम्प्रसारणाच्च" इति पूर्वरूपम्। निर्जर इति। जरायाः निष्क्रान्तो निर्जरः। "निरादयः क्रान्ताद्यर्थे" इति समासः। "गोस्त्रियोः" इति ह्रस्वत्वम्। निर्गता जरा यस्मादिति बहुव्रीहिर्वा। निर्जरशब्दस्य "कृत्तद्धितसमासाश्च" इति समासत्वात्प्रातिपदिकसंज्ञायां प्रथमैकवचने सौ अनुबन्धलोपे सस्य रुत्वे रेफस्य विसर्गत्वे च रूपम्। जराया इति। "अष्टन आ विभक्तौ" इत्यतो विभक्तावित्यनुवृत्तम्। "अचिर ऋतः इत्यतोऽचीत्यनुवर्तते, तदादिविधिस्तदाह—अजादावित्यादिना। ननु जराशब्दस्य विधीयमानो जरसादेशः कथं निर्जरशब्दस्य भवेदित्यत आह—पदेति। पदाधिकारे अङ्गाधिकारे च यस्य यद्विहितम्, तत् तस्य तदन्तस्य च भवतीत्यर्थः। जरसादेशश्चायमङ्गाधिकारस्थत्वात् जराशब्दस्य तदन्तस्य च भवति। निर्दिश्यमानस्येति। प्रत्यक्षनिर्दिश्यमानस्यैवेत्यर्थः। अनया परिभाषया जराशब्दस्यैव जरस्। जराशब्द एव ह्यत्र स्थानी प्रत्यक्षनिर्दिष्टः। जराशब्दान्तस्य तु निर्देशस्तदन्तविधिलभ्यत्वाद् आनुमानिक इति भावः। ननु

ब्दस्य जरस्। निर्जरसौ; निर्जरस इत्यादि। पक्षे हलादौ च रामवत्। विश्वपाः॥ **दीर्घाज्जसि च ६।१।१०५।** विश्वपौ हे, विश्वपाः। विश्वपाम्, विश्वपौ॥ सुडन-

---

निर्जरशब्दस्य जराशब्दान्तत्वाभावात् कथमिह जरसादेश इत्यत आह—एकदेशेति। 'छिन्नेऽपि पुच्छे श्वा श्वैव, न चाश्वो, न च गर्दभः' इति लौकिकन्यायादित्यर्थः। निर्जरसाविति। निर्जरशब्दात् प्रथमाद्विवचने औ समागते "जराया जरसन्यतरस्याम्" इति जरसादेशे लब्धे, सूत्रे जराशब्दस्य जरसादेशः प्रोक्तो न तु निर्जरशब्दस्य, इति कथमत्र जरसादेश इति शङ्कायां 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति; अत्राङ्गाधिकारात् तदन्तस्यापि स्यादिति प्राप्ते "निर्दिश्यमानस्यादेशा भवन्ति" इति परिभाषया जराशब्दस्यैव जरसादेशः स्यात् इति कथमत्र 'जरशब्दस्य जरस्' इति शङ्कायाम् "एकदेशविकृतमनन्यवत्" इति जरसादेशे 'निर्जरसौ' इति। निर्जरस इति। निर्जरशब्दाज्जसि अनुबन्धलोपे "जराया जरसन्यतरस्याम्" इति जरशब्दस्य जरसादेशे परेणाचा युक्ते रुत्वे विसर्गे च 'निर्जरसः' इति। इत्यादीति। अमि–निर्जरसम्, औटि–निर्जरसौ, शसि–निर्जरसः। टापरे–निर्जरसा, ङेपरे–निर्जरसे, ङसिङसोः–निर्जरसः, ओसि–निर्जरसोः, ङौ–निर्जरसि; इति। पक्षे हलादौ च रामवदिति। अजादिविभक्तौ परे विकल्पेन जरसादेशे सति रूपाण्युक्तानि। जरसादेशाभावे रामशब्दवत् रूपाणि। हलादौ तु जरसादेशाभाव इति हलादौ विभक्तौ परे रामशब्दवत् रूपाणीति भावः। विश्वपा इति। विश्वं पाति रक्षतीत्यर्थे "आतोऽनुपसर्गे कः" इति प्राप्ते वासरूपन्यायेन "आतो मनिन्क्वनिब्वनिपश्च" इति चकारात् विच्। तस्य सर्वापहारे कृदन्तत्वात्प्रातिपदिकसंज्ञायां प्रथमैकवचनविवक्षायां सुप्रत्ययेऽनुबन्धलोपे "ससजुषो रुः" इति रुत्वे उकारस्येत्संज्ञायाम् "खरवसानयोर्विसर्जनीयः" इति विसर्गे च कृते "विश्वपाः" इति रूपम्। दीर्घाज्जसीति। "प्रथमयोः" इत्यतः पूर्वसवर्णः इति "नादिचि" इत्यतो नेति इचीति चानुवर्तते; इति भावः। विश्वपाविति। विश्वपाशब्दात्प्रथमाद्विवचनविवक्षायाम् औ समागते 'विश्वपा औ' इति स्थिते "प्रथमयोः पूर्वसवर्णः" इति प्राप्ते "दीर्घाज्जसि च" इति सूत्रेण पूर्वसवर्णदीर्घनिषेधे कृते "वृद्धिरेचि" इति वृद्धौ सत्यां 'विश्वपौ' इति रूपम्। विश्वपाः इति। विश्वपाशब्दाज्जसि "चुटू" इति जसो जकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे च 'विश्वपा-अस्' इति दशायां "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे प्राप्ते "दीर्घाज्जसि च" इति सूत्रेण पूर्वसवर्णदीर्घनिषेधे जाते "अकः सवर्णे दीर्घः" इति पूर्वपरयोः स्थाने दीर्घादेशे सति सस्य रुत्वे, रस्य विसर्गे च कृते 'विश्वपाः' इति रूपम्। हे विश्वपा इति। हे विश्वपाः, हे विश्वपौ, हे विश्वपाः, इति प्रथमावत्। विश्वपामिति। विश्वपाशब्दाद् द्वितीयैकवचनविवक्षायाम् अमि समागते सति 'विश्वपा अम्' अत्र "अमि पूर्वः" इत्यनेन पूर्वरूपैकादेशे सति 'विश्वपाम्' इति रूपम्। 'विश्वपौ' इति यथापूर्वमूह्यम्। सुडनपुंसकस्येति। "शि सर्वनामस्थानम्" इत्यतः सर्वनामस्थानमित्यनुवर्तते। सुट् इति–सु इत्यारभ्य औटष्का-

पुंसकस्य १।१।४३। स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीवस्य ॥ स्वादिष्वसर्वनामस्थाने १।४।१७। कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदं स्यात् ॥ यचि भम् १।४।१८। यादिष्वजादिषु च कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भं स्यात् ॥ आकडारादेका संज्ञा १।४।१। इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया, या पराऽनवकाशा च । आतो धातोः ६।४।१४०। आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि ॥ एवं शङ्खध्मादयः । धातोः किम् ?

---

रेण प्रत्याहारस्तदेतदाह—स्वादिपञ्चवचनानीत्यादिना । स्वादिष्विति । असर्वनामस्थान इति बहुत्वेऽप्येकवचनमार्षम् । यचि भमिति । यू च अच्चेति समाहारद्वन्द्वः । स्वादिष्वसर्वनामस्थाने इत्यनुवृत्तं यचीत्यनेन विशेष्यते । "यस्मिन् विधिस्तदादावल्ग्रहणे" इति तदादिविधिस्तदाह—यादिष्वित्यादिना । ननु भपदसंज्ञयोरिह समावेशः कुतो न स्यात् । न च "विप्रतिषेधे परं कार्यम्" इति परैव भसंज्ञा भवतीति वाच्यम् । विरोधो हि विप्रतिषेधः । नह्यत्र द्वयोरपि संज्ञयोः समावेशे विरोधोऽस्ति तव्यत्तव्यानीयरादौ कृत्कृत्यप्रत्ययादिसंज्ञासमावेशदर्शनादित्यत आह—आकडारादिति । आतो धातोरिति । अङ्गस्येति भस्येति चाधिकृतम् । धातोरित्यात इति षष्ठ्यन्तेन विशेष्यते । तदन्तविधिः । "अल्लोपोऽनः" इत्यतो लोप इत्यनुवर्तते । तदाह—आकारान्तो य इति । अलोऽन्त्यस्येति । अन्त्यस्याकारस्य लोप इति शेषः । विश्वपाशब्दात् शसि समागते "लशक्वतद्धिते" इति शसः शकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे च कृते 'विश्वपा–अस्' इति स्थितेऽत्र "सुडनपुंसकस्य" इत्यनेन 'सु–औ–जस्–अम्–औट्' इत्येतेषां सर्वनामस्थानसंज्ञाविहितत्वात् शसो न सर्वनामस्थानसंज्ञा, तेन "स्वादिष्वसर्वनामस्थाने" इत्यनेन सर्वनामस्थानभिन्नस्वादिषु शसादिषु परेषु पूर्वस्य विश्वपाशब्दस्य पदसंज्ञायां प्राप्तायां "यचि भम्" इत्यनेन च सर्वनामस्थानभिन्नयजादिषु स्वादिषु परेषु भसंज्ञायां प्राप्तायां किमत्र विधेयम् इति शङ्कायाम् "आकडारादेका संज्ञा" इत्यनेन एकैव संज्ञा भवतीति नियमात् परत्वादनवकाशत्वाच्च अत्र भसंज्ञैव जाता, तस्यां जातायाम् "आतो धातोः" इति सूत्रेण विश्वपाशब्दस्य लोपे प्राप्ते "अलोऽन्त्यस्य" इत्यनेन पकारोत्तरवर्त्याकारस्य लोपे कृते पकारस्याकारेण सह संयोगे स् इत्यस्य रुत्वे अनुबन्धलोपे रेफस्य विसर्गे च 'विश्वपः' इति रूपम् । विश्वपा इति । विश्वपाशब्दात् तृतीयैकवचनविवक्षायां टासमागते "चुटू" इति टकारस्येत्संज्ञायां लोपे च 'विश्वपा–आ' इति स्थितेऽत्र "यचि भम्" इति भसंज्ञायां "आतो धातोः" इत्याकारलोपे पकारस्याऽऽकारेण सह संयोगे 'विश्वपा' इति रूपम् । विश्वपाभ्यामित्यादीति । विश्वपाशब्दात् भ्यामि विश्वपाभ्याम् । विश्वपाशब्दात् भिसि स् इत्यस्य रुत्वे विसर्गे च विश्वपाभिः । विश्वपाशब्दाच्चतुर्थ्येकवचनविवक्षायां ङेविभक्तौ ङकारस्य "लशक्वतद्धिते" इतीत्सं-

हाहान् । हरिः, हरी ॥ जसि च ७।३।१०९। ह्रस्वान्तस्याङ्गस्य गुणः । हरयः ॥ ह्रस्वस्य गुणः ७।३।१०८। सम्बुद्धौ । हे हरे । हरिम् , हरी, हरीन ॥ शेषो घ्य-

---

ज्ञायां "तस्य लोपः" इति लोपे "यचि भम्" इति भसंज्ञायाम् "आतो धातोः" इत्याकारस्य लोपे परेण संयोगे 'विश्वपे' इति रूपम् । अत्रेदं ज्ञातव्यम्—अजादिविभक्तौ परे सर्वत्र भसंज्ञा आकारस्य लोपः, हलादौ तु न किमपि कार्यम् । विश्वपाभ्याम् , विश्वपाभ्यः चतुर्थी । विश्वपः, विश्वपाभ्याम् , विश्वपाभ्यः पञ्चमी । विश्वपः, विश्वपोः, विश्वपाम् षष्ठी । विश्वपि, विश्वपोः, विश्वपासु सप्तमी । एवं शङ्खध्मादय इति । शङ्खं धमतीति शङ्खध्मा । 'ध्मा शब्दाग्निसंयोगयोः' । "क्विप् च" इति क्विप् । आदिना सोमं पिबतीति सोमपाः । मधु पिबतीति मधुपाः इत्यादयो ग्राह्याः । हाहानिति । हाहा इति गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमेतत् । "हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसः" इत्यमरः । सुटि विश्वपावत् । हाहाशब्दात् शसि, अनुबन्धलोपे "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे कृते "तस्माच्छसो नः पुंसि" इति सकारस्य नकारादेशे 'हाहान्' इति । टाविभक्तौ सवर्णदीर्घः हाहा । ङयि वृद्धिः हाहै । ङसिङसोर्दीर्घः हाहाः । ओसि वृद्धिः हाहौः । ङौ आद्गुणः हाहे । हलादौ विश्वपावत् । हरिः । हरिशब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये उकारस्येत्संज्ञायां लोपे च 'हरि ् ' इति जाते सस्य रुत्वे रेफस्य विसर्गे च 'हरिः' इति रूपम् । हरी । हरिशब्दात् 'औ समागते' "प्रथमयोः पूर्वसवर्णः" इति पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घादेशे कृते सति 'हरी' इति रूपम् । जसि चेतीति । "ह्रस्वस्य गुणः" इत्यनुवर्तते । "अङ्गस्य" इत्यधिकृतं ह्रस्वेन विशेष्यते । तदन्तविधिस्तदाह—ह्रस्वान्तस्येत्यादिना । हरय इति । हरिशब्दाज्जसि समागतेऽनुबन्धलोपे 'हरि–अस्' इति स्थिते पूर्वसवर्णदीर्घे प्राप्ते तं प्रबाध्य "जसि च" इति गुणे प्राप्ते "अलोऽन्त्यस्य" इति परिभाषयाऽन्त्यस्य जाते 'हरे–अस्' इति भूते "एचोऽयवायावः" इति अयादेशे कृते सस्य रुत्वे विसर्गे च कृते 'हरयः' इति रूपम् । ह्रस्वस्य गुण इति । "सम्बुद्धौ च" इत्यतः सम्बुद्धावित्यनुवर्तते, तेन ह्रस्वस्य गुणः सम्बुद्धावित्यर्थः । हे हरे इति । हरिशब्दात्सम्बोधनप्रथमैकवचनविवक्षायां सुसमागते अनुबन्धलोपे, तस्य "एकवचनं सम्बुद्धिः" इति सम्बुद्धिसंज्ञायां "ह्रस्वस्य गुणः" इति गुणे 'हरे–स्' इति जाते "एङ्ह्रस्वात्सम्बुद्धेः" इति सुलोपे 'हे हरे' इति रूपम् । औ परे–'हे हरी' इति । जसि–'हे हरयः' पूर्ववत् । हरिमिति । 'हरि–अम्' अत्र "अमि पूर्वः" इति पूर्वपरयोः स्थाने पूर्वरूपादेशे 'हरिम्' इति सिद्धम् । औटि–'हरी' इति यथापूर्वम् । हरीन् इति । हरिशब्दात् शसि शसः शकारस्येत्संज्ञायां लोपे च 'हरि–अस्' इति स्थितेऽत्र "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे कृते "तस्माच्छसो नः पुंसि" इति स् इत्यस्य नकारादेशे सति 'हरीन्' इति रूपम् । शेष इति । "यूस्त्र्याख्यौ" इत्यतो यू इत्यनुवर्तते । "ङिति ह्रस्वश्च" इत्यतो ह्रस्व इति चानु-

सखि१।४।७। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् ॥ आङो नाऽस्त्रियाम् ७।३।१२०। घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा प्राचाम्। हरिणा, हरिभ्याम्, हरिभिः ॥ घेर्ङिति ७।३।१११। घिसंज्ञस्य ङिति सुपि गुणः। हरये ॥ ङसिङसोश्च ६।१।११०। एङो ङसिङसोरति पूर्वरूपमेकादेशः। हरेः २, हर्योः, हरीणाम् ॥ अच्च घेः ७।३।११९। इदुद्भ्यामुत्तरस्य ङेरौत्, घेरत्। हरौ,

---

वर्तते; तदाह—ह्रस्वौ यावित्यादि। आङो नेति। "अच्च घेः" इत्यतो घिग्रहणानुवृत्तेर्घेः परस्य आङो ना स्यादस्त्रियामित्यर्थः। प्राचामिति—आचार्याणामिति शेषः। हरिणा। हरिशब्दात् तृतीयैकवचनविवक्षायां टासमागते "शेषो घ्यसखि" इत्यनेन हरिशब्दस्य घिसंज्ञायाम् "आङो नाऽस्त्रियाम्" इत्यनेन घिसंज्ञकात् हरिशब्दात् परस्य आङः—टाप्रत्ययस्य नादेशे कृते 'हरिना' इति जाते "अट्कुप्वाङ्नुम्व्यवायेऽपि" इत्यनेन णत्वे 'हरिणा' इति रूपम्। तृतीयाद्विवचनबहुवचने-हरिभ्याम्, हरिभिः इति। घेर्ङितीति। "सुपि च" इत्यतः सुपीति, "ह्रस्वस्य गुणः" इत्यतो गुण इत्यनुवर्तते, तदाह—घिसंज्ञस्येत्यादिना। हरये—हरिशब्दात् ङेकृते "लशक्वतद्धिते" इति ङस्येत्सञ्ज्ञायां लोपे च "शेषो घ्यसखि" इति घिसञ्ज्ञायां "घेर्ङिति" इति गुणे "एचोऽयवायावः" इति अयादेशे 'हरये' इति। चतुर्थीद्विवचनबहुवचने-हरिभ्याम्, हरिभ्यः, इति। ङसिङसोश्चेति। "एङः पदान्तात्" इत्यत एङ इति, अतीति चानुवर्तते। "अमि पूर्वः" इत्यतः पूर्व इत्यनुवर्तते। "एकः पूर्वपरयोः" इत्यधिकृतम्। तदाह—एङो ङसिङसोरित्यादिना। हरेः। हरिशब्दात्पञ्चम्येकवचनविवक्षायां ङसौ समागते ङकारस्येकारस्य चेत्सञ्ज्ञायां लोपे च 'हरि अस्' इति जाते "शेषो घ्यसखि" इति घिसञ्ज्ञायां "घेर्ङिति" इति गुणे कृते "ङसिङसोश्च" इति पूर्वरूपे सकारस्य रुत्वे विसर्गे च 'हरेः' इति रूपम्। पञ्चमीद्विवचनबहुवचने-हरिभ्याम्, हरिभ्यः इति। हरेः। हरिशब्दात् षष्ठ्येकवचनविवक्षायां ङस प्रत्यये कृते ङकारस्येत्सञ्ज्ञायां लोपे च 'हरि-अस्' इति स्थिते घिसञ्ज्ञायाम् "घेर्ङिति" इति गुणे "ङसिङसोश्च" इति पूर्वरूपे सकारस्य रुत्वे विसर्गे च 'हरेः' इति रूपम्। हर्योः। हरिशब्दात्षष्ठीद्विवचनविवक्षायाम् ओसि कृते "इको यणचि" इति यणि सस्य रुत्वे रस्य विसर्गे च 'हर्योः' इति रूपम्। हरीणाम्। 'हरि-आम्' इति स्थिते "ह्रस्वनद्यापो नुट्" इति नुटि "नामि" इति दीर्घादेशे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे 'हरीणाम्' इति। अच्च घेरिति। "ङेराम्" इत्यतो ङेरित्यनुवर्तते। "इदुद्भ्याम्" इति "औत्" इति च-सूत्रमनुवर्तते। तदाह—इदुद्भ्यामित्यादिना। हरौ। हरिशब्दात् सप्तम्येकवचनविवक्षायां ङिसमागते ङस्येत्सञ्ज्ञायां लोपे च 'हरि-इ' इति स्थिते "शेषो घ्यसखि" इति घिसञ्ज्ञायाम् "अच्च घेः" इत्यनेन ङः स्थाने औकारे, घिसञ्ज्ञकस्य-'हरि' इत्यस्य स्थाने अकारे प्राप्ते "अलोऽन्त्यस्य" इत्यनेन रेफोत्तरवर्तिन इकारस्य स्थानेऽकारे च विहिते 'हर-औ' इति जाते "वृद्धिरेचि" इति वृद्धौ

हरिषु । एवं कव्यादयः ॥ **अनङ् सौ ७।१।९३।** सख्युरङ्गस्यानङादेशोऽसम्बुद्धौ सौ ॥ **अलोऽन्त्यात्पूर्व उपधा १।१।६५।** अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात्॥ **सर्वनामस्थाने चासम्बुद्धौ ६।४।८।** नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ॥ **अपृक्त एकाल् प्रत्ययः १।२।४१।** एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्॥ **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८।** हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते ॥ **नलोपः प्रातिपदिकान्तस्य ८।२।७।** प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा ॥ **सख्युरसम्बुद्धौ ७।१।९२।** सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥ **अचो ञ्णिति ७।२।११५।** अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे । सखायौ, सखायः । हे सखे । सखायम् ,

---

'हरौ' इति रूपम् । हर्योः । षष्ठीद्विवचनवद्बोध्यम् । हरिषु । 'हरि-सु' इति दशायाम् "आदेशप्रत्यययोः" इति षत्वे 'हरिषु' इति । अनङ् साविति । "सख्युरसम्बुद्धौ" इत्यनुवर्तते । "अङ्गस्य" इत्यधिकृतम् । तदाह—सख्युरङ्गस्येत्यादिना । अलोऽन्त्यादिति । अल इति पञ्चमी अन्त्यादिति सामानाधिकरण्यात् । अल् प्रत्याहारः, वर्णपर्यायः । पूर्वोऽप्यलेव गृह्यते, साजात्यादित्याह—अन्त्यादल इत्यादिना । सर्वनामस्थाने इति । "नोपधायाः" इति सूत्रमनुवर्तते । "ढ्रूलोपे" इत्यतो दीर्घ इत्यनुवर्तते । तदाह—नान्तस्येत्यादिना । तदन्तस्येति । षष्ठीतत्पुरुषोऽयम् । तस्य प्रातिपदिकसञ्ज्ञकपदस्य अन्तो यो नकारस्तस्येत्यर्थः । प्रातिपदिकेति किम् ? अहन् । पदमिति किम् ? राजानौ, राजानः । सखा । सखिशब्दात् प्रथमैकवचनविवक्षायाम् सुसमागते उकारस्येत्सञ्ज्ञायां लोपे च 'सखि-स्' इति स्थिते "अनङ् सौ" इति अनङादेशे प्राप्ते क्व स्यात् इति शङ्कायाम् "अनेकाल्शित्सर्वस्य" इति परिभाषया सर्वस्य स्थाने प्राप्ते परं "ङिच्च" इत्यनेन तं प्रबाध्य अन्त्यस्य-खकारोत्तरवर्तिन इकारस्य स्थानेऽनङादेशे जाते ङकारस्येत्सञ्ज्ञायां लोपे च 'सखन् स्' इति जाते "अलोऽन्त्यात्पूर्व उपधा" इति उपधासञ्ज्ञात्वे "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तस्य पदस्योपधाया दीर्घे विहिते 'सखान् स्' इत्यवस्थायाम् "अपृक्त एकाल् प्रत्ययः" इति सस्यापृक्तसञ्ज्ञायां कृतायाम् "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इति सस्य लोपे 'सखान्' इत्यवशिष्टे "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'सखा' इति रूपम् । सख्युरसम्बुद्धाविति । इह "इतोऽत्सर्वनामस्थाने" इत्यतः सर्वनामस्थाने इत्यनुवर्तते तदसम्बुद्धावित्यनेन विशेष्यते । "गोतो णित" इति सूत्राण्णिदित्यनुवृत्तं तत्सामानाधिकरण्येन सप्तम्याः प्रथमा कल्प्यते, इत्याह—सम्बुद्धिवर्जमित्यादिना । अचो ञ्णितीति । "मृजेर्वृद्धिः" इत्यतो वृद्धिरित्यनुवर्तते, "अङ्गस्य" इति चाधिकारः । सखायौ । 'सखि औ' अत्र "सख्युरसम्बुद्धौ" इति णिद्भावे "अचो ञ्णिति" इति वृद्धौ "एचोऽयवायावः" इति आयादेशे परेण संयोगे कृते 'सखायौ' इति । सखायः । सखिशब्दाज्जसि "चुटू" इति जकारस्येत्सञ्ज्ञायां

सखायौ, सखीन् । सख्या, सख्ये । **ख्यत्यात्परस्य ६।१।११२।** खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः । सख्युः ॥ **औत् ७।३। ११८।** इतः परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ॥ **पतिः समास एव १।४।८।** पतिशब्दः समास एव घिसञ्ज्ञः स्यात् । पत्या । पत्ये । पत्युः २ । पत्यौ । शेषं हरिवत् ।

---

लोपे च "सख्युरसम्बुद्धौ" इति णिद्वद्भावे "अचो ञ्णिति" इति वृद्धौ "एचोऽयवायावः" इत्यायादेशे सस्य रुत्वे विसर्गे च 'सखायः' इति । हे सखे । हरिशब्दवत् गुणे लोपे च हे सखे इति । औपरे जसि परे च पूर्ववत्-णिद्वद्भाववृद्ध्यायादेशाः-हे सखायौ, हे सखायः । सखायम् । 'सखि अम्' अत्र "अमि पूर्वः" इति सूत्रं प्रबाध्य "सख्युरसम्बुद्धौ" इति णिद्वद्भावे, वृद्धौ आयादेशे च 'सखायम्' इति । औटि पूर्ववत्—सखायौ । सखीन् । 'सखि-शस्' अत्र शसः शकारस्येत्सञ्ज्ञायां लोपे च कृते "प्रथमयोः पूर्वसवर्णः" इति पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घादेशे कृते "तस्माच्छसो नः पुंसि" इति शसः सकारस्य नकारादेशे 'सखीन्' इति । सख्या । 'सखि आ' अत्र "असखि" इति पर्युदासात् घिसंज्ञा न, किन्तु "इको यणचि" इति यणि 'सख्या' इति । सखिशब्दस्य तृतीयाद्विवचनबहुवचने-सखिभ्याम्, सखिभिः, हरिशब्दवत् । सख्ये । सखिशब्दाच्चतुर्थ्येकवचनविवक्षायां ङयि समागते ङस्येत्सञ्ज्ञायां लोपे च 'सखि-ए' अत्र "इको यणचि" इति यणि सख्ये इति ॥ चतुर्थीद्विवचनबहुवचने-सखिभ्याम्, सखिभ्यः इति ॥ ख्यत्या-ति । खिखी इत्यनयोः, तिती इत्यनयोश्च कृतयणादेशयोः ख्य त्य इति निर्देशः । यकाराद्कार उच्चारणार्थः । "एङः पदान्तात्" इत्यतो अतीत्यनुवर्तते । तच्च पञ्चम्यन्तं विपरिणम्यते । "ङसिङसोश्च" इत्यतो ङसिङसोरित्यनुवर्तते । अवयवषष्ठ्येषा । ततश्च ङसिङसोरवयवस्य अत इति लभ्यते । "ऋत उत्" इत्यतः उदित्यनुवर्तते । तदाह—खितिशब्दाभ्यामित्यादिना । सख्युः । सखिशब्दात्पञ्चम्येकवचनविवक्षायां ङसौ समागते ङकारस्येत्सञ्ज्ञायां लोपे च 'सखि अस्' इति स्थिते "इको यणचि" इति यणादेशे सख्य् अस् इति जाते तत्र "ख्यत्यात्परस्य" इत्यनेन असोऽकारस्य उत्वे 'सख्युस्' इति, तत्र सस्य रुत्वे विसर्गे च कृते 'सख्युः' इति रूपम् । पञ्चमीद्विवचनबहुवचने तु-सखिभ्याम्, सखिभ्यः इति । षष्ठ्येकवचनविवक्षायां 'सखि-अस्' इति स्थिते पूर्ववत् यणि अस्योत्वे रुत्वे विसर्गे च सख्युः इति । ओसि-सख्योः । आमि-सखीनाम् । औदिति । अत्र "इदुद्भ्याम्" इति सूत्रमनुवर्तते । "ङेराम्" इत्यतो ङेरिति च । इदुद्भ्यां परस्य ङेरौत्स्यादित्यर्थः । सख्यौ । सखिशब्दात्सप्तम्येकवचनविवक्षायां ङिसमागते ङकारस्येत्सञ्ज्ञायां लोपे च 'सखि-इ' इति जाते । तत्र ङेरिकारस्य स्थाने "औत्" इति 'औ' आदेशे "इको यणचि" इति यणि सख्यौ इति रूपम् । सप्तमीद्विवचनबहुवचने-सख्योः, सखिषु । पतिशब्दस्य द्वितीयाबहुवचनपर्यन्तं हरिशब्दवत् साधनिका, रूपाणि च-पतिः, पती, पतयः प्रथमा । हे पते, हे पती, हे पतयः सम्बोधनम् । पतिं, पती,

समासे तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ॥ **बहुगणवतुडति संख्या १।१।२३।।डति च १।१।२५।** डत्यन्ता संख्या षट्संज्ञा स्यात् । **षड्भ्यो लुक् ७।१।२२।** जश्शसोः ॥ **प्रत्ययस्य लुक्श्लुलुपः १।१।६१।** लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्संज्ञं स्यात् ॥ **प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२।** प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । इति जसि चेति गुणे प्राप्ते ॥ **न लुमताङ्गस्य १।**

---

पतीन् द्वितीया। पतिः समास इति । "शेषो घ्यसखि"इत्यतो घीत्यनुवर्तते । पत्या। पतिशब्दात् टासमागते "चुटू"इति टकारस्येत्संज्ञायां"तस्य लोपः"इति लोपे"इको यणचि" इति यणि 'पत्या'इति रूपम् । भ्यामि-पतिभ्याम्, भिसि-पतिभिः । पत्ये । पतिशब्दाच्चतुर्थ्येकवचनविवक्षायां ङेविभक्तौ समागतायां ङकारस्येत्संज्ञायां लोपे च 'पति-ए' इति जाते "इको यणचि" इति यणि 'पत्ये' इति रूपम् । द्विवचनबहुवचने-पतिभ्यां, पतिभ्यः इति । पत्युः । पतिशब्दात्पञ्चम्येकवचनविवक्षायां 'ङसौ' कृतेऽनुबन्धलोपे 'पति-अस्' इति स्थिते "इको यणचि" इति यणि "ख्यत्यात्परस्य" इति ङसोऽकारस्योत्वे 'पत्युः' इति रूपम् । पञ्चमीद्विवचनबहुवचने—पतिभ्याम् , पतिभ्यः । पत्युः । पतिशब्दात्षष्ठ्येकवचनविवक्षायाम् ङसि कृते ङकारस्येत्संज्ञायां लोपे च "इको यणचि" इति यणि "ख्यत्यात्परस्य" इत्युत्वे रुत्वविसर्गौ 'पत्युः' इति । ओसि-पत्योः, आमि-पतीनाम् । पत्यौ । पतिशब्दात्सप्तम्येकवचनविवक्षायां ङौ कृते "औत्" इति औत्वे यणि 'पत्यौ' इति । द्विवचनबहुवचने-पत्योः, पतिषु, इति । समासे तु भूप० । इति । पतिशब्दस्य समासे घिसंज्ञात्वात्-भूपतिना, भूपतये, भूपतेः २, भूपतौ, इत्यादि रूपाणि । कति शब्द इति । "किमः संख्यापरिमाणे" इत्यनेन किंशब्दात् बहुत्वसंख्यावच्छिन्नसंख्येयविषयप्रश्न एव डतिरित्याकरे स्पष्टम् । बहुगण इति । बहुश्च, गणश्च, वतुश्च डतिश्च, इति समाहारद्वन्द्वः । एतत्संख्यासंज्ञं स्यादित्यर्थः । डति चेति । डतीत्यविभक्तिको निर्देशः । प्रत्ययत्वात्तदन्तग्रहणम् । पूर्वसूत्रात् संख्येत्यनुवर्तते । "ष्णान्ता षट्" इत्यतः षडिति च, तदाह—डत्यन्तेति । षड्भ्यो लुगिति । अत्र 'जश्शसोः' इत्यनुवर्तते । प्रत्ययस्य लुगिति । "अदर्शनं लोपः" इत्यतोऽदर्शनमित्यनुवर्तते । प्रत्ययस्यादर्शनं लुक्श्लुलुप्संज्ञकं स्यादित्यर्थः प्रतीयते । अत्रानुवृत्तस्यादर्शनस्यानेकसंज्ञाकरणसामर्थ्यात्तन्त्राद्याश्रित्य तद्भावितसंज्ञा इह विज्ञायते । तेन संज्ञासङ्करोऽत्र न भवति, तदेतदाह—लुक्श्लुलुप्शब्दैरित्यादिना । सति तु संज्ञासङ्करे हन्तीत्यत्र शब्लुकि "श्लौ" इति द्वित्वं स्यात् । जुहोतीत्यत्र श्लौ सति "उतो वृद्धिर्लुकि हलि" इति वृद्धिः स्यादिति भावः । प्रत्ययलोपे प्रत्ययलक्षणमिति । प्रत्ययः लक्षणं यस्य तत् प्रत्ययलक्षणम् । प्रत्ययस्य लोपे सति प्रत्ययनिमित्तकं कार्यं स्यादित्यर्थः । न लुमताङ्गस्येति । प्रत्ययलोपे प्रत्ययलक्षणमित्यनुवर्तते । लुइत्येकदेशोऽस्यास्तीति लुमान् । लुक्शब्दः, श्लुशब्दः, लुप्शब्दश्च । तेन शब्देन प्रत्ययलोपे विहिते प्रत्ययनिमित्तकमङ्गकार्यं न स्यादित्यर्थः ।

१।६३। लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति २ । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु । युष्मद्-अस्मद्-षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः २ ॥ त्रेस्त्रयः ७।१।५३। त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि प्रियत्रयाणाम् ॥ त्यदादीनामः ७।२।१०२। एषामकारो विभक्तौ । द्विपर्यन्तानामेवेष्टिः । द्वौ । द्वौ । द्वाभ्याम् ।

---

कति । कतिशब्दस्य बहुत्वविशिष्टवाचकत्वात् प्रथमाबहुवचने जसि कृते "बहुगणवतुडतिसंख्या" इत्यनेन डत्यन्तत्वात् कतिशब्दस्य संख्यासंज्ञायां सत्याम् "डति च" इति षट्संज्ञा जाता । 'कति जस्' इत्यवस्थायां "षड्भ्यो लुक्" इति जसो लुकि सति "प्रत्ययलोपे प्रत्ययलक्षणम्" इत्यनेन प्रत्ययलक्षणं मत्वा "जसि च" इति कतिशब्दस्येकारस्य गुणे प्राप्ते "न लुमताङ्गस्य" इत्यनेन अङ्गकार्यस्य गुणस्य निषेधे विहिते सति 'कति' इति रूपम् । कति । कतिशब्दात् द्वितीयाबहुवचने शसि कृते संख्यासंज्ञां विधाय षट्संज्ञा कृताऽनन्तरम् "षड्भ्यो लुक्" इति लुकि सति 'कति' इति रूपम् । त्रिष्विति । पुंस्त्रीनपुंसकेष्वित्यर्थः । सरूपा इति । समानानि रूपाणि येषामित्यर्थः । त्रयः । त्रिशब्दस्य बहुत्ववाचकत्वात् प्रथमाबहुवचने जसि कृते "चुटू" इति जसो जकारस्येत्संज्ञायां लोपे च 'त्रि—अस्' इति स्थिते "जसि च" इति गुणे "एचोऽयवायावः" इत्ययादेशे रुत्वे विसर्गे च 'त्रयः' इति रूपम् । त्रीन् । त्रिशब्दात् शसि शसः शकारस्येत्संज्ञायां लोपे च "प्रथमयोः पूर्वसवर्णः" इति पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घादेशे कृते "तस्माच्छसो नः पुंसि" इति सकारस्य नकारादेशे कृते 'त्रीन्' इति रूपम् । त्रेस्त्रय इति । "आमि सर्वनाम्नः" इत्यत आमीत्यनुवर्तते, तदाह—त्रिशब्दस्येत्यादिना । त्रयाणाम् । त्रिशब्दात् षष्ठीबहुवचनविवक्षायाम् आमि कृते सति 'त्रि—आम्' इति स्थिते "त्रेस्त्रयः" इति त्रिशब्दस्य त्रयादेशे कृते "ह्रस्वनद्यापो नुट्" इति नुटि "नामि" इति दीर्घे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे 'त्रयाणाम्' इति रूपम् । गौणत्वेऽपि प्रियत्रयाणामिति । ननु अत्र "गौणमुख्ययोर्मुख्ये कार्यं सम्प्रत्ययः" इति न्यायात् त्रिशब्दस्याऽन्यपदार्थे विशेषणत्वेन गौणत्वात् प्रियत्रयाणामित्यत्र "त्रेस्त्रयः" इति त्रयादेशो न स्यादिति चेद्, न । तस्य पदकार्ये एव प्रवृत्तेः । अत एव उपसर्जनानां सर्वनामत्वप्रतिषेध आरब्धो वार्तिककृतेति सङ्गच्छत इति दिक् । त्यदादीनाम इति । "अष्टन आ विभक्तौ" इत्यतो विभक्तावित्यनुवर्तते । एषामिति । त्यदादीनामित्यर्थः । त्यद् आदिर्येषामिति विग्रहः । द्विपर्यन्तानामिति । सर्वादिगणे ये त्यदादयः पठिताः तेषामिह द्विपर्यन्तानामेव ग्रहणे भाष्यकारस्येच्छेत्यर्थः । द्वौ । द्विशब्दस्य द्वित्वनियतत्वात् द्विशब्दो नित्यं द्विवचनान्तः । अतो द्विशब्दात् प्रथमाद्विवचने औ समागते 'द्वि औ' इति स्थिते "त्यदादीनामः" इत्यकारान्तादेशे "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे प्राप्ते "नादिचि" इति निषिद्धे "वृद्धिरेचि" इति वृद्धौ कृतायां

भ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । पाति लोकमिति पपीः सूर्यः ॥ दीर्घाज्जसि च ६।१।१०५। दीर्घाज्जसि इति च परे न पूर्वसवर्णः । पप्यौ, पप्यः । हे पपीः । पपीम् , पपीन् । पप्या, पपीभ्याम् , पपीभिः । पप्ये, पपीभ्यः । पप्यः २ । पप्योः । दीर्घत्वान्न नुट्, पप्याम् । ङौ तु सवर्णदीर्घः । पपी, पप्योः, पपीषु । एवं वातप्रम्यादयः ।

---

सत्यां 'द्वौ' इति रूपम् । द्वौ । द्वितीयाद्विवचने औटि "त्यदादीनामः" इति अत्वे वृद्धौ 'द्वौ' इति । द्वाभ्याम । द्विशब्दात् भ्यामि त्यदाद्यत्वे "सुपि च" इति दीर्घे 'द्वाभ्याम्' इति । द्वयोः । द्विशब्दाद् ओसि "त्यदादीनामः" इत्यकारान्तादेशे 'द्व ओस्' इति जाते "ओसि च" इति द्वशब्दगताऽकारस्य एत्वे "एचोऽयवायावः" इत्ययादेशे सस्य रुत्वे विसर्गे च 'द्वयोः' इति रूपम् । पपीः । पा रक्षणे इति धातोः औणादिक "पापोः किद्वे च" इति सूत्रेण ईप्रत्यये द्वित्वे अभ्यासकार्ये ईप्रत्ययस्य कित्वात् "आतो लोप इटि च" इत्याकारलोपे निष्पन्नपपीशब्दस्य कृदन्तत्वात्प्रातिपदिकसंज्ञायां प्रथमैकवचनसुप्रत्यये समागते 'पपी-सु' अत्र उकारस्येत्संज्ञायां लोपे च "ससजुषो रुः" इति सस्य रुत्वे अनुबन्धलोपे रेफस्य "खरवसानयोर्विसर्जनीयः" इति विसर्गे सति रूपम् । पप्यौ । 'पपी—औ' इति स्थिते 'प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे प्राप्ते "दीर्घाज्जसि च" इति निषेधे "इको यणचि" इति यणि 'पप्यौ' इति रूपम् । पप्यः । पूर्ववत्साधनिका । हे पपीः । ह्रस्वान्तत्वाभावान्न सुलोपः । सम्बोधनद्विवचनवहुवचने-पप्यौ, पप्यः इति । अमि-पपीम् "अमि पूर्वः"। औटि-पप्यौ, साधनिकापूर्ववत् । शसि-अनुबन्धलोपे पूर्वसवर्णदीर्घादेशे कृते "तस्माच्छसो नः पुंसि" इति शसः सकारस्य नकारादेशे—'पपीन्' इति रूपम् । पप्या । 'पपी-आ' अत्र "इको यणचि" इति यणि रूपम् । पपीशब्दाद्भ्यामि—'पपीभ्याम्' इति रूपम् । भिसि—पपीभिः । चतुर्थ्येकवचने 'ङे परे' यणि रूपम्—पप्ये । भ्यसि रुत्वे विसर्गे च —पपीभ्यः । ङसि अनुबन्धलोपे यणि—पप्यः । ओसि परे यणि—पप्योः । पप्याम् । आमि "इको यणचि" इति यणि रूपम् । सप्तम्येकवचने ङौ परे अनुबन्धलोपे "इको यणचि" इति यणि प्राप्ते तं प्रबाध्य "अकः सवर्णे दीर्घः" इति दीर्घे कृते—'पपीः' इति रूपम् । सप्तमीद्विवचने ओसि—पप्योः । सुपि परे पकारस्य "हलन्त्यम्" इतीत्संज्ञायां "तस्य लोपः" इति लोपे "आदेशप्रत्यययोः" इति सकारस्य मूर्धन्यादेशे ( आन्तरतम्यात् ) षकारे कृते सति 'पपीषु' इति रूपम् । वातप्रम्यादय इति । वातप्रमीः निःश्ङ्को मृगाकृतिः पशुरिति "ईदूतौ च सप्तम्यर्थे" इति सूत्रे कौस्तुभे । आदिना यान्त्यनेनेति ययीर्मार्गः इति ग्राह्यम् । रूपाणि—वातप्रमीः, वातप्रम्यौ, वातप्रम्यः, प्र० । हे वातप्रमीः, हे वातप्रम्यौ, हे वातप्रम्यः, सम्बो० । वातप्रमीम्, वातप्रम्यौ, वातप्रमीन् , द्वि० । वातप्रम्या, वातप्रमीभ्याम् , वातप्रमीभिः, तृ० । वातप्रम्ये, वातप्रमीभ्याम् , वातप्रमीभ्यः, च० । वातप्रम्यः, वातप्रमीभ्याम् , वातप्रमीभ्यः, पं० । वातप्रम्यः, वातप्रम्योः, वातप्रम्याम्, ष० ।

बह्वयः श्रेयस्यो यस्य स बहुश्रेयसी ॥ यू स्त्र्याख्यौ नदी १।४।३। ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । "प्रथमलिङ्गग्रहणं च" पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥ अम्बार्थनद्योर्ह्रस्वः ७।३।१०७। सम्बुद्धौ । हे बहुश्रेयसि ॥ आण्नद्याः ७।३।११२। नद्यन्तात्परेषां ङितामाडागमः ॥ आटश्च ६।१।९०। आटोऽचि परे वृद्धिरेकादेशः ॥ बहुश्रेयस्यै । बहुश्रेयस्याः २ । बहुश्रेयसीनाम् ॥

---

वातप्रम्यौ, वातप्रम्योः, वातप्रमीषु सप्तमी । क्विबन्तवातप्रमीशब्दस्य तु अमि-शसि-ङौ च-"एरनेकाचः" इति यणि-वातप्रम्यम्, वातप्रम्यः, वातप्रम्यि इति विशेषो ज्ञेयः । बहुश्रेयसी । "ईयसो बहुव्रीहेर्न" इति निषेधादुपसर्जनह्रस्वो न । समासत्वात्प्रातिपदिकसंज्ञायां प्रथमैकवचने सौ समागते उकारस्येत्संज्ञायां लोपे च 'बहुश्रेयसी-स्' इति स्थिते ङ्यन्तत्वात् "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सुसम्बन्धिअपृक्तसंज्ञकस् इत्यस्य लोपे 'बहुश्रेयसी' इति रूपम् । औपरे-बहुश्रेयस्यौ, जसि-बहुश्रेयस्यः । अत्र दीर्घत्वात् पूर्वसवर्णदीर्घनिषेधे सति यणि कृते रूपम् । यू स्त्र्याख्याविति । ईश्च ऊश्च यू । व्याख्यानाद्दीर्घयोरेव ग्रहणम्, यू इति शब्दविशेषणम् । तदन्तविधिस्तदाह—ईदूदन्ताविति । पूर्वमित्यादि । समासादिवृत्तिप्रवृत्तेः पूर्वं स्त्रीलिङ्गस्य सतः वृत्तिदशायामुपसर्जनतया स्त्रीलिङ्गत्वाभावेऽपि नदीत्वं वक्तव्यमिति वार्तिकार्थः । अम्बार्थेति । "सम्बुद्धौ च" इत्यतः सम्बुद्धावित्यनुवर्तते । अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्सम्बुद्धौ इत्यर्थः । हे बहुश्रेयसि । बहुश्रेयसीशब्दात् सम्बोधनप्रथमैकवचनविवक्षायां सुप्रत्यये उकारस्येत्सञ्ज्ञायां लोपे च "यू स्त्र्याख्यौ नदी" इति नदीसञ्ज्ञायां 'बहुश्रेयसी स्' इति स्थिते "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वे "एकवचनं सम्बुद्धिः" इति सम्बुद्धिसञ्ज्ञायां "एङ्ह्रस्वात्सम्बुद्धेः" इति सलोपे सति 'हे बहुश्रेयसि' इति रूपम् । द्विवचनबहुवचने-बहुश्रेयस्यौ, बहुश्रेयस्यः । द्वितीया-बहुश्रेयसीम्, बहुश्रेयस्यौ, बहुश्रेयस्यः । तृतीया-बहुश्रेयस्या, बहुश्रेयसीभ्यां, बहुश्रेयसीभिः । आण्नद्या इति । "अङ्गस्य" इत्यधिकृतं पञ्चम्या विपरिणम्यते । 'नद्याः' इति पञ्चम्यन्तेन विशेष्यते । तदन्तविधिः । "घेर्ङिति" इत्यतो ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते, तदाह—नद्यन्तादित्यादिना । आटश्चेति । "इको यणचि" इत्यतोऽचीति "वृद्धिरेचि" इत्यतो वृद्धिरिति चानुवर्तते । "एकः पूर्वपरयोः" इति चाधिकृतम्, तदाह—आटोऽचीत्यादिना । बहुश्रेयस्यै । बहुश्रेयसीशब्दाच्चतुर्थ्येकवचनविवक्षायां ङे समागते "प्रथमलिङ्गग्रहणञ्च" इति बहुश्रेयसीशब्दस्य नदीसञ्ज्ञायाम् "आण्नद्याः" इति ङेः आडागमे टकारस्येत्सञ्ज्ञायां लोपे च "आद्यन्तौ टकितौ" इत्याद्यावयवे भूते ङकारस्येत्सञ्ज्ञायां लोपे च 'बहुश्रेयसी-आ ए' इति स्थिते "आटश्च" इति पूर्वपरयोः स्थाने वृद्धौ कृतायां "इको यणचि" इति यणि 'बहुश्रेयस्यै' इति रूपम् । बहुश्रेयसीभ्यां, बहुश्रेयसीभ्यः चतुर्थी । बहुश्रेयस्याः । बहुश्रेयसीशब्दात् पञ्चम्येकवचनविवक्षायां ङसौ समागते ङकारस्येका-

**ङेराम्नद्याम्नीभ्यः ७।३।११६।** नद्यन्तादाबन्तान्नीशब्दात्परस्य ङेराम् । बहुश्रेयस्याम् । शेषं पपीवत् । अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् । प्रधीः ॥ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७।** श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते ॥ एरने-

---

रस्य चैत्सञ्ज्ञायां लोपे च "प्रथमलिङ्गग्रहणञ्च" इति नदीसञ्ज्ञायाम् "आण्नद्याः" इत्याडागमे "आटश्च" इति वृद्धौ यणि रुत्वे विसर्गे च 'बहुश्रेयस्याः' इति रूपम् । बहुश्रेयसीभ्याम्, बहुश्रेयसीभ्यः, पञ्चमी । बहुश्रेयस्याः । बहुश्रेयसीशब्दात् षष्ठ्येकवचने ङसि कृते पूर्ववत् साधनिका ज्ञेया । ओसि-बहुश्रेयस्योः । 'बहुश्रेयसी-आम्' इति स्थिते नदीसञ्ज्ञायाम् "ह्रस्वनद्यापो नुट्" इति नदीसञ्ज्ञकात्परस्यामो नुडागमे टित्वादाद्यावयवे जाते उकारटकारयोरित्सञ्ज्ञायां लोपे च कृते परेण संयोज्य—'बहुश्रेयसीनाम्' इति रूपम् । ङेरामिति । अङ्गत्वात् प्रत्ययग्रहणपरिभाषया च तदन्तविधिमभिप्रेत्य आह—नद्यन्तादित्यादिना । बहुश्रेयस्याम् । बहुश्रेयसीशब्दात् सप्तम्येकवचने ङौ समागते "ङेराम्नद्याम्नीभ्यः" इति ङेरामि कृते नदीसञ्ज्ञायां सत्यां स्थानिवद्भावेन ङित्वमानीय "आण्नद्याः" इत्याडागमे टित्वादाद्यावयवे 'बहुश्रेयसी-आ आम्' इति जाते "आटश्च" इति वृद्धौ "इको यणचि" इति यणि 'बहुश्रेयस्याम्' इति रूपम् । सप्तमीद्विवचनबहुवचने-'बहुश्रेयस्योः, बहुश्रेयसीषु' इति । अङ्यन्तत्वादिति । औणादिकप्रत्ययान्तत्वादिति भावः । तथाह्यत्र सङ्ग्रहः-'अवी तन्त्री तरी लक्ष्मी धी ह्री श्रीणामुणादिषु' । 'सप्तस्त्रीलिङ्गशब्दानां न सुलोपः कदाचन' । अतिलक्ष्मीः । लक्ष्मीमतिक्रान्त इति विग्रहे "अत्यादयः क्रान्ताद्यर्थे" इति समासः । अस्त्रीप्रत्ययान्तत्वान्नोपसर्जनह्रस्वः । 'अतिलक्ष्मी-सु' अत्रानुबन्धलोपे सस्य रुत्वे विसर्गत्वे च रूपम् । शेषं बहुश्रेयसीवदिति । 'प्रथमलिङ्गग्रहणञ्च' इति नदीत्वादिति भावः । प्रधीः । प्रध्यायतीति प्रधीः । "ध्यायते सम्प्रसारणञ्च" इति क्विप् । यकारस्य सम्प्रसारणमिकारः । "सम्प्रसारणाच्च" इति पूर्वरूपम् । "हलः" इति दीर्घः । कृदन्तत्वेन प्रातिपदिकत्वात् सुबुत्पत्तिः । अङ्यन्तत्वान्न सुलोपः । रुत्वविसर्गौ 'प्रधीः' इति रूपम् । प्रधी-औ इति स्थिते "इको यणचि" इति यणपवादमियङमाशङ्कितुमाह—अचि श्नुधात्विति । इश्च उश्च यू तयोः य्वोः इवर्णोवर्णयोरित्यर्थः । श्नुश्च धातुश्च भ्रूश्चेति द्वन्द्वः । प्रत्ययग्रहणपरिभाषया श्नुप्रत्ययान्तं विवक्षितम् । य्वोरिति धातोरेव विशेषणम् । तदन्तविधिः । "अङ्गस्य" इत्यधिकृतम् । ततश्च 'प्रत्ययः' इति लभ्यते । अचीति तद्विशेषणम् । तदादिविधिस्तदाह—श्नुप्रत्ययान्तस्येत्यादिना । इति प्राप्ते इति । 'प्रधी-औ' इत्यादाविति शेषः । एरनेकाच इति । "इको यण्" इत्यतो यण् इति "अचि श्नुधातु" इत्यतो धातुरित्यनुवर्तते, तच्चावर्तते । तस्मादेव सूत्रात् अचीति चानुवर्तते । अङ्गस्येत्यधिकृतम् । ततश्च प्रत्यये परत इति लभ्यते । अचीति तद्विशेषणम् । तदादिविधिः । तदाह—

काचोऽसंयोगपूर्वस्य ६।४।८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये । प्रध्यौ, प्रध्यः । प्रध्यम् ; प्रध्यौ; प्रध्यः । प्रध्यि । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु ग्रामण्याम् । अनेकाचः किम् ? नीः, नियौ, नियः । अमि शसि च परत्वादियङ् । नियम् । ङेराम् ।

---

धात्ववयवेत्यादिना । प्रध्यौ । 'प्रधी–औ' इति स्थिते, अत्र "प्रथमयोः पूर्वसवर्णः" इति प्राप्ते "दीर्घाज्जसि च" इति निषिद्धे "इको यणचि" इति यणि प्राप्ते तं प्रबाध्य "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इति प्राप्ते तं बाधित्वा "एरनेकाचोऽसंयोग-पूर्वस्य" इति यणि कृते 'प्रध्य्औ' इति जाते 'अज्झीनं परेण संयुक्तं' 'प्रध्यौ' इति रूपम् । 'प्रधी–जस्' इति स्थिते, अत्र "चुटू" इत्यनेन जकारस्येत्सञ्ज्ञायां "तस्य लोपः" इति लोपे कृते सति "इको यणचि" इति यणि प्राप्ते तं बाधित्वा "अचि श्नुधातु०" इतीयङि प्राप्ते तं प्रबाध्य "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि कृते सकारस्य रुत्वे रेफस्य विसर्गे च 'प्रध्यः' इति रूपम् । सम्बोधने–हे प्रधीः, हे प्रध्यौ, हे प्रध्यः, इति । अत्र प्रक्रिया प्रथमाविभक्तिवज्ज्ञेया । प्रध्यम् । 'प्रधी–अम्' अत्र "अमि पूर्वः" इति पूर्वरूपे प्राप्ते तं बाधित्वा "अचि श्नुधातु०" इतीयङि–प्राप्ते तं प्रबाध्य "एरने-काच०" इति यणि कृते 'प्रध्यम्' इति रूपम् । प्रध्यौ । प्रथमाद्विवचनवत्प्रक्रिया । प्रध्यः—प्रधीशब्दात् शसि, शकारस्येत्सञ्ज्ञायां लोपे च "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घे प्राप्ते तं प्रबाध्य "अचिश्नुधातु०" इतीयङि प्राप्ते तं बाधित्वा "एरने-काच०" इति यणि कृते 'प्रध्यः' इति रूपम् । अत्र पूर्वसवर्णदीर्घाभावान्न नत्वमिति भावः । प्रध्या, प्रधीभ्याम्, प्रधीभिः, तृतीया । प्रध्ये, प्रधीभ्यां, प्रधीभ्यः, चतुर्थी । प्रध्यः, प्रधीभ्याम्, प्रधीभ्यः, पञ्चमी । प्रध्यः, प्रध्योः, प्रध्याम्, षष्ठी । प्रध्यि । प्रधीश-ब्दात्सप्तम्येकवचनविवक्षायां ङौ समागते अनुबन्धलोपे 'प्रधी–ई' इति जाते "अकः सवर्णे दीर्घः" इति दीर्घे प्राप्ते तं बाधित्वा "अचिश्नुधातु०" इतीयङि प्राप्ते तं प्रबाध्य "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि कृते 'प्रध्यि' इति रूपम् । एवं ग्रामणी-रिति । ग्रामं नयति–नियच्छतीति ग्रामणीः । "अग्रग्रामाभ्यां नयतेर्णो वाच्यः" इति णत्वम् । सप्तम्येकवचनं विहाय एवमेव प्रधीशब्दवत् ग्रामणीशब्दस्य रूपाण्यूहनी-यानि । प्रथमैकवचने—अङ्यन्तत्वान्न सुलोपः । अजादौ सर्वत्र "एरनेकाचः" इति यणेव । अस्त्रीत्वान्नदीकार्यं न । हे ग्रामणीः, ग्रामण्यौ, ग्रामण्यः । ग्रामण्यम्, ग्रामण्यौ, ग्रामण्यः । ग्रामण्या । ग्रामण्ये । ग्रामण्योः । ग्रामण्यामिति । सप्तम्यां तु ग्रामणीश-ब्दात् ङौ समागते "ङेराम्नद्याम्नीभ्यः" इति ङेः स्थाने आमि "एरनेकाच" इति यणि 'ग्रामण्याम्' इति भवति । अनेकाचः किमिति । "एरनेकाचः" इत्यत्रेति शेषः । नीः । नीशब्दात्सावागते उकारस्येत्सञ्ज्ञायां च सस्य रुत्वे रस्य विसर्गत्वे च विहिते 'नीः' इति । नीशब्दात्प्रथमाद्विवचने औ समागते "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इती-

नियाम् । असंयोगपूर्वस्य किम् ? सुश्रियौ । यवक्रियौ ॥ **गतिश्च १।४।६०।** प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । "गतिकारकेतरपूर्वपदस्य यण् नेष्यते" । शुद्धधियौ ॥ **न भूसुधियोः ६।४।८५।** एतयोरचि सुपि यण्न । सुधियौ । सुधियः । इत्यादि । सुखमिच्छतीति सुखीः । सुतमिच्छतीति सुतीः । सुख्यौ । सुत्यौ । सुख्युः । सुत्युः ।

---

यङि कृते 'नियौ' इति रूपम् । एवमेव जसि 'नियः' इति । अमि शसि चेति । नीशब्दात् अमि कृते "अमि पूर्वः" इति पूर्वरूपे प्राप्ते तं बाधित्वाऽनेनेयङि कृते 'नियम्' इति । औटि–नियौ, शसि–"प्रथमयोः पूर्वसवर्णः" इति प्रबाध्यानेनेयङि 'नियः' इति रूपम् । निया, नीभ्याम्, नीभिः, तृतीया । नियै, नीभ्याम्, नीभ्यः, चतुर्थी । नियः, नीभ्यां, नीभ्यः, पञ्चमी । नियः, नियोः, नियाम्, षष्ठी । नियामिति । नीशब्दात्सप्तम्येकवचनविवक्षायां ङौ समागते ङकारस्येत्सञ्ज्ञायां लोपे च सति "ङेराम्नद्याम्नीभ्यः" इति ङेरामि विहिते, विहिते चेयङि 'नियाम्' इति रूपम् । सुश्रीः । 'श्रिञ् सेवायाम्' "क्विब्वचि" इत्यादिना क्विप् प्रकृतेर्दीर्घश्च । सु श्रयतीति शोभमाना श्रीरस्येति वा सुश्रीः । सुश्रियाविति । "एरनेकाचोऽसंयोगपूर्वस्य" इति सूत्रे 'असंयोगपूर्वस्य' इत्युक्तत्वात् सुश्रीशब्दान्तर्गतेवर्णस्य धात्ववयवसंयोगपूर्वत्वात् न यण्; किन्तु "अचि श्नुधातुभ्रुवाम्०" इति योगेनैव सर्वत्राजादौ प्रत्यये परे इयङादेशं विधाय नीशब्दवद्रूपाणि ज्ञेयानि । सप्तम्येकवचने तु अङ्यन्तत्वात् "ङेराम्नद्याम्नीभ्यः" इति सूत्रस्याप्राप्तौ ङस्येत्सञ्ज्ञालोपौ कृत्वा इयङि कृते 'सुश्रियि' इति रूपम्बोध्यम् । यवक्रियौ । यवान् क्रीणातीति यवक्रीः । क्रीञ्धातोः क्विपि रूपम् । अत्रापि धात्ववयवसंयोगपूर्वकत्वान्न यण्, किन्तु सर्वत्राजादौ प्रत्यये परे "अचिश्नुधातु०" इतीयङ् बोध्यः । गतिश्चेति । "प्रादयः" इति सम्पूर्णसूत्रमनुवर्तते । "उपसर्गाः क्रियायोगे" इत्यतः 'क्रियायोग' इत्यनुवर्तते तदाह—प्रादय इत्यादिना । क्रियायोग इति । क्रियया अन्वये सतीत्यर्थः । अत्र चकारबलात् "आकडारात्" इति नियमं प्रबाध्य गत्युपसर्गयोः समावेशः । "एरनेकाचः" इति सूत्रे "गतिकारकपूर्वस्यैवेष्यते" इति वार्तिकं पठितम्, तत्तात्पर्यतः संगृह्णाति—गतिकारकेतरेति । शुद्धधियौ । शुद्धा धीर्यस्येति विग्रहः । अत्र शुद्धशब्दस्य गतिकारकेतरत्वात् तत्पूर्वकस्य न यणिति भावः । शुद्धधीशब्दस्य रूपाणि सुश्रीशब्दवद्बोध्यानि । न भूसुधियोरिति । "इणो यण्" इत्यतो यण् इति "ओः सुपि" इत्यतः सुपीति "इको यणचि" इत्यतोऽचीति चानुवर्तते, तदाह—एतयोरित्यादिना । एतयोरित्यनेन सूत्रोक्तभूसुधियोः परामर्शः । अचीति । अजादावित्यर्थः । सुधियाविति । 'सुधी + औ' इत्यत्र "गतिश्च" इति गतिसञ्ज्ञां कृत्वा "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि प्राप्ते "न भूसुधियोः" इति यणादेशाभावे "अचि श्नुधातुभ्रुवाम्०" इतीयङि विहिते 'सुधियौ' । एवं 'सुधियः' इत्यादि बोध्यम् । सुखीः, सुतीः, इति । सुखीशब्दात् सुतीशब्दाच्च सावागते अङ्यन्तत्वात्सुलोपाभावे 'सुखी + सु' 'सुती + सु' इति स्थिते

शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः। **तृज्वत्क्रोष्टुः ७।१।९५।** असम्बुद्धौ सर्वनामस्थाने परे क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः॥ **ऋतो ङिसर्वनामस्थानयोः ७।३।११०।** ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च। इति प्राप्ते॥ **ऋदुशनस्पुरुदंसोऽनेहसां च ७।१।९४।** ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ॥ **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६।४।११।** अप्रादीनामुपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने। क्रोष्टा, क्रोष्टारौ, क्रोष्टारः। क्रोष्टून्॥

---

उकारस्येत्सञ्ज्ञायां लोपे च कृते सस्य रुत्वे विसर्गे च 'सुखीः' 'सुतीः' इति रूपे सिध्यतः। सुख्यौ, सुत्याविति। सुखीशब्दात् सुतीशब्दाच्च प्रथमाद्विवचने आवागते "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि "सुख्यौ, सुत्यौ" इति भवतः। सुख्युः, सुत्युरिति। सुखीशब्दात् सुतीशब्दाच्च पञ्चम्येकवचनविवक्षायां ङसि समागते ङकारस्येकारस्य चेत्सञ्ज्ञायां लोपे च 'सुखी + अस्' 'सुती + अस्' इति स्थिते "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि "ख्यत्यात्परस्य" इति ङसिसम्बन्धिनोऽकारस्योकारादेशे कृते सस्य रुत्वे विसर्गे च 'सुख्युः,सुत्युः' इति रूपे स्तः। 'सुखी + ङि' इत्यत्र ङस्येत्सञ्ज्ञायां लोपे च "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि 'सुख्यि' इति रूपम्। शम्भुर्हरिवदिति। तत्र पूर्वसवर्णदीर्घः–ऊकारः, गुणस्तु–ओकारः, अव् इत्यादयो विशेषाः, आन्तरतम्यात् बोध्या इति यावत्। शम्भुः शम्भू शम्भवः प्रथमा। हे शम्भो हे शम्भू हे शम्भवः सम्बोधनम्। शम्भुं शम्भू शम्भून् द्वितीया। शम्भुना शम्भुभ्यां शम्भुभिः तृतीया। शम्भवे शम्भुभ्यां शम्भुभ्यः, चतुर्थी। शम्भोः शम्भुभ्यां शम्भुभ्यः पञ्चमी। शम्भोः शम्भ्वोः शम्भूनाम् षष्ठी। शम्भौ शम्भ्वोः शम्भुषु सप्तमी। तृज्वत्क्रोष्टुरिति। प्रत्ययग्रहणपरिभाषया तृच् इत्यनेन तृजन्तं गृह्यते। "तेन तुल्यम्" इति तृतीयान्ताद्वतिः। "इतोत्सर्वनामस्थाने" इत्यतः सर्वनामस्थाने इति "सख्युरसम्बुद्धौ" इत्यतोऽसम्बुद्धाविति चानुवर्तते। तदाह—असम्बुद्धावित्यादिना। ऋतो ङीति। "ह्रस्वस्य गुणः" इत्यतो गुण इत्यनुवर्तते। अङ्गस्येत्यधिकृतम्। ऋत इत्यनेन विशिष्यते। तदन्तविधिः। तदाह—ऋतोऽङ्गस्येत्यादिना। ऋदुशनसिति। "सख्युरसम्बुद्धौ" इत्यतः असम्बुद्धाविति "अनङ् सौ" इत्यतोऽनङिति चानुवर्तते। अङ्गस्येत्यधिकृतम् ऋदादिभिर्विशिष्यते तदाह—ऋदन्तानामित्यादिना। उशना—शुक्राचार्यः, पुरुदंसा–मार्जारः, अनेहा–कालः। अप्तृन्निति। "नोपधायाः" इत्यत उपधाया इत्यनुवर्तते। "सर्वनामस्थाने चासम्बुद्धौ" इति चकारवर्जं सर्वमनुवर्तते। तदाह—अप्रादीनामिति। नप्ता—पौत्रो दौहित्रो वा, नेष्टा–अध्वर्युगणीय ऋत्विक्। पोता–ब्रह्मगणीय ऋत्विक्, होता–ऋग्वेदीय ऋत्विक्, प्रशास्ताऽपि–ऋत्विक्, इति बोध्यम्। क्रोष्टा। क्रोष्टुशब्दात्प्रथमैकवचने सावागते तस्य सर्वनामस्थानत्वात् "तृज्वत्क्रोष्टुः" इति तृज्वद्भावे विहिते "ऋतो ङिसर्वनामस्थानयोः" इति सर्वनामस्थानपरत्वात् गुणे प्राप्ते परत्वात्र "विप्रतिषेधे परं कार्यम्"

**विभाषा तृतीयादिष्वचि ७।१।९७।** अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा, क्रोष्ट्रे ॥ **ऋत उत् ६।१।१११।** ऋतो ङसिङसोरति उदेकादेशः। रपरः ॥ **रात्सस्य ८।२।२४।** रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रस्य विसर्गः। क्रोष्टुः २।

---

इत्यस्मिन् सूत्रे 'इष्टवाची परशब्द' इति भाष्ये ध्वनितत्वात्पूर्वविप्रतिषेधं मत्वा "ऋदुशनस्पुरुदंसोऽनेहसां च" इत्यनङि प्राप्ते "ङिच्च" इत्यन्तादेशे विहिते ङकारस्येत्सञ्ज्ञायां लोपे च 'क्रोष्टन्+सु' इति जाते "हल्ङ्याब्भ्यो दीर्घात्" इति सस्य लोपे 'अप्तृन्तृच्' इति सर्वबुद्धिभिन्नसर्वनामस्थानपरत्वादुपधादीर्घत्वे "नलोपः प्रातिपदिकान्तस्य" इति नस्य लोपे च कृते 'क्रोष्टा' इति रूपम्। क्रोष्टारौ २। 'क्रोष्टु+औ' इत्यत्र "तृज्वत्क्रोष्टुः" इति तृज्वद्भावे कृते "ऋतो ङिसर्वनामस्थानयोः" इति गुणेन अकारे, तस्य "उरण् रपरः" इति रपरत्वे च कृते 'क्रोष्टर् औ' इति जाते "अप्तृन्तृच्" इत्यनेनोपधाया दीर्घत्वे संयोगे च विहिते 'क्रोष्टारौ' इति रूपम्। एवमेव क्रोष्टारः इति। क्रोष्टारमिति। क्रोष्टुशब्दात् द्वितीयैकवचनविवक्षायाम् अमि समागते "तृज्वक्रोष्टुः" इत्यनेन तृजन्तेन तुल्यत्वे कृते "अमि पूर्वः" इति पूर्वरूपे प्राप्ते तं प्रबाध्य "ऋतो ङिसर्वनामस्थानयोः" इति गुणे अकारे, कृते "उरण् रपरः" इति रपरे च क्रोष्ट् अर् अम् इति जाते "अप्तृन्तृच्" इत्यनेनोपधाया दीर्घत्वे संयोगे च विहिते 'क्रोष्टारम्' इति रूपम्। एवमेव 'क्रोष्टारौ' इति बोध्यम्। क्रोष्टून् इति। क्रोष्टुशब्दाच्छसि समागते शसोऽसर्वनामस्थानत्वात् क्रोष्टुशब्दस्य तृज्वद्भावाभावे शसः शस्येत्सञ्ज्ञायां लोपे च "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे "तस्माच्छसो नः पुंसि" इति सस्य नत्वे 'क्रोष्टून्' इति रूपं सम्पन्नम्। विभाषा तृतीयादिष्विति। "तृज्वत्क्रोष्टुः" इत्यनुवर्तते। अचीति तृतीयादिविभक्तेर्विशेषणम्। तदादिविधिस्तदाह—अजादिष्वित्यादिना। क्रोष्ट्रा. 'क्रोष्टु+टा' इत्यत्र "चुटू" इति टस्येत्सञ्ज्ञायां लोपे च "विभाषा तृतीयादिष्वचि" इति तृज्वद्भावे "इको यणचि" इति यणि विहिते 'क्रोष्ट्रा' इति रूपम्। क्रोष्टुना। तृज्वद्भावाभावे 'क्रोष्टु+टा' इत्यत्र 'शेषो घ्यसखि' इति घिसञ्ज्ञायाम् "आङो नाऽस्त्रियाम्" इति टाइत्यस्य स्थाने नादेशे कृते 'क्रोष्टुना' इति रूपम्। क्रोष्ट्रे। क्रोष्टुशब्दाच्चतुर्थ्येकवचनविवक्षायां ङेसमागते 'क्रोष्टु+ङे' इति स्थिते, ङकारस्येत्सञ्ज्ञायां लोपे च 'क्रोष्टृ+ए' इति जाते 'विभाषा तृतीयादिष्वचि' इति तृज्वद्भावे "इको यणचि" इति यणि 'क्रोष्ट्रे' इति रूपम्। पक्षे घिसञ्ज्ञायां "घेर्ङिति" इति गुणे विहिते "एचोऽयवायावः" इत्यवादेशे 'क्रोष्टवे' इति रूपम्। ऋत उदिति। "एङः पदान्तादति" इत्यतः अतीति "ङसिङसोश्च" इत्यतो ङसिङसोरिति चानुवर्तते। ङसिङसोरित्यवयवषष्ठी अतीत्यत्रान्वेति। अङ्गस्येत्यधिकृतम् ऋत इत्यनेन विशिष्यते, तदन्तविधिस्तदाह—ऋतो ङसिङसोरित्यादिना। रपर इति। ऋकारस्य अकारस्य च स्थाने प्राप्नुवतः उकारस्य ऋकारस्थानिकत्वानपायादिति

क्रोष्ट्रोः २ । ( नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वप्रतिषेधेन ) क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शम्भुवत् । हूहूः, हूह्वौ, हूह्वः । हूहूम् इत्यादि । अतिचमूशब्दे तु नदी-

---

भावः । रात्सस्येति । "संयोगान्तस्य लोपः" इत्येव सिद्धे नियमार्थमिदमित्याह—स-स्यैवेति । तेन 'ऊर्क्' इत्यादौ न संयोगान्तलोपः । रस्य विसर्ग इति । "खरवसानयोः" इत्यनेनेत्यर्थः । क्रोष्टुरिति । क्रोष्टुशब्दात् ङसिः अत्र सकारोत्तरवर्तिन इकारस्य तथा ङस्येत्सञ्ज्ञायां लोपे च "विभाषा तृतीयादिष्वचि" इति तृज्वद्भावे कृते 'क्रोष्टृ + अस्' इत्यवस्थायाम् "ऋत उत्" इति पूर्वपरयोरुत्वे रपत्वे च क्रोष्टुर् स् इति भूते 'रात्सस्य' इति सस्य लोपे "खरवसानयोर्विसर्जनीयः" इति रस्य विसर्गत्वे च कृते 'क्रोष्टुः' इति रूपम् । तृज्वद्भावाभावपक्षे घिसञ्ज्ञायां "घेर्ङिति" इति गुणे 'क्रोष्टो + अस्' इति जाते "ङसिङसोश्च" इति पूर्वरूपे सस्य रुत्वे विसर्गे च 'क्रोष्टोः' इति । पञ्चमीद्विवचनबहुव-चने तु-क्रोष्टुभ्यां, क्रोष्टुभ्यः । षष्ठ्येकवचनं पञ्चम्येकवचनवद् बोध्यम् । क्रोष्ट्रोः २ क्रोष्टुशब्दादोसि "विभाषा तृतीयादिष्वचि" इति तृज्वद्भावे "इको यणचि" इति यणि रुत्वे विसर्गे च "क्रोष्ट्रोः" इति रूपम् । तृज्वद्भावाभावपक्षे-'क्रोष्टु + ओस्' इति दशायाम् "इको यणचि" इति यणि सस्य रुत्वे विसर्गे च 'क्रोष्ट्वोः' इति रूपम् । नुमचिरेति । अचिरेत्यनुकरणम् । तेन "अचिर ऋतः" इति विहितो रेफो विवक्षितः । क्रोष्टूनामिति । क्रोष्टुशब्दात् षष्ठीबहुवचनविवक्षायाम् आमि कृते 'क्रोष्टु + आम्' इति स्थिते अत्र "विभाषा तृतीयादिष्वचि" इति तृज्वद्भावे प्राप्ते तं बाधित्वा "ह्रस्वनद्यापो नुट्" इति नुटि उकारटकारयोरित्सञ्ज्ञायां लोपे च टित्वादाद्यावयवे जाते 'क्रोष्टु + नाम्' इति भूते "नामि" इति अजन्ताङ्गस्य दीर्घे 'क्रोष्टूनाम्' इति रूपम् । क्रोष्टरि । क्रोष्टुशब्दात् सप्तम्येकवचनविवक्षायां ङौ समागते ङस्येत्सञ्ज्ञायां लोपे च "विभाषा तृतीयादि-ष्वचि" इति तृज्वद्भावे विहिते "ऋतो ङिसर्वनामस्थानयोः" इत्यनेन अकाररूपे गुणे विहिते "उरण् रपरः" इति रपरे च कृते सर्वस्मिन् संयुक्ते सति 'क्रोष्टरि' इति रूपम् । तृज्वद्भावाभावपक्षे-'क्रोष्टु + ङि' इत्यवस्थायां घिसञ्ज्ञायाम् "अच्च घेः" इत्यनेन ङेः स्थाने औकारे घिसञ्ज्ञकस्य च स्थानेऽकारे जाते "वृद्धिरेचि" इति वृद्धौ 'क्रोष्टौ' इति रूपम् । ओसि पूर्ववद्-'क्रोष्ट्रोः, क्रोष्ट्वोः' इति रूपम् । सप्तमीबहुवचने-'क्रोष्टुषु' इति । पक्षे इति । तृतीयादिष्वजादिषु तृज्वत्त्वाभावपक्षे इत्यर्थः । हलादाविति । हला-दिषु विभक्तिषु परेष्वित्यर्थः । शम्भुवदिति । शम्भुशब्दवद्रूपाणि बोध्यानि । हूहू-रिति । गन्धर्वविशेषवाचि अव्युत्पन्नं प्रातिपदिकमेतत् । हूहूशब्दात्प्रथमैकवचने सावागते उकारनिवृत्तौ सत्यां सस्य रुत्वे विसर्गे च 'हूहूः' इति रूपम् । हूह्वा-विति । हूहूशब्दात्प्रथमाद्विवचने औ समागते "इको यणचि" इति यणि विहिते 'हूह्वौ' इति रूपम् । एवमेव हूहूशब्दस्याजादौ विभक्तौ कार्यं विज्ञेयम् । हूहूम् इति । अत्र "इको यणचि" इति यणं बाधित्वा "अमि पूर्वः" इति पूर्वरूपे 'हूहूमि'ति रूपम् ।

कार्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः । अतिचमूनाम् ॥ खलपूः ।
**ओः सुपि ६।४।८३।** धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्त-

---

शसि—'हूहून्' इति विज्ञेयम् । टायाम्—यणि 'हूह्वा' इत्यादि । अतिचमूशब्दे स्थिति । चमूमतिक्रान्तः, अतिचमूः । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः । स्त्रीप्रत्ययान्तत्वाभावात् "गोस्त्रियोः" इति ह्रस्वो न भवति । नदीकार्यमिति । "प्रथमलिङ्गग्रहणं च" इति वचनादिति भावः । अतिचमूः, अतिचम्वौ, अतिचम्वः प्रथमा । हे अतिचमु इति । अतिचमूशब्दाद् सम्बोधनैकवचने सौ; उगते "प्रथमलिङ्गग्रहणञ्च" इति नदीसञ्ज्ञायाम् "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वत्वे "एङ्ह्रस्वात्सम्बुद्धेः" इति सस्य लोपे च कृते 'हे अतिचमु' इति रूपम् । 'अतिचम्वै' इति । अतिचमूशब्दात् चतुर्थ्येकवचने ङेकृते ङकारस्येत्सञ्ज्ञायां लोपे च कृते नदीसञ्ज्ञायाम् "आण्नद्याः" इत्यनेन ङकारेत्सञ्ज्ञकस्यैकारस्याडागमे टित्वादाद्यावयवे टकारस्येत्सञ्ज्ञायां लोपे च 'अतिचमू+आ ए' इति जाते, अत्र "आटश्च" इत्यनेन वृद्धौ कृतायाम् "इको यणचि" इति यणि सति "अतिचम्वै" इति रूपम् । 'अतिचम्वाः' इति । अतिचमूशब्दात् ङसौ विहिते अनुबन्धलोपे च कृते नदीसञ्ज्ञायाम् "आण्नद्याः" इत्याडागमे "आटश्च" इति वृद्धौ "इको यणचि" इति यणि सति सस्य रुत्वे विसर्गे च विहिते 'अतिचम्वाः' इति रूपम् । एवमेव षष्ठ्येकवचनमपि बोध्यम् । अतिचमूनामिति । अतिचमूशब्दात्षष्ठीबहुवचनविवक्षायाम् आमि समागते नदीसञ्ज्ञायाम् "ह्रस्वनद्यापो नुट्" इति नुडागमे टित्वादाद्यावयवे च जाते 'अतिचमूनाम्" इति रूपम् । सप्तम्येकवचने ङौ समागते ङकारस्येत्सञ्ज्ञायां लोपे च 'अतिचमू+इ' इति जाते अत्र नदीसञ्ज्ञायाम् "ङेराम्नद्याम्नीभ्यः" इति ङकारेत्सञ्ज्ञकेकारस्य स्थाने आमि विहिते स्थानिवद्भावेन तत्र ङित्वमानीय "आण्नद्याः" इत्याडागमे टित्वादाद्यावयवे जाते "आटश्च" इति वृद्धौ "इको यणचि" इति यणि 'अतिचम्वाम्' इति रूपम्बोध्यम् । खलपूरिति । खलं पुनातीति क्विप् । कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सावागते उकारस्य लोपे सस्य रुत्वे विसर्गे च 'खलपूः' इति । ओः सुपीति । "एरनेकाचः" इति सूत्रं एरितिवर्जमनुवर्तते । "अचि श्नुधातु" इत्यतोऽचीत्यनुवृत्तम् । तेन सुपीति विशिष्यते । तदादिविधिः । "इणो यण्" इत्यतो यणित्यनुवर्तते, तदाह—धात्ववयवेत्यादिना । खलप्वौ, खलप्वः इति । 'खलपू+औ' 'खलपू+अस्' इति स्थिते "अचि श्नुधातु०" इति उवङि प्राप्ते तं बाधित्वा "ओः सुपि" इति यणादेशे कृते 'खलप्वौ' 'खलप्वः' इति रूपे भवतः । अत्र "गतिकारकेतरपूर्वपदस्य यण् नेष्यते" इति वार्तिकप्रवृत्तिर्बोध्या । प्रकृते कारकपूर्वकत्वादिह यणिति भावः । हे खलपूः, हे खलप्वौ, हे खलप्वः, सम्बोधनम् । खलप्वम्, खलप्वौ, खलप्वः । खलप्वा, खलप्वे, खलप्वः, खलप्वः, खलप्वोः, खलप्वि । इह अजादौ "एरनेकाचः" इति यणोऽसम्भवात् उवङि प्राप्ते अनेन सूत्रेण यणिति भावः । उवङोऽपवादो यणिति

दन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि । खलप्वौ, खलप्वः । एवं सुल्वादयः । स्वभूः, स्वभुवौ, स्वभुवः । वर्षाभूः ॥ वर्षाभ्वश्च ६।४।८४। अस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि । दृन्भूः (दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः) दृन्भ्वौ । एवं करभूः । धाता । हे धातः, धातारौ, धातारः । (ऋवर्णान्नस्य णत्वं वाच्यम्) ।

---

फलितम् । एवं सुल्वादय इति । सुष्ठु लुनातीति सुलूः । गतिपूर्वकत्वादिहापि यण् । आदिना केदारलूरित्यादिसंग्रहः । स्वभूरिति । स्वस्माद्भवतीति क्विप् । कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सावागतेऽनुबन्धलोपे सस्य रुत्वे विसर्गे च 'स्वभूः' इति रूपम् । 'स्वभुवौ' 'स्वभुवः' इति । 'स्वभू × औ' इतिस्थिते "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घं प्राप्ते तं बाधित्वा "अचि श्नुधातु०" इत्युवङि प्राप्ते तं प्रबाध्य "ओः सुपि" इति यणि प्राप्ते "न भूसुधियोः" इति निषिद्धे "अचि श्नुधातु०" इत्युवङि विहिते "ङिच्च" इत्यन्तादेशे जाते ङकारस्येत्सञ्ज्ञायां लोपे च 'स्वभुवौ' इति रूपम् । एवमेव जसि परे 'स्वभुवः' इति बोध्यम् । अजादौ विभक्तौ परे सर्वत्र उवङ् भवतीति ज्ञेयम् । वर्षाभूरिति । वर्षासु भवतीति वर्षाभूः । वर्षर्तावुत्पन्न इत्यर्थः । 'वर्षाभूर्दर्दुरे पुमान्' इति यादवः । वर्षाभ्वश्चेति । "ओः सुपि" इत्यनुवर्तते । "अचि श्नुधातु०" इत्यतोऽचीति च "इणो यण्" इत्यतो यणितिचानुवर्तते, तदाह—अस्येत्यादिना । वर्षाभ्वौ—वर्षाभूशब्दात् प्रथमाद्विवचने औ समागते "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घे प्राप्ते तं बाधित्वा "अचि श्नुधातु०" इति उवङि प्राप्ते तं बाधित्वा "ओः सुपि" इति यणि प्राप्ते "न भूसुधियोः" इति निषिद्धे "वर्षाभ्वश्च" इति यणि कृते सति "वर्षाभ्वौ" इति रूपम्बोध्यम् । एवमेव सर्वत्राजादौ विभक्तौ परे बोध्यम् । दृन्भूरिति । दृन्निति नान्तमव्ययं हिंसायां वर्तते । तस्मिन्नुपपदे भूधातोः क्विविति भावः । दृन्—हिंसां, भवते प्राप्नोतीति विग्रहः । तरुविशेषः, सर्पविशेषो वेत्यन्ये । स्वाभाविक एवात्र नकारः । तस्य पदान्तत्वात् "नश्चापदान्तस्य" इति नानुस्वारः । अत एव न परसवर्णः । एवम्भूतात् दृन्भूशब्दात्सावागते उकारस्येत्सञ्ज्ञायां लोपे च सस्य रुत्वे विसर्गे च 'दृन्भूः' इति रूपम् । दृन्भ्वाविति । दृन्भूशब्दात् औ समागते "ओः सुपि" इति यणि प्राप्ते "न भूसुधियोः" इति तस्य निषेधे कृते "दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः" इति यणि कृते 'दृन्भ्वौ' इति रूपम् । अमि—'दृन्भ्वम्' । यणा पूर्वरूपं बाध्यते इति भावः । शसि–'दृन्भ्वः' इति भवति, यणा पूर्वसवर्णदीर्घस्य बाधात् । सर्वत्राजादौ विभक्तौ परे "दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः" इत्यनेन यण् विज्ञेयः । एवम्—अनयैव रीत्या, दृन्भूशब्दवत्—करभूरिति । करात् करे वा भवतीति 'करभूः' शब्दो बोध्य इति शेषः । धातेति । धातृशब्दात्प्रथमैकवचने सावागते "ऋदुशनस्पुरुदंसोऽनेहसाञ्च" इत्यनङि विहिते "ङिच्च" इत्यनेनान्तावयवे कृते ङकारस्येत्सञ्ज्ञायां लोपे च कृते 'धातन् + सु' इत्यवस्थायाम् "अप्तृन्तृच्" इत्यादिनोपधाया दीर्घत्वे कृते

धातॄणाम् । एवं नप्त्रादयः ॥ नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न । पिता, पितरौ, पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना, नरौ ॥ नृ-

---

सकारोत्तरवर्तिन उकारस्येत्सञ्ज्ञत्वे लोपे च "हल्ङ्याभ्यो दीर्घात्०" इति सस्य लोपे "नलोपः प्रातिपदिकान्तस्य" इति नस्य लोपे च 'धाता' इति रूपम् । हे धातः इति । धातृशब्दात्सम्बोधनस्यैकवचनविवक्षायां स्वागते सकारोत्तरवर्तिन उकारस्येत्सञ्ज्ञकत्वे लोपे च कृते 'धातृ + स्' इत्यवस्थायाम् "एकवचनं सम्बुद्धिः" इति सम्बुद्धिसञ्ज्ञायां "ह्रस्वस्य गुणः" इति ऋकारस्य गुणे 'अ' इति जाते "उरण्रपरः" इति रपरे च 'धातर् स्' इति भूते "हल्ङ्याब्भ्य०" इति सलोपे रेफस्य विसर्गे च 'हे धातः' इति रूपम् । धाताराविति । धातृ + शब्दात् औ समागते "सुडनपुंसकस्य" इति औ इत्यस्य सर्वनामस्थानसञ्ज्ञायाम् "ऋतो ङिसर्वनामस्थानयोः" इति गुणे रपरे च जाते "अप्तृन्तृच्०" इति उपधादीर्घत्वे च विहिते 'धातारौ' इति रूपम् । धातारः इति । धातृशब्दाज्जसि सर्वनामस्थानसञ्ज्ञायाम् "ऋतो ङिसर्वनामस्थानयोः" इति गुणे रपरे च "अप्तृन्तृच्०" इति उपधादीर्घत्वे जकारस्येत्सञ्ज्ञायां लोपे च सस्य रुत्वे विसर्गे च 'धातारः' इति रूपम् । शसि—पूर्वसवर्णदीर्घः ऋकारः, नत्वम् , धातॄन् । टा यण्—धात्रा । ङे यण्—धात्रे । ङसिङसोः । ऋत उत् रपरत्वम् , सलोपः, विसर्गः, धातुः । धातुः । धात्रोः । धात्रोः । आमि—"ह्रस्वनद्यापो नुट्" इति नुट् । "नामि" इति दीर्घः । नकारस्य रेफषकाराभ्यां परत्वाभावादप्राप्ते णत्वे "ऋवर्णान्नस्य णत्वं वाच्यम्" इति वार्तिकेन णत्वे कृते 'धातॄणाम्' इति । एवं नप्त्रादय इति । नप्तृनेष्टृत्वष्टृ क्षत्तृ होतृ पोतृ प्रशास्तृ शब्दाः धातृशब्दवदित्यर्थः । नप्त्रादिग्रहणमिति । व्युत्पत्तिपक्षे तृन्तृजन्तत्वादेव सिद्धे नप्त्रादिग्रहणं 'सिद्धे सत्यारभ्यमाणो विधिर्नियमार्थम्' तृन्तृजन्तानां चेत्तर्हि नप्त्रादीनामेव । तेन पितृभ्रातृप्रभृतीनां नेति बोध्यम् । पितेति । पितृशब्दात्सौ "ऋदुशनस्पुरुदंस०" इत्यनङि विहिते ङित्वादाद्यावयवे अनुबन्धलोपे "सर्वनामस्थानेचासम्बुद्धौ" इति दीर्घे सकारस्य "हल्ङ्याब्भ्य" इति लोपे 'पिता' इति रूपम् । पितराविति । पितृशब्दात् औ समागते सर्वनामस्थानसञ्ज्ञायाम् "ऋतो ङि" इति गुणे रपरे च कृते 'पितरौ' इति रूपम् । अत्र व्युत्पत्तिपक्षे—नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः । अव्युत्पत्तिपक्षे तु 'अप्तृन्तृजादिष्वनन्तर्भावात् दीर्घशङ्कैव नास्ति । एवमेव 'पितरः' इति । सम्बोधने - हे पितः, पितरौ, पितरः । पितरम् , पितरौ, पितॄन् , इत्यादि धातृवत् । ना । नृशब्दो मनुष्यवाची । तस्मात् सुः । "ऋदुशनस्" इत्यनङ् । "अप्तृन्" इति सूत्रे अनन्तर्भावात् "सर्वनामस्थाने च" इति नान्तत्वप्रयुक्तो दीर्घः । हल्ङ्यादिलोपः । नलोपः । 'ना' इति रूपम् । नरौ । "ऋतो ङि" इति गुणो रपरः । अप्तृन्नाद्यनन्तर्भावात् नान्तत्वाभावाच्च न दीर्घः । एवं 'नरः' इति । हे नः—"ऋतो ङि" इति गुणो रपरः । हल्ङ्यादिलोपो विसर्गश्च । नरम् , नरौ । शसि—पूर्वसवर्णदीर्घ ऋकारः

च ६।४।६। अस्य नामि वा दीर्घः । नृणाम्-नृणाम् ॥ **गोतो णित् ७।१।६०** ओकाराद्विहितं सर्वनामस्थानं णिद्वत् । गौः, गावौ, गावः । **औतोऽम्शसोः ६।१।६३।** ओकारादम्शसोरचि आकार एकादेशः । गाम्, गावौ, गाः । गवा । गवे । गोः । इत्यादि । **रायो हलि ७।२।८५।** अस्याकारादेशो हलि विभक्तौ । राः, रायौ, रायः । राभ्यामित्यादि । ग्लौः, ग्लावौ, ग्लावः । ग्लौभ्यामित्यादि ॥ इत्यजन्ताः पुंलिङ्गाः ॥

---

नृभ्यः, नृन् । टादावचि यणि रेफः त्रा । त्रे । ङसिङसोः "ऋत उत्" रपरः, सलोपः, विसर्गश्च । नुः । नुः । त्रोः । नृ चेति । नृ इति लुप्तषष्ठीकम् । "नामि" इत्यनुवर्तते, "ढ्रलोपे" इत्यतो दीर्घ इत्यनुवर्तते । "छन्दस्युभयथा" इत्यत उभयथेत्यनुवर्तते, तदाह—अस्येत्यादिना । नृणामिति । नृशब्दादामि, नुट्, "नामि" इति नित्यं दीर्घे प्राप्ते "नृ च" इति नामि वा दीर्घे 'नृणाम्' 'नृणाम्' इति भवतः । गोतो णिदिति । गोत इति तपरकरणम् । "इतोऽत्सर्वनामस्थाने" इत्यतः सर्वनामस्थाने इत्यनुवृत्तं प्रथमया विपरिणम्यते । तदाह—ओकाराद्विहितमित्यादिना । गौरिति । गोशब्दात्सावागते "गोतो णित्" इति णिद्वद्भावे "अचो ञ्णिति" इति वृद्धौ औकारे रुत्वे विसर्गे च 'गौः' इति । गावौ गाव इति । णिद्वत्त्वे वृद्धिः, अवादेशश्चेति भावः । हे गौः । वृद्धौ एङः परत्वाभावात् न सम्बुद्धिलोपः । औतोऽम्शसोरिति । आ ओत इति च्छेदः, व्याख्यानादिति भावः । ओत इति तपरकरणम् । "इको यणचि" इत्यतोऽचीत्यनुवर्तते । "एकः पूर्वपरयोः" इत्यधिकृतन्तदाह—ओकारादित्यादिना । गामिति । गोशब्दादमि समागते "औतोऽम्शसोः" इत्यनेन पूर्वपरयोः स्थाने आकारादेशे कृते 'गाम्' इति । गावाविति । गोशब्दादौटि कृते "गोतो णित्" इति णिद्वद्भावे वृद्धावावादेशे च कृते 'गावौ' इति । गाः इति । गोशब्दात् शसि समागते "लशक्वतद्धिते" इति शस्येत्सञ्ज्ञायां लोपे च कृते "औतोम्शसोः" इति पूर्वपरयोः स्थाने आकारादेशे च विहिते सस्य रुत्वे विसर्गे च 'गाः' इति रूपम् । टादावचि अवादेशं मत्वाह—गवा गवे इति । गोरिति । "ङसिङसोश्च" इति पूर्वरूपमिति भावः । इत्यादीति । गवोः गवाम् , गवि इत्यादिशब्दार्थः । रायो हलीति । राय इति रैशब्दस्य षष्ठ्यन्तम् । "अष्टन आ विभक्तौ" इत्यतः आ इति विभक्ताविति चानुवर्तते । हलीत्यनेन विभक्ताविति विशिष्यते । तदादिविधिस्तदाह—अस्याकारादेश इत्यादिना । रैशब्दात्प्रथमैकवचने सावागते "रायो हलि" इति रैशब्दस्य सर्वस्य स्थाने आकारादेशे प्राप्ते "अलोऽन्त्यस्य" इत्यन्त्यस्यैकारस्याकारादेशे सस्य रुत्वे विसर्गे च कृते 'राः' इति रूपम् । रायाविति । रैशब्दादौकारे समागते "एचोऽयवायावः" इत्यायादेशे "रायौ" इति । रायः इति । एवमेव सर्वत्राजादौ विभक्तौ आयादेशः । हलादौ विभक्तौ च "रायो हलि" इत्यात्वम्बोध्यम् । रायम् , रायौ, रायः । राया, राभ्याम् , राभिः । राये, राभ्यां राभ्यः । रायः, राभ्यां, राभ्यः । रायः, रायोः, रायाम् । रायि रायोः रासु । ग्लौरिति । ग्लौशब्दश्चन्द्रवाची । "ग्लौर्मृगाङ्कः कलानिधिः" इत्य-

## ॥ अथाजन्तस्त्रीलिङ्गप्रकरणम् ॥

रमा ॥ **औङ आपः ७।१।१८।** आबन्तादङ्गात्परस्यौङः शी स्यात्। औङि-त्यौकारविभक्तेः संज्ञा। रमे। रमाः॥ **सम्बुद्धौ च ७।३।१०६।** आप एकारः स्यात्संबुद्धौ। "एङ्ह्रस्वात्" इति संबुद्धिलोपः। हे रमे. हे रमे, हे रमाः। रमाम् रमे रमाः॥ **आङि चापः ७।३।१०५।** आङि ओसि चाप एकारः। रमया रमाभ्याम्

---

मरः। तस्य हलादौ न कश्चिद्विकारः। अचि तु आवादेशः इति मत्वाह—ग्लौः ग्लावौ ग्लाव इति। ग्लावम्, ग्लावौ, ग्लावः। ग्लावा ग्लौभ्याम्, ग्लौभिः। ग्लावे, ग्लौभ्यां ग्लौभ्यः। ग्लावः ग्लौभ्यां ग्लौभ्यः। ग्लावः ग्लावोः ग्लावाम्। ग्लावि, ग्लावोः, ग्लौषु। इत्यजन्ताः पुँल्लिङ्गाः।

रमेति। रमाशब्दोऽत्र वर्तते "ङ्याप्प्रातिपदिकात्" इत्यनेन सर्वेऽपि स्वादयः प्राप्ताः। एषां मध्यादत्र प्रथमैकवचने सावागते "उपदेशेऽजनुनासिक इत्" इति सकारोत्तरवर्त्युकारस्येत्सञ्ज्ञायां "तस्य लोपः" इति लोपे "हल्ङ्याब्भ्यो" इत्यनेन सस्य लोपे च कृते 'रमा' इति रूपं सिद्ध्यति। औङ आप इति। आपः इति पञ्चमी। प्रत्यय-ग्रहणपरिभाषया आबन्तं विवक्षितम्। "अङ्गस्य" इत्यधिकृतं पञ्चम्या विपरिणम्यते। औङः इति षष्ठी। "जसः शी" इत्यतः शीत्यनुवर्तते, तदाह – आबन्तादित्यादिना। औङ्शब्दस्याप्रसिद्धार्थत्वादाह—औङितीति। संज्ञेति। प्राचां शास्त्रे स्थितेति शेषः। रमे इति। 'रमा + औ' इति स्थिते औकारस्य स्थाने "औङः आपः" इति 'शी' आदेशे कृते "लशक्वतद्धिते" इति शकारस्येत्सञ्ज्ञायां लोपे च 'रमा + ई' इति जाते "आद्-गुणः" इति पूर्वपरयोः स्थाने गुणादेशे च विहिते 'रमे' इति रूपम्। रमाः इति। रमा-शब्दाज्जसि समागते "चुटू" इति जकारस्येत्संज्ञायां लोपे च "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे सस्य रुत्वे विसर्गे च विहिते 'रमाः' इति रूपम्। सम्बुद्धौ चेति। "बहुवचने झल्येत्" इत्यत एदिति "आङि चापः" इत्यतः आप इति चानुवर्तते, तदाह—आप एकार इत्यादिना। एङ्ह्रस्वादिति। हल्ङ्यादिलोपस्तु न, परत्वात् प्रति-पदोक्तत्वाच्च एत्वे कृते हल्ङ्यादिलोपस्याप्राप्तेः, "एङ्ह्रस्वात्" इति लोपस्यैव पर-त्वेन न्याय्यत्वाच्चेति भावः। हे रमे। रमाशब्दात्सावागते "सम्बुद्धौ च" इत्याबन्ताङ्ग-स्यैकारादेशे "एङ्ह्रस्वात्सम्बुद्धेः" इति सलोपे 'हे रमे' इति रूपम्। हे रमे हे रमा इति। औस्थाने शीभावे गुणे च सति–'हे रमे' इति। पूर्वसवर्णदीर्घादेशे रुत्वे विसर्गे च कृते 'रमाः' इति। रमामिति। "अमि पूर्वः" इति पूर्वरूपम्। औङः शीभावे आद्-गुणं मत्वाह—रमे इति। रमाः—शसि 'रमा + अस्' इति स्थिते पूर्वसवर्णदीर्घे सति कृतपूर्वसवर्णदीर्घात् परत्वेऽपि "तस्माच्छसः" इति नत्वं स्त्रीलिङ्गत्वान्न भवतीत्यर्थः। आङि चाप इति। ओसि च इत्यनुवर्तते आप इति षष्ठी। अङ्गस्येत्यधिकृतम्। तदन्त-

रमाभिः ॥ याडापः ७।३।११३॥ आपो ङितो याट् । वृद्धिः । रमायै रमाभ्याम् रमाभ्यः । रमायाः रमयोः रमाणाम् । रमायाम् । रमासु । एवं दुर्गाम्बिकादयः ॥ सर्वनाम्नः स्याड्ढ्रस्वश्च ७।३।११४॥ आवन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै सर्वस्याः सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वादय

---

विधिः । "बहुवचने झल्येत्" इत्यतः एदित्यनुवर्तते, तदाह—आङि ओसि चेत्यादिना । रमया । 'रमा + टा' इत्यत्र "चुटू" इति टस्येत्सञ्ज्ञायां "तस्य लोपः" इति लोपे–'रमा आ' इति जाते "आङि चापः" इत्यावन्ताङ्गस्यैकारादेशे "एचोऽयवायावः" इत्ययादेशे च विहिते 'रमया' इति रूपम् । याडाप इति । आपः इति पञ्चमी । "घेर्ङिति" इत्यतो ङितीत्यनुवृत्तं पष्ठ्या विपरिणस्यते, तदाह—आपः परस्येत्यादिना । रमायै इति । 'रमा ङे' इत्यत्र ङस्येत्सञ्ज्ञायां लोपे च कृते 'रमा + ए' इति जाते "याडापः" इत्यनेन ङित एकारस्य याडागमे कृते टित्वादाद्यावयवे जाते टकारस्येत्संज्ञायां लोपे च विहिते 'रमा या ए' अत्र "वृद्धिरेचि" इति वृद्धौ 'रमायै' इति रूपम् । ङसिङसोस्तु 'रमा + अस्' इति स्थिते याडागमे "अकः सवर्णे दीर्घः" इति सवर्णदीर्घे 'रमायाः' । रमयोरिति । 'रमा + ओस्' इति स्थिते "आङि चापः" इत्यावन्ताङ्गस्यैकारे जाते अयादेशे च कृते रुत्वविसर्गयोः सत्योः 'रमयोः' इति रूपम् । रमाणामिति । 'रमा + आम्' अत्र "ह्रस्वनद्यापः" इत्यत्राऽग्रहणान्नुटि, पर्ज्जन्यवल्लक्षणप्रवृत्त्या "नामि" इति दीर्घे "अट्कुप्वाङ्०" इति णत्वे च सति रूपम् ।• रमायामिति । 'रमा ङि' इत्यत्र "ङेराम्नद्याम्नीभ्यः" इति ङेरामि कृते 'रमा + आम्' इति जाते अत्र "याडापः" इति याटि टलोपे "अकः सवर्णे दीर्घः" इति दीर्घादेशे च कृते 'रमायाम्, इति रूपम् । सर्वनाम्न इति । "याडापः" इत्यत आप इति पञ्चम्यन्तमनुवृत्तम् । तेन सर्वनाम्न इत्येतद्विशिष्यते । तदन्तविधिः । "घेर्ङिति" इत्यतो ङितीत्यनुवृत्तं पष्ठ्या विपरिणस्यते; तदाह—आवन्तादित्यादिना । सर्वस्यै । सर्वशब्दाट्टापि सर्वाशब्दः । सोऽपि प्रायेण रमावत् । 'सर्वा + ङे' इत्यत्र ङस्येत्सञ्ज्ञायां लोपे च कृते "याडापः" इति प्राप्ते तं बाधित्वा "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति स्याटि आवन्तस्य च ह्रस्वे कृते सर्व स्याट् ए इति जाते टस्येत्सञ्ज्ञत्वे लोपे च "वृद्धिरेचि" इति वृद्धौ कृतायां 'सर्वस्यै' इति रूपम् । सर्वस्याः । 'सर्वा ङसि' इत्यत्र ङकारस्येकारस्य चेत्सञ्ज्ञायां लोपे च "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति स्याटि आवन्तस्य ह्रस्वत्वे च 'सर्व स्याट् अस् इति जाते टस्य लोपे "अकः सवर्णे दीर्घः" इति दीर्घादेशे च कृते सस्य रुत्वे विसर्गे च 'सर्वस्याः' इति रूपम् । सर्वासामिति । 'सर्वा + आम्' इत्यत्र "आमि सर्वनाम्नः सुट्" इति सुटि उटि गते सकारेण सह संयोगे च कृते 'सर्वासाम्' इति रूपम् । सर्वस्यामिति । 'सर्वा + ङि' इत्यत्र 'ङेराम्नद्याम्नीभ्यः" इति ङेरामि "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति स्याटि आवन्तस्य च ह्रस्वत्वे 'सर्व स्या आम्' इति जाते "अकः सवर्णे दीर्घः" इति दीर्घत्वे 'सर्वस्याम्'

आवन्ताः॥ **विभाषा दिक्समासे बहुव्रीहौ १।१।२८॥** सर्वनामता वा। उत्तरपूर्वस्यै। उत्तरपूर्वायै। **( तीयस्य वा संज्ञा )** द्वितीयस्यै द्वितीयायै। एवं तृतीया। अम्बार्थेति ह्रस्वः। हे अम्ब। हे अक्क। हे अल्ल। जरा जरसौ जरे इत्यादि। पक्षे हलादौ च रमावत्। गोपा विश्वपावत्। मतिः। मत्या॥

---

इति रूपम्। एवमिति। सर्वादिगणपठितविश्वादयः आवन्तत्वं प्राप्ताः सर्वाशब्दवदित्यर्थः। उत्तरस्याः पूर्वस्याश्च दिशोर्यदन्तरालम्-सा उत्तरपूर्वा। "दिङ्नामान्यन्तराले" इति बहुव्रीहिविशेषोऽयम्। तत्र विशेषं दर्शयितुमाह—विभाषा दिक्समासे इति। "सर्वादीनि" इत्यतः सर्वनामग्रहणमनुवर्तते, तदाह—सर्वनामतेति। उत्तरपूर्वस्यै—'उत्तरपूर्वा+ङे' इत्यत्र "विभाषा दिक्समासे बहुव्रीहौ" इति सर्वनामत्वे "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति स्याटि आवन्तस्य च ह्रस्वत्वे "वृद्धिरेचि" इति वृद्धौ 'उत्तरपूर्वस्यै' इति। पक्षे—सर्वनामसंज्ञाभावे "याडापः" इति याटि "वृद्धिरेचि" इति वृद्धौ कृतायाम् 'उत्तरपूर्वायै' इति। एवमग्रेऽपि प्रक्रिया बोध्या रूपाणि—'उत्तरपूर्वस्याः-उत्तरपूर्वायाः; उत्तरपूर्वासाम्-उत्तरपूर्वाणाम्, उत्तरपूर्वस्याम्-उत्तरपूर्वायाम्, इति। तीयस्येति। विभाषाप्रकरणे तीयप्रत्ययान्तस्य ङित्सु सर्वनामत्वोपसंख्यानमिति तदर्थः। द्वितीयस्यै इति। 'द्वितीया+ङे' इत्यत्र "तीयस्य ङित्सु वा" इति वैकल्पिके सर्वनामत्वे "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति स्याटि ह्रस्वत्वे च विहिते वृद्धौ कृतायां 'द्वितीयस्यै' इति। सर्वनामत्वाभावे तु "याडापः" इति याटि वृद्धौ विहितायां 'द्वितीयायै' इति रूपम्। ङसिङसोः-द्वितीयस्याः, द्वितीयायाः। ङौ-द्वितीयस्यां, द्वितीयायामिति। एवं तृतीयेति। तृतीयस्यै-तृतीयायै, तृतीयस्याः-तृतीयायाः, तृतीयस्यां-तृतीयायाम् इति। हे अम्बेत्यादि। हे अम्बा सु इत्यत्र सकारोत्तरवर्तिन उकारस्येत्सञ्ज्ञत्वे लोपे च "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वत्वे "एङ्ह्रस्वात्सम्बुद्धेः" इति सलोपे 'हे अम्ब' इति। एवमेव हे अक्क, हे अल्ल, इत्यादि। शेषं रमाशब्दवत्। जरेति। 'जृष्-वयोहानौ, "षिद्भिदादिभ्यः" इत्यङ्। "ऋदृशोऽङि" इति गुणः, रपरत्वम्। अदन्तत्वात् टाप्, सुः, हल्ङ्यादिना सुलोप इति भावः। जरसाविति। 'जरा+औ' अत्र "जराया जरसन्यतरस्याम्" इति अजादौ विभक्तौ परे जराशब्दस्य स्थाने जरस आदेशे मिलित्वा 'जरसौ' इति। जरे इति। 'जरा+औ' अत्र जरसादेशाऽभावे "औङ आपः" इत्यौकारस्य श्यादेशे शस्येत्संज्ञायां लोपे च कृते "आद्गुणः" इति गुणे 'जरे' इति रूपम्। जरसः, जराः। जरसम्, जरसौ, जरसः। टा-जरसा। ङे-जरसे। ङसिङसोः-जरसः २। ओसि-जरसोः। आमि-जरसाम्। ङौ-जरसि। पक्षे हलादौ च रमावदिति। जरसादेशाभावपक्षे, हलादावपि च रमावदित्यर्थः। गोपा विश्वपावदिति। गोपाः, गोपौ, गोपाः। गोपाम्, गोपौ, गोपः। गोपा, गोपाभ्यां, गोपाभिः। ङे-गोपे। ङसिङसोः-गोपः। ओसि-गोपोः। आमि-गोपाम्। ङौ-गोपि। शसादावजादौ विभक्तौ भसंज्ञायाम्, "आतो धातोः"

ङिति ह्रस्वश्च १।४।६। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै, मतये । मत्याः २ । मतेः २ । इदुद्भ्याम् ७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् । मत्याम्, मतौ । शेषं हरिवत् । एवं बुद्ध्यादयः ॥ त्रिचतुरोः स्त्रियां तिसृचतसृ ७।२।९९। स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ ॥ अचि र ऋतः ७।२।१००। तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः ।

---

इति लोपः इति बोध्यम् । मतिशब्दः प्रायेण हरिवत् । मतिः, मती, मतयः । हे मते, हे मती, हे मतयः । मतिम्, मती । शसि—पूर्वसवर्णदीर्घादेशे कृते पुंस्त्वाभावात् "तस्माच्छसो नः पुंसि" इति न नत्वम्, किन्तु सस्य रुत्वे विसर्गे च 'मतीः' इति रूपम् । मत्येति । 'मति टा' इत्यत्र "शेषो घ्यसखि" इति घिसञ्ज्ञायां सत्यामपि "आङो नाऽस्त्रियाम्" इत्यत्र 'अस्त्रियाम्' इति पर्युदासान्नात्वं न किन्तु "इको यणचि" इति यणि कृते 'मत्या' इति रूपम् । ङिति ह्रस्वश्चेति । "यूस्त्र्याख्यौ नदी" इत्यनुवर्तते । "नेयङुवङ्स्थानावस्त्री" इति सूत्रं नञ्वर्जमनुवर्तते । "वामि" इत्यतो वेत्यनुवर्तते, तदाह—इयङुवङ्स्थानावित्यादिना । मत्यै । 'मति + ए' अत्र "ङिति ह्रस्वश्च" इति नदीसंज्ञायाम् "आण्नद्याः" इत्याडागमे टित्वादाद्यावयवे 'मति–आ ए' इति जाते "आटश्च" इति वृद्धौ सत्याम् 'ऐ' इति भूते "इको यणचि" इतिं यणि कृते 'मत्यै' इति रूपम् । नदीसंज्ञाभावे "शेषो घ्यसखि" इति घिसंज्ञायां "घेर्ङिति" इति गुणे कृते "एचोऽयवायावः" इत्ययादेशे 'मतये' इति रूपं सिद्धम् । 'मत्याः' । 'मति ङसि' इत्यत्र इकारस्य ङस्य चेत्सञ्ज्ञायां लोपे च "ङिति ह्रस्वश्च" इति नदीसंज्ञायाम् "आण्नद्याः" इत्याटि "आटश्च" इति वृद्धौ "इको यणचि" इति यणि च कृते सस्य रुत्वे विसर्गे च कृते 'मत्याः' इति रूपम् । विसंज्ञायां हरिवत् । इदुद्भ्यामिति । "ङेराम्" इति सूत्रान्नदीग्रहणं ङेरामिति चानुवर्तते, तदाह—इदुद्भ्यामित्यादिना । 'मति + ङि' इत्यत्र "ङिति ह्रस्वश्च" इति नदीसंज्ञायां "इदुद्भ्याम्" इति ङेरामि विहिते सति तत्र स्थानिवद्भावेन ङित्त्वमानीय "आण्नद्याः" इत्याडागमे "आटश्च" इति वृद्धौ "इको यणचि" इति यणि 'मत्याम्' इति रूपम् । नदीसंज्ञाभावे "शेषोऽघ्यसखि" इति घिसंज्ञायाम् "अच्च घेः" इति ङेरौत्वे घेरकारादेशे च कृते "वृद्धिरेचि" इति वृद्धौ च विहितायां 'मतौ' इति रूपम् । त्रिचतुरोरिति । "अष्टन आ विभक्तौ" इत्यतो विभक्तावित्यनुवर्तते, तदाह—विभक्ताविति । अचिर ऋत इति । पूर्वसूत्रात् तिसृचतसृ इत्यनुवर्तते । तच्चेह लुप्तषष्ठीकमाश्रीयते । तदाह—तिसृ इत्यादिना । गुणदीर्घोत्वानामिति । "ऋतो ङि" इति गुणस्य "प्रथमयोः" इति पूर्वसवर्णदीर्घस्य "ऋत उत्" इत्युत्वस्य च रत्वमपवादः इत्यर्थः । तिस्र इति । 'त्रि जस्' इत्यत्र "त्रिचतुरोः स्त्रियां तिसृचतसृ" इति तिसृ इत्यादेशे जस्येत्सञ्ज्ञत्वे लोपे च 'तिसृ + अस्' इति जाते "ऋतो ङिसर्वनामस्थानयोः" इति

तिस्रः । तिसृभिः । तिसृभ्यः । तिसृभ्यः । आमि नुट् ॥ न तिसृचतसृ ६।४।४ एतयोर्नामि दीर्घो न । तिसृणाम् । तिसृषु । द्वेरत्वे सत्याप् । द्वे, द्वे, द्वाभ्याम् , द्वाभ्याम् , द्वाभ्याम् , द्वयोः, द्वयोः । गौरी गौर्यौ गौर्यः । हे गौरि । गौर्यै इत्यादि । एवं नद्यादयः । लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । श्रीः । हे श्रि । स्त्रियाः

---

गुणे प्राप्ते तं प्रबाध्य "अचि र ऋतः" इति रेफादेशे संयोगे सस्य रुत्वे रस्य विसर्गत्वे च "तिस्रः" इति रूपम् । शसि तु "प्रथमयोः" इति प्रबाध्य "अचि र ऋतः" इति रेफादेशे संयोगे सस्य रुत्वे रस्य विसर्गत्वे च कृते 'तिस्रः' इति रूपम् । भिसि-तिसृभिः । भ्यसि-तिसृभ्यः । न तिसृचतसृइति । तिसृचतसृ इति लुप्तषष्ठीकं पदम् । "ढ्रलोपे" इत्यतो दीर्घ इत्यनुवर्तते । "नामि" इति सूत्रं चानुवर्तते, तदाह—एतयोरित्यादिना । तिसृणामिति । 'तिसृ + आम्' इति स्थिते नुटं च बाधित्वा "अचि र ऋतः" इति रत्वे प्राप्ते "नुमचिरतृज्वद्भावगुणेभ्यो नुट् पूर्वविप्रतिषेधेन" इति रत्वं बाधित्वा नुटि कृते 'तिसृ + नाम्' इति स्थिते "नामि" इत्यनेन दीर्घे प्राप्ते "न तिसृचतसृ" इति निषिद्धे "ऋवर्णान्नस्य णत्वं वाच्यम्" इति वार्तिकेन णत्वे विहिते 'तिसृणाम्' इति रूपम् । सुपि "आदेशप्रत्यययोः" इति षत्वे 'तिसृषु' इति रूपम् । द्वे इति । 'द्वि + औ' अत्र "त्यदादीनामः" इति अकारान्तादेशे कृते "अजाद्यतष्टाप्" इति अकारान्तत्वादिहापि टापि "चुटू" इति टकारस्य "हलन्त्यम्" इति पकारस्य चेत्संज्ञायां लोपे च कृते 'द्व आ औ' इति जाते "अकः सवर्णे दीर्घः" इति दीर्घादेशे "औङ आपः" इत्यौकारस्य शीत्वे कृते शकारस्येत्संज्ञायां लोपे च "आद्गुण" इति गुणे 'द्वे' इति रूपम् । शसि-'द्वे' इति । द्वयोः । पूर्ववत् 'द्वा' इति कृते "आङि चापः" इति आवन्ताङ्गस्यैकारे अयादेशे च कृते सस्य रुत्वे विसर्गे च जाते 'द्वयोः' इति रूपम् । गौरीति । गौरशब्दात् गौरादिलक्षणङीषि "यस्येति च" इत्यकारलोपे गौरीशब्दः । तस्मात्सुः, तस्य हल्ङ्यादिना लोपे 'गौरी' इति रूपम् । गौर्यौ । 'गौरी + औ' अत्र "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घत्वे प्राप्ते "दीर्घाज्जसि च" इति पूर्वसवर्णदीर्घनिषेधे "इको यणचि" इति यणि "अचोरहाभ्यां द्वे" इति द्वित्वे संयोगे च कृते "गौर्य्यौ" इति रूपम् । गौर्य्यः । गौरीशब्दाज्जसि समागते 'गौरी + अस्' अत्र "दीर्घाज्जसि च" इति पूर्वसवर्णदीर्घनिषेधे सति यणि, रुत्वे विसर्गे च 'गौर्य्यः' इति रूपम् । हे गौरि । गौरी + सु' अत्र "यूस्त्र्याख्यौ नदी" इति नदीसञ्ज्ञायाम् "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वत्वे "एङ्ह्रस्वात्सम्बुद्धेः" इति सुलोपे 'हे गौरि' इति रूपम् । इत्यादीति । ङे-गौर्य्यै, ङसिङसोः-गौर्य्याः । आमि-गौरीणाम् । ङौ-गौर्य्याम् । अत्र क्रमेण-"आण्नद्याः" "ह्रस्वनद्यापो नुट्" "ङेराम्नद्याम्नीभ्यः" इति नदीकार्यं बोध्यम् । लक्ष्मीः । "लक्षेर्मुट् च" इति लक्षधातोरीप्रत्यये मुडागमे लक्ष्मीशब्दः । तस्मात् सौ समागते उकारस्येत्सञ्ज्ञायां लोपे च 'अङ्यन्तत्वान्न सुलोपः, किन्तु सस्य रुत्वे विसर्गे च 'लक्ष्मीः'

६।४।७९। अस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ, स्त्रियः । **वाम्शसोः** ६।४।८०। अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम्—स्त्रीम् , स्त्रियः—स्त्रीः, स्त्रिया । स्त्रियै । स्त्रियाः । परत्वान्नुट् । स्त्रीणाम् । स्त्रीषु । श्रीः श्रियौ श्रियः ॥ **नेयङुवङ्स्थानावस्त्री** १।४।४। इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तः स्त्रीभिन्नौ ।

---

इति रूपम् । गौरीवदिति । अम्बार्थत्वादिनदीकार्यमित्यर्थः । हे लक्ष्मि, लक्ष्म्यै, लक्ष्म्याः, लक्ष्मीणाम्, लक्ष्म्याम् । स्त्री । स्त्यायतः संगते भवतः शुक्रशोणितेऽस्यामिति स्त्री, तस्मात्सौ हल्ङ्यादि लोपे 'स्त्री' इति रूपम् । हे स्त्रि । अत्र नदीसंज्ञायाम् "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वे "एङ्ह्रस्वात्०" इति सुलोपे 'हे स्त्रि' इति । स्त्रिया इति । "अचि श्नुधातु०" इत्यतोऽचीति इयङिति चानुवर्तते, तदाह—अस्येयङित्यादिना । स्त्रियौ । 'स्त्री औ' इति स्थिते "स्त्रियाः" इतीयङि कृते संयुक्ते च जाते 'स्त्रियौ' इति रूपम् । एवं जसि—'स्त्रियः' इति । वाम्शसोरिति । वा अम्शसोः इति च्छेदः । स्त्रिया इति इयङिति चानुवर्तते, तदाह—अमि शसि चेत्यादिना । स्त्रियम् , स्त्रीमिति । 'स्त्री + अम्' अत्र "वाम्शसोः" इतीयङि कृते 'स्त्रियम्' इति । पक्षे "अमि पूर्वः" इति पूर्वरूपे 'स्त्रीम्' इति । स्त्रियः, स्त्रीरिति । 'स्त्री + शस्' अत्र शस्येत्संज्ञायां लोपे च "वाम्शसोः" इतीयङि सस्य रुत्वे तस्य विसर्गे च 'स्त्रियः' इति रूपम् । पक्षे—'स्त्री + अस्' अत्र "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे रुत्वे विसर्गे च 'स्त्रीः' इति । स्त्रियै । 'स्त्री + ङे' इत्यत्र ङस्येत्संज्ञकत्वे लोपे च नदीसञ्ज्ञायाम् "आण्नद्याः" इत्याटि "आटश्च" इति वृद्धौ "स्त्रियाः" इत्यनेन इयङि च विहिते 'स्त्रियै' इति रूपम् । स्त्रियाः । स्त्रीशब्दात् ङसिङसोः अनुबन्धलोपे नदीसंज्ञायाम् "आण्नद्याः" इत्याटि "आटश्च" इति वृद्धौ "स्त्रियाः" इतीयङि च सञ्जाते रुत्वविसर्गयोः 'स्त्रियाः' २ इति रूपम् । परत्वान्नुडिति । आमि "स्त्रियाः" इति इयङं बाधित्वा परत्वान्नुट् इत्यर्थः । स्त्रीणामिति । स्त्रीशब्दादामि 'स्त्री + आम्' इति स्थिते अत्र "स्त्रियाः" इतीयङं परत्वात् बाधित्वा "ह्रस्वनद्यापो नुट्" इति नुडागमे पर्जन्यवल्लक्षणप्रवृत्त्या दीर्घे कृते "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे विहिते 'स्त्रीणाम्' इति । ङौ—'स्त्रियाम्' इति । ओसि—'स्त्रियोः' इति । श्रीरिति । श्रयन्त्येतामिति श्रीः । श्रिञ्सेवायामितिधातोः "क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च" इति क्विप् , प्रकृतेर्दीर्घश्चेति निष्पन्नात् श्रीशब्दात् सुः । अङ्यन्तत्वान्न सुलोपः । श्रियाविति । श्रीशब्दात् औ समागते "प्रथमयोः पूर्वसवर्णः" इति बाधित्वा "अचि श्नुधातु०" इतीयङि कृते मिलित्वा 'श्रियौ' इति । एवमेव 'श्रियः' इति । नेयङुवङ्स्थानाविति । "यूस्त्र्याख्यौ नदी" इत्यतो यू नदीत्यनुवर्तते । स्थानशब्दो भावे ल्युडन्तः । इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः । इयङुवङ्योग्याविति यावत् । तदाह—इयङुवङोरित्यादिना । हे श्रीरिति । श्रीशब्दात्सम्बोधने सावागते "नेयङुवङ्स्थानावस्त्री" इति नदीत्वाभावे "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वाभावे सस्य रुत्वे रस्य विस-

हे श्रीः । श्रियै-श्रिये । श्रियाः-श्रियः ॥ **वामि १।४।५।** इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तः, स्त्रीभिन्नौ । श्रीणाम्-श्रियाम् । श्रियि, श्रियाम् । धेनुर्मतिवत् ॥ **स्त्रियां च ७।१।९६।** स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ॥ **ऋन्नेभ्यो ङीप् ४।१।५।** ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री गौरीवत् । भ्रूः श्रीवत् । स्वयंभूः पुंवत् ॥ **न षट्स्वस्रादिभ्यः ४।१।१०।** ङीप्टापौ न स्तः ।

---

गत्वे च 'हे श्रीः' इति रूपम् । श्रियै, श्रिये इति । 'श्री+ङे' इत्यत्र "यू स्त्र्याख्यौ नदी" इति नदीसंज्ञायां प्राप्तायां "नेयङुवङ्स्थानावस्त्री" इति निषेधे "ङिति ह्रस्वश्च" इति ङिति विकल्पेन नदीसंज्ञायां कृतायाम् "आण्नद्याः" इत्याटि "आटश्च" इति पूर्वपरयोः स्थाने वृद्धौ कृतायाम् "अचि श्नुधातु०" इतीयङि मिलित्वा 'श्रियै' इति । पक्षे—"ङिति ह्रस्वश्च" इति नदीसंज्ञाभावे इयङि 'श्रिये' इति रूपम् । श्रियाः, श्रियः इति । श्रीशब्दात् ङसिङसोः परयोः सतोः नदीसंज्ञायाम् आटि वृद्धौ इयङि च कृते 'श्रियाः' इति । नदीसंज्ञाभावे इयङेव 'श्रियः' इति । वामीति । यूस्त्र्याख्यौ नदीत्यनुवर्तते । "नेयङुवङ्स्थानावस्त्री" इति नञ्वर्जमनुवर्तते । वा आमीति छेदः । अमि नदीकार्याभावात्, तदाह—इयङुवङ्स्थानावित्यादिना । 'श्री आम्' इति स्थिते अत्र "यू स्त्र्याख्यौ नदी" इति नदीसंज्ञाया प्राप्तायां "नेयङुवङ्स्थानावस्त्री" इति निषेधे "वामि" इति वा नदीसंज्ञायां "ह्रस्वनद्यापो नुट्" इति नुटि पर्जन्यवल्लक्षणन्यायेन दीर्घे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे 'श्रीणाम्' इति । नदीत्वाभावपक्षे—इयङि 'श्रियाम्' इति । श्रियि, श्रियामिति । 'श्री ङि' इत्यत्र "ङिति ह्रस्वश्च" इति नदीत्वे "ङेराम्नद्याम्नीभ्यः" इति ङेरामि "आण्नद्याः" इत्याटि "आटश्च" इति वृद्धौ "अचि श्नुधातु०" इतीयङि 'श्रियाम्' इति । नदीत्वाभावपक्षे इयङि 'श्रियि' इति रूपम् । श्रियोः । श्रीषु । धेनुर्मतिवदिति । उकारस्य ओकारो गुणः । अवादेश इत्यादिविशेषस्तु सुगम इति भावः । स्त्रियां चेति । "तृज्वत्क्रोष्टुः" इत्यनुवर्तते तदाह—स्त्रीवाचीत्यादिना । ऋन्नेभ्य इति । ऋतश्च नाश्चेति द्वन्द्वः । स्त्रियामित्यधिकृतम् । ङ्याप्प्रातिपदिकात् इत्यतः प्रातिपदिकग्रहणमनुवृत्तम्, ऋन्नकारैर्विशेष्यते । तदन्तविधिः । तदाह—ऋदन्तेभ्य इत्यादिना । क्रोष्ट्रीति । क्रोष्टुशब्दात्स्त्रीत्वे द्योत्ये "स्त्रियाञ्च" इति तृज्वद्भावे 'क्रोष्टृ' इति जाते ऋदन्तत्वात् "ऋन्नेभ्यो ङीप्" इति ङीपि ङकारपकारयोरित्संज्ञकत्वे लोपे च 'क्रोष्टृ+ई' इति स्थिते यणि निष्पन्नः 'क्रोष्ट्री' शब्दः । तस्मात्सौ समागते हल्ङ्यादिना लोपे कृते सति 'क्रोष्ट्री' इति रूपम् । गौरीवदिति । क्रोष्ट्र्यौ, क्रोष्ट्र्यः । हे क्रोष्ट्रि, क्रोष्ट्र्यौ, क्रोष्ट्र्यः । क्रोष्ट्रीम्, क्रोष्ट्र्यौ, क्रोष्ट्रीः । क्रोष्ट्र्या, क्रोष्ट्र्यै, क्रोष्ट्र्याः, क्रोष्ट्रीणाम्, क्रोष्ट्र्याम् । "यू स्त्र्याख्यौ नदी" इति नदीसंज्ञायाम् तत्र तत्र नदीकार्यमूह्यम् । भ्रूरिति । भ्रू सु इत्यत्र सस्य रुत्वे रस्य विसर्गत्वे च 'भ्रूः' इति रूपम् । 'भ्रू +औ' 'अचि श्नुधातु०" इत्युवङि भ्रुवौ । जसि-भ्रुवः । "नेयङुवङ्स्थानावस्त्री" इति भ्रूशब्दस्य निषेधात्

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा। याता मातेति सप्तैते स्वस्रादय उदाहृताः॥
स्वसा, स्वसारौ। माता पितृवत्। शसि मातॄः॥ द्यौर्गोवत्। राः पुंवत्। नौर्ग्लौवत्॥ इत्यजन्ताः स्त्रीलिङ्गाः॥

---

## ॥ अथाजन्तनपुंसकलिङ्गप्रकरणम् ॥

**अतोऽम् ७।१।२४॥** अतोऽङ्गात् क्लीबात्स्वमोरम्। "अमि पूर्वः" ज्ञानम्।

नदीत्वं न। तेन "अस्वार्थ" इत्यादिना नदीकार्यं न। हे भ्रूः, भ्रुवौ, भ्रुवः। भ्रुवम्, भ्रुवौ, भ्रुवः। भ्रुवा, भ्रूभ्याम्, भ्रूभिः। 'भ्रू ङे' अत्र "ङिति ह्रस्वश्च" इति नदीत्वे आटि वृद्धौ, उवङि च—भ्रुवै। पक्षे—उवङेव भ्रुवे। ङसिङसोः—भ्रुवाः, भ्रुवः। आमि "वामि" इति वा नदीत्वे नुटि 'भ्रूणाम्'। पक्षे—भ्रुवाम्। 'भ्रू + ङि' अत्र नदीसंज्ञायां "ङेराम्नद्याम्नीभ्यः" इति ङेरामि, आडागमे वृद्धौ उवङि च भ्रुवाम्। नदीत्वाभावपक्षे—'भ्रुवि' इति। स्वयम्भूः पुंवदिति। स्वयम्भूशब्दस्य चतुरानने रूढत्वात् नित्यस्त्रीत्वाभावेन न नदीत्वमिति भावः। न षडिति। षट्इत्यनेन षट्संज्ञका गृह्यन्ते। ङीप्टापाविति। "ऋन्नेभ्यो ङीप्" इत्यतो ङीबिति, "टाबृचि" इत्यतष्टावित्यस्य चानुवृत्तेरिति भावः। स्वस्रादीन् पठति—स्वसा तिस्र इत्यादिना। स्वसेति। 'स्वसृ + सु' अत्र "ऋन्नेभ्यो ङीप्" इति ङीपि प्राप्ते "न षट्स्वस्रादिभ्यः" इति ङीपो निषेधे "ऋदुशनस्पुरुदंसोऽनेहसां च" इत्यनङि ङित्वादन्त्यावयवे जाते अनुबन्धलोपे 'स्वसन् + स्' इति स्थिते "अप्तृन्तृच्" इति दीर्घे "हल्ङ्याब्भ्यो" इति सलोपे "नलोपः प्रातिपदिकान्तस्य" इति नस्य लोपे च कृते 'स्वसा' इति रूपम्। स्वसाराविति। 'स्वसृ + औ' अत्र "ऋतो ङिसर्वनामस्थानयोः" इति गुणे अकारे "उरण् रपरः" इति रपरे च जाते "अप्तृन्तृच्०" इत्युपधाया दीर्घत्वे 'स्वसारौ' इति रूपम्। जसि—स्वसारः। सम्बोधने "ह्रस्वस्य गुणः" इति गुणे रपरे च हल्ङ्यादिना लोपे रस्य विसर्गे च—हे स्वसः, स्वसारौ, स्वसारः। स्वसारम्, स्वसारौ। शसि–पूर्वसवर्णदीर्घादेशे सस्य रुत्वे रस्य विसर्गत्वे च 'स्वसॄः' इति। टा–स्वस्रा। ङे–स्वस्रे। ङसिङसोः—'स्वसृ + अस्' इति स्थिते। "ऋत उत्" इति पूर्वपरयोः स्थाने उकारादेशे रपरत्वे च "रात्सस्य" इति सलोपे रेफस्य विसर्गे च कृते स्वसुः। आमि—स्वसॄणाम्। ङौ—"ऋतो ङिसर्वनामस्थानयोः" इति गुणे रपरे च 'स्वसरि' इति॥ द्यौर्गोवदिति। "ओतो णित्" इति णिद्वत्त्वातिदेशात् "अचो ञ्णिति" इति वृद्धिः। राः पुंवदिति। "रायो हलि" इत्यात्वम्। नौर्ग्लौवदिति। सर्वत्राजादौ विभक्तौ परे आवादेश इति भावः। इत्यजन्ताः स्त्रीलिङ्गाः।

अतोऽमिति। अत इति पञ्चमी। अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते। अत इत्यनेन विशेष्यते। तदन्तविधिः। "स्वमोर्नपुंसकात्" इत्यनुवर्तते। तदाह—अतोऽङ्गा-

"एङ्ह्रस्वाद्"इति हल्लोपः । हे ज्ञान । **नपुंसकाच्च ७।१।१९।** क्लीवादौङः शी स्यात् । भसंज्ञायाम् ॥ **यस्येति च ६।४।१४८।** ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः । इत्यलोपे प्राप्ते । **( औङः श्यां प्रतिषेधो वाच्यः )** । ज्ञाने ॥ **जश्शसोः शिः ७।१।२०।** क्लीवादनयोः शिः स्यात् ॥ **शि सर्वनामस्थानम् १।१।४२।** शि इत्येतदुक्तसंज्ञं स्यात् ॥ **नपुंसकस्य झलचः ७।१।७२।** झलन्तस्याजन्तस्य च क्लीवस्य नुम् स्यात् सर्वनामस्थाने ॥ **मिदचोऽन्त्यात्परः १।१।४७।** अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मिस्यात् । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् । शेषं पुंवत् । एवं धनवनफलादयः ॥ **अद्ड्डतरादिभ्यः पञ्चभ्यः ७।**

---

दिति । ज्ञानमिति । ज्ञानशब्दात्सावागते "अतोऽम्" इति सोरमि कृते "अमि पूर्वः" इति पूर्वरूपैकादेशे 'ज्ञानम्' इति रूपम् । हल्लोप इति । पूर्वरूपे कृते सम्बुद्धेर्मकारमात्रं यत् परिशिष्टं तस्य "एङ्ह्रस्वात्" इति लोप इत्यर्थः । हे ज्ञान इति । 'ज्ञान—सु' अत्र "अतोऽम्" इत्यमि "अमि पूर्वः" इति पूर्वरूपैकादेशे ज्ञानम् इति जाते "एङ्ह्रस्वात्सम्बुद्धेः" इति मलोपे 'हे ज्ञान' इति रूपम् । नपुंसकाच्चेति । "जसः शी" इत्यतः शीति "औङ आपः" इत्यतः औङ इति चानुवर्तते, तदाह—क्लीवादित्यादिना । यस्येति चेति । यस्य ईतीति छेदः । इश्च अश्च तयोः समाहारः यं तस्य इवर्णस्य अवर्णस्य चेत्यर्थः । भस्येत्यधिकृतम् । "नस्तद्धिते" इत्यतः तद्धिते इत्यनुवर्तते, तदाह—ईकारे तद्धित इत्यादिना । औङः श्यामिति । औङः यः शी आदेशः तस्मिन् परतः "यस्येति च" इति लोपस्य प्रतिषेधो वक्तव्य इत्यर्थः । ज्ञाने इति । 'ज्ञान + औ' इत्यत्र "नपुंसकाच्च" इत्यौकारस्य शीत्वे शस्येत्सञ्ज्ञायां लोपे च 'ज्ञान ई' इति जाते "यचि भम्" इति भसञ्ज्ञायां "यस्येति च" इति अकारलोपे प्राप्ते "औङः श्यां प्रतिषेधो वाच्यः" इति निषिद्धे "आद्गुणः" इति गुणे च कृते 'ज्ञाने' इति रूपम् । जश्शसोः शिरिति । "स्वमोर्नपुंसकात्" इत्यतो नपुंसकादित्यनुवर्तते, तदाह—क्लीवादिति । उक्तसञ्ज्ञमिति । सर्वनामस्थानसञ्ज्ञकमित्यर्थः । नपुंसकस्य झलच इति । झल् च अच्चेति समाहारद्वन्द्वः । तेन च अङ्गस्येत्यधिकृतं विशेष्यते । तदन्तविधिः । "इदितो नुम् धातोः" इत्यतो नुमित्यनुवर्तते । "उगिदचाम्" इत्यतः सर्वनामस्थाने इत्यनुवर्तते । तदाह—झलन्तेति । मिदच इति । मकारः इत् यस्य सः मित्, अन्त्यादचः परो भवतीत्यर्थः । ज्ञानानि । 'ज्ञान + जस्' इत्यत्र "जश्शसोः शिः" इत्यनेकाल्त्वाजसः स्थाने शित्वे कृते "शि सर्वनामस्थानम्" इति 'शि' इत्यस्य सर्वनामस्थानसञ्ज्ञायां "नपुंसकस्य झलचः" इति नुमि "मिदचोऽन्त्यात्परः" इति योगेनान्त्याज्रूपस्य नस्यान्त्यावयवीभूते उकारमकारयोरित्संज्ञायां लोपे च 'ज्ञानन् शि' इति जाते शकारस्येत्संज्ञायां लोपे च कृते "सर्वनामस्थाने चाऽसम्बुद्धौ" इतिनान्तोपधायाः दीर्घत्वे 'ज्ञानानि' इति । पुनस्तद्वदिति । अम्–औट्–शस्सु–ज्ञानम्, ज्ञाने, ज्ञानानि, इति क्रमेण रूपाणीत्यर्थः । अद्ड्डतरादिभ्य

१।२५। एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ॥ टेः ६।४।१४३। डिति भस्य टेर्लोपः । कतरत्, कतरे, कतराणि । हे कतरत् । शेषं पुंवत् । एवं कतमत् इतरत् अन्यत् अन्यतरत् । अन्यतमस्य त्वन्यतममित्येव । (एकतरात्प्रतिषेधो वक्तव्यः) । एकतरम् । ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७। अजन्तस्येत्येव । श्रीपम्, ज्ञानवत् । द्वे २ । त्रीणि २ । स्वमोर्नपुंसकात् ७।१।२३। लुक् स्यात् । वारि ॥ इकोऽचि विभक्तौ ७।

---

इति । अद्ड् डतरादिभ्य इति छेदः । डतर, डतम, अन्य, अन्यतर, इतर इति डतरादयः सर्वादिगणपठिताः । "स्वमोर्नपुंसकात्" इति सूत्रमनुवर्तते, तदाह—एभ्य इत्यादिना । टेरिति । "अल्लोपोऽनः" इत्यस्माल्लोप इति "तिविंशतेर्डिति" इत्यतो डितीति चानुवर्तते । भस्येत्यधिकृतम् । तदाह—डितीत्यादिना । कतरत् कतरद् । 'कतर सु' अत्र "अद्ड् डतरादिभ्यः पञ्चभ्यः" इति 'सु' इत्यस्य स्थाने अद्डि कृते 'कतर+अद्ड्' इति जाते "हलन्त्यम्" इति डस्येत्संज्ञायां "तस्य लोपः" इति लोपे च 'कतर+अद्' इति भूते "यचि भम्" इति भसंज्ञायां "टेः" इति टिसञ्ज्ञकस्य रेफोत्तरवर्त्यकारस्य लोपे मिलित्वा 'कतरद्' इति, अत्र "वाऽवसाने" इति विकल्पेन चर्त्वे 'कतरत्' इति च रूपम् । औ-जसोः—कतरे, कतराणि, कतरशब्दात् अम्-औट्-शस्सु पूर्ववत् कतरत्-कतरद्, कतरे, कतराणि । हे कतरत् इति । 'कतर+सु' इति स्थिते "एकवचनं सम्बुद्धिः" इति सम्बुद्धिसञ्ज्ञायाम् 'अद्ड्डतरादिभ्यः पञ्चभ्यः" इति सु-इत्यस्य स्थाने अद्डादेशे कृते डकारस्येत्संज्ञायां लोपे च भसंज्ञायां टिलोपे च कृते 'कतर्—अत्' अत्र यद् ह्रस्वान्तं तदङ्गं न, यच्चाङ्गं-'कतर्' इति तद् ह्रस्वान्तं न । इति न "एङ्ह्रस्वात्सम्बुद्धेः" इति तलोप इति भावः । तदाह—हे कतरद् इति । शेषं पुंवदिति । सर्ववदित्यर्थः । एवं कतमदिति । अस्य डतमन्तत्वादिति भावः । अन्यतमस्येति । तस्याव्युत्पन्नप्रातिपदिकत्वेन डतमप्रत्ययान्तत्वाभावेन तत्राद्डादेशो नेत्यर्थः । "एकाच्च प्राचाम्" इति डतरन्तादेकतरशब्दात् स्वमोरद्डादेशे प्राप्ते आह—एकतरादित्यादिना । एकतरशब्दात्परयोः स्वमोरद्डादेशप्रतिषेधो वक्तव्यः इत्यर्थः । ह्रस्वो नपुंसके । इह ह्रस्वश्रुत्योपस्थितेन अच इत्यनेन प्रातिपदिकविशेषणात्तदन्तविधिरित्याह—अजन्तस्येति । श्रीपमिति । 'श्रीपा सु' अत्र "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वे "अतोऽम्" इति सोरमि "अमि पूर्वः" इति पूर्वरूपैकादेशे 'श्रीपम्' इति रूपम् । ज्ञानवदिति । ह्रस्वविधानात् दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः । जश्शसोः शिकृते श्रीपाणीति रूपम् । श्रीपेण, श्रीपाय, श्रीपात्, इत्यादि । द्वे । 'द्वि औ' अत्र "त्यदादीनामः" इत्यकारान्तादेशे "नपुंसकाच्च" इति 'औ' इत्यस्य स्थाने श्यादेशे शकारस्येत्संज्ञायां लोपे च कृते "आद्गुणः" इति गुणे कृते 'द्वे' इति रूपम् । त्रीणीति । त्रिशब्दात् जसि कृते "जश्शसोः शिः" इति जसः स्थाने श्यादेशे कृते "शि सर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञायां शकारस्येत्संज्ञायां लोपे च कृते 'नपुंसकस्य झलचः" इति नुमागमे मित्त्वादन्त्या-

१७३। इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वारिणी वारीणि । "न लुमता" इत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः। हे वारे, हे वारि । "आङो ना" वारिणा । "घेर्ङिति" इति गुणे प्राप्ते (वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन)। वारिणे, वारिभ्याम् , वारिणः, वारिणोः । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ

---

दृचः परे जाते उमोर्लोपे 'त्रिन् इ' इति जाते "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधायाः दीर्घे कृते "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे 'त्रीणि' इति रूपम् । स्वमोर्नपुंसकादिति । अत्र "षड्भ्यो लुक्" इत्यतो लुगित्यनुवर्तते । वारि । 'वारि + सु' इत्यत्र "स्वमोर्नपुंसकात्" इति सोर्लोपे 'वारि' इति रूपम् । इकोऽचीति । "इदितो नुम् धातोः" इत्यतो नुमित्यनुवर्तते, "नपुंसकस्य झलचः" इत्यतो नपुंसकस्येत्यनुवर्तते । अङ्गस्येत्यधिकृतम् इको विशेष्यते, तदन्तविधिस्तदाह—इगन्तस्येत्यादिना । 'वारिणी' । 'वारि + औ' इत्यत्र "नपुंसकाच्च" इत्यौकारस्य शीत्वे शस्य लोपे च कृते 'वारि ई' इति जाते "इकोऽचि विभक्तौ' इति नुमि कृते उमि गते 'वारिन् ई' इति जाते "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति नस्य णत्वे 'वारिणी' इति रूपम् । वारीणि' । 'वारि + जस्' इत्यत्र "जश्शसोः शिः" इति जसः स्थाने शीत्वे "शि सर्वनामस्थानम्" इति शीत्यस्य सर्वनामस्थानत्वे "लशक्वतद्धिते" इति शस्येत्संज्ञकत्वे "तस्य लोपः" इति लोपे "इकोऽचि विभक्तौ" इति नुमि उकारमकारयोरित्संज्ञकत्वे लोपे च "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधाया दीर्घत्वे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे च कृते 'वारीणि' इति रूपम् । न लुमतेत्यस्यानित्यत्वादिति । अत्र "इकोऽचि विभक्तौ" इत्यत्राज्ग्रहणं ज्ञापकम् । तथाहि—हलादिषु भ्यामादिषु सत्यपि नुमि "नलोपः प्रातिपदिकान्तस्य" इति तस्य लोपसम्भवात्, सम्बुद्धौ तु लुका लुप्ततया प्रत्ययलक्षणाभावेन तत्र नुमः प्राप्तेरभावाच्च अचीति व्यर्थं सत् "न लुमताङ्गस्य" इत्यस्यानित्यतां ज्ञापयतीति भावः । हे वारे—हे वारि । 'हे वारि सु' इत्यत्र "स्वमोर्नपुंसकात्" इति सोर्लोपे 'हे वारि' इति । "न लुमताङ्गस्य" इत्यस्यानित्यत्वेन "प्रत्ययलोपे प्रत्ययलक्षणम्" इत्यनेन प्रत्ययलक्षणत्वात्पक्षे "ह्रस्वस्य गुणः" इति गुणे "एङ्ह्रस्वात्सम्बुद्धेः" इति सोर्लोपे 'हे वारे' इति । आङो नेति । रूपे विशेषाभावेऽपि नुमपेक्षया परत्वेन 'ना'भावस्यैव न्याय्यत्वादिति भावः । वारिणेति । 'वारि + टा' अत्र "शेषो घ्यसखि" इति घिसंज्ञायाम् "आङो नाऽस्त्रियाम्" इति टास्थाने नादेशे णत्वे च विहिते 'वारिणा' इति रूपम् । वृद्ध्यौत्वेति । अतिसखिनीत्यत्र "सख्युरसंबुद्धौ" इति णिद्वद्भावाद्वृद्धिः प्राप्ता, वारिणीत्यत्र तु "अच्च घेः" इत्यौत्त्वम् । प्रियक्रोष्टुनीत्यादौ तृज्वद्भावः प्राप्तः । वारिण इत्यत्र "घेर्ङिति" इति गुणः प्राप्तः । तान् सर्वान् पूर्वविप्रतिषेधेन बाधित्वा नुमित्यर्थः । वारिणे। 'वारि + ङे' अत्र अनुबन्धलोपे घित्वात् "घेर्ङिति" इति गुणे प्राप्ते "वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन" इति पूर्वविप्रतिषेधस्य प्रबलत्वाद

हरिवत् ॥ **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७।१।७५।** एषामनङ् स्यात् टादावचि ॥ **अल्लोपोऽनः ६।४।१३४।** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः । दध्ना । दध्ने । दध्नः । दध्नोः ॥ **विभाषा ङिश्योः ६।४।१३६।** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि-दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षि । सुधि, सुधिनी, सुधीनि । हे सुधे-हे सुधि । **तृतीयादिषु भाषितपुंस्कं पुं-**

---

"इकोऽचि विभक्तौ" इति नुमि णत्वे च कृते 'वारिणे' इति रूपम् । वारिण इति । ङसिङसोर्गुणं बाधित्वा नुमि णत्वे रूपम् । वारिणोः । 'वारि+ओस्' अत्र यणं बाधित्वा नुमि णत्वे च रूपम् । वारीणामिति । 'वारि+आम्' अत्र परत्वान्नुटं बाधित्वा नुमि प्राप्ते "नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन" इति पूर्वविप्रतिषेधेन नुटि "नामि" इति दीर्घे णत्वे च कृते 'वारीणाम्' इति रूपम् । वारिणीति । 'वारि+इ' इति स्थिते अत्र "अच्च घेः" इत्यौत्वं परमपि बाधित्वा "वृद्ध्यौत्व" इति पूर्वविप्रतिषेधान्नुमि उकारमकारयोरित्सञ्ज्ञकत्वे लोपे नस्य णत्वे च कृते मिलित्वा 'वारिणि' इति रूपम् । अस्थिदधीति । तृतीयादिष्विति, अचीति चानुवर्तते । तदाह—एषामिति । अल्लोपो न इति । 'भस्य' इत्यनेनाक्षिप्तः प्रत्ययविशेषः, अङ्गस्येति द्वयमनो विशेषणम् । अन् तु अकारस्येत्यभिप्रेत्य व्याचष्टे—अङ्गावयव इत्यादिना । दध्नेति । अस्थि, दधि, सक्थि, अक्षि, एतेषां प्रथमाद्वितीययोर्वारिवद्रूपाणि । तृतीयायान्तु–'दधि+आ' इति स्थिते "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इति दधिशब्दस्येकारस्यानङि कृते अनुबन्धलोपे च 'दधन्+आ' इति जाते "यचि भम्" इति भसंज्ञायाम् "अल्लोपोऽनः" इत्यनोऽकारस्य लोपे कृते सर्वस्मिन् संयुक्ते च सति 'दध्ना' इति रूपम् । दध्ने । 'दधि+ए' अत्र "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इत्यनङि ङित्वादन्त्यावयवे जाते अङोऽल्लोपे "अल्लोपोऽनः" इति अनोऽकारस्य लोपे मिलित्वा 'दध्ने' इति रूपम् । अनयैव रीत्या अजादौ प्रत्यये परे अनङि अल्लोपो बोध्यः । विभाषा ङिश्योरिति । "अल्लोपोऽनः" इत्यनुवर्तते । अङ्गस्येति भस्येति चाधिकृतम् । भस्येत्यनेन च असर्वनामस्थानयजादिस्वादिपरत्वं पूर्ववदनो लभ्यते । तदाह—अङ्गावयव इत्यादिना । ङिश्योरिति । ङिश्च शी चेति विग्रहः । "नपुंसकाच्च" इति विहित एवात्र शी गृह्यते । न तु जश्शसोश्शिः, तस्मिन् परे भत्वासम्भवात् । दध्नि, दधनि । 'दधि+ङि' अत्र "अस्थिदधि" इत्यनङि "विभाषा ङिश्योः" इत्यनेन अन्सम्बन्धिनोऽकारस्य लोपे 'दध्नि' इति । लोपाभावपक्षे 'दधनि' इति रूपम् । शेष वारिवदिति । प्रथमाद्वितीययोः भ्यामादौ हलि च वारिवदित्यर्थः । सुधि । 'सुधी+सु' अत्र "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वे "स्वमोर्नपुंसकात्" इति सोर्लोपे 'सुधि' इति रूपम् । सुधिनी । 'सुधी+औ' अत्र "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वे "नपुंसकाच्च" इति औकारस्य शीत्वे शस्येत्सञ्ज्ञायां

वद्गालवस्य ७।१।७४। प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवत् वा टादावचि। सुधिया, सुधिनेत्यादि। मधु, मधुनी। मधूनि। हे मधो, हे मधु, सुलु, सुलुनी, सुलूनि। सुल्वा सुलुनेत्यादि। धातृ, धातृणी, धातॄणि। धातॄणाम्। हे धातः;

---

लोपे च 'सुधि ई' इति जाते "इकोऽचि विभक्तौ" इति नुमि च विहिते 'सुधिनी' इति रूपम्। सुधीनि। 'सुधी+जस्' अत्र क्लीबत्वाद्ध्रस्वे विहिते "जश्शसोः शिः" इति जसः स्थाने शित्वे "शि सर्वनामस्थानम्" इति शेः सर्वनामस्थानत्वे शस्य लोपे "इकोऽचि विभक्तौ" इति नुमि, उकारमकारयोरित्संज्ञकत्वे लोपे च "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधाया दीर्घत्वे संयोगे च कृते 'सुधीनि' इति रूपम्। तृतीयादिष्विति। भाषितः पुमान् येन प्रवृत्तिनिमित्तेन तत् भाषितपुंस्कं तदस्यास्तीति अर्श आद्यच्। शब्दस्वरूपम्, विशेष्यम्। पुंस्त्वे नपुंसकत्वे च एकप्रवृत्तिनिमित्तकमिति यावत्। "इकोऽचि विभक्तौ" इत्यतः इकोऽचीति "नपुंसकस्य झलचः" इत्यतो नपुंसकस्येति चानुवर्तते। षष्ठी च प्रथमया विपरिणस्यते। तदाह—प्रवृत्तिनिमित्तैक्य इत्यादिना। सुधिया, सुधिनेति। सुध्यातृत्वस्य शोभनज्ञानवत्वस्य वा प्रवृत्तिनिमित्तस्य पुंसि नपुंसके च एकत्वात् पुंवत्त्वविकल्पः। तेन पुंवद्भावपक्षे अजादौ विभक्तौ परे "अचि श्नुधातु" इतीयङि 'सुधिया' इति। पुंवद्भावाभावपक्षे—नुमि-'सुधिना' इति। मधु। मधु+सु इत्यत्र "स्वमोर्नपुंसकात्" इति सोर्लोपे 'मधु' इति। मधुनी। 'मधु+औ' अत्र "नपुंसकाच्च" इत्यौकारस्य शीत्वे अनुबन्धलोपे "इकोऽचि विभक्तौ" इति नुमि उमि गते संयोगे च कृते 'मधुनी' इति रूपम्। मधूनि। 'मधु+जस्' इत्यत्र "जश्शसोः शिः" इति जसः शीत्वे "शि सर्वनामस्थानम्" इति शेः सर्वनामस्थानत्वे "इकोऽचि विभक्तौ" इति नुमि उमि गते "सर्वनामस्थाने चाऽसम्बुद्धौ" इति नान्तस्योपधायाः दीर्घत्वे कृते च संयोगे 'मधूनि' इति रूपम्। हे मधो–हे मधु। अत्र "न लुमन्ताङ्गस्य" इति निषेधस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तको गुणः। तदभावे च द्वितीयं रूपमिति स्पष्टं वारिशब्दनिरूपणे उक्तम्। सुलु। सुष्ठु लुनातीति क्विप्। "ह्रस्वो नपुंसके" इति ह्रस्वः। 'सुलु+सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लोपे 'सुलु' इति। सुलुनी। 'सुलु+औ' अत्र "नपुंसकाच्च" इति औस्थाने श्यादेशे अनुबन्धलोपे "इकोऽचि विभक्तौ" इति नुमि उमि गते मिलित्वा 'सुलुनी' इति। सुलूनि। 'सुलु+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने 'शि' आदेशे "शि सर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञकत्वे "नपुंसकस्य झलचः" इति नुमि मित्वादन्त्यादचः परे सति उमि गते "सर्वनामस्थाने" इति दीर्घे 'सुलूनि' इति। सुल्वा, सुलुनेत्यादि। शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तमेकमित्रि पुंवत्वविकल्पः। पुंवत्वे ह्रस्वाभावेनाघित्वात् नाभावो न, नुमभावश्च। "ओः सुपि" इति यण् सुल्वा। पुंवत्वाभावपक्षे तु यणं बाधित्वा नुम्। 'सुलुना' इति। ङेप्रभृतिषु तु पुंवत्वाभावे "वृद्ध्यौत्व" इति

हे धातृ । एवं ज्ञात्रादयः ॥ एच इग्घ्रस्वादेशे १।१।४८। आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु, प्रद्युनी, प्रद्यूनि । प्रद्युनेत्यादि । प्ररि, प्ररिणी, प्ररीणि, प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् । प्रराभिः । प्ररीणाम् । सुनु, सुनुनी, सुनूनि । सुनुनेत्यादि । इत्यजन्ता नपुंसकलिङ्गाः ॥

---

पूर्वविप्रतिषेधेन नुमि सुलुने, पुंवत्वे तु सुल्वे, ङसिङसोः—सुलुनः, सुल्वः, ओसि—सुलुनोः, सुल्वोः । आमि—सुलूनाम्, सुल्वाम् । ङौ—सुलुनि, सुल्वि, इति बोध्यम् । धातृ । 'धातृ + सु' इत्यत्र "स्वमोर्नपुंसकात्" इति सोर्लोपे 'धातृ' इति । धातृणी । 'धातृ + औ' इत्यत्र "नपुंसकाच्च" इत्यौकारस्य शीत्वे अनुबन्धलोपे "इकोचि विभक्तौ" इति नुमि उमि गते णत्वे च कृते 'धातृणी' इति । धातॄणि । 'धातृ + जस्' अत्र "जश्शसोः शिः" इति जसः शित्वे "शि सर्वनामस्थानम्" इति शेः सर्वनामस्थानत्वे शकारस्येत्संज्ञायां लोपे च "नपुंसकस्य झलचः" इति नुमि उमि गते सति "सर्वनामस्थाने चाऽसम्बुद्धौ" इति नान्तस्योपधाया दीर्घत्वे "ऋवर्णान्नस्य णत्वं वाच्यम्" इति णत्वे 'धातॄणि' इति रूपम् । हे धातः, हे धातृ । हे 'धातृ + सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लोपे "न लुमताङ्गस्य" इत्यस्यानित्यत्वात्प्रत्ययलक्षणे सम्बुद्धिनिमित्तकगुणे अकारे रपरे च जाते रेफस्य विसर्गे 'हे धातः' इति । पक्षे—'हे धातृ' इति । धारणकर्तृत्वरूपप्रवृत्तिनिमित्तैक्यात् टादावचि पुंवत्त्वविकल्पः । तेन धात्रा—धातृणा । धात्रे—धातृणे । धातुः—धातृणः । धात्रोः—धातृणोः । "नुमचिर" इति नुट् । धातॄणाम् । धातरि—धातृणि । एच इगिति । आदिश्यत इत्यादेशः, ह्रस्वश्चासावादेशश्च ह्रस्वादेशः, निर्धारणे सप्तमी । जातावेकवचनमतो व्याचष्टे—आदिश्यमानेष्वित्यादिना । एचां पूर्वभागोऽकारसदृशः, उत्तरस्तु इवर्णोवर्णसदृशस्तत्रोभयान्तरतमस्य ह्रस्वस्याभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्याताम्, तथा च सा कदाप्यकारो भूदिति नियमार्थेयं परिभाषेत्यभिप्रेत्याह—इगेवेति । प्रद्यु । प्रकृष्टा द्यौः यस्येति बहुव्रीहौ प्रद्योशब्दस्य "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वे "एच इग्घ्रस्वादेशे" इति एज्रूपस्यौकारस्योकारे कृते 'प्रद्यु + सु' इति स्थिते "स्वमोर्नपुंसकात्" इति सोर्लोपे 'प्रद्यु' इति रूपम् । प्रद्युनेत्यादि । प्रद्युशब्दस्तु उदन्तो नपुंसके । तथाच पुंसि प्रद्योशब्दस्य भाषितपुंस्कत्वेऽपि नपुंसके प्रद्युशब्दस्य तदपेक्षया भिन्नत्वेन भाषितपुंस्कत्वाभावान्न पुंवत्त्वमिति बोध्यम् । शेषं मधुवत् । प्ररि । प्रकृष्टः राः धनं यस्य इति बहुव्रीहौ प्ररैशब्दः । तस्य नपुंसकह्रस्वत्वेन इकारः । नुटि हलादौ विभक्तौ च वारिवत् । सोर्लुप्तत्वात् "रायो हलि" इत्यात्वं न । हलादौ तु 'एकदेशविकृतमनन्यवत्' इति यथा छिन्नपुच्छे शुनि नाश्वो न गर्दभः इति तथैव प्ररैशब्दस्य इग्रूपेण विकृतत्वेऽपि "रायो हलि" इत्याकारादेशे विहिते—प्रराभ्याम्, प्रराभिरित्यादि । सुनु । सु—शोभना, नौर्यस्येति विग्रहे बहुव्रीहौ "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति औकारस्य "एच इग्घ्रस्वादेशे" इति परिभाषया उकारे विहिते 'सुनु + सु'

## ॥ अथ हलन्तपुंलिङ्गप्रकरणम् ॥

**हो ढः ८।२।३१।** हस्य ढः स्याज्झलि पदान्ते च। लिट्-लिड्, लिहौ लिहः। लिड्भ्याम्। लिट्सु लिट्त्सु ॥ **दादेर्धातोर्घः ८।२।३२।** उपदेशे दादेर्धातोर्हस्य घः झलि पदान्ते च ॥ **एकाचो बशो भष् झषन्तस्य स्ध्वोः ८।२।३७।** धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च। धुक्, धुग्, दुहौ दुहः। धुग्भ्याम्। धुक्षु ॥ **वा द्रुहमुहष्णुहष्णिहाम् ८।२।३३।** एषां हस्य वा घो झलि पदान्ते च।

---

इति स्थिते "स्वमोर्नपुंसकात्" इति सोर्लोपे 'सुत्' इति रूपम्। शेषं मधुवत् ॥ इत्यजन्तनपुंसकलिङ्गप्रकरणम्।

हो ढ इति। "झलो झलि" "पदस्य" "स्कोः संयोगाद्योरन्ते च" इत्यतः क्रमेण झलीति, पदस्य, अन्ते, इति चानुवर्तते, तदाह—झलि पदान्ते इति। झलि परतः पदान्ते वा विद्यमानस्य हस्येत्यर्थः। लिट् लिड्। 'लिह—आस्वादने' क्विप्। कृदन्तत्वात्प्रातिपदिकसंज्ञायाम् 'लिह् + सु' इति स्थिते उकारस्येत्संज्ञायां लोपे च "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सुलोपे "हो ढः" इति हस्य ढत्वे "झलां जशोऽन्ते" इति ढस्य डत्वे "वावसाने" इति चर्त्वे च कृते 'लिट्' इति। चर्त्वाभावपक्षे 'लिड्' इति। लिड्भ्यामिति। 'लिह् + भ्याम्' अत्र "हो ढः" इति हस्य ढत्वे "स्वादिष्वसर्वनामस्थाने" इति पदत्वात् "झलां जशोऽन्ते" इति ढस्य डत्वे 'लिड्भ्याम्' इति। लिट्सु। 'लिह् + सुप्' अत्र पकारस्येत्संज्ञायां लोपे च "हो ढः" इति हस्य ढत्वे "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "झलां जशोऽन्ते" इति ढस्य डत्वे "डः सि धुट्" इति सस्य धुडागमे टित्वादाद्यावयवे उकारटकारयोर्निवृत्तौ "खरि च" इति चर्त्वे पुनश्च डकारस्य "खरि च" इति चर्त्वे च 'लिट्त्सु' इति रूपम्। धुडागमाभावे 'लिट्सु' इति। दादेर्धातोरिति। धातोरित्यावर्तते। तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह—उपदेश इति। एकाचो बश इति। "दादेर्धातोः" इत्यतो धातोरित्यवयवषष्ठ्यन्तमनुवर्तते। तच्च झषन्तशब्देनान्वेति। पदस्येत्यधिकृतम्। "स्कोः संयोगाद्योः" इत्यतोऽन्ते चेत्यनुवर्तते। तदाह—धातोरवयव इत्यादिना। धुक्, धुग्। 'दुह् + प्रपूरणे' क्विप्। क्विबन्तत्वात्प्रातिपदिकसंज्ञायां सत्यां स्वागते उकारलोपे 'दुह् + स्' अत्र "हल्ङ्याब्भ्यो" इति सलोपे हस्य "हो ढः" इति ढत्वे प्राप्ते तं बाधित्वा "दादेर्धातोर्घः" इति घत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति दस्य धत्वे "धुघ्" इति जाते तत्र "झलां जशोऽन्ते" इति जश्त्वेन गकारे "वावसाने" इति विकल्पेन चर्त्वे 'धुक्–धुग्' इति भवतः। धुग्भ्यामिति। 'दुह् + भ्याम्' अत्र "दादेर्धातोर्घः" इति हस्य घत्वे "एकाचो बशो भष०" इति भष्भावेन दकारस्य धकारे 'धुघ् + भ्याम्' इति जाते "झलां जशोऽन्ते" इति घकारस्य गकारे 'धुग्भ्याम्' इति। धुक्षु। 'दुह् + सुप्' अत्र पकारस्येत्संज्ञायां लोपे च "दादेर्धातोर्घः" इति घत्वे भष्भावे जश्त्वे च कृते 'धुग् + सु' इति जाते तत्र "खरि च" इति चर्त्वे

ध्रुक् ध्रुग् ध्रुट्, ध्रुड् द्रुहौ द्रुहः। ध्रुग्भ्याम् ध्रुड्भ्याम्। ध्रुक्षु ध्रुट्त्सु ध्रुट्सु। एवं मुह्॥ धात्वादेः षः सः ६।१।६४। स्नुट् स्नुड् स्नुक् स्नुग्। एवं स्निह्॥ इग्यणः सम्प्रसारणम् १।१।४५। यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात्॥

---

"आदेशप्रत्यययोः" इति सोः सस्य षत्वे कषसंयोगेन 'क्ष' इति जाते 'ध्रुक्षु इति रूपम्। वा द्रुहेति। 'दादेः' इत्यतो घ इत्यनुवर्तते। झलीति, पदस्येति, अन्ते इति पूर्ववदनुवर्तते, तदाह-एषामिति। ध्रुक्-ध्रुग्, ध्रुट्-ध्रुड्। 'द्रुह जिघांसायाम्' अस्मात् क्विपि तस्य सर्वापहारलोपे कृदन्तत्वात्प्रातिपदिकसंज्ञायां स्वावागते उकारलोपे 'द्रुह् + स्' इति स्थिते "हल्ङ्याब्भ्यः०" इति सुलोपे "हो ढः" इति ढत्वे प्राप्ते तं बाधित्वा "दादेर्धातोर्घः" इति घत्वे प्राप्ते तं बाधित्वा "वा द्रुहमुहष्णुहष्णिहाम्" इत्यनेन विकल्पेन हस्य घत्वे "एकाचो बशो भष्०" इति भष्भावेन दकारस्य धकारे जाते घस्य च "झलां जशोऽन्ते" इति गत्वे "वावसाने" इति विकल्पेन चर्त्वे 'ध्रुक्' इति। चर्त्वाभावपक्षे 'ध्रुग्' इति रूपम्। घत्वाभावपक्षे—"हो ढः" इति ढत्वे भष्भावे ढस्य जश्त्वेन डत्वे तस्य विकल्पेन चर्त्वे 'ध्रुट्' इति, चर्त्वाभावपक्षे ध्रुड्' इति रूपम्। ध्रुग्भ्याम, ध्रुड्भ्याम्। 'द्रुह-भ्याम्' अत्र "वा द्रुहमुहष्णुहष्णिहाम्" इति घत्वे भष्भावे घस्य जश्त्वे च कृते 'ध्रुग्भ्याम्' इति। घत्वाभावे "हो ढः" इति हस्य ढत्वे भष्भावे ढस्य जश्त्वे च कृते 'ध्रुड्भ्याम्' इति। ध्रुक्षु। 'द्रुह् + सु' अत्र "वा द्रुहमुह०" इति घत्वे भष्भावे "आदेशप्रत्यययोः" इति षत्वे "खरि च" इति चर्त्वे 'ध्रुक्षु' इति। ध्रुट्त्सु। घत्वाभावपक्षे "हो ढः" इति ढत्वे भष्भावे ढस्य जश्त्वे "डः सि धुट्" इति धुटि चर्त्वे डस्य चर्त्वे च 'ध्रुट्त्सु' इति रूपम्। ध्रुट्सु। धुडभावपक्षे—हस्य ढः, भष्भावः, ढस्य जश्त्वेन डः, तस्य चर्त्वेन टः 'ध्रुट्सु' इति रूपम्। एवमिति। भष्भाववर्जमिति शेषः। मुह् इति। सौ-मुक्, मुग्, मुट् मुड्। मुग्भ्याम्, मुड्भ्याम्। मुक्षु, मुट्त्सु मुट्सु। धात्वादेरिति। धातुग्रहणं किम्? षड्। आदेः किम्? लषति। स्नुट् स्नुड्। ष्णुह उद्गिरणे, अस्मात्क्विप्। कृदन्तत्वात्प्रातिपदिकसंज्ञायां स्वावागते "धात्वादेः षः सः" इति षस्य सत्वे "हल्ङ्याब्भ्यः०" इति सलोपे "वाद्रुहमुह०" इत्यादिना घत्वे तस्य जश्त्वे "वावसाने" इति वा चर्त्वं 'स्नुक्' इति। चर्त्वाभावे 'स्नुग्' इति रूपम्। "वाद्रुहमुहस्नुहस्निहाम्" इति विकल्पाभावे "हो ढः" इति ढत्वे तस्य जश्त्वे विकल्पेन चर्त्वे 'स्नुट्' इति। चर्त्वाभावपक्षे—'स्नुड्' इति। शेषं पूर्ववत्। विश्वं वहतीत्यर्थे "भजो ण्विः" इत्यतो ण्विरित्यनुवृत्तौ "वहश्च" इति ण्विः। णकारः इत्। वेर्लोपः। "अत उपधायाः" इति वृद्धिः। उपपदसमासः—'विश्ववाह्' इति रूपम्। ततस्सोर्हल्ङ्याबिति लोपे "हो ढः" इति ढत्वे "वावसाने" इति चर्त्वविकल्पे विश्ववाट्, विश्ववाड्, विश्ववाहौ, विश्ववाहः। विश्ववाहं, विश्ववाहौ, इति सुटि रूपाणि सुगमत्वादुपेक्ष्य शसादौ अचि सम्प्रसारणसंज्ञां दर्शयति—इग्यणः सम्प्रसारणमिति।

**वाह ऊठ् ६।४।१३२।** भस्य वाहः संप्रसारणमूठ् ॥ **संप्रसारणाच्च ६।१।१०८।** संप्रसारणादचि पूर्वरूपमेकादेशः । वृद्धिः । विश्वौहः इत्यादि ॥ **चतुरनडुहोरामुदात्तः ७।१।९८।** अनयोराम्स्यात्सर्वनामस्थाने परे स चोदात्तः ॥ **सावनडुहः ७।१।८२।** अस्य नुम्स्यात्सौ परे । अनड्वान् । **अम्सम्बुद्धौ ७।१।९९।** हे अन-

---

यणः स्थाने इति । व्याख्यानात् स्थानार्थलाभः । सम्प्रसारणसंज्ञ इति । ततश्च "वसोः सम्प्रसारणम्" "वचिस्वपियजादीनाम्" इत्यादौ सम्प्रसारणश्रुतौ यणस्थानिक इगुपस्थितो भवति । तत्रान्तरतस्यान्यस्य इकारः, वकारस्य उकारः, रेफस्य ऋकारः, लस्य लकारः इति बोध्यम् । वाह ऊठ् । "भस्य" इत्यधिकृतम् । "वसोः सम्प्रसारणम्" इत्यतः सम्प्रसारणमित्यनुवर्तते । तच्च ऊठ् इत्यनेनान्वेति । तदाह—भस्येत्यादिना । संम्प्रसारणाच्चेति । "इको यणचि" इत्यतः अचीति "अमि पूर्वः" इत्यतः पूर्व इति चानुवर्तते । "एकः पूर्वपरयोः" इत्यधिकृतम् । तदाह—सम्प्रसारणादित्यादिना । विश्वौह इति । 'विश्ववाह् शस्' अत्र शस्येत्सञ्ज्ञायां लोपे च "यचि भम्" इति भसंज्ञायाम् "वाह ऊठ्" इति सम्प्रसारणे प्राप्ते किं नाम सम्प्रसारणम् ? "इग्यणः सम्प्रसारणम्" इत्यनेन वरूपस्य यणः स्थाने उकाररूपे सम्प्रसारणे कृते 'विश्व ऊ आह् अस्' इति जाते "सम्प्रसारणाच्च" इति पूर्वरूपैकादेशे विहिते 'विश्व + ऊह् अस्' इत्यवशिष्टे "एत्येधत्यठ्सु" इति पूर्वपरयोः स्थाने वृद्धौ संयोगे सस्य रुत्वे रस्य विसर्गे च कृते 'विश्वौहः' इति रूपम् । इत्यादीति । विश्वौहा, विश्ववाड्भ्याम्, विश्ववाड्भिः, विश्ववाड्भ्यः । विश्वौहे । विश्वौहः । विश्वौहः । विश्वौहोः । विश्वौहाम् । विश्ववाट्सु-विश्ववाट्सु । चतुरनडुहोः । "इतोऽत्सर्वनामस्थाने" इत्यतः सर्वनामस्थाने इत्यनुवर्तते तदाह—सर्वनामस्थान इति । सावनडुह इति । "आच्छीनद्योर्नुम्" इत्यतो नुमित्यनुवर्त्याह—नुम् स्यादिति । अनड्वान् । 'अनडुह् + सु' इत्यत्र "चतुरनडुहोरामुदात्तः" इत्याम् प्राप्तः स क्व स्यादित्याशङ्कायाम् "मिदचोऽन्त्यात्परः" इति मित्त्वात् उकारोत्तरवर्त्युकारात् परो जातः । एवं सति अनडु आम् ह् सु इति जाते मकारस्येत्संज्ञायां लोपे च 'अनडु आह् सु इति भूते "सावनडुहः" नुमि उमि गते 'अनडु आ न् ह् सु' इति जाते सोरुकारे गते सस्य "हल्ङ्याब्भ्यो०" इति लोपे "संयोगान्तस्य लोपः" इति हलोपे "नलोपः प्रातिपदिकान्तस्य" इति नलोपे प्राप्ते "पूर्वत्रासिद्धम्" इत्यनेन संयोगान्तस्य लोपस्य असिद्धत्वात् लोपे न जाते सति डकारोत्तरवर्तिन उकारस्य यणि मिलित्वा 'अनड्वान्' इति भवति । अम्सम्बुद्धाविति । "चतुरनडुहोः" इत्यनुवर्तते इति भावः । हे अनड्वन् । हे अनडुह् + सु अत्र "अम्संबुद्धौ" इत्यमि मित्त्वादन्त्यादचः परे कृते मस्येत्संज्ञायां लोपे च "सावनडुहः" इति नुमि मित्त्वादन्त्यादचः परे जाते उमि गते सोरुकारे गते सस्य "हल्ङ्या"दिना लोपे हस्य "संयोगान्तस्य लोपः" इति लोपे डकारोत्तरवर्तिन उकारस्य यणि कृते 'अनड्वन्' इति रूपम् । अनड्वाहौ, अनड्वाहः ।

ड्वन्, हे अनड्वाहौ, हे अनड्वाहः। अनडुहः। अनडुहा॥ **वसुस्रंसुध्वंस्वनडुहां दः** ८।२।७२। सान्तस्य वस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि। सान्तेति किम्? विद्वान्। पदान्तेति किम्? स्रस्तम्। ध्वस्तम्॥ **सहेः साडः सः** ८।३।५६। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः। तुराषाट्-तुराषाड्, तुरासाहौ, तुरासाहः। तुराषाड्भ्यामित्यादि॥ **दिव औत्** ७।१।८४। दिविति प्रातिपदिकस्यौत्स्यात्सौ। सुद्यौः। सुदिवौ॥ **दिव उत्** ६।१।१३१। दिवोऽन्तादेश उकारः स्यात्पदान्ते। सुद्युभ्यामित्यादि। चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः॥ **षट्चतुर्भ्यश्च** ७।१।५५। एभ्य आमो नुडागमः॥ **रषाभ्यां नो णः समानपदे** ८।४।१। अचो

---

अनडुह्+औ' इत्यत्र "चतुरनडुहोरामुदात्तः" इत्यामि सलोपे मित्वादन्त्यादचः परे "इको यणचि" इति यणि संयोगे च कृते 'अनड्वाहौ' इति रूपम्। एवम् जसि परे आमि कृते अनड्वाहः। अनड्वाहम्, अनड्वाहौ। 'अनडुह्+शस्', शकारस्येत्संज्ञायां लोपे च कृते सस्य रुत्वे विसर्गे च कृते 'अनडुहः' इति। वसुस्रंस्विति। वस्विति प्रत्ययः, तेन तदन्तं ग्राह्यम्। "ससजुषो" इति सूत्रात्सेत्यनुवर्तते, तच्च वस्रोरेव विशेषणन्तदाह—सान्तवस्वन्तस्येति। अनडुद्भ्यामित्यादि। 'अनडुह्+भ्याम्' अत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "वसुस्रंसुध्वंस्वनडुहां दः" इति हस्य दत्वे 'अनडुद्भ्याम्' इति। इत्यादीति। आदिना—'अनडुत्सु' एवं बोध्यम्। तथाहि—'अनडुह्+सुप्' अत्र पकारस्येत्संज्ञायां लोपे च "स्वादिषु०" इति पदसंज्ञायां "वसुस्रंसुध्वंस्वनडुहां दः" इति हस्य दत्वे "खरि च" इति चर्त्वे 'अनडुत्सु' इति रूपम्। साड इति कृतढत्वडत्ववृद्धेरनुकरणम्। तदाह-साड्रूपस्येति। तुराषाट्, तुराषाड्। 'तुरासाह्+स्' अत्र "हल्ङ्याब्भ्यो०" इति सलोपे "हो ढः" इति हस्य ढत्वे तस्य पदान्तत्वात् जश्त्वेन डत्वे कृते "सहेः साडः सः" इति साड्रूपस्य सकारस्य षत्वे डस्य च "वावसाने" इत्यनेन वा चर्त्वं 'तुराषाट्' इति। चर्त्वाभावपक्षे 'तुराषाड्' इति रूपम्। तुरासाहौ। अपदान्तत्वान्न मूर्धन्य इति भावः। तुराषाड्भ्यामिति। 'तुरासाह्+भ्याम्' अत्र "स्वादिषु०" इति पदान्तत्वात् "हो ढः" इति हस्य ढत्वे तस्य जश्त्वेन डत्वे "सहेः साडः सः" इति सस्य मूर्धन्यादेशे 'तुराषाड्भ्याम्' इति रूपम्। इत्यादीति। तुराषाड्भिः। तुराषाड्भ्यः। तुरासाहे। तुरासाहः। तुरासाहः। तुरासाहोः तुराषाट्सु। दिव औदिति। "सावनडुहः" इत्यतः सौ इत्यनुवर्तते। दिव इति षष्ठ्यन्तम्। 'दिवेर्डिविः' इत्यौणादिकम् वा प्रातिपदिकं गृह्यते, न तु 'दिवु क्रीडादौ' इति धातुः, "निरनुबन्धकग्रहणे न सानुबन्धकस्य" इति न्यायात्। तदाह—दिविति प्रातिपदिकस्येति। सुद्यौरिति। 'सुदिव्+सु' इत्यत्र "दिव औत्" इति वकारस्यौत्वे "इको यणचि" इति यणि सस्य रुत्वे रस्य विसर्गत्वे च कृते 'सुद्यौः' इति रूपम्। सुदिवाविति। अजादिषु सुदिवशब्दः अविकृत एवेति भावः। सुद्युभ्यामिति।

रहाभ्यां द्वे ८।४।४६। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। चतुर्ण्णाम् ॥ रोः सुपि ८।३।१६। रोरेव विसर्गः सुपि। षत्वम्, षस्य द्वित्वे प्राप्ते ॥ शरोऽचि ८।४।३६। अचि परे शरो न द्वे स्तः। चतुर्षु ॥ मो नो धातोः ८।२।६४। धातोर्मस्य नः पदान्ते। प्रशान् ॥ किमः कः ७।२।१०३। किमः कः स्याद्विभक्तौ। कः, कौ, के इत्यादि ॥ शेषं सर्ववत्। इदमो मः ७।२।१०८। त्यदाद्यत्वाप-

---

'सुदिव् + भ्याम्' अत्र "दिव उत्" इति वकारस्योकारादेशे "इको यणचि" इति यणि 'सुद्युभ्याम्' इति रूपम्। इत्यादीति। सुदिवे, सुदिवोः, सुदिवाम्। सुद्युषु ॥ चत्वारः। 'चतुर् + जस्' अत्र "सुडनपुंसकस्य" इति सर्वनामस्थानसंज्ञायां "चतुरनडुहोरामुदात्तः" इति मित्त्वादन्त्यादचः परे आमिमस्येत्संज्ञायां लोपे च "इको यणचि" इति यणि 'चत्वार् + जस्' इति जाते जस्य "चुटू" इतीत्संज्ञायां "तस्य लोपः" इति लोपे सस्य रुत्वे रेफस्य विसर्गत्वे च 'चत्वारः' इति रूपम्। चतुरः। शसादौ सर्वनामस्थानत्वाभावान्नाम्। षट्चतुर्भ्यश्चेति। "आमि सर्वनाम्नः" इत्यत आमीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। षडिति षट्संज्ञकं गृह्यते। न तु षट्शब्दः, 'कृत्रिमाकृत्रिमयोः' इति न्यायात्। चतुर्ण्णामिति। 'चतुर् + आम्' इत्यत्र "षट्चतुर्भ्यश्च" इत्यामो नुडागमे टित्त्वादाद्यावयवे उटि गते 'चतुर् न् आम्' इति जाते "रषाभ्यां नो णः समानपदे" इति णत्वे "अचो रहाभ्यां द्वे" इति णस्य च द्वित्वे विहिते 'चतुर्ण्णाम्' इति रूपम्। रोः सुपीति। खरीत्यनुवृत्तेः सप्तमीबहुवचनमेवात्र सुप्। "खरवसानयोः" इत्येव सिद्धे नियमार्थम् एवैष विधिरित्याह—रोरेवेति। शरोऽचीति। "अचो रहाभ्यां द्वे" इति, "नादिन्याक्रोशे" इत्यतो नेति चानुवर्तते। तदाह—अचि पर इत्यादिना। चतुर्षु। 'चतुर् + सुप्' इत्यत्र "खरवसानयोः" इति रस्य विसर्गत्वे प्राप्ते "रोः सुपि" इति निषेधे 'चतुर् + सुप्' इति जाते "आदेशप्रत्यययोः" इति सस्य षत्वे "अचो रहाभ्यां द्वे" इति षस्य द्वित्वे प्राप्ते "शरोऽचि" इति षस्य द्वित्वाभावे पस्येत्संज्ञायां लोपे च 'चतुर्षु' इति रूपम्। मो नो धातोरिति। म इति षष्ठ्यन्तं धातोरित्यस्य विशेषणम्। तदन्तविधिः। 'पदस्य' इत्यधिकृतम्। "स्कोः संयोगाद्योः" इत्यतः अन्ते इत्यनुवर्तते। तदाह—धातोर्मस्येत्यादिना॥ प्रशान्। 'प्रशाम् + सु' इत्यत्र सोरुकारलोपे "हल्ङ्याब्भ्यः०" इत्यादिना सुलोपे "सुप्तिङन्तं पदम्" इति पदसंज्ञायां "मो नो धातोः" इति मस्य नत्वे कृते 'प्रशान्' इति रूपम्। 'प्रशाम् + भ्याम्' इत्यत्र "स्वादिष्वसर्वनामस्थाने" इति पदत्वे "मो नो धातोः" इति मस्य नत्वे प्रशान्भ्याम्। प्रशान्भिः। प्रशामे। प्रशान्भ्यः। प्रशामः। प्रशामः। प्रशामोः। प्रशामाम्। प्रशामि। प्रशान्त्सु, प्रशान्सु। किमः कः स्याद्विभक्ताविति। "अष्टन आ विभक्तौ" इत्यतस्तदनुवृत्तेरिति भावः। कः, कौ, के। 'किम् + सु' इत्यत्र "किमः कः" इति किमः कादेशे सोरुकारे गते सस्य रुत्वे रेफस्य विसर्गे च 'कः' इति रूपम्। 'किम् + औ' इत्यत्र "किमः कः" इति कादेशे वृद्धौ च कृतायाम्

वादः ॥ इदोऽय् पुंसि ७।२।१११। इदम इदोऽय् स्यात्सौ पुंसि। अयम्। त्यदाद्यत्वे ॥ अतो गुणे ६।१।९७। अपदान्तादतो गुणे पररूपमेकादेशः ॥ दश्च ७।२।१०९। इदमो दस्य मः स्याद्विभक्तौ। इमौ, इमे। त्यदादेः संबोधनं नास्तीत्युत्सर्गः ॥ अनाप्यकः ७।२।११२। अककारस्य इदम इदोऽन् स्यादापि विभक्तौ। आबिति प्रत्याहारः। अनेन ॥ हलि लोपः ७।२।११३। अककारस्येदम इदो लोप आपि हलादौ।

---

'कौ' इति। 'किम्+जस्' अत्र "किमः कः" इति कादेशे "जसः शी" इति जसः शीत्वे शस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे कृते 'के' इति रूपम्। इत्यादीति। कम्, कौ, कान्। केन, काभ्यां, कैः। कस्मै, काभ्यां, केभ्यः। कस्मात्, काभ्याम्, केभ्यः। कस्य, कयोः, केषाम्। कस्मिन्, कयोः, केषु। सर्ववदिति। सर्वनामसंज्ञकत्वादिति भावः। इदमो म इति। "तदोः सः सौ" इत्यतः सौ इत्यनुवर्तते। इदमो मस्य मः स्यात्सौ परे इत्यर्थः। ननु मस्य मविधानं व्यर्थमित्यत आह—त्यदाद्यत्वापवाद इति। इदोऽय् पुंसीति। इद इति स्थानषष्ठी। इदम इत्यनुवर्तते। अवयवषष्ठ्येषा। "यः सौ" इत्यतः सावित्यनुवर्तते। तदाह—इदम इत्यादिना। 'इदम्+स्' इति स्थिते "त्यदादीनामः" इत्यकारे प्राप्ते तं बाधित्वा "इदमो मः" इत्यपवादभूते मकारे कृते "इदोऽय् पुंसि" इतीदम इद्भागस्य अयादेशे कृते यकारस्याऽकारेण सह संयोगे सस्य "हल्ङ्याब्भ्यः" इति लोपे 'अयम्' इति रूपम्। अतो गुणे इति। "एङि पररूपम्" इत्यतः पररूपमित्यनुवर्तते। "उस्यपदान्तात्" इत्यतः अपदान्तादित्यनुवर्तते। "एकः पूर्वपरयोः" इत्यधिकृतम्। अत इति पञ्चमी। तदाह—अपदान्तादित्यादिना। दश्चेति। "इदमो मः" इत्यनुवर्तते। "अष्टन आ विभक्तौ" इत्यतो मण्डूकप्लुत्या विभक्ताविन्त्यनुवर्तते। द इति षष्ठी। इदमो दकारस्येति लभ्यते, तदाह—इदमो दस्येत्यादिना। इमौ। 'इदम्+औ' इति स्थिते अत्र "त्यदादीनामः" इति मस्य अत्वे 'इद अ औ' इति जाते "अतो गुणे" इत्यनेन पररूपे 'इद औ' इति भूते "दश्च" इत्यनेन दकारस्य मकारे विहिते वृद्धौ कृतायाम् 'इमौ' इति रूपं सिद्धम्। इमे। 'इदम्+जस्' इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे 'इद अ जस्' इति स्थिते "अतो गुणे" इति पररूपे "जसः शी" इति शीत्वे शस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे "दश्च" इति दकारस्य मकारे 'इमे' इति रूपम्। त्यदादेः सम्बोधनं नास्तीति। प्रचुरप्रयोगादर्शनादिति भावः। अनाप्यक इति। "इदमो मः" इत्यतः इदम इति "इदोऽय् पुंसि" इत्यतः इद इति चानुवर्तते। "अष्टन आ विभक्तौ" इत्यतो विभक्ताविति। तदाह—इदम इद इत्यादिना। अनेन। 'इदम्+आ' इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपे 'इद+आ' इति जाते 'अनाप्यक' इति इदोऽनादेशे कृते 'अन आ' इति भूते "टाङसिङसामिनात्स्याः" इति इनादेशे "आद्गुणः" इति गुणे 'अनेन' इति। हलि लोप इति। आप्यक इति पूर्वसूत्रादनुवर्तते। "इदमो मः" इ-

"नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे"। **आद्यन्तवदेकस्मिन् १।१।२१।** एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात्। "सुपि च" इति दीर्घः। आभ्याम्॥ **नेदमदसोरकोः ७।१।११।** अककारयोरिदमदसोर्भिस ऐस् न। एभिः। अस्मै, एभ्यः। अस्मात्। अस्य। अनयोः। एषाम्। अस्मिन्। अनयोः। एषु॥

---

त्यतः इदम इति। "इदोऽय् पुंसि" इत्यत इद इति। "अष्टन आ विभक्तौ" इत्यतो विभक्ताविति चानुवर्तते। हलीति विभक्तिविशेषणम्। तदादिविधिस्तदाह—अककारस्येति। नानर्थक इति। परिभाषेयमुपधासंज्ञासूत्रे भाष्ये स्थिता। इदम्शब्दे इद् इत्यस्यानर्थकत्वात् तदन्तस्येति न लभ्यते। ततश्च इद् इत्यस्य कृत्स्नस्यैव लोप इति भावः। आद्यन्तवदिति। 'सत्यन्यस्मिन् यस्य पूर्वो नास्ति स आदिः, सत्यन्यस्मिन् यस्य परो नास्ति सोऽन्तः' इति लोके प्रसिद्धं, तदुभयमेकस्मिन्नसहाये न सम्भवतीति तत्राद्यन्तव्यपदिष्टानि कार्याणि न स्युरतोऽयमतिदेश आरभ्यते। आदाविवान्त इव च स्यादिति। तदादितदन्तयोः क्रियमाणं कार्यं तदादौ तदन्त इव च असहायेऽपि स्यादित्यर्थः। आभ्यामिति। "इदम्+भ्याम्" इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपैकादेशे 'इद भ्याम्' इति जाते "हलि लोपः" इति इद्भागस्य लोपे प्राप्ते "अलोऽन्त्यस्य" इत्यनेनान्त्यस्य लोपे प्राप्ते "नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे" इति परिभाषया अलोऽन्त्यविध्यभावे इद्भागस्यैव लोपे 'अ+भ्याम्' इत्यवशिष्टे अत्र "सुपि च" इति दीर्घत्वे प्राप्ते परमत्र विद्यमानस्याकारस्यादन्तत्वं वर्तते नवेति शङ्कायाम् "आद्यन्तवदेकस्मिन्" इति एकस्मिन्नेवाकारे अन्तवद्भावेन अदन्तत्वं मत्वा दीर्घे कृते 'आभ्याम्' इति रूपम्। नेदमदसोरकोरिति। "अतो भिस ऐस्" इत्यतो भिस ऐस् इत्यनुवर्तते। अकोरिति षष्ठी। न विद्यते ककारो ययोरिति बहुव्रीहिस्तदाह—अककारयोरित्यादिना। एभिरिति। 'इदम्+भिस्' इति स्थिते "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपे कृते 'इद+भिस्' इति स्थिते "हलि लोपः" इति इद्भागस्य लोपे "अतो भिस ऐस्" इत्यैत्वे प्राप्ते "नेदमदसोरकोः" इत्यनेन निषिध्य "बहुवचने झल्येत्" इति एत्वे सस्य रुत्वे रस्य विसर्गे च 'एभिः' इति रूपम्। अस्मै। 'इदम्+ङे' अत्र "त्यदादीनामः" इति अकारान्तादेशे विहिते "अतो गुणे" इति पररूपे 'इद+ङे' इति स्थिते इदम् शब्दस्य सर्वनामत्वात् "सर्वनाम्नः स्मै" इति ङे स्थाने 'स्मै' आदेशे "हलि लोपः" इति इद्भागस्य लोपे 'अस्मै' इति रूपम्। एभ्यः। 'इदम्+भ्यस्' इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपे "हलि लोपः" इति इद्भागस्य लोपे 'अ+भ्यस्' इति जाते "आद्यन्तवदेकस्मिन्" इति अकारस्य अदन्तत्वे "बहुवचने झल्येत्" इति एकारान्तादेशे रुत्वविसर्गयोः 'एभ्यः' इति रूपम्। अस्मात्। 'इदम्+ङसि' इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपे 'इद+ङसि' इति जाते "ङसिङ्योः स्मात्स्मि-

द्वितीयाटौस्स्वेनः २।४।३४। इदमेतदोरेनादेशः स्यादन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलम् एनयोः प्रभूतं धनमिति । एनम् । एनौ । एनान् । एनेन । एनयोः । एनयोः । राजा ॥ न ङिसंबुद्ध्योः ८।२।८। नस्य लोपो न ङौ संबुद्धौ च । हे राजन् । ( ङावुत्तरपदे प्रतिषेधो वक्तव्यः ) ।

---

नौ" इति 'स्मात्' आदेशे कृते "हलि लोपः" इति इद्भागस्य लोपे 'अस्मात्' इति रूपम् । अस्य इति । 'इदम् + ङस्' इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपे "टाङसिङसामिनात्स्याः" इति ङसः स्थाने स्यादेशे "हलि लोपः" इति इद्भागस्य लोपे 'अस्य' इति रूपम् । अनयोः । 'इदम् + ओस्' इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपे "अनाप्यकः" इति इद्भागस्यानादेशे कृते 'अन + ओस्' इति जाते "ओसि च" इति अनघटकनकारोत्तरवर्तिन अकारस्यैकारे "एचोऽयवायावः" इति अयादेशे रुत्वे विसर्गे च मिलित्वा 'अनयोः' इति रूपम् । एषाम् । 'इदम् + आम्' अत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपे "आमि सर्वनाम्नः सुट्" इति सुडागमे टित्वादाद्यावयवे उटि गते 'इद + साम्' इति जाते "हलि लोपः" इति इद्भागस्य लोपे 'आसाम्' इति जाते "आद्यन्तवदेकस्मिन्" इति एकस्मिन् अकारे अदन्तत्वमानीय "बहुवचने झल्येत्" इति एत्वे "आदेशप्रत्यययोः" इति षत्वे 'एषाम्' इति रूपम् । अस्मिन् । 'इदम् + ङि' इत्यत्र त्यदाद्यत्वे पररूपत्वे च कृते "ङसिङ्योः स्मात्स्मिनौ" इति ङेः स्थाने स्मिन् आदेशे कृते "हलि लोपः" इति इद्भागस्य लोपे च 'अस्मिन्' इति रूपम् । एषु । 'इदम् + सुप्' अत्र त्यदाद्यत्वे पररूपत्वे च सुपः पकारस्येत्सञ्ज्ञायां लोपे च "हलि लोपः" इति इद्भागस्य लोपे "बहुवचने झल्येत्" इति एत्वे "आदेशप्रत्यययोः" इति षत्वे 'एषु' इति रूपम् । द्वितीया टौस्स्वेन इति । "इदमोऽन्वादेशे" इत्यतः इदम इति, अन्वादेश इति चानुवर्तते । "एतदस्त्रतसोः" इत्यतः एतद इति चानुवर्तते, तदाह—द्वितीयायामित्यादिना । एनमिति । 'इदम् + अम्' इत्यत्र "द्वितीयाटौस्स्वेनः" इति इदम एनादेशे विहिते "अमि पूर्वः" इति पूर्वरूपादेशे च कृते 'एनम्' इति रूपम् । राजा । 'राजन् + सु' इत्यत्र सोरुकारस्येत्सञ्ज्ञायां लोपे च कृते "सुडनपुंसकस्य" इति सर्वनामस्थानसञ्ज्ञायाम् "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तस्योपधाया दीर्घत्वे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सुलोपे "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'राजा' इति रूपम् । न ङिसम्बुद्ध्योरिति । "नलोपः प्रातिपदिकान्तस्य" इत्यतो न लोप इत्यनुवर्तते । तत्र नेति लुप्तषष्ठीकम् । तदाह—नस्य लोप इत्यादिना । हे राजन् । 'हे राजन् + सु' इत्यत्र सोरुकारस्येत्सञ्ज्ञायां लोपे च तस्य सर्वनामस्थानसंज्ञत्वाद् दीर्घे प्राप्ते "असम्बुद्धौ" इत्युक्तत्वान्न भवति । तदनन्तरम् "हल्ङ्याब्भ्यः" इति सुलोपे

ब्रह्मनिष्ठः । राजानौ । राजानः । राज्ञः ॥ **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८।२।२।** सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न। राजभ्यामित्यादि । राज्ञि-राजनि । यज्वा । यज्वानौ । यज्वानः ॥ **न संयोगाद्वमन्तात् ६।४।१३७** वमन्तसंयोगादनोऽकारस्य लोपो न । यज्वनः । यज्वना । यज्वभ्याम् । ब्रह्मणः । ब्रह्मणा ॥ इन्हन्पू-

---

"नलोपः प्रातिपदिकान्तस्य" इति नलोपे प्राप्ते परमन "न ङिसम्बुद्ध्योः" इति निषेधे 'हे राजन्' इति रूपम् । ङावुत्तरपदे इति । उत्तरपदे परतो यः ङिः तस्मिन् परे "न ङिसम्बुद्ध्योः" इति निषेधस्य प्रतिषेधो वक्तव्य इत्यर्थः । एवं च चर्मतिलः इत्यत्र उत्तरपदे परतः "न ङिसम्बुध्योः" इति प्रतिषेधाभावात् नकारस्य लोपो निर्बाध इति भावः । राजानौ । 'राजन् + औ' इति स्थिते "सुडनपुंसकस्य" इति सर्वनामस्थानसंज्ञायां "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधाया दीर्घत्वे 'राजानौ' इति रूपम् । राजानः । 'राजन् + अस्' इति स्थिते पूर्ववत्सर्वनामस्थानसञ्ज्ञायां "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधाया दीर्घत्वे सस्य रुत्वे रेफस्य विसर्गत्वे च 'राजानः' इति रूपम् । राज्ञः । 'राजन् + शस्' इति स्थिते शस्येत्सञ्ज्ञायां लोपे च कृते "यचि भम्" इति भसञ्ज्ञायाम् "अल्लोपोऽनः" इति अनोऽकारस्य लोपे "स्तोः श्चुना श्चुः" इति नस्य ञत्वे 'जञोर्ज्ञः' 'राज्ञः' इति । नलोपः सुविति । नस्य लोपो नलोपः । विधिशब्दो भावसाधनः । विधानं विधिः । सुप् च स्वरश्च सञ्ज्ञा च तुक् च तेषां विधय इति सम्बन्धसामान्यषष्ठ्या समासः । कृतीति तु तुकैव सम्बध्यते । अन्यत्रासम्भवात् । तदाह—सुब्विधावित्यादिना । राजाश्व इत्यादाविति । अत्र सवर्णदीर्घयणादिविधीनां सुब्विध्याद्यनन्तर्भावात् तेषु कर्तव्येषु नलोपस्यासिद्धत्वाभावे सति नकारलोपस्य सत्वात् सवर्णदीर्घादिकं निर्बाधमिति भावः । राजभ्यामिति । 'राजन् + भ्याम्' इत्यत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "नलोपः प्रातिपदिकान्तस्य" इति नलोपे "सुपि च" इति दीर्घत्वे प्राप्ते तर्हि "नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति" इति नलोपस्याऽसिद्धत्वात् दीर्घत्वाभावे 'राजभ्याम्' इति रूपम् । एवं 'राजभिः' 'राजभ्यः' इति बोध्यम् । राज्ञि, राजनि । 'राजन् + ङि' इत्यत्र "लशक्वतद्धिते" इति ङकारस्येत्संज्ञायां लोपे च "यचि भम्" इति भसंज्ञायाम् "विभाषा ङिश्योः" इति विकल्पेन अनोऽकारस्य लोपे कृते श्चुत्वे च जाते 'राज्ञि' इति रूपम् । लोपाभावे च 'राजनि' इति रूपम् । यज्वा । 'यज्वन् + सु' अत्र सोरुकारस्येत्संज्ञायां लोपे च कृते "सुडनपुंसकस्य" इति सर्वनामस्थानसंज्ञायां "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तस्योपधाया दीर्घत्वे "हल्ङ्याब्भ्यो" इति सुलोपे "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'यज्वा' इति रूपम् । यज्वानौ । 'यज्वन् + औ' अत्र नान्तोपधाया दीर्घत्वे 'यज्वानौ' इति । एवं 'यज्वानः' इत्यत्रापि । न संयोगादिति । "अल्लो-

षार्यम्णां शौ ६।४।१२। एषां शावेवोपधाया दीर्घो नान्यत्र । इति निषेधे प्राप्ते ॥
सौ च ६।४।१३। इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ । वृत्रहा । हे वृत्रहन् ॥
एकाजुत्तरपदे णः ८।४।१२। एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमि-

---

पोऽनः" इत्यनुवर्तते, तदाह—रमन्तसंयोगादित्यादिना । यज्वनः । 'यज्वन् + शस्' इत्यत्र शकारस्येत्सञ्ज्ञायां लोपे च "यचि भम्" इति भसञ्ज्ञायाम् "अल्लोपोऽनः" इत्यनोऽकारस्य लोपे प्राप्ते "न संयोगाद्वमन्तात्" इति निषिद्धे सकारस्य रुत्वे विसर्गे च कृते 'यज्वनः' इति रूपम् । एवमेवाजादौ प्रत्यये परे यज्वन् शब्दस्य रूपाणि बोध्यानि । यज्वभ्याम् । 'यज्वन् + भ्याम्' इत्यत्र "स्वादिष्वसर्वनामस्थाने" इत्यनेन पदसञ्ज्ञायां "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'यज्वभ्याम्' इति रूपम् । अत्र नलोपस्यासिद्धत्वात् "सुपि च" इति न दीर्घत्वमिति भावः । ब्रह्मणः । 'ब्रह्मन् + शस्' इत्यत्र शकारस्येत्सञ्ज्ञायां लोपे च "यचि भम्" इति भसञ्ज्ञायाम् "अल्लोपोऽनः" इत्यनोऽकारस्य लोपे प्राप्ते "न संयोगाद्वमन्तात्" इति मान्तसंयोगत्वात् अल्लोपनिषिद्धे सति "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे सस्य रुत्वे तस्य विसर्गे च 'ब्रह्मणः' इति रूपम् । ब्रह्मणेति । शसादावचि नाल्लोपः शेषं राजवदिति भावः । "वेदस्तत्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः" इत्यमरः । इन्हन्निति । "ढ्लोपे" इत्यतो दीर्घ इत्यनुवर्तते । "नोपधायाः" इत्यत 'उपधाया' इति । तदाह—एषामिति । अङ्ग-विशेषणत्वेन तदन्तविधिः । "सर्वनामस्थाने च" इति सिद्धे नियमार्थमित्याह—नान्यत्रेति । शेरन्यत्रेत्यर्थः । इति निषेधे प्राप्त इति । वृत्रहन्शब्दे हन् इत्यस्यापि शावेव दीर्घ इति नियमात् सौ परतः "सर्वनामस्थाने" इति दीर्घे अप्राप्ते सतीत्यर्थः । सौ चेति । पूर्वसूत्रमनुवर्तते । तत्र यदनुवृत्तं तदाह—इन्नादीनामित्यादिना । असम्बुद्धाविति । "सर्वनामस्थाने चासम्बुद्धौ" इत्यतस्तदनुवृत्तेरिति भावः । वृत्रहा । वृत्रो नाम असुरः तं हतवानित्यर्थे "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति क्विप् । कपावितौ । अपृक्तलोपः । उप-पदसमासः । इति निष्पन्नो वृत्रहन् शब्दः । तस्मात्सावागते सोरुकारस्येत्सञ्ज्ञायां लोपे च 'वृत्रहन् + स्' इति स्थिते "हल्ङ्याब्भ्य" इति सुलोपे "इन्हन्पूषार्यम्णां शौ" इति नियमादुपधाया दीर्घत्वाभावे प्राप्ते "सौ च" इत्युपधाया दीर्घत्वे "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'वृत्रहा' इति रूपम् । हे वृत्रहन् । अत्र सुलोपे कृते "सौ च" इत्यत्र 'असम्बुद्धौ' इत्यनुवृत्तेर्नोपधादीर्घः । "न ङिसम्बुद्ध्योः" इति निषेधान्न नलोपः । एकाजुत्तरपदे ण इति । समासस्य चरमावयवे रूढेन उत्तरपद-शब्देन समास इति लभ्यते । एकः अच् यस्मिन् तत् एकाच् । तत् उत्तर-पदं यस्य स एकाजुत्तरपदः । तस्मिन् समासे इति बहुव्रीहिः । "रषाभ्यां नो णः" इत्यनुवर्तते । "पूर्वपदात्सञ्ज्ञायाम्" इत्यतः पूर्वपदादित्यनुवर्तते । "प्रातिप-दिकान्तनुम्विभक्तिषु च" इत्यनुवर्तते । तदाह—एकाजुत्तरपदमित्यादिना ।

त्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः । वृत्रहणौ ॥ **हो हन्तेर्ञ्णिन्नेषु ७।३।५४।** ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम् । वृत्रघ्नः इत्यादि । एवं शार्ङ्गिन् यशस्विन् अर्यमन् पूषन् ॥ **मघवा बहुलम् ६।४।१२८।** मघवन्शब्दस्य वा तृ इत्यन्तादेशः । ऋ इत् ॥ **उगिदचां सर्वनामस्थानेऽधातोः ७।१।७०।** अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम्स्यात्सर्वनामस्थाने परे । मघवान् । मघवन्तौ । मघवन्तः । हे मघवन् । मघवद्भ्याम् । तृत्वाभावे मघवा । सुटि राज-

---

वृत्रहणौ । 'वृत्रहन्+औ' अत्र "इन्हन्०" इति नियमात् दीर्घाभावे "एकाजुत्तरपदे णः" इति णत्वे 'वृत्रहणौ' इति रूपम् । एवं सुटि वृत्रहणः । वृत्रहणम् । वृत्रहणौ । इति बोध्यम् । हो हन्तेरिति । अङ्गाधिकारात्प्रत्ययत्वं ञ्णितो लभ्यते । "चजोः कुघिण्ण्यतोः" इत्यतः कुग्रहणमनुवर्तते । तदाह—ञिति णितीत्यादिना । वृत्रघ्नः । 'वृत्रहन्+शस्' अत्र शस्येत्सञ्ज्ञायां लोपे च "यचि भम्" इति भसंज्ञायाम् "अल्लोपोऽनः" इत्यनोऽकारस्य लोपे 'वृत्रहन् अस्' इति स्थिते "हो हन्तेर्ञ्णिन्नेषु" इत्यनेन नकारे परे हकारस्य कुत्वेन घकारे सस्य रुत्वे रेफस्य विसर्गत्वे च कृते मिलित्वा 'वृत्रघ्नः' इति रूपम् । इत्यादीति । आदिना अजादौ प्रत्यये भसञ्ज्ञायाम् अनोऽकारस्य लोपः । हलादौ विभक्तौ परे नलोपश्च बोध्यः । वृत्रघ्ना, वृत्रहभ्याम् , वृत्रहभिः । वृत्रघ्ने । वृत्रघ्नः २ । वृत्रघ्नोः । वृत्रघ्नाम् । वृत्रघ्नि—वृत्रहणि । इति । एवमित्यादि । शार्ङ्गी, शार्ङ्गिणौ, शार्ङ्गिणः । हे शार्ङ्गिन् । शसि-शार्ङ्गिणः । भ्यामि—शार्ङ्गिभ्याम् । यशस्वी, यशस्विनौ, यशस्विनः । हे यशस्विन् । शसि – यशस्विनः । भ्यामि – यशस्विभ्यामित्यादि । अर्यमा, अर्यमणौ, अर्यमणः । हे अर्यमन् । शसि—अल्लोपे णत्वे च 'अर्यम्णः' । भ्यामि—अर्यमभ्यामित्यादि । पूषा, पूषणौ, पूषणः । हे पूषन् । शसि—अल्लोपे णत्वे च 'पूष्णः' । भ्यामि—पूषभ्यामित्यादि । मघवा बहुलमिति । "अर्वणस्त्रसौ" इत्यतः तृ इत्यनुवर्तते । तच्च लुप्तप्रथमाकम् । मघवेति षष्ठ्यर्थे प्रथमा । तदाह—मघवन्शब्दस्येत्यादिना । ऋ इदिति । "उपदेशेऽजनुनासिक इत्" इति ऋकार इत्संज्ञक इत्यर्थः । उगिदचामिति । अत्र "इदितो नुम् धातोः" इत्यतो नुमित्यनुवर्तते । मघवान् । 'मघवन् + सु' इत्यत्र "मघवा बहुलम्" इति तृ इत्यन्तादेशे कृते 'मघवतृ + सु' इति जाते ऋकारस्येत्संज्ञत्वे लोपे च विहिते 'मघवत् + सु' इति जाते "उगिदचां सर्वनामस्थाने धातोः" इति नुमि मित्वादन्त्यादचः परे उमि गते 'मघवन्त् सु' इति स्थिते सोरुकारस्येत्संज्ञायां लोपे च "हल्ङ्याब्भ्यो०" इति सुलोपे तकारस्य "संयोगान्तस्य लोपः" इति लोपे "मघवा बहुलम्" इतिबहुलग्रहणात्संयोगान्तस्य लोपस्यासिद्धत्वाभावेन "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तस्योपधाया दीर्घत्वे च कृते 'मघवान्' इति रूपम् । मघवन्तौ । 'मघवन्+औ' अत्र "मघवा बहुलम्" इति 'तृ' इत्यन्तादेशे कृते ऋकारस्येत्संज्ञायां लोपे च "उगिदचां सर्वनामस्थानेऽधातोः" इति

वत् ॥ श्वयुवमघोनामतद्धिते ६।४।१३३। अन्नन्तानां भानामेषामतद्धिते संप्रसारणम् । मघोनः । मघवभ्याम् । एवं श्वन् युवन् ॥ न संप्रसारणे संप्रसारणम् ६।१।३७। संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् । यूनः । यूना । युवभ्यामित्यादि ।

---

नुमि मित्वादन्त्यादचः परे उमि गते संयोगे च कृते "मघवन्तौ" इति रूपम् । एवं 'मघवन्तः' इति बोध्यम् । सुटि त्रादेशे नुम्चेति भावः । शसादौ त्रादेशः, न तु नुम् । असर्वनामस्थानत्वात् । हे मघवन् । 'मघवन् + सु' अत्र तृआदेशे ऋगते, नुमि, उमि गते सोरुकारे गते च 'मघवन् त् स्' इति स्थिते "हल्ङ्याब्भ्यो०" इति सलोपे तकारस्य संयोगान्तलोपे संयोगान्तलोपस्यासिद्धत्वान्नलोपाभावे 'हे मघवन्' इति रूपम् । मघवद्भ्याम् । 'मघवन् + भ्याम्' अत्र "मघवा बहुलम्" इति तृ इत्यन्तादेशे ऋगते "स्वादिषु०" इति पदसंज्ञायां "झलां जशोऽन्ते" इति जश्त्वे 'मघवद्भ्याम्' इति रूपम् । तृत्वाभावे मघवेति । नान्तात्सौ राजवद्रूपमिति भावः । सुटि राजवदिति । मघवा, मघवानौ, मघवानः । हे मघवन् । मघवानम्, मघवानौ । श्वयुवेति । "वसोः सम्प्रसारणम्" इत्यतः सम्प्रसारणमित्यनुवर्तते । "भस्य" इत्यधिकृतम् । "अल्लोपोऽनः" इत्यतः अनः इत्यपकृष्यते । तच्च श्वयुवमघोनां प्रत्येकं विशेषणम्, तदन्तविधिः, तदाह—अन्नन्तानामित्यादिना । मघोनः । 'मघवन् अस्' अत्र "यचि भम्" इति भसंज्ञायाम् "श्वयुवमघोनामतद्धिते" इति सम्प्रसारणे यणो—वकारस्य, इक्—उकारे जाते "मघ उ अ न् अस्" इति स्थिते "सम्प्रसारणाच्च" इति पूर्वपरयोः स्थाने पूर्वरूपैकादेशे "आद्गुणः" इति गुणे सस्य रुत्वे तस्य विसर्गत्वे च 'मघोनः' इति रूपम् । टायाम् —मघोना इति । मघवभ्याम् । 'मघवन् + भ्याम्' अत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायाम् "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'मघवभ्याम्' इति रूपम् । मघोने । मघोनः । मघोनोः । मघोनाम् । मघोनि । एवं श्वन् युवन् इति । श्वा, श्वानौ, श्वानः । हे श्वन् । श्वानम्, श्वानौ, शसादावचि "श्वयुव" इति सम्प्रसारण वकारस्य उकारः । 'शु + अन्' इति स्थिते "सम्प्रसारणाच्च" इति पूर्वरूपे 'शुनः' इति । शुना, श्वभ्याम्, श्वभिः । शुने । शुनः, शुनोः, शुनाम् । शुनि । इत्यादि । युवा, युवानौ, युवानः । हे युवन् । युवानम्, युवानौ । यूनः । 'युवन् + शस्' अत्र शकारस्येत्संज्ञायां लोपे च "यचि भम्" इति भसंज्ञायां "श्वयुवमघोनाम्" इति वकारस्य सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपैकादेशे 'यु + उन् अस्' इति जाते यकारस्यापि "श्वयुवमघोनाम्" इति सम्प्रसारणे प्राप्ते "न सम्प्रसारणे सम्प्रसारणम्" इति निषेधे सवर्णदीर्घे च कृते रुत्वविसर्गयोश्च सतोः 'यूनः' इति रूपम् । एवं यूना इत्यादावपि बोध्यम् । युवभ्याम् । 'युवन् + भ्याम्' अत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'युवभ्याम्' इति

अर्वा । हे अर्वन् ॥ **अर्वणस्त्रसावनञः ६।४।१२७।** नञा रहितस्यार्वन्नित्यस्याऽङ्गस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ । अर्वन्तः । अर्वद्भ्यामित्यादि ॥ **पथिमथ्यृभुक्षामात् ७।१।८५।** एषामाकारोऽन्तादेशः स्यात्सौ परे ॥ **इतोऽत्सर्वनामस्थाने ७।१।८६।** पथ्यादेरिकारस्याऽकारः स्यात्सर्वनामस्थाने परे ॥ **थोन्थः ७।१।८७।** पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः । पन्थानौ । पन्थानः ॥ **भस्य टेर्लोपः ७।१।८८।** भस्य पथ्यादेष्टेर्लोपः । पथः । पथा । पथिभ्याम् ।

---

रूपम् । इत्यादीति । यूने । यूनः । यूनोः । यूनाम् । यूनि । अर्वा । 'अर्वन्+सु' अत्र सोरुकारे गते "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सुलोपे "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधायाः दीर्घत्वे "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'अर्वा' इति रूपम् । हे अर्वन् । 'हे अर्वन्+सु' अत्र सोरुकारे गते "हल्ङ्याब्भ्यो०" इति सुलोपे जाते "नलोपः प्रातिपदिकान्तस्य" इति नलोपे प्राप्ते "न ङिसम्बुद्ध्योः" इति निषिद्धे 'हे अर्वन्' इति रूपम् । अर्वणस्तृ । "अङ्गस्य" इति वर्तते । तच्च अर्वणा विशेष्यते, अनञ इत्यनेनापि, तदाह—नञा रहितस्येत्यादिना । अर्वन्तौ । 'अर्वन्+औ' अत्र "अर्वणस्त्रसावनञः" इति तृ इत्यन्तादेशे ऋगते "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमि मित्वादन्त्यादचः परे उमि गते संयोगे च कृते 'अर्वन्तौ' इति रूपम् । एवम्—'अर्वन्तः' इत्यादावपि प्रक्रिया ऊह्या । शसि सर्वनामस्थानत्वाभावान्न नुम् । 'अर्वतः' इति । टायाम्—अर्वता । अर्वद्भ्याम् । 'अर्वन्+भ्याम्' अत्र "अर्वणस्त्रसावनञः" इति तृ इत्यन्तादेशे ऋगते पदसंज्ञायां जश्त्वे च कृते 'अर्वद्भ्याम्' इति रूपम् । इत्यादीति । अर्वद्भिः । अर्वते । अर्वद्भ्यः, अर्वतः, अर्वतोः, अर्वताम् । अर्वति, अर्वतोः, अर्वत्सु । पथिन्, मथिन्, ऋभुक्षिन्, एते नकारान्ताः । तेषु विशेषमाह—पथिमथ्यृभुक्षामादिति । "सावनडुहः" इत्यतः सावित्यनुवर्तते, आदिति तपरकरणम् । आकार एव विधेयः । तदाह—एषामित्यादिना । इतोऽदिति । "पथिमथ्यृभुक्षाम्" इत्यनुवर्तते । थो न्थ इति । थः इति षष्ठी । आदेशे अकार उच्चारणार्थः । पथिमथिग्रहणमनुवर्तते । "इतोऽत्सर्वनामस्थाने" इत्यतः सर्वनामस्थानग्रहणमनुवर्तते । तदाह—पथिमथोरित्यादिना । पन्थाः । 'पथिन्+सु' इत्यत्र "पथिमथ्यृभुक्षामात्" इत्याकारान्तादेशे विहिते 'पथि आ सु' इति जाते "इतोऽत्सर्वनामस्थाने" इति थकारान्तःपातिनः इकारस्याकारादेशे विहिते 'पथ् अ आ सु' इति जाते "थो न्थः" इति थस्य न्थादेशे विहिते "अकः सवर्णे दीर्घः" इति दीर्घत्वे सस्य रुत्वे रेफस्य विसर्गत्वे च 'पन्थाः' इति रूपम् । पन्थानौ । 'पथिन्+औ' इत्यत्र "इतोऽत्सर्वनामस्थाने" इति थकारान्तःपातिन इकारस्याकारे कृते 'पथन्+औ' इति जाते "थो न्थः" इति थकारस्य न्थादेशे "सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घे 'पन्थानौ' इति रूपम् । एवं पन्थानः । पन्थानम् । पन्थानौ । भस्य टेर्लोप इति । अत्र "पथिमथ्यृभु-

एवं मथिन् ऋभुक्षिन् ॥ ष्णान्ताः षट् १।१।२४। षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । पञ्चन्शब्दो नित्यं बहुवचनान्तः । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः। नुट् ॥ नोपधायाः ६।४।७। नान्तस्योपधाया दीर्घो नामि । पञ्चानाम् । पञ्चसु ॥ अष्टन आ विभक्तौ ७।२।८४। हलादौ वा स्यात् ॥ अष्टाभ्य औश् ७।१।२१। कृताकारादष्टनो जश्शसोरौश् । अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ । अष्टौ । अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानाम् । अष्टासु ।

---

धामात्" इत्यतः पथिमथ्यृभुक्षामू इत्यनुवर्तते । पथः । 'पथिन्+शस्' अत्र शकारस्येत्संज्ञायां लोपे च "यचि भम्" इति भसंज्ञायाम् "अचोऽन्त्यादि टि" इति इन् इत्यस्य टिसंज्ञायां "भस्य टेर्लोपः" इत्यनेन टिसञ्ज्ञकस्य इन् इत्यस्य लोपे सइत्यस्य रुत्वे रेफस्य विसर्गत्वे च 'पथः' इति रूपम् । पथा । 'पथिन्+आ' अत्र इनो लोपे रूपम् । पथिभ्याम् । 'पथिन्+भ्याम्' अत्र पदसञ्ज्ञायां नलोपे सति रूपम् । पथिभिः । पथे । पथिभ्यः । पथः । पथोः । पथाम् । पथि । पथोः । पथिषु । एवं मन्थाः ऋभुक्षाः इति । मन्थदण्डवाची मथिन् शब्दः । नस्य आत्वं, न्थादेशः, इकारस्याकारः रुत्वे विसर्गत्वे च मन्थाः, मन्थानौ, मन्थानः । मन्थानम्, मन्थानौ, मथः । मथा, मथिभ्याम् । मथे । मथः । मथोः, मथाम् । मथि, मथिषु । ऋभुक्षिन् शब्दस्तु इन्द्रवाची । तत्र "थोन्थः" इति वर्जमात्वादिर्भवति । षात्परत्वाण्णत्वञ्च । ऋभुक्षाः, ऋभुक्षाणौ इत्यादि । ष्णान्ता षडिति । अत्र "बहुगणवतुडतिसंख्या" इत्यतः संख्येत्यनुवर्तते । पञ्च । 'पञ्चन्+जस्' अत्र "ष्णान्ता षट्" इति पञ्चन्शब्दस्य षट्संज्ञायां विहितायां "षड्भ्यो लुक्" इति जसो लुकि "नलोपः प्रातिपदिकान्तस्य" इति नस्य लोपे च 'पञ्च' इति रूपम् । एवमेव शसि पञ्च । पञ्चभिः, पञ्चभ्यः । पदसञ्ज्ञायां नलोपे सति रूपम् । नोपधाया इति । अत्र "ढ्रलोपे" इत्यतो दीर्घ इत्यनुवर्तते । "नामि" इति सूत्रञ्च । पञ्चानाम् । 'पञ्चन्+आम्' इत्यत्र "षट्चतुर्भ्यश्च" इति आमो नुटि टित्वादाद्यावयवे जाते उटि गते 'पञ्चन् न् आम्' इति जाते नस्याकारेण सह संयोगे "नोपधायाः" इति नान्तोपधाया दीर्घत्वे "नलोपः प्रातिपदिकान्तस्य" इति नस्य लोपे च 'पञ्चानाम्' इति रूपम् । अष्टन आ विभक्ताविति । अत्र "रायो हलि" इत्यतो हलीत्यनुवर्तते । तदादिविधिः । तदाह–हलादाविति । अष्टाभ्य औशिति । अत्र "जश्शसोः शिः" इत्यतो जश्शसोरित्यनुवर्तते । अष्टभ्य इति वक्तव्ये इति । भ्यसि अष्टभ्यः, अष्टाभ्यः इति रूपद्वये सत्यपि औश्विधौ लाघवात् अष्टभ्य इत्येव निर्देश उचितः, आकारनिर्देशात्तु जश्शसोरचि परतोऽप्यात्वं विज्ञायत इत्यर्थः। अष्टौ। 'अष्टन्+जस्' इत्यत्र "अष्टन आ विभक्तौ" इत्यनेनाकारान्तादेशे विहिते 'अष्ट आ जस्' इति जाते "अकः सवर्णे दीर्घः" इति दीर्घत्वे "अष्टाभ्य औश्" इति जस औशि विहिते शस्येत्सञ्ज्ञायां लोपे च विहिते "वृद्धिरेचि" इति वृद्धौ 'अष्टौ'

आत्वाभावे अष्ट पञ्चवत् ॥ **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३।२।५९।** एभ्यः क्विन्। अञ्चेः सुप्युपपदे युजिक्रुञ्चोः केवलयोः क्रुञ्चेर्नलोपाभावश्च निपात्यते। कनावितौ ॥ **कृदतिङ् ३।१।९३।** अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥ **वेरपृक्तस्य ६।१।६७।** अपृक्तस्य वस्य लोपः ॥ **क्विन्प्रत्ययस्य कुः ८।२।६२।** क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते। तस्यासिद्धत्वात् "चोः कुः" इति कुत्वम्। ऋत्विक्—ऋत्विग्। ऋत्विजौ। ऋत्विग्भ्याम् ॥ **युजेरसमासे ७।१।७१।** युजेः सर्वनामस्थाने नुम् स्यादसमासे। सुलोपः। संयोगान्तलोपः। कुत्वेन नस्य ङः। युङ्। अनुस्वारपरसवर्णौ। युञ्जौ। युञ्जः। युग्भ्याम् ॥ **चोः कुः**

---

इति रूपम्। एवमेव शसि अष्टौ। अष्टाभिः। 'अष्टन् + भिस्' अत्र "अष्टन आ विभक्तौ" इति आत्वे सवर्णदीर्घत्वे च कृते 'अष्टाभिः' इति। अष्टाभ्यः। हलादौ आत्वे सवर्णदीर्घः। अष्टानाम्। आदौ नुटि कृते सति हलादित्वादात्वम्। पञ्चवदिति। अष्ट। अष्ट। अष्टभिः। अष्टभ्यः। अष्टानाम्। अष्टसु। ऋत्विग्दधृगिति। धातोरित्यधिकृतम्। "स्पृशोऽनुदके क्विन्" इत्यतः क्विन् इत्यनुवर्तते। पञ्चम्यर्थे षष्ठी। तदाह – एभ्य इति। कनाविताविति। "लशक्वतद्धिते" इति "हलन्त्यम्" इति च सूत्राभ्यामिति शेषः। कृदतिङिति। अत्र "धातोः" इत्यधिकृतम्, प्रत्यय इति च। वेरपृक्तस्येति। अत्र "लोपो व्योर्वलि" इत्यतो लोप इत्यनुवर्तते। क्विन्प्रत्ययस्य कुरिति। "पदस्य" इत्यधिकृतम्। "झलां जशोऽन्ते" इत्यतोऽन्त इत्यनुवर्तते। क्विन् प्रत्ययो यस्मात् सः क्विन्प्रत्ययः तस्येति बहुव्रीहिः। तदाह—क्विन्प्रत्ययो यस्मादित्यादिना। ऋत्विक्। ऋतौ उपपदे यज् धातोः "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इति क्विनि "वचिस्वपियजादीनाम्" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वपरयोः स्थाने पूर्वरूपैकादेशे 'ऋतु इज' इति जाते "इको यणचि" इति यणि 'ऋत्विज् क्विन्' अत्र "लशक्वतद्धिते" इति ककारस्येत्सञ्ज्ञायां लोपे च "हलन्त्यम्" इति नस्येत्सञ्ज्ञायाम् लोपे च इकारस्योच्चारणार्थत्वेन तस्मिन् गते वकारस्य "अपृक्त एकाल् प्रत्ययः" इति अपृक्तसंज्ञायां "वेरपृक्तस्य" इत्यपृक्तसञ्ज्ञकस्य वस्य लोपे "कृदतिङ्" इति क्विनः कृत्संज्ञायां कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सावागते सोरुकारे गते 'ऋत्विज् + स्' इति स्थिते "हल्ङ्याब्भ्यो" इति सुलोपे "क्विन्प्रत्ययस्य कुः" इति कवर्गान्तादेशे आन्तरतम्यात् जकारस्य गकारे जाते "वावसाने" इति चर्त्वेन वा ककारे 'ऋत्विक्' इति। चर्त्वाभावे 'ऋत्विग्' इति। ऋत्विग्भ्याम्। 'ऋत्विज + भ्याम्' अत्र "स्वादिषु०" इति पदसञ्ज्ञायां "क्विन्प्रत्ययस्य कुः" इति कुत्वे 'ऋत्विग्भ्याम्' इति। युजेरसमास इति। "उगिदचाम्" इत्यतः सर्वनामस्थान इत्यनुवर्तते। "इदितो नुम् धातोः" इत्यतो नुमिति च। तदाह—सर्वनामस्थान इत्यादिना। युङ्। 'युज् + सु' इत्यत्र सुबुत्पत्तेः प्राक् "ऋत्विग्दधृक्०" इति क्विनि, क्विनो लोपे क्विनः कृत्सञ्ज्ञायां कृदन्तत्वात्प्राति-

८।२।३०। चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक्—सुयुग् । सुयुजौ । सुयुग्भ्याम् । खन् । खञ्जौ । खन्भ्याम् ॥ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८।२।३६। झलि पदान्ते च । जश्त्वचर्त्वे । राट्-राड् । राजौ । राजः । राड्भ्याम् । एवं विभ्राट् देवेट् विश्वसृट् ( परौ व्रजेः षः पदान्ते ) परावुपपदे व्रजेः

---

पदिकसञ्ज्ञायां सावागते सोरुकारे गते "युजेरसमासे" इति नुमि उमि गते मित्वादन्त्यादचः परे 'युन् ज् स्' इति जाते "हल्ङ्याब्भ्यो०" इति स्लोपे "संयोगान्तस्य लोपः" इति ज्लोपे "क्विन्प्रत्ययस्य कुः" इति नकारस्य कुत्वेन ङत्वे 'युङ्' इति रूपम् । युञ्जौ । 'युज + औ' इत्यत्र "युजेरसमासे" इति नुमि उमि गते मित्वादन्त्यादचः परे "नश्चापदान्तस्य झलि" इत्यनुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णे ञकारे च कृते संयोगे सति 'युञ्जौ' इति रूपम् । एवमेव 'युञ्जः' इति रूपम् । 'युज् + शस्' अत्र शकारस्येत्सञ्ज्ञायां लोपे च जस्य अकारेण सह संयोगे सस्य रुत्वे रस्य विसर्गत्वे च 'युजः' इति । टायाम्—युजा । युग्भ्याम् । 'युज् + भ्याम्' अत्र पदसञ्ज्ञायाम् "क्विन्प्रत्ययस्य कुः" इति कवर्गादेशे विहिते "युग्भ्याम्" इति रूपम् । युग्भिः । युजे, युग्भ्याम्, युग्भ्यः । युजः, युजोः, युजाम् । युजि । 'युज् + सुप्' इत्यत्र पकारस्येत्सञ्ज्ञायां लोपे च "स्वादिष्वसर्वनामस्थाने" इति पदसञ्ज्ञायां "क्विन्प्रत्ययस्य कुः" इति कुत्वेन गकारे "खरि च" इति चर्त्वेन ककारे "आदेशप्रत्यययोः" इति सुपः सकारस्य मूर्धन्यादेशेन षकारे कषसंयोगेन क्षकारे 'युक्षु' इति । चोः कुरिति । "झलो झलि" इत्यतो झलीत्यनुवर्तते । पदस्येत्यधिकृतम् । "स्कोः संयोगाद्योः" इत्यतोऽन्ते इत्यनुवर्तते । तदाह—चवर्गस्येति । सुयुक्, सुयुग् । 'सुयुज् + सु' इत्यत्र सुष्ठु युनक्तीति विग्रहे "सत्सुद्विष०" इति क्विपि क्विपो लोपे सौ समागते सोर्लोपे "चोः कुः" इति जस्य गत्वे "वावसाने" इति गस्य कत्वे 'सुयुक्' इति, पक्षे 'सुयुग्' इति । खन् । 'खन्ज् स्' इत्यत्र सोर्लोपे "संयोगान्तस्य लोपः" इति जस्य लोपे 'खन्' इति रूपम् । खञ्जौ । 'खन्ज् + औ' इत्यत्र नस्य अनुस्वारे, अनुस्वारस्य परसवर्णे च कृते जकारस्यौकारेण सह संयोगे 'खञ्जौ' इति रूपम् । खन्भ्याम् । 'खन् ज् भ्याम्' इत्यत्र "संयोगान्तस्य लोपः" इति जस्य लोपे 'खन्भ्याम्' इति रूपम् । व्रश्चभ्र-जेति । अत्र "झलो झलि" इत्यतो झलीत्यनुवर्तते । "पदस्य" इत्यधिकृतम् । "स्कोः संयोगाद्योरन्ते च" इत्यतोऽन्ते चेत्यनुवर्तते । तदाह—झलि पदान्ते चेति । राट्, राड् । 'राज् + सु' इत्यत्र सोर्लोपे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति षकारान्तादेशे "झलां जशोऽन्ते" इति षस्य डत्वे "वावसाने" इति डस्य टत्वे कृते 'राट्' इति रूपम् । पक्षे 'राड्' इति । राड्भ्याम् । 'राज् + भ्याम्' इत्यत्र "स्वादिषु०" इति पदसंज्ञायां "व्रश्चभ्रस्ज०" इति षत्वे "झलां जशोऽन्ते" इति डत्वे 'राड्भ्याम्' इति रूपम् । 'राज् + सु' इत्यत्र "स्वादिषु" इति पदत्वात् षत्वं जश्त्वं च । "ङः सि धुट्" इति धुटि राट्त्सु । तदभावे

क्विप् स्यात् दीर्घश्च पदान्ते षत्वमपि । परिव्राट् । परिव्राजौ ॥ **विश्वस्य वसुराटोः ६।३।१२८॥** विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे । विश्वाराट्- विश्वाराड् । विश्वराजौ । विश्वाराड्भ्याम् ॥ **स्कोः संयोगाद्योरन्ते च ८।२।२९॥** पदान्ते झलि च परे यः संयोगस्तदाद्योः स्कोर्लोपः । भृट्—भृड् । सस्य श्चुत्वेन शः । "झलां जश् झशि" इति शस्य जः । भृज्जौ । भृड्भ्याम् । त्यदाद्यत्वं पररूप त्वम् ॥ **तदोः सः सावनन्त्ययोः ७।२।१०६॥** त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ । स्यः, त्यौ, त्ये । सः, तौ, ते । यः, यौ, ये । एषः, एतौ, एते ॥ अन्वा-

---

'राट्सु' । एवं विभ्राडिति । राजृशब्दवत् षत्वादीत्यर्थः । परौ व्रजेरिति । औणादिकसूत्र- मेतत् । "क्विब्वचिप्रच्छि" इत्यादिपूर्वसूत्रात् क्विबिति दीर्घ इति चानुवर्तते । पदान्त इति ष इत्यनेनैव सम्बध्यते । तदाह—पराावुपपदे इत्यादिना । परिव्राट् । परिपूर्वकव्रज- धातुतः "परौ व्रजेः षः पदान्ते" इति क्विपि व्रजेश्च दीर्घत्वे कृते च षत्वे क्विपो लोपे सावागते सोर्लोपे "झलां जशोऽन्ते" इति षस्य डत्वे "वावसाने" इति डस्य टत्वे 'परि- व्राट्' । पक्षे—'परिव्राड्' । विश्वस्य वसुराटोरिति । अत्र "ढ्रलोपे" इत्यतो दीर्घ इत्यनु- वर्तते । विश्वाराट् । 'विश्वराज् + सु' इत्यत्र सोर्लोपे "व्रश्चभ्रस्ज" इति जस्य षत्वे "झलां जशोऽन्ते" इति षस्य डत्वे "वावसाने इति डस्य टत्वे "विश्वस्य वसुराटोः" इति दीर्घत्वे च विहिते 'विश्वाराट्' इति । पक्षे-'विश्वाराड्' इति । स्कोः संयोगाद्योरिति। "पदस्य" इत्यधिकृतम् । चकारात् "झलो झलि" इत्यतो झलीत्यनुवर्तते । "सयोगा- न्तस्य लोपः" इत्यतो 'लोप' इत्यनुवर्तते । तदाह—पदान्ते झलि चेत्यादिना । भृट् । 'भ्रस्ज-पाके' क्विप् । "ग्रहिज्या०" इति सम्प्रसारणं रेफस्य ऋकारः । "सम्प्रसार- णाच्च" इति पूर्वरूपम् । तस्मात्सौ 'भृस्ज् सु' इत्यत्र सोर्लोपे "स्कोः संयोगाद्योरन्ते च" इति संयोगाद्यस्य 'स्' इत्यस्य लोपे "व्रश्चभ्रस्ज०" इत्यादिना जस्य षत्वे, षस्य डत्वे "वावसाने" इति टत्वे 'भृट्' इति । पक्षे-'भृड्' इति। भृज्जौ । 'भृस्ज् + औ' इत्यत्र "स्तोः श्चुना श्चुः" इति सस्य शत्वे "झलां जश् झशि" इति शस्य जत्वे संयोगे च 'भृज्जौ' इति रूपम् । एव सर्वत्राजादौ विभक्तौ बोध्यम् । भृड्भ्याम् । 'भृस्ज् + भ्याम्' इत्यत्र "स्वादिषु०" इति पदसंज्ञायां "स्कोः संयोगाद्योरन्ते च" इति संयोगाद्यस्य स् इत्यस्य लोपे "व्रश्च" इति षत्वे, तस्य जश्त्वेन डत्वे 'भृड्भ्याम्' इति । एवं हलादौ सर्वत्र । त्यदाद्यत्वं पररूपत्वमिति । सर्वत्र विभक्तावुत्पन्नायां "त्यदादीनामः" इत्यन्तस्य अकारः, "अतो गुणे" इति पररूपञ्चेत्यर्थः । ततश्च अदन्तवद्रूपाणीति तात्पर्यम् । तदोः स इति । अत्र "त्यदादीनामः" इत्यतः-'त्यदादीनाम्' इत्यनुवर्तते । स्यः । 'त्यद् + सु' इत्यत्र "त्यदादीनामः" इति 'द्' इत्यस्य स्थाने अकारादेशे "अतो गुणे" इति पररूपे कृते 'त्य सु' इति जाते "तदोः सः सावनन्त्ययोः" इति अनन्त्यस्य तका- रस्य सत्वे सोरुकारे गते रेफस्य विसर्गत्वे च 'स्यः' इति । त्यौ । 'त्यद् + औ' इत्यत्र

देशे-एनम्, एनौ, एनान्, एनेन, एनयोः २ ॥ ङे प्रथमयोरम् ७।१।२८। युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः ॥ त्वाहौ सौ ७।२।९४। अनयोर्मपर्यन्तस्य त्व.हौ आदेशौ स्तः ॥ शेषे लोपः ७।२।९०। एतयोष्टिलोपः । त्वम् । अहम् ॥ युवावौ द्विवचने ७।२।९२। द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ प्रथमायाश्च द्विवचने भाषायाम् ७।२।८८। औङ्येतयोरात्वं लोके । युवाम् । आवाम् ॥ यूयवयौ जसि ७।२।९३। अनयोर्मपर्यन्तस्य यूयवयौ

---

त्यदाद्यत्वे पररूपत्वे च कृते "वृद्धिरेचि" इति वृद्धौ 'त्यौ' इति रूपम् । त्ये । 'त्यद्+जस्' इत्यत्र त्यदाद्यत्वे पररूपत्वे च सर्वादित्वात्सर्वनामसंज्ञायां "जसः शी" इति जसः स्थाने 'शी' आदेशे शगते गुणे च 'त्ये' इति । त्यम्, त्यौ, त्यान् । त्येन, त्याभ्याम्, त्यैः । त्यस्मै, त्याभ्याम्, त्येभ्यः । त्यस्मात् । त्यस्य, त्ययोः, त्येषाम् । त्यस्मिन्, त्येषु । सः । 'तद्+सु' अत्र त्यदाद्यत्वे पररूपत्वे च कृते "तदोः सः सावनन्त्ययोः" इति तस्य सत्वे सोरुकारे गते रेफस्य विसर्गत्वे च 'सः' इति रूपम् । तौ । अत्वे, पररूपत्वे, वृद्धौ च । ते । त्यदाद्यत्वे पररूपत्वे, जसः शीत्वे गुणे च रूपम् । तम्, तौ, तान् । तेन, ताभ्यां, तैः । तस्मै, ताभ्याम्, तेभ्यः । तस्मात् । तस्य, तयोः, तेषाम् । तस्मिन्, तेषु । एवमेव यत् शब्दः । एषः । 'एतद्+सु' इत्यत्र त्यदाद्यत्वे पररूपत्वे च कृते "तदोः सः सावनन्त्ययोः" इति तकारस्य सकारे कृते "आदेशप्रत्यययोः" इति सस्य षत्वे च कृते 'एष+सु' इति जाते सोरुकारे गते रेफस्य विसर्गत्वे च 'एषः' इति रूपम् । एते । एतद्शब्दस्य त्यदाद्यत्वे पररूपत्वे च सर्ववदेव रूपाणि । अन्वादेशे इति । "द्वितीयाटौस्स्वेनः" इत्यस्य एतद्शब्देऽपि प्रवृत्तेरिति भावः । ङे प्रथमयोरिति । अत्र "युष्मदस्मद्भ्यां ङसोऽश्" इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते । त्वाहौ साविति । अत्र "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरित्यनुवर्तते । शेषे लोप इति । उक्तादन्यः शेषः, आत्वयत्वञ्च प्रागुक्तम्, तद्विषयादन्यविभक्तिरितिशेषशब्दार्थस्तदेतद्व्याचष्टे—आत्वयत्वनिमित्तेतरेति । त्वम्, अहम् । 'युष्मद्+सु' इत्यत्र "ङेप्रथमयोरम्" इति सोरमादेशे विहिते 'युष्मद्+अम्' इति जाते "त्वाहौ सौ" इति युष्मदो मपर्यन्तस्य त्वादेशे विहिते 'त्व अद् अम्' इति जाते "अतो गुणे" इति पररूपत्वे "शेषे लोपः" इति दस्य लोपे 'त्व अम्' इत्यवशिष्टे "अमि पूर्वः" इति पूर्वरूपत्वे कृते 'त्वम्' इति रूपम् । 'अस्मद्+सु' इत्यत्र "ङेप्रथमयोरम्" इति सोरमादेशे "त्वाहौ सौ" इत्यस्मदो मपर्यन्तस्य अहादेशे "अतो गुणे" इति पररूपे कृते 'अहद् अम्' इति जाते "शेषे लोपः" इति दस्य लोपे "अमि पूर्वः" इति पूर्वरूपे 'अहम्' इति । युवावौ द्विवचन इति । उक्तिर्वचनं, द्वयोर्वचनम् द्विवचनम्, तत्र समर्थयोरित्यर्थः । द्वित्वविशिष्टार्थवाचिनोरिति यावत् । प्रथमायाश्चेति । "अष्टन आ०" इत्यत 'आ' इति "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरिति चात्रानुवर्तते । युवाम्, आवाम् । 'युष्मद्+

स्तो जसि। यूयम्, वयम्॥ **त्वमावेकवचने ७।२।९७।** एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ॥ **द्वितीयायां च ७।२।८७।** अनयोरात्स्यात्। त्वाम्, माम्॥ **शसो न ७।१।२९।** आभ्यां शसो नः स्याद्। अमोऽपवादः। "आदेः परस्य"। "संयोगान्तस्य लोपः"। युष्मान्, अस्मान्॥ **योऽचि ७।२।८९।** अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः। त्वया, मया॥ **युष्मदस्मदोरनादेशे ७।२।८६।**

---

औ' 'अस्मद्+औ' इत्यत्र "ङेप्रथमयोरम्" इति औकारस्य स्थाने अमि "युवावौ द्विवचने" इति युष्मदो मपर्यन्तस्य युव आदेशे अस्मदो मपर्यन्तस्य आवादेशे च 'युव अद् अम्' 'आव अद् अम्' अत्र "अतो गुणे" इति पररूपत्वे "प्रथमायाश्च द्विवचने भाषायाम्" इति आकारान्तादेशे 'युव आ अम्' 'आव आ अम्' इति भूते "अकः सवर्णे दीर्घः" इति दीर्घे "अमि पूर्वः" इति पूर्वरूपैकादेशे च कृते 'युवाम्' इति 'आवाम्' इति च। यूयम्। वयम्। 'युष्मद्+जस्' 'अस्मद्+जस्' इत्यत्र "ङेप्रथमयोरम्" इति जसः स्थाने अमि कृते "यूयवयौ जसि" इति युष्मदो मपर्यन्तस्य यूयादेशे अस्मदो मपर्यन्तस्य वयादेशे च विहिते 'यूय अद् अम्' 'वय+अद् अम्' इति जाते "अतो गुणे" इति पररूपत्वे "शेषे लोपः" इति दकारस्य लोपे "अमि पूर्वः" इति पूर्वरूपैकादेशे 'यूयम्' इति, 'वयम्' इति। एकस्योक्ताविति। 'त्वमावेकत्वे' इति वक्तव्ये वचनग्रहणादयमर्थो लभ्यत इति भावः। द्वितीयायाञ्चेति। अत्र "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोः, "अष्टन आ विभक्तौ" इत्यतो 'विभक्तौ' इति 'आ' इति चानुवर्तते। तथाच—द्वितीयाविभक्तौ परतः युष्मदस्मदोराकारः स्यादिति च फलति। "अलोऽन्त्यस्य" इति अन्त्यस्य भवति। त्वाम्, माम्। 'युष्मद्+अम्' 'अस्मद्+अम्' इत्यत्र "त्वमावेकवचने" इति युष्मदो मपर्यन्तस्य त्वादेशे अस्मदो मपर्यन्तस्य च मादेशे विहिते 'त्व अद् अम्' 'म अद् अम्' इति जाते "अतो गुणे" इति पररूपत्वे "द्वितीयायाञ्च" इत्यन्त्यस्य दस्यात्वे "अकः सवर्णे दीर्घः" इति सवर्णदीर्घत्वे "अमि पूर्वः" इति पूर्वरूपैकादेशे च कृते 'त्वाम्' इति, 'माम्' इति। शसो न इति। न इति लुप्तप्रथमाविभक्तिकमिति यावत्। युष्मान्, अस्मान्। 'युष्मद्+शस्' 'अस्मद्+शस्' इत्यत्र "लशक्वतद्धिते" इति शस्येत्संज्ञायां लोपे च "शसो न" इति नादेशे "तस्मादित्युत्तरस्य" इत्यनेनोत्तरस्य सर्वस्य प्राप्ते 'आदेः परस्य" इति आद्याकारस्य जाते 'युष्मद्+न् स्' 'अस्मद्+न् स्' इति भूते "संयोगान्तस्य लोपः" इति स्लोपे "द्वितीयायाञ्च" इत्यन्तस्य द्मात्रस्य आकारे "अकः सवर्णे दीर्घः" इति पूर्वपरयोः स्थाने दीर्घादेशे 'युष्मान्' 'अस्मान्' इति रूपम्। योऽचीति। "युष्मदस्मदोरनादेशे" इत्यनुवर्तते। "अष्टन आ विभक्तौ" इत्यतो विभक्तावित्यनुवर्तते। अचीति विभक्तिविशेषणम्। तदादिविधिस्तदाह—अनयोरिति। त्वया, मया। 'युष्मद्+टा' 'अस्मद्+टा' इत्यत्र "त्वमावेकवचने" इति मपर्यन्तस्य युष्मदः त्वादेशे अस्मदश्च

अनयोरात्स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्, आवाभ्याम्, युष्माभिः, अस्माभिः॥ **तुभ्यमह्यौ ङयि ७।२।९५।** अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि। टिलोपः। तुभ्यम्, मह्यम्॥ **भ्यसो भ्यम् ७।१।३०।** आभ्यां परस्य भ्यसो भ्यम् स्यात्। युष्मभ्यम्, अस्मभ्यम्॥ **एकवचनस्य च ७।१।३२।** आभ्यां ङसेरत्। त्वत्, मत्॥ **पञ्चम्या अत् ७।१।३१।** आभ्यां पञ्चम्या भ्यसोऽत्स्यात्। युष्मत्,

---

मादेशे सति 'त्व अद् टा' 'म अद् टा' इति जाते "अतो गुणे" इति पररूपे टागतटकारस्येत्संज्ञायां लोपे च "योऽचि" इति योगेन सर्वस्य यकारादेशे प्राप्ते "अलोऽन्त्यस्य" इत्यन्तस्य दस्य जाते सति 'त्व य् आ' 'म य् आ' इति भूते संयोगे च कृते 'त्वया' 'मया' इति। युष्मदस्मदोरिति। "अष्टन आ विभक्तौ" इत्यतः 'आ' इति विभक्ताविति चानुवर्तते। "रायो हलि" इत्यतो हलीत्यनुवृत्तं विभक्तिविशेषणम्। तदादिविधिस्तदाह—अनयोरित्यादिना। युवाभ्याम्, आवाभ्याम्। 'युष्मद् भ्याम्' 'अस्मद्+भ्याम्' इत्यत्र "युवावौ द्विवचने" इति मपर्यन्तस्य युवादेशे आवादेशे च विहिते 'युव अद् भ्याम्' 'आव अद् भ्याम्' इति जाते "अतो गुणे" इति पररूपत्वे "युष्मदस्मदोरनादेशे" इति दकारस्य 'आ' आदेशे विहिते "अकः सवर्णे दीर्घः" इति दीर्घादेशे 'युवाभ्याम्' 'आवाभ्याम्' इति स्तः। युष्माभिः, अस्माभिः। 'युष्मद्+भिस्' 'अस्मद्+भिस्' इत्यत्र "युष्मदस्मदोरनादेशे" इति दस्य स्थाने आकारे विहिते "अकः सवर्णे दीर्घः" इति दीर्घत्वे सस्य रुत्वे विसर्गत्वे च कृते 'युष्माभिः' 'अस्माभिः' इति। तुभ्यमह्यौ ङयीति। ङे इत्यस्य सप्तम्येकवचने ङयीति। "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरित्यनुवर्तते। "मपर्यन्तस्य" इत्यधिकृतम्। तदाह—अनयोरित्यादिना। तुभ्यम्, मह्यम्। 'युष्मद्+ङे' 'अस्मद्+ङे' इत्यत्र "तुभ्यमह्यौ ङयि" इति मपर्यन्तस्य युष्मदः तुभ्यादेशे, अस्मदो मह्यादेशे च कृते 'तुभ्य अद् ङे' 'मह्य अद् ङे' इति जाते "अतो गुणे" इति पररूपे "शेषे लोपः" इत्यन्त्यस्य दकारस्य लोपे "ङेप्रथमयोरम्" इति ङेरमादेशे "अमि पूर्वः" इति पूर्वरूपैकादेशे 'तुभ्यम्' इति, 'मह्यम्' इति च जायेते। भ्यामि—युवाभ्याम्, आवाभ्याम्, इति तृतीयाद्विवचनवदिति भावः। भ्यसो भ्यम्। आभ्यामिति। "युष्मदस्मद्भ्यां" इत्यतस्तदनुवृत्तेरिति भावः। युष्मभ्यम्, अस्मभ्यम्। 'युष्मद् भ्यस्' 'अस्मद्+भ्यस्' इत्यत्र "भ्यसो भ्यम्" इति भ्यसः स्थाने भ्यमादेशे कृते "शेषे लोपः" इति द्लोपे कृते सति 'युष्मभ्यम्' 'अस्मभ्यम्' इति। एकवचनस्य चेति। "युष्मदस्मद्भ्यां ङसोऽश्" इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते, "पञ्चम्या अत्" इति च तदाह—आभ्यामिति। त्वत्, मत्। 'युष्मद्+ङसि', 'अस्मद्+ङसि' इत्यत्र "त्वमावेकवचने" इति युष्मदो मपर्यन्तस्य त्वादेशे अस्मदो मपर्यन्तस्य च मादेशे "अतो गुणे" इति पररूपे "एकवचनस्य च" इति ङसेरति विहिते "शेषे लोपः" इति द्मात्रलोपे 'त्व+अत्' 'म+अत्' इति जाते "अतो गुणे" इति पररूपत्वे च 'त्वत्'

अस्मत् ॥ **तवममौ ङसि ७।२।९६।** अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ॥ **युष्मदस्मद्भ्यां ङसोऽश् ७।१।२७।** तव, मम। युवयोः, आवयोः ॥ **साम आकम् ७।१।३३।** आभ्यां परस्य साम आकम् स्यात्। युष्माकम्, अस्माकम्। त्वयि, मयि। युवयोः, आवयोः। युष्मासु, अस्मासु ॥ **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ८।१।२०।** पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोर्वान्नावित्यादेशौ स्तः ॥ **बहुवचनस्य वस्नसौ ८।१।२१।** उक्तविधयोरनयोः

---

इति 'मत्' इति च भवतः। भ्यामि—पूर्ववत्—'युवाभ्याम्' 'आवाभ्याम्' इति स्तः। पञ्चम्या अदिति। अत्र "युष्मदस्मद्भ्याम् ङसोऽश्" इत्यतो 'युष्मदस्मद्भ्याम्' इति "भ्यसो भ्यम्" इत्यतो 'भ्यस' इति चानुवर्तते। युष्मत्, अस्मद्। 'युष्मद्+भ्यस्' 'अस्मद्+भ्यस्' इत्यत्र "पञ्चम्या अत्" इति भ्यसोऽति "शेषे लोपः" इति दस्य लोपे "अतो गुणे" इति पररूपत्वे च कृते 'युष्मत्' इति 'अस्मत्' इति च भवतः। तवममाविति। "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरित्यनुवर्तते। मपर्यन्तस्येत्यधिकृतम्। तदाह—अनयोरिति। तव, मम। 'युष्मद्–ङस्' 'अस्मद्–ङस्' इत्यत्र "तवममौ ङसि" इति युष्मदो मपर्यन्तस्य तवादेशे अस्मदो मपर्यन्तस्यममादेशे "अतो गुणे" इति पररूपत्वे "युष्मदस्मद्भ्यां ङसोऽश्" इति ङसोऽशि विहिते शस्येत्संज्ञायां लोपे च भूयोऽपि "अतो गुणे" इति पररूपत्वे च कृते 'तव, मम' इति रूपे स्तः। युवयोः, आवयोः। 'युष्मद्+ओस्' 'अस्मद्+ओस्' इति स्थिते "युवावौ द्विवचने" इति युष्मदो मपर्यन्तस्य युवादेशे अस्मदो मपर्यन्तस्य आवादेशे "अतो गुणे" इति पररूपत्वे "योऽचि" इति दकारस्य यकारे विहिते संयोगे च कृते सस्य रुत्वे रेफस्य विसर्गत्वे च कृते 'युवयोः' 'आवयोः' इति। आभ्यामिति। "युष्मदस्मद्भ्यां ङसोऽश्" इत्यतस्तदनुवृत्तेरिति भावः। साम इति। 'सकारेण सहितः आम् साम् तस्येत्यर्थः। ससुट्कस्य आम इति यावत्। युष्माकम्, अस्माकम्। 'युष्मद्+आम्' 'अस्मद्+आम्' इत्यत्र "साम आकम्" इति आमि सास्त्वमारोप्य आकमादेशे विहिते 'युष्मद्+आकम्' 'अस्मद्+आकम्' इति जाते "शेषे लोपः" इति दलोपे "अकः सवर्णे दीर्घः" इति सवर्णदीर्घत्वे 'युष्माकम्' 'अस्माकम्' इति। त्वयि, मयि। 'युष्मद्+ङि' 'अस्मद्+ङि' इत्यत्र "त्वमावेकवचने" इति युष्मदो मपर्यन्तस्य त्वादेशे अस्मदो मपर्यन्तस्य च मादेशे कृते "अतो गुणे" इति पररूपत्वे च कृते 'त्वद्+ङि' 'मद्+ङि' इति जाते ङकारस्येत्संज्ञायां लोपे च "योऽचि" इति दकारस्य यकारादेशे 'त्वयि' 'मयि' इति भवतः। ओसि—युवयोः, आवयोः पूर्ववत्। युष्मासु, अस्मासु। 'युष्मद्+सुप्' 'अस्मद्+सुप्' इत्यत्र पकारस्येत्संज्ञायां लोपे च कृते "युष्मदस्मदोरनादेशे" इति 'द्' इत्यस्यात्वे "अकः सवर्णे दीर्घः" इति दीर्घत्वे च जाते 'युष्मासु' 'अस्मासु' इति रूपे स्तः। युष्मदस्मदोः षष्ठीति। षष्ठीचतुर्थीद्वितीयाभिः सह तिष्ठत इति षष्ठीचतुर्थीद्वितीयास्थौ

षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥ **तेमयावेकवचनस्य ८।१।२२।** उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥ **त्वामौ द्वितीयायाः ८।१।२३।** द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः ॥ श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म सः ॥ स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥ सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ॥ सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥ **( समानवाक्ये युष्मदस्मदादेशा वक्तव्याः )** एकतिङ् वाक्यम् ।

---

तयोरिति विग्रहः । षष्ठ्यादिविशिष्टयोरिति यावत् । उक्तविधयोरिति । षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोरित्यर्थः । तेमयेति । तेश्च मेश्चेति विग्रहः । अयं वांनावोरपवादः । अत्र द्वितीयाग्रहणं नानुवर्तते, तत्र त्वामादेशयोर्वक्ष्यमाणत्वात् । त्वामाविति । त्वाश्च माश्चेति विग्रहः । एकवचनस्येत्यनुवर्तते । तदाह—द्वितीयेत्यादिना । श्रीशस्त्वावतु मापीहति । श्रीशः-विष्णुः, त्वा-त्वाम्, मा अपि-मामपि, पातु-रक्षतु । अत्र त्वाम्, माम् इति द्वितीयैकवचनान्तयोः स्थाने "त्वामौ द्वितीयायाः" इति त्वामावादेशौ स्तः । दत्तात्ते मेऽपि शर्म सः । सः-श्रीशः, ते-तुभ्यम्, मे-मह्यम्, अपि शर्म-सुखम्, दत्तात्-ददातु । अत्र चतुर्थ्येकवचनान्तयोः तुभ्यम् मह्यम्, अनयोः स्थाने "ते मयावेकवचनस्य" इति ते मे आदेशौ । स्वामी ते मेऽपि स हरिः । सः हरिः ते-तव, मे-मम स्वामी-प्रभुरित्यर्थः । अत्र तव मम इति षष्ठ्येकवचनान्तयोः स्थाने "तेमयावेकवचनस्य" इति ते मे आदेशः । पातु वामपि नौ विभुः । विभुः-सर्वव्यापको हरिः, वाम्-युवाम्, नौ-आवाम्, अपि पातु-रक्षतु, इत्यर्थः । अत्र युवाम्, आवाम्, इति द्वितीयाद्विवचनयोः स्थाने "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" इति वां नौ आदेशौ भवतः । सुखं वां नौ ददात्वीशः । 'ईशः वां-युवाभ्याम्, नौ-आवाभ्याम्, सुखं ददातु' इत्यर्थः । अत्र युवाभ्याम्, आवाभ्याम्, इति चतुर्थीद्विवचनान्तयोः स्थाने "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" इति वां नौ इत्यादेशौ स्तः । पतिर्वामपि नौ हरिः । हरिः वाम्-युवयोः, नावपि-आवयोरपि, पतिः स्वामीत्यर्थः । अत्र युवयोः, आवयोः इति षष्ठीद्विवचनान्तयोः स्थाने "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" इति 'वां नावौ' इत्यादेशौ स्तः । सोऽव्याद्वो न इति । सः वः-युष्मान्, नः-अस्मान्, अव्यात्-रक्षत्वित्यर्थः । अत्र-युष्मान् अस्मान् इति बहुत्वविशिष्टद्वितीयान्तयोः स्थाने "बहुवचनस्य वस्नसौ" इति 'वस्नसौ' स्तः । शिवं वो न इति । सः वः-युष्मभ्यम्, नः-अस्मभ्यम्, शिवं-कल्याणं, दद्यात् । अत्र 'युष्मभ्यम्, 'अस्मभ्यम्' इति चतुर्थीबहुवचनान्तयोः स्थाने "बहुवचनस्य वस्नसौ" इति वस्नसौ स्तः । सेव्योऽत्र वः स नः इति । अत्र-संसारे, सः-हरिः, वः-युष्माकम्, नः-अस्माकम्, सेव्यः-भजनीयः । अत्र युष्माकम्, अस्माकम्, इतिषष्ठीबहुवचनान्तयोःस्थाने "बहुवचनस्यवस्नसौ" इति वस्नसौ स्तः । एकवाक्ये इति । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थः । एकतिङिति । तिङित्यनेन तिङन्तं विवक्षितम् ।

तेनेह न-ओदनं पच, तव भविष्यति। इह तु स्यादेव। शालीनां ते ओदनं दास्यामि। (एते वान्नावादय आदेशा अनन्वादेशे वा वक्तव्याः)। अन्वादेशे तु नित्यं स्युः॥ धाता ते भक्तोऽस्ति। धाता तव भक्तोऽस्ति वा। तस्मै ते नमः इत्येव। सुपात्—सुपाद्, सुपादौ॥ **पादः पत् ६।४।१३०।** पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः। सुपदः। सुपदा। सुपाद्भ्याम्। अग्निमत्-अग्निमद्, अग्निमथौ, अग्निमथः॥ **अनिदितां हल उपधायाः क्ङिति ६।४।२४।** हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति। नुम्। संयोगान्तस्य लोपः। नस्य कुत्वेन ङः। प्राङ्, प्राञ्चौ, प्राञ्चः॥ **अचः ६।४।१३८।** लुप्तनकारस्याञ्चतेर्भ-

---

एकः तिङ् यस्येति विग्रहः। धाता ते भक्तोऽस्तीति। अत्र "एकवाक्ये युष्मदस्मदादेशा वक्तव्याः" इत्यनेन तव स्थाने ते आदेशो विहितः। यत्र ते आदेशो न भवति तत्र धाता तव भक्तोऽस्तीति भवत्येव। तस्मै ते नमः इत्येवेति। अत्र अन्वादेशत्वान्नित्य आदेशो जायते। सुपात्, सुपाद्। शोभनौ पादौ यस्य इति विग्रहः। 'सुपाद्+सु' इत्यत्र अनुबन्धलोपे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सस्य लोपे "वावसाने" इति दस्य तत्वे च कृते 'सुपात्' इति। चर्त्वाभावपक्षे-'सुपाद्' इति। पादः पदिति। भस्य अङ्गस्येति चाधिकृतं पाद इत्यनेन विशेष्यते। तदन्तविधिः। तदाह—पाच्छब्दान्तमिति। सुपद इति। 'सुपाद्+शस्' अत्र शस्येत्संज्ञायां लोपे च भसंज्ञायां "पादः पत्" इति पाद्शब्दस्य पदादेशे सस्य रुत्वे रस्य विसर्गत्वे च विहिते 'सुपदः' इति। अजादौ विभक्तौ परे सर्वत्र पदादेशः। सुपदे। सुपदः। सुपदः। सुपदोः। सुपदाम्। सुपदि। अग्निमत्, अग्निमद्। 'अग्निमथ्+सु'इत्यत्र सोर्लोपे "झलां जशोऽन्ते" इति थस्य दत्वे "वावसाने"इति दस्य तत्वे च कृते 'अग्निमत्'इति, पक्षे 'अग्निमद्' इति। भ्यामादौ-'अग्निमथ्+भ्याम्'इत्यत्र "झलां जशोऽन्ते"इति थस्य दत्वे च कृते 'अग्निमद्भ्याम्'इति रूपम्। अनिदितामिति। इद्-ह्रस्वेकार इत्संज्ञको येषां तानि इदिन्ति न इदिन्ति-अनिदिन्ति, तेषामनिदिताम्। एतच्च अङ्गस्य विशेषणं, हल इत्यपि, तदाह-हलन्तानामित्यादिना। नुमिति। "उगिदचाम्"इत्यनेनेति शेषः। संयोगान्तस्य लोप इति। हल्ङ्यादिना सुलोपे सतीति शेषः। कुत्वेन ङ इति। नासिकास्थानसाम्यादिति भावः। प्राङ्। 'प्र+अन्चु' इत्यवस्थायाम् "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इति क्विनि तस्य सर्वापहारे-(सर्वस्य लोपे) प्रत्ययलक्षणेन "अनिदितां हल उपधायाः क्ङिति"इति उपाधानकारलोपे 'प्र अच्'इति स्थिते "कृदतिङ्"इति क्विनः कृत्संज्ञकत्वात् 'प्र अच्' इत्यस्य "कृत्तद्धितसमासाश्च" इति कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ समागते तस्य "सुडनपुंसकस्य"इति सर्वनामस्थानसंज्ञायाम् "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमि उमि गते मित्वादन्त्यादचः परे 'प्र अन् च् सु' इति जाते सकारोत्तरवर्त्तिन

स्याकारस्य लोपः ॥ चौ ६।३।१३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः ॥ प्राचः । प्राचा । प्राग्भ्याम् । प्रत्यङ्, प्रत्यञ्चौ, प्रतीचः । प्रत्यग्भ्याम् । उदङ्, उदञ्चौ ॥ उद ईत् ६।४।१३९। उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत् । उदीचः । उदीचा । उदग्भ्याम् ॥ समः समि ६।३।९३। वप्रत्ययान्तेऽञ्चतौ।

---

उकारस्येत्संज्ञायां लोपे च "हल्ङ्याब्भ्यो दीर्घात्०" इति सुलोपे "संयोगान्तस्य लोपः" इति चलोपे "क्विन्प्रत्ययस्य कुः" इति नस्य नासिकास्थानसाम्यात् कुत्वेन ङकारे "अकः सवर्णे दीर्घः" इति नस्यानुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति तस्य परसवर्णे ञकारे 'प्राञ्चौ' इति रूपम्। एवं सर्वत्र सुटि बोध्यम्। अच इति। "अल्लोपोऽनः" इत्यतोऽल्लोप इत्यनुवर्तते, 'भस्य' इति च। 'अच' इति लुप्तनकारस्य अञ्चुधातोः षष्ठ्यन्तस्यानुकरणम् । तदाह—लुप्तनकारस्येत्यादिना । चौ । "चजोः" इति निर्देशाच्चवर्गग्रहणं न भवतीत्याह—लुप्ताकारनकारेऽञ्चताविति । "ढ्लोपे पूर्वस्य दीर्घोऽणः" इति सूत्रात् 'अणो दीर्घ' इत्यनुवर्तते, तदाह—अणो दीर्घ इति । प्राचः । 'प्र अच् शस्' इति स्थिते अत्र शस्येत्संज्ञायां लोपे च "यचि भम्" इति भसञ्ज्ञायाम् "अचः" इति अच अकारस्य लोपे "चौ" इति प्र-अकारस्य दीर्घत्वे संयोगे सस्य रुत्वे रस्य विसर्गत्वे च "प्राचः" इति रूपम् । सर्वत्राजादौ विभक्तौ परे एवं क्रमः । प्राग्भ्याम् । 'प्राच्+भ्याम्' अत्र पदसञ्ज्ञायाम् "क्विन्प्रत्ययस्य कुः" इति कुत्वे प्राप्ते तस्यासिद्धत्वात् "चोः कुः" इति कुत्वेन ककारे "झलां जशोऽन्ते" इति गकारे 'प्राग्भ्याम्' इति रूपम् । प्राग्भिः । प्राचे । प्राचः, प्राचोः, प्राक्षु । प्रत्यङ् । 'प्रति अन् च्' इत्यवस्थायाम् "ऋत्विग्दधृक्" इति क्विनि तस्य सर्वस्य लोपे "इको यणचि" इति यणि "अनिदितां हल उपधायाः क्ङिति" इति नस्य लोपे कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां स्वावागते "उगिदचाम्" इति नुमि उमि गते मित्वादन्त्यादचः परे हल्ङ्यादिना सुलोपे चकारस्य संयोगान्तलोपे नुमो नकारस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन ङकारे 'प्रत्यङ्' इति रूपम् । प्रत्यञ्चौ । 'प्रत्यच्+औ' इति स्थिते "उगिदचाम्" इति नुमि, तन्नकारस्य अनुस्वारे तस्य परसवर्णे ञकारे मिलित्वा 'प्रत्यञ्चौ' इति रूपम् । एवं प्रत्यञ्चः । प्रत्यञ्चम्, प्रत्यञ्चौ । प्रतीचः । 'प्रति अन् च् शस्' इत्यवस्थायाम् "अनिदिताम्" इति नलोपे कृते शकारस्येत्संज्ञायां लोपे च "यचि भम्" इति भसञ्ज्ञायाम् "अचः" इत्यकारलोपे "चौ" इति पूर्वस्याणो दीर्घत्वे सस्य रुत्वे रेफस्य विसर्गत्वे च 'प्रतीचः' इति रूपम् । प्रत्यग्भ्याम् । 'प्रति अन् च् भ्याम्' इत्यत्र "अनिदिताम्" इति नलोपे "इको यणचि" इति यणि "चोः कुः" इति कुत्वे 'प्रत्यग्भ्याम्' इति रूपम् । एवं प्रत्यग्भिः । प्रतीचे, प्रतीचः । प्रतीचोः । प्रतीचाम् । प्रतीचि । प्रत्यक्षु । उदङ् । 'उद् अन् च् सु' इति स्थिते, "अनिदिताम्" इति नलोपे "उगिदचाम्" इति नुमि, हल्ङ्यादिना सुलोपे संयोगान्तलोपे कुत्वे च 'उदङ्' इति रूपम् । उद ईत् । "अचः" इति सूत्रमनुवर्तते, अल्लोप इत्यतः अत् इति

सम्यङ्, सम्यञ्चौ, समीचः। सम्यग्भ्याम् ॥ **सहस्य सध्रिः ६।३।९५।** तथा। सध्र्यङ् ॥ **तिरसस्तिर्यलोपे ६।३।९४।** अलुप्ताकारेऽञ्चतौ अप्रत्ययान्ते तिरसस्तिर्यादेशः। तिर्यङ्, तिर्यञ्चौ, तिरश्चः तिर्यग्भ्याम् ॥ **नाञ्चेः पूजायाम् ६।४।३०।**

---

च। भस्येत्यधिकृतम्। तदाह—उच्छब्दादित्यादिना। उदीचः। 'उद् अन् च् अस्' इत्यत्र शस्येत्सञ्ज्ञायां लोपे च नकारस्य "अनिदिताम्" इति लोपे "अचः" इति अकारस्य लोपे "उद ईत्" इति अचोऽकारस्येत्वे संयोगे सस्य रुत्वे रेफस्य विसर्गत्वे च 'उदीचः' इति। एवमेव 'उदीचा' इत्यादिः। उदग्भ्याम्। 'उद् अन् च् भ्याम्' इत्यत्र 'अनिदिताम्" इति नलोपे कुत्वे जश्त्वे च रूपम्। समः समीति। समीत्यविभक्तिको निर्देशः। सम्यङ्। 'सम् अन् च् क्विन्' इत्यत्र "समः समि" इति समः स्थाने सम्यादेशे विहिते, "इको यणचि" इति यणि 'सम्यन् च् क्विन्' इति स्थिते क्विनः सर्वस्यापहारे "अनिदिताम्" इति नलोपे कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायाम् सावागते नुमि, हलङ्यादिना सुलोपे संयोगान्तलोपे कुत्वे च 'सम्यङ्' इति। सम्यञ्चौ। 'सम् अच् औ' इति स्थिते "समः समि" इति सम्यादेशे, यणि, नुमि, अनुस्वारे, परसवर्णे च रूपम्। एवं सम्यञ्चः। सम्यञ्चम्, सम्यञ्चौ। समीचः। 'सम् अन् च् शस्' इति दशायां शस्येत्सञ्ज्ञायां लोपे च "अनिदिताम्" इति नलोपे "समः समि" इति सम्यादेशे 'समि अच् अस्' इति जाते भसञ्ज्ञायाम् "अचः" इत्यकारलोपे "चौ" इति पूर्वस्याणो दीर्घे संयोगे च कृते, रुत्वविसर्गयोः 'समीचः' इति। सम्यग्भ्याम्। 'सम् अच् भ्याम्' इत्यत्र "समः समि" इति सम्यादेशे यणि कृते जश्त्वे च "सम्यग्भ्याम्' इति। एवं सम्यग्भिः। समीचा, समीचे। समीचे। समीचोः। समीचाम्। समीचि। सम्यक्षु। सहस्य सध्रिः। तथेति। सहस्य सध्रिः स्यादप्रत्ययान्ते अञ्चतौ परे इत्यर्थः। सध्र्यङ्। 'सह अन् च्' इत्यत्र "ऋत्विग्दधृक्" इति क्विनि "अनिदिताम्" इति नलोपे क्विनः सर्वस्यापहारे कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सावागते "सहस्य सध्रिः" इति सध्र्यादेशे यणि, "उगिदचाम्" इति नुमि, हलङ्यादिना सुलोपे चकारस्य संयोगान्तलोपे नकारस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन ङकारे 'सध्र्यङ्' इति। सध्र्यञ्चौ, सध्र्यञ्चः। सध्र्यञ्चम्, सध्र्यञ्चौ, सध्रीचः। सध्रीचा, सध्र्यग्भ्याम्, सध्र्यग्भिः। सध्रीचे। सध्रीचः। सध्रीचोः। सध्रीचाम्। सध्रीचि, सध्र्यक्षु। तिरसस्तिर्यलोप इति। अञ्चतावप्रत्यये इत्यनुवर्तते। न विद्यते 'अचः' इत्यल्लोपो यस्य सः, अलोपः, तस्मिन्निति विग्रहः। तदाह—अलुप्तेत्यादिना। तिर्यङ्। 'तिरस् अन् च्' इत्यत्र "ऋत्विग्दधृक्" इत्यादिना क्विनि तस्य सर्वस्यापहारे, "अनिदिताम्" इति नलोपे "तिरसस्तिर्यलोपे" इति तिरसस्तिर्यादेशे "इको यणचि" इति यणि कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सावागते नुमि, हलङ्यादिना सुलोपे 'सध्र्यन् च्' इति जाते चकारस्य संयोगान्तलोपे नकारस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन ङकारे 'तिर्यङ्' इति रूपम्। तिर्यञ्चौ। 'तिरस्+अच् औ' इति

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न ॥ प्राङ्, प्राञ्चौ । नलोपाभावादल्लोपो न । प्राञ्चः । प्राङ्भ्याम् । प्राङ्क्षु । एवं पूजार्थे प्रत्यङ्ङादयः । क्रुङ्, क्रुञ्चौ, क्रुङ्भ्याम् । पयोमुक्-पयोमुग्, पयोमुचौ, पयोमुग्भ्याम् । उगित्वान्नुम् ॥ सान्तमहतः संयो-

---

स्थिते "तिरसस्तिर्यलोपे" इति तिरसस्तिर्यादेशे यणि, नुमि, अनुस्वारे, परसवर्णे च रूपम् । तिरश्चः । 'तिरस् अच् शस्' इति दशायां शस्येत्सञ्ज्ञायां लोपे च भसञ्ज्ञायाम् "अचः" इत्यकारलोपे अल्लोपस्त्वात्तिर्यादेशाभावे "स्तोः श्चुना श्चुः" इति तिरसः सकारस्य शकारादेशे संयोगे रुत्वविसर्गयोः 'तिरश्चः' इति । तिर्यग्भ्यामिति । 'तिरस् अच् भ्याम्' अत्र "तिरसस्तिर्यलोपे" इति तिरि आदेशे यणि कुत्वे जश्त्वे च रूपम् । एवं तिर्यग्भिः । तिरश्चा, तिरश्चः, तिरश्चः, तिरश्चोः, तिरश्चाम्, तिरश्चि, तिर्यक्षु । नाञ्चेरिति । नुमैव सिद्धे प्राञ्चः प्राञ्चा इत्यादौ नुमोऽभावेऽपि नकारश्रवणार्थमारम्भः । प्राङ् । 'प्र अन् च्' इति स्थिते "ऋत्विग्दधृक्" इति क्विनि, क्विनः सर्वापहारिलोपे "अनिदिताम्" इति नलोपे प्राप्ते "नाञ्चेः पूजायाम्" इति निषिद्धे, कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सावागते तस्य हल्ङ्यादिना लोपे चकारस्य संयोगान्तलोपे "क्विन्प्रत्ययस्य कुः" इति नकारस्य ङकारे सवर्णदीर्घे 'प्राङ्' इति रूपम् । प्राञ्चा । अत्र "अनिदिताम्" इति नलोपो न । "नाञ्चेः पूजायाम्" इति निषेधात् । प्राञ्चः । 'प्र अन् च् शस्' इत्यत्र "अनिदिताम्" इति नलोपे प्राप्ते "नाञ्चेः पूजायाम्" इत्यनेन निषिद्धे नस्यानुस्वारे, तस्य परसवर्णे च कृते शसः शकारस्येत्सञ्ज्ञायां लोपे च 'प्र अञ्च् अस्' इति जाते तत्र सवर्णदीर्घे सस्य रुत्वे रेफस्य विसर्गत्वे च 'प्राञ्चः' इति रूपम् । प्राङ्भ्याम् । 'प्राञ्च् भ्याम्' इत्यत्र पदसञ्ज्ञायां "संयोगान्तस्य लोपः" इति च लोपे "क्विन्प्रत्ययस्य कुः" इति नस्य कुत्वेन ङकारे 'प्राङ्भ्याम्' इति रूपम् । प्राङ्क्षु । 'प्राङ्षु' इति पूर्ववत्प्रसाध्य "ङ्णोः कुक्टुक् शरि" इति वा कुकि "आद्यन्तौ टकितौ" इति कित्वादन्त्यावयवे जाते 'क् ष् संयोगेन क्षकारे "प्राङ्क्षु" इति । एवमिति । सुटि पूर्ववदेव रूपाणि । शसादावचि प्रत्यञ्चः, प्रत्यञ्चा इति । प्रत्यङ्भ्याम् । इति पूर्ववत् । क्रुङ् । 'क्रुञ्च–कौटिल्याल्पीभावयोः' अस्मात् धातोः "ऋत्विग्दधृक्" इत्यादिना क्विनि तस्य सर्वस्य लोपे "अनिदिताम्" इति नलोपे प्राप्ते "ऋत्विग्दधृक्" इत्यादिना निपातनान्नलोपाभावे कृते कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सौ प्रत्यये तस्य हल्ङ्यादिना लोपे चकारस्य सयोगान्तलोपे "क्विन्प्रत्ययस्य कुः" इति नकारस्य कुत्वेन ङकारे 'क्रुङ्' इति । क्रुञ्चौ । 'क्रुन् च् औ' इत्यत्र नस्य अनुस्वारे तस्य परसवर्णे च कृते रूपम् । क्रुङ्भ्याम् । 'क्रुन् च् भ्याम्' अत्र पदसञ्ज्ञायां चकारस्य संयोगान्तलोपे नकारस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन ङकारे "क्रुङ्भ्याम्" इति रूपम् । पयोमुक्, पयोमुग् । 'पयोमुच्+सु' इत्यत्र सोर्लोपे "चोः कुः" इति चस्य कत्वे "झलां जशोऽन्ते" इति कस्य गत्वे "वावसाने" इति गस्य कत्वे 'पयोमुक्। पक्षे—पयोमुग्' ।

गस्य ६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। महान्. महान्तौ, महान्तः। हे महन्। महद्भ्याम्॥ अत्वसन्तस्य चाधातोः ६।४।१४। अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे। धीमान्, धीमन्तौ, धीमन्तः। हे धीमन्। शसादौ महद्वत्। आतेडवतुः। ईरवसामर्थ्यादभस्यापि टेर्लोपः। भवान्, भवन्तौ। शत्रन्तस्य तु भवन्॥ इत्थं अयस्तम्

---

पयोमुग्भ्याम्। 'पयोमुच् भ्याम्' इत्यत्र "चोः कुः" इति चस्य कत्वे "झलां जशोऽन्ते" इति कस्य गत्वे 'पयोमुग्भ्याम्' इति रूपम्। सान्तमहत इति। अत्र "नोपधायाः" "सर्वनामस्थाने चासम्बुद्धौ" इत्यनुवर्तते। सान्तेति लुप्तषष्ठीकं संयोगान्तस्येत्यनेन समानाधिकरणमिति व्याचष्टे—सान्तसंयोगस्येत्यादिना। महान्। 'महत् सु' इत्यत्र सकारोत्तरवर्त्युकारस्येत्सञ्ज्ञायां लोपे च "हल्ङ्याब्भ्यो" इति सस्य लोपे "उगिदचाम्" इति नुमि उमो लोपे मित्वात् "मिदचोऽन्त्यात्परः" इत्यन्त्यादचः परे जाते 'महन् त्' इति स्थिते "सान्तमहतः संयोगस्य" इत्युपधाया दीर्घत्वे "संयोगान्तस्य लोपः" इति तलोपे 'महान्' इति। महान्तौ। 'महत् औ' इत्यत्र नुमि, दीर्घे, अनुस्वारे, परसवर्णे च रूपम्। एवं 'महान्तः' इति। हे महन्। 'महत्+सु' इत्यत्र "उगिदचाम्" इति नुमि, सोर्लोपे "सान्तमहतः संयोगस्य" इत्यत्र 'असम्बुद्धौ' इत्यनुवृत्तेर्न दीर्घे संयोगान्तलोपे च कृते रूपम्। महद्भ्याम्। 'महत्+भ्याम्' इत्यत्र "स्वादिष्वसर्वनामस्थाने" इति पदसञ्ज्ञायां "झलां जशोऽन्ते" इति तस्य दत्वे च 'महद्भ्याम्' इति। अत्वसन्तस्येति। 'ढ्रलोप' सूत्राद्दीर्घस्य "नोपधायाः" इति उपधाग्रहणस्य चानुवर्तनादाह—उपधाया दीर्घ इति। धीमान्। 'धीमत्+सु' अत्र "सुडनपुंसकस्य" इति सर्वनामस्थानसञ्ज्ञायाम् "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमि उमि गते मित्वादन्त्यादचः परे "अत्वसन्तस्य चाधातोः" इत्युपधायाः दीर्घत्वे हल्ङ्यादिना सोर्लोपे तकारस्य संयोगान्तलोपे 'धीमान्' इति। धीमन्तौ। 'धीमत् औ' इत्यत्र "उगिदचाम्" इति नुमि, उमि गते मित्वादन्त्यादचः परे अनुस्वारे तस्य परसवर्णे च रूपम्। हे धीमन्। असम्बुद्धौ इत्युक्तेर्न दीर्घः, शेषं पूर्ववत्। शसादौ महद्वदिति। धीमतः, धीमता, धीमद्भ्याम्, इत्यादि। भवान्। 'भवत्+सु' अत्र हल्ङ्यादिना सुलोपे तस्य स्थानिवद्भावेन सर्वनामस्थानपरत्वात् "उगिदचाम्०" इति नुमि, उमि गते मित्वादन्त्यादचः परे "अत्वसन्तस्य चाधातोः" इति उपधायाः दीर्घत्वे तकारस्य संयोगान्तलोपे कृते 'भवान्' इति। शत्रन्तस्य तु भवनिति। भूधातोः "वर्तमाने लट्" इति लटि, तस्य स्थाने "लटः शतृशानचौ" इति शत्रादेशे अनुबन्धलोपे 'भू+अत्' इति जाते "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि शकारपकारयोरित्संज्ञायां लोपेच 'भू अ अत्' इति स्थिते तत्र 'भू' इत्यस्य "सार्वधातुकार्धधातुकयोः" इति ओकाररूपे गुणे कृते "एचोऽयवायावः" इति अवादेशे

६।१।५। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः॥ **नाभ्यस्ताच्छतुः ७।१।७८।** अभ्यस्तात्परस्य शतुर्नुम्न। ददत्—ददद्, ददतौ, ददतः॥ **जक्षित्यादयः षट् ६।१।६।** षट् धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। जक्षत्, जक्षद्, जक्षतौ, जक्षतः। एवं जाग्रत् दरिद्रत् शासत् चकासत्। गुप्—गुब्, गुपौ, गुपः। गुब्भ्याम्॥ **त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६०।** त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेः कञ् स्यात्। चात्क्विन्॥ **आ सर्वनाम्नः ६।३।९१।** सर्वनाम्न आकारादन्तादेशः स्याद्दृग्दृशवतुषु। तादृक्—तादृग्। तादृशौ, तादृशः।

---

'भव् अ अत्' इति भूते "अतो गुणे" इति अकारद्वयस्य स्थाने पररूपे संयोगे च कृते 'भवत्' इति निष्पन्नम्। तस्य कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सावागते तस्य हल्ङ्यादिना लोपे "उगिदचाम्" इति नुमि, उमि गते मित्वादन्त्यादचः परे अत्वन्तत्वाभावात् दीर्घाभावे तकारस्य संयोगान्तलोपे 'भवन्' इति। शेषं 'भवन्तौ' इत्यादि तु पूर्ववत्। उभेऽभ्यस्तमिति। "एकाचो द्वे प्रथमस्य" इत्यतो द्वे इत्यनुवर्तते। तेनैव सिद्धे उभे ग्रहणम्—'समुदायप्रतिपत्त्यर्थम्'। 'द्वे' इत्यनेन च षष्ठाध्यायविहितमेव द्वित्वं विवक्षितम्, तदाह—षाष्ठद्वित्वेत्यादिना। नाभ्यस्तादिति। "इदितो नुम् धातोः" इत्यतो नुमित्यनुवर्तते। तदाह—अभ्यस्तादित्यादिना। ददत्—ददद्। 'ददत्+सु' इत्यत्र "उभे अभ्यस्तम्" इति अभ्यस्तसंज्ञायाम् "उगिदचाम्" इति नुमि प्राप्ते "नाभ्यस्ताच्छतुः" इति नुमो निषेधे हल्ङ्यादिना सुलोपे "सुप्तिङन्तं पदम्" इति पदसंज्ञायां "झलां जशोऽन्ते" इति तकारस्य दकारे "वावसाने" इति दकारस्य तकारे 'ददत्' इति। चर्त्वाभावपक्षे—'ददद्' इति रूपम्। जक्षित्यादय इति। जक्षिति पृथक् पदम्। इति शब्देन जक्षिरेव परामृश्यते। तत्र जक्षितिः आदिर्येषामिति तद्गुणसंविज्ञानबहुव्रीहिस्तदेतदाह—षट् धातवोऽन्ये इति। जक्षत्—जक्षद्। 'जक्षत्+सु' अत्र "उगिदचाम्" इति नुमागमे प्राप्ते "जक्षित्यादयः षट्" इति अभ्यस्तसञ्ज्ञायाम् "नाभ्यस्ताच्छतुः" इति नुमो निषेधे हल्ङ्यादिना सुलोपे पदसंज्ञायाम् "झलां जशोऽन्ते" इति जश्त्वेन तकारस्य दकारे तस्य "वावसाने" इति चर्त्वं 'जक्षत्' इति। पक्षे—'जक्षद्' इति। एवमिति। जाग्रत्, दरिद्रत्, शासत्, चकासत्, दीध्यत्, वेव्यत्, शब्दानां "जक्षित्यादयः षट्" इत्यभ्यस्तसञ्ज्ञायां जातायां "नाभ्यस्ताच्छतुः" इति नुमोऽभावे ददद्वद् रूपाणि ज्ञेयानि। गुप्—गुब्। 'गुप्+सु' इत्यत्र सोर्लोपे "झलां जशोऽन्ते" इति पस्य बत्वे "वावसाने" इति चर्त्वेन बस्य पत्वे 'गुप्' इति। पक्षे—'गुब्' इति। गुब्भ्याम्। 'गुप्+भ्याम्' इत्यत्र पदसंज्ञायां "झलां जशोऽन्ते" इति पस्य बत्वे 'गुब्भ्याम्' इति। त्यदादिष्विति। चकारात् "स्पृशोऽनुदके क्विन्" इत्यतः क्विन् अनुकृष्यते। आ सर्वनाम्न इति। आ इत्यविभक्तिकनिर्देशः। "दृग्दृशवतुषु" इति सूत्रमनुवर्तते। तदाह—सर्वनाम्न इत्यादिना। तादृक्—तादृग्। 'तद् दृ-

तादृग्भ्याम् । व्रश्चेति षः । जश्त्वचर्त्वे । विट्-विड्, विशौ, विशः । विड्भ्याम् ॥ **नशेर्वा ८।२।६३।** नशेः कवर्गोऽन्तादेशो वा पदान्ते । नक्-नग्, नट्-नड्, नशौ, नशः । नग्भ्याम्, नड्भ्याम् ॥ **स्पृशोऽनुदके क्विन् ३।२।५८।** अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक्-घृतस्पृग्, घृतस्पृशौ, घृतस्पृशः । दधृक्-दधृग्,

---

श्' इति स्थिते "त्यदादिषु दृशोऽनालोचने कञ्च" इति क्विन् तस्य सर्वस्य लोपे कृते "आ सर्वनाम्नः" इति तद्शब्दस्याकारान्तादेशे सवर्णदीर्घे च 'तादृश्' इति रूपम्, तस्य "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसंज्ञायां सावागते तस्य हल्ङ्यादिना लोपे "क्विन्प्रत्ययस्य कुः" इत्यस्यासिद्धत्वात् "व्रश्चभ्रस्जसृजमृज०" इत्यादिना षत्वे तस्य "झलां जशोऽन्ते" इति डत्वे, "क्विन्प्रत्ययस्य कुः" इति कुत्वेन गकारे "वावसाने" इति चर्त्वेन पक्षे ककारे 'तादृक्' इति । तदभावे 'तादृग्' इति । तादृग्भ्याम् । 'तादृश्+भ्याम्' अत्र "व्रश्चभ्रस्ज" इत्यादिना षत्वे जश्त्वेन डत्वे "क्विन्प्रत्ययस्य कुः" इति इति गत्वे तादृग्भ्याम्' इति रूपम् । विट्-विड् । 'विश्—प्रवेशने' धातोः क्विपि, कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सौ हल्ङ्यादिना लोपे "व्रश्चभ्रस्ज" इत्यादिना षत्वे 'झलां जशोऽन्ते' इति जश्त्वेन डत्वे "वावसाने" इति चर्त्वेन पक्षे टत्वे 'विट्' इति, चर्त्वाभावे—'विड्' इति । विड्भ्याम् । 'विश् भ्याम्' अत्र पदसंज्ञायाम् "व्रश्च" इति षत्वे तस्य जश्त्वेन डत्वे सति रूपम् । नशेर्वेति । "क्विन्प्रत्ययस्य कुः" इत्यतः कुरित्यनुवर्तते, "स्कोः संयोगाद्योरन्ते च" इत्यत अन्ते इति च । "पदस्य" इत्यधिकृतम् । तदाह—नशेः कवर्गोऽन्तादेश इत्यादिना । नक्-नग्, नट्-नड् । 'ण-श्—अदर्शने' क्विप् । नश् इति रूपम् । ततः सौ, हल्ङ्यादिना सोर्लोपे "व्रश्च" इति षत्वे "झलां जशोऽन्ते" इति डत्वे । तस्य "नशेर्वा" इति कुत्वेन गत्वे "वावसाने" इति चर्त्वेन कत्वे 'नक्' इति । पक्षे 'नग्' इति । कुत्वाभावपक्षे - 'नट्—नड्' इति । नग्भ्याम्—नड्भ्याम । 'नश्+भ्याम्' अत्र "व्रश्च" इति षत्वे जश्त्वेन डत्वे "नशेर्वा" इति कुत्वेन गत्वे 'नग्भ्याम्' इति । कुत्वाभावपक्षे—'नड्भ्याम्' इति । स्पृशोऽनुदके । अनुदके सुपीति । उदकशब्दभिन्ने सुबन्ते इत्यर्थः । "सुपि स्थः" इत्यतः सुपीत्यनुवर्तते इति भावः । घृतस्पृक्—घृतस्पृग् । घृतं स्पृशतीति विग्रहे "स्पृशोऽनुदके क्विन्" इति क्विनि, तस्य सर्वस्य लोपे "उपपदमतिङ्" इति उपपदसमासे सुब्लु-कि समासत्वात्प्रातिपदिकसञ्ज्ञायां सौ कृते 'घृतस्पृश्+सु' इति स्थिते सोर्ह-ल्ङ्यादिना लोपे "क्विन्प्रत्ययस्य कुः" इति कुत्वस्यासिद्धत्वात् पूर्वं "व्रश्च०" इति षः । तस्य जश्त्वेन डः । तस्य "क्विन्प्रत्ययस्य कुः" इति गत्वे "वावसाने" इति चर्त्वेन कत्वे 'घृतस्पृक्' इति । पक्षे 'घृतस्पृग्' इति । दधृक्—दधृग् । "ऋत्विग्दधृक्" इति क्विनि, तस्य सर्वस्य लोपे निपातनाद्द्वित्वे अभ्यासकार्ये निष्पन्नकृदन्तदधृष्श-ब्दात् सावागते, तस्य हल्ङ्यादिना लोपे जश्त्वं प्रति कुत्वस्यासिद्धत्वात्प्रथमं "झलां

दधृषौ, दधृग्भ्याम् । रत्नमुट्-रत्नमुड् । रत्नमुषौ । रत्नमुड्भ्याम् । षट्-षड् । षड्भिः । षड्भ्यः । षण्णाम् । षट्त्सु-षट्सु । रुत्वं प्रति षत्वस्यासिद्धत्वात्, "ससजुषो रुः" इति रुत्वम् ॥ वोरुपधाया दीर्घ इकः ८।२।७६। रेफवान्तयोरुपधाया इको दीर्घः स्यात् पदान्ते । पिपठीः, पिपठिषौ । पिपठीर्भ्याम् ॥ नुम्विसर्जनीयशर्व्यवायेऽपि ८।३।५८। एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्या-

---

जशोऽन्ते" इति जश्त्वेन डकारे तस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन गकारे "वावसाने" इति वा चर्त्वेन ककारे 'दधृक्' इति । चर्त्वाभावपक्षे 'दधृग्' इति । दधृग्भ्याम् । 'दधृष्+भ्याम्' अत्र पदसञ्ज्ञायां जश्त्वेन डः, तस्य कुत्वेन गः, 'दधृग्भ्याम्' इति रूपम् । रत्नमुट्—रत्नमुड् । 'रत्नमुष्+सु अत्र सोर्लोपे "झलां जशोऽन्ते इति" डत्वे "वावसाने" इति टकारे 'रत्नमुट्' इति । पक्षे-'रत्नमुड्' इति । अत्र क्विन्प्रत्ययाभावान्न कुत्वम् । रत्नमुड्भ्याम् । 'रत्नमुष्+भ्याम्' इत्यत्र "स्वादिष्वसर्वनामस्थाने" इति पदसञ्ज्ञायां "झलां जशोऽन्ते" इति जश्त्वेन डकारे कृते रूपम् । षट्—षड् । षष्शब्दो नित्यं बहुवचनान्तः । तेन षष्शब्दाज्जसि, 'षष्+जस्' इति स्थिते "ष्णान्ताः षट्" इति षट्सञ्ज्ञायां "षड्भ्यो लुक्" इति जसो लुकि, "झलां जशोऽन्ते" इति षकारस्य डकारे तस्य चर्त्वे च 'षट्' इति, पक्षे-'षड्' इति । एवं शसि परेऽपि बोध्यम् । षण्णाम् । 'षष्+आम्' अत्र "ष्णान्ता षट्" इति षट्संज्ञायां "षट्चतुर्भ्यश्च" इति नुटि टित्वाद् आम आद्यावयवे जाते उटो लोपे पदसञ्ज्ञायां "झलां जशोऽन्ते" इति षकारस्य डकारे "प्रत्यये भाषायां नित्यम्" इति डकारस्यानुनासिके णकारे "ष्टुना ष्टुः" इति नामो नकारस्य ष्टुत्वे 'षण्णाम्' इति । न च "नपदान्ताट्टोः" इति ष्टुत्वनिषेध इति वाच्यम् । "अनाम्नवतिनगरीणामिति वाच्यम्" इति तत्र पर्युदासात् । षट्त्सु—षट्सु । 'षष् सुप्' अत्र पकारस्येत्सञ्ज्ञायां लोपे च "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "झलां जशोऽन्ते" इति जश्त्वेन षकारस्य डकारे 'षड्+सु' इति जाते "डः सि धुट्" इति सकारस्य धुडागमे टित्वात् 'आद्यन्तौ टकितौ" इति आद्यावयवे जाते उटो लोपे "खरि च" इति धकारस्य तकारे पुनश्च "खरि च" इति डकारस्य टकारे 'षट्त्सु' इति । धुटोऽभावे 'षट्सु' इति । वोरुपधाया इति । "सिपि धातो रुर्वा" इत्यतो धातोरित्यनुवर्तते । 'र्वोः' इति तद्विशेषणम् । तदन्तविधिः । "पदस्य" इत्यधिकृतम् । "स्कोः संयोगाद्योः" इत्यतो अन्ते इत्यनुवर्तते तदाह रेफवान्तयोरित्यादिना । पिपठीः । 'पिपठिष्+सु' इत्यत्र सोर्लोपे; रुत्वे कर्तव्ये "पूर्वत्रासिद्धम्" इति षत्वस्यासिद्धत्वाद् "ससजुषोरुः" इति रुत्वे उकारस्येत्संज्ञायां लोपे च 'पिपठिर्' इति जाते "र्वोरुपधाया दीर्घ इकः" इति उपधाया इकारस्य दीर्घे "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गत्वे 'पिपठीः' इति रूपम् । पिपठिषौ । 'पिपठिस्+औ' अत्र "आदेशप्रत्यययोः" इति षत्वे संयोगे च कृते 'पिपठिषौ' इति । पिपठीर्भ्याम् । 'पिपठिष्+भ्याम्' अत्र "स्वादिष्वसर्व-

देशः स्यात्। ष्टुत्वेन पूर्वस्य षः। पिपठीष्षु-पिपठीःषु। चिकीः। चिकीर्षौ। चिकीर्भ्याम्। चिकीर्षु। विद्वान्, विद्वांसौ। हे विद्वन्॥ **वसोः सम्प्रसारणम् ६।४।१३१।** वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। विदुषः। "वसुस्रंसु" इति दः।

---

नामस्थाने" इति पदसंज्ञायां षत्वस्यासिद्धत्वात् "ससजुषो रुः" इति रुत्वे उकारस्येत्संज्ञायां लोपे च "र्वोरुपधाया दीर्घ इकः" इति ठकारोत्तरवर्तिन इकारस्य दीर्घे 'पिपठीर्भ्याम्' इति रूपम्। नुम्विसर्जनीयेति। "इण्कोः" इति, "मूर्धन्यः" इति चानुवर्तते। तदाह—एतैः प्रत्येकमित्यादिना। पिपठीष्षु, पिपठीःषु। 'पिपठिस्+सुप्' अत्र "हलन्त्यम्" इति पकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "ससजुषो रुः" इति सस्य रुत्वे उकारलोपे "र्वोरुपधाया दीर्घ इकः" इत्युपधाया दीर्घत्वे "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गत्वे 'पिपठीः सु' इति जाते "विसर्जनीयस्य सः" इति विसर्गस्य सत्वे "नुम्विसर्जनीयशर्व्यवायेऽपि" इति शर्व्यवायेऽपि सुप्प्रत्ययस्य षत्वे "ष्टुना ष्टुः" इति पूर्वस्य सकारस्य षत्वे 'पिपठीष्षु' इति। पक्षे—"वा शरि" इति विसर्गस्य विसर्गे "नुम्विसर्जनीय" इति विसर्गव्यवधानेऽपि षत्वे 'पिपठीःषु' इति। चिकीः। 'चिकीर्ष्+सु' अत्र सोर्लोपे षकारस्य असिद्धत्वात्सकारबुद्ध्या "रात्सस्य" इति सलोपे रेफस्य विसर्गत्वे च रूपम्। चिकीर्भ्याम्। 'चिकीर्ष्+भ्याम्' अत्र पदसंज्ञायां षत्वस्यासिद्धत्वात् "रात्सस्य" इति सलोपे 'चिकीर्भ्याम्' इति। चिकीर्षु। 'चिकीर्ष्+सुप्' अत्र पकारस्येत्संज्ञायां लोपे च पदसंज्ञायां 'रात्सस्य' इति सलोपे 'रोऽसुपि' इति नियमात् विसर्गाभावे "आदेशप्रत्यययोः" इति सुपः सकारस्य मूर्धन्यादेशे 'चिकीर्षु' इति। विद्वान्। 'विद्वस्+सु' अत्र सोर्लोपे "प्रत्ययलोपे प्रत्ययलक्षणम्" इति प्रत्ययलक्षणे "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमि उमो लोपे मित्त्वादन्त्यावयवे "सान्तमहतः संयोगस्य" इति उपधाया दीर्घत्वे "संयोगान्तस्य लोपः" इति सलोपे 'विद्वान्' इति रूपम्। विद्वांसौ। 'विद्वस्+औ' अत्र "उगिदचाम्" इति नुमि उमि गते मित्त्वादन्त्यादचः परे "सान्तमहतः संयोगस्य" इत्युपधाया दीर्घत्वे "नश्चापदान्तस्य झलि" इति अनुस्वारे संयोगे च कृते 'विद्वांसौ' इति। हे विद्वन्। 'विद्वस्+सु' अत्र "एकवचनं सम्बुद्धिः" इति सम्बुद्धिसंज्ञायाम् "उगिदचाम्" इति नुमि उमि गते मित्त्वादन्त्यादचः परे जाते हल्ङ्यादिना सोर्लोपे "सान्तमहतः संयोगस्य" इत्यत्र 'असम्बुद्धौ' इत्युक्तत्वात् दीर्घाभावे संयोगान्तलोपे 'हे विद्वन्' इति। वसोः सम्प्रसारणमिति। प्रत्ययग्रहणपरिभाषया वसोरिति तदन्तग्रहणम्। "भस्य" इत्यधिकृतम्। तदाह—वस्वन्तस्येत्यादिना। विदुषः। 'विद्वस्+शस्' अत्र "लशक्वतद्धिते" इति शकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे "यचि भम्" इति भसंज्ञायाम् "वसोः सम्प्रसारणम्" इति वस्य स्थाने उकाररूपे सम्प्रसारणे कृते 'विद् उ अस् अस्' इति जाते "सम्प्रसारणाच्च" इति पूर्व-

विद्वद्भ्याम् ॥ पुंसोऽसुङ् ७।१।८९। सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । पुमान् । हे पुमन् । पुमांसौ । पुंसः । पुम्भ्याम् । पुंसु । "ऋदुशन" इत्यनङ् । उशना । उशनसौ । ( अस्य सम्बुद्धौ वानङ् नलोपश्च वा वाच्यः ) हे उशन, हे उशनन्–हे उशनः, हे उशनसौ । उशनोभ्याम् । उशनस्सु । अनेहाः, अनेहसौ ।

---

रूपैकादेशे 'विदुस्+अस्' इति जाते "आदेशप्रत्यययोः" इति प्रत्ययावयवत्वात् सस्य षत्वे संयोगे च कृते विदुषस्' इति भूते अन्त्यसकारस्य "ससजुषो रुः" इति रुत्वे उकारस्येत्संज्ञायां लोपे च "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गत्वे 'विदुषः' इति रूपम् । विद्वद्भ्याम् । 'विद्वस्+भ्याम्' अत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "वसुस्रंसुध्वंस्वनडुहां दः" इति सस्य दत्वे 'विद्वद्भ्याम्' इति । 'विद्वस्+सुप्' इत्यत्र पकारस्येत्संज्ञायां लोपे च पदसंज्ञायां "वसुस्रंसुध्वंस्वनडुहां दः" इति सस्य दत्वे तस्य "खरि च" इत्यनेन चर्त्वे 'विद्वत्सु' इति । पुंसोऽसुङ् । अत्र "इतोऽत्सर्वनामस्थाने" इत्यतः 'सर्वनामस्थाने' इत्यनुवर्तते । पुमान् । 'पंस्+सु' इत्यत्र "पुंसोऽसुङ्" इत्यसुङि विहिते "ङिच्च" इति अन्तिमसकारस्य स्थाने जाते 'पुमसुङ्+सु' इति भूते "हलन्त्यम्" इति ङकारस्य "उपदेशेऽजनुनासिक इत्" इति उकारस्य चेत्संज्ञायां "तस्य लोपः" इति उभयोर्ङ्कारोकारयोर्लोपे 'पुमस्+सु' इति स्थिते सोर्हल्ङ्यादिना लोपे प्रत्ययलक्षणे "उगिदचाम्" इति नुमि उमि गते मित्वादन्त्यादचः परे "सान्तमहतः संयोगस्य" इति उपधायाः दीर्घत्वे "संयोगान्तस्य लोपः" इति सलोपे च 'पुमान्' इति । हे पुमन् । 'पुंस्+सु' अत्र "पुंसोऽसुङ्" इत्यसुङि ङित्वादन्त्यावयवे जाते अनुबन्धलोपे सोर्लोपे च जाते नुमि, "सान्तमहतः संयोगस्य" इत्यत्र 'असम्बुद्धौ' इत्युक्तत्वात् दीर्घाभावे संयोगान्तलोपे च रूपम् । पुमांसौ । 'पुंस्+औ' अत्र "पुंसोऽसुङ्" इत्यसुङि "ङिच्च" इत्यन्तावयवे जाते उङो लोपे "उगिदचाम्" इति नुमि मित्वादन्त्यादचः परे उमि गते 'पुमन् स् औ' इति जाते "सुडनपुंसकस्य" इति सर्वनामस्थानसंज्ञायां "सान्तमहतः संयोगस्य" इति सान्तसंयोगस्योपधायाः दीर्घे "नश्चापदान्तस्य झलि" इति अनुस्वारे 'पुमांसौ' इति रूपम् । पुंसः । 'पुंस्+शस्' अत्र शकारस्येत्संज्ञायां लोपे च कृते, कृते च संयोगे अन्तिमसकारस्य रुत्वे, तस्य विसर्गे च रूपम् । पुम्भ्याम् । 'पुंस्+भ्याम्' अत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "संयोगान्तस्य लोपः" इति सलोपे 'पुम्भ्याम्' इति । पुंसु । अत्र पदसञ्ज्ञायां सस्य संयोगान्तलोपः । उशना । 'उशनस्+सु' अत्र "ऋदुशनस्पुरुदंसोऽनेहसाञ्च" इति अनङि "ङिच्च" इत्यन्तस्य सः स्थाने कृते ङकारस्येत्सञ्ज्ञायां लोपे च अकारस्योच्चारणार्थत्वात्तस्मिन् गते 'उशनन् सु' इति स्थिते "सुडनपुंसकस्य" इति सर्वनामस्थानसञ्ज्ञायां "सर्वनामस्थानेचाऽसम्बुद्धौ" इति नान्तोपधायाः दीर्घत्वे "हल्ङ्याब्भ्यो दीर्घात्" इति सोर्लोपे "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'उशना'

हे अनेहः । वेधाः, वेधसौ । हे वेधः । वेधोभ्याम् ॥ **अदस औ सुलोपश्च ७।२।१०७।** अदस औस्यात्सौ परे सुलोपश्च । "तदोः" इति सः । असौ । त्यदाद्यत्वं पररूपत्वम् । वृद्धिः ॥ **अदसोऽसेर्दादु दो मः ८।२।८०।** अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । आन्तरतम्याद्ध्रस्वस्य उः दीर्घस्य ऊः । अमू । जसः शी । गुणः ॥ **एत ईद्बहुवचने ८।२।८१।** अदसो दात्परस्यैत ईदस्य च मो बहु-

---

इति रूपम् । हे उशन-हे उशनन्-हे उशनः । हे उशनस्+सु' अत्र सोर्लोपे "अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः" इति वार्तिकेन अनङि कृते नलोपे च कृते 'हे उशन' इति । वाग्रहणान्नलोपाऽभावे 'हे उशनन्' इति । अनङादेशाभावे सस्य रुत्वे रेफस्य विसर्गत्वे च कृते 'हे उशनः' इति । उशनोभ्याम् । 'उशनस्+भ्याम्' अत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "ससजुषो रुः" इति सकारस्य रुत्वे "हशि च" इत्युत्वे "आद्गुणः" इति गुणे च कृते 'उशनोभ्याम्' इति रूपम् । उशनस्सु । 'उशनस्+सु' अत्र पदसंज्ञायां "ससजुषो रुः" इति रुत्वे उकारस्येत्संज्ञायां लोपे च "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गत्वे "वा शरि" इति विसर्गस्य स्थाने विसर्गे विहिते 'उशनःसु' इति । पक्षे "विसर्जनीयस्य सः" इति विसर्गस्य सत्वे 'उशनस्सु' इति । अनेहा । 'अनेहस्+सु' अत्र "ऋदुशनस्पुरुदंसोऽनेहसाञ्च" इत्यनङि ङित्वादन्त्यस्य स्थाने कृते अनुबन्धलोपे हल्ङ्यादिना सोर्लोपे "सर्वनामस्थाने चासम्बुद्धौ" इत्युपधाया दीर्घत्वे "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'अनेहा' इति रूपम् । हे अनहः । 'हे अनेहस्+सु' अत्र सोर्लोपे सस्य रुत्वे कृते रेफस्य विसर्गः । वेधाः । 'वेधस्+सु' अत्र "अत्वसन्तस्य चाधातोः" इत्यसन्तत्वाद्दीर्घे सोर्लोपे च कृते रुत्वविसर्गौ 'वेधाः' । हे वेधः । अत्र 'असम्बुद्धौ' इत्युक्तेर्न दीर्घः । वेधोभ्याम् । 'वेधस्+भ्याम्' अत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "ससजुषो रुः" इति सकारस्य रुत्वे "हशि च" इति रोरुत्वे "आद्गुणः" इति गुणे 'वेधोभ्याम्' इति । अदस औ सुलोपश्चेति । अदसः इति षष्ठी । "तदोः सः सौ" इत्यतः सावित्यनुवर्तते, तदाह— अदसः औस्यात्सौ परे इति । असौ । 'अदस्+सु' इत्यत्र "अदस औ सुलोपश्च" इति सस्य स्थाने औत्वे सलोपे च विहिते, अद औ इति जाते "तदोः सः सावनन्त्ययोः" इति दस्य सत्वे "वृद्धिरेचि" इति वृद्धौ च कृतायाम् 'असौ' इति सिद्ध्यति । अदसोऽसेरिति । अदस इत्यवयवषष्ठ्यन्तम् । असेरिति तद्विशेषणम् । इकार उच्चारणार्थः । दादिति दिग्योगे पञ्चमी । परस्येत्यध्याहार्यम् । तदाह—अदसोऽसान्तस्येति । अमू । 'अदस्+औ' अत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इतिपररूपे 'अद+औ' इति जाते "वृद्धिरेचि" इति वृद्धौ कृते 'अदौ' इति भूते "अदसोऽसेर्दादु दो मः" इति औकारस्य ऊकारे दस्य मत्वे च 'अमू' इति रूपं सिद्ध्यति । एत ईद्बहुवचन इति । "अदसोऽसेर्दादु दो मः" इत्यस्मात् 'अदसो दादिति, दो मः' इति चानुवर्तते । तदाह—

र्थोक्तौ । अमी । "पूर्वत्रासिद्धम्" इति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे । अमुम् , अमू , अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ॥ न मु ने ८।२।३। ना भावे कर्तव्ये कृते च मुभावो नासिद्धः स्यात् । अमुना, अमूभ्या, अमीभिः । अमुष्मै, अमीभ्यः ।

---

अदसो दात्परस्येत्यादिना । अमी । 'अदस्+जस्' अत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपे "अद+जस्" इति स्थिते "जसः शी" इति जसः स्थाने स्यादेशे शकारस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे 'अदे' इति जाते "एत ईद् बहुवचने" इति एकारस्य ईकारे दस्य च मत्वे 'अमी' इति रूपम् । विभक्तिकार्यमिति । त्यदाद्यत्वादिकमित्यर्थः । अमुम् । 'अदस्+अम्' इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपत्वे च कृते "अमि पूर्वः" इति पूर्वरूपकादेशे 'अदम्' इति जाते "अदसोऽसेर्दादु दो मः" इति दात्परस्य अस्य उत्वे दस्य मत्वे च 'अमुम्' इति रूपम् । अमू । 'अदस्+औ' इति स्थिते "त्यदादीनामः" इति अकारान्तादेशे "अतो गुणे" इति पररूपत्वे च कृते "वृद्धिरेचि" इति वृद्धौ सत्याम् 'अदौ' इति जाते "अदसोऽसेर्दादु दो मः" इति औकारस्य ऊत्वे दस्य मत्वे च 'अमू' इति रूपम् । अमून् । 'अदस्+शस्' इति स्थिते त्यदाद्यत्वे, पररूपत्वे च कृते शकारस्येत्संज्ञायां लोपे च "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे "तस्माच्छसो नः पुंसि" इति सस्य नत्वे 'अदान्' इति भूते "अदसोऽसेर्दादु दो मः" इति आकारस्य ऊत्वे दस्य च मत्वे 'अमून्' इति रूपम् । न मु ने । ने इति विषयसप्तमीत्याह—नाभावे कर्तव्य इति । अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे "सुपि च" इति दीर्घः स्यात्, दीर्घं प्रति मुत्वस्यासिद्धत्वादत आह—कृते चेति । एतच्च ने इत्यस्यावृत्त्या लभ्यते । अमुना । 'अदस्+टा' अत्र त्यदाद्यत्वे पररूपत्वे च "अदसोऽसेर्दादु दो मः" इति अकारस्य उत्वे दस्य च मत्वे 'अमु+टा' इति जाते नाभावे कर्तव्ये "न मु ने" इत्यनेन मुत्वस्यासिद्धत्वाभावबोधनात् "शेषो घ्यसखि" इति घिसंज्ञायाम् "आङो नाऽस्त्रियाम्" इति टाइत्यस्य नादेशे 'अमुना' इति रूपं सिद्धम् । न च मुत्वस्यासिद्धत्वात् "सुपि च" इति दीर्घः स्यादिति वाच्यम् । "न मु ने" इत्यनेन कृते च नाभावे नासिद्धत्वमित्यस्यापि बोधनात् । अमूभ्याम् । 'अदस्+भ्याम्' इत्यत्र त्यदाद्यत्वे पररूपत्वे च कृते "सुपि च" इति दीर्घे 'अदाभ्याम्' इति जाते "अदसोऽसेर्दादु दो मः" इति ऊत्वे मत्वे च रूपम् । अमीभिः । 'अद्+भिस्' इत्यत्र त्यदाद्यत्वे पररूपत्वे च कृते 'अद+भिस्' इति जाते "अतो भिस ऐस्" इति भिसः स्थाने ऐसादेशप्राप्ते "नेदमदसोरकोः" इत्यनेन निषिद्धे "बहुवचने झल्येत्" इत्येत्वे 'अदे+भिस्' इति निष्पन्ने "एत ईद्बहुवचने" इति एकारस्य ईत्वे दस्य च मत्वे कृते सस्य रुत्वे रेफस्य विसर्गत्वे च 'अमीभिः' इति रूपम् । अमुष्मै । अदस्शब्दाच्चतुर्थ्येकवचनविवक्षायां ङेविभक्तौ समागतायां त्यदाद्यत्वे पररूपत्वे च कृते "सर्वनाम्नः स्मै" इति ङेः

अमुष्मात् । अमुष्य, अमुयोः । अमीषाम् । अमुष्मिन्, अमीषु ।

इति हलन्ताः पुंलिङ्गाः ॥

## ॥ अथ हलन्तस्त्रीलिङ्गप्रकरणम् ॥

**नहो धः ८।२।३४।** नहो हस्य धः स्याज्झलि पदान्ते च ॥ **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६।३।११६।** क्विबन्तेषु पूर्वपदस्य दीर्घः स्यात् । उपानत्-उपानद् । उपानहौ । उपानत्सु । क्विन्नन्तत्वात्कुत्वेन घः । उष्णिक्-उष्णिग् ।

---

स्थाने 'स्मै' आदेशे 'अदस्मै' इति जाते "अदसोऽसेर्दादु दो मः" इति अकारस्योत्वे दस्य मत्वे "आदेशप्रत्यययोः" इति षत्वे 'अमुष्मै' इति सिद्धम् । अमीभ्यः । 'अदस्+भ्यस्' इत्यत्र त्यदाद्यत्वे, पररूपत्वे च कृते "बहुवचने झल्येत्" इत्येत्वे कृते 'अदे+भ्यस्' इति जाते "एत ईद्बहुवचने" इति एकारस्य ईत्वे दस्य च मत्वे सकारस्य रुत्वे रेफस्य विसर्गत्वे च 'अमीभ्यः' इति रूपम् । अमुष्मात् । 'अदस्+ङसि' इत्यत्र त्यदाद्यत्वे पररूपत्वे च कृते "ङसिङ्योः स्मात्स्मिनौ" इति ङसेः स्थाने स्मात् आदेशे उत्वमत्वयोः कृतयोः षत्वे च कृते 'अमुष्मात्' इति रूपम् । अमुष्य । 'अदस्+ङस्' इत्यत्र त्यदाद्यत्वे पररूपत्वे च कृते "टाङसिङसामिनात्स्याः" इति ङसः स्थाने स्यादेशे 'अदस्य' इति जाते "अदसोऽसेर्दादु दो मः" इत्यकारस्योत्वे दस्य च मत्वे कृते "आदेशप्रत्यययोः" इति षत्वे च जाते 'अमुष्य' इति रूपं सिद्ध्यति । अमुयोः । 'अदस्+ओस्' इत्यत्र त्यदाद्यत्वे पररूपत्वे च कृते "ओसि च" इत्येकारे कृते "एचोऽयवायावः" इत्ययादेशे 'अदयोस्' इति जाते "अदसोऽसेर्दादु दो मः" इति दात्परस्योत्वे दस्य च मत्वे सस्य रुत्वे रेफस्य विसर्गत्वे च 'अमुयोः' इति रूपम् । अमीषाम् । 'अदस्+आम्' इत्यत्र त्यदाद्यत्वे पररूपत्वे च कृते "आमि सर्वनाम्नः सुट्" इति सुडागमे टित्वादाद्यावयवे उटि गते "बहुवचने झल्येत्" इत्येत्वे 'अदेसाम्' इति जाते "आदेशप्रत्यययोः" इति षत्वे "एत ईद्बहुवचने" इति दात्परस्यैकारस्येत्वे दस्य च मत्वे 'अमीषाम्' इति । अमुष्मिन् । 'अदस्+ङि' इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपत्वे च कृते 'अद+ङि' इति जाते "ङसिङ्योः स्मात्स्मिनौ" इति ङेः स्थाने स्मिनादेशे "अदसोऽसेर्दादु दो मः" इति दात्परस्योत्वे दस्य च मत्वे "आदेशप्रत्यययोः" इति षत्वे 'अमुष्मिन्' इति रूपं सिद्धम् । इति हलन्तपुँल्लिङ्गप्रकरणम् ।

नहो ध इति । "हो ढः" इत्यतो 'हः' इत्यनुवर्तते, 'पदस्य' इत्यधिकृतम् "स्कोः संयोगाद्योरन्ते च" इत्यतोऽन्ते इत्यनुवर्तते । "झलो झलि" इत्यतो झलि इत्यनुवर्तते । तदाह—नहो हस्येत्यादिना । उपानत् । 'णह—बन्धने' "णो नः" इति नत्वे उपनह्यते इति विग्रहे उपपूर्वात् 'सम्पदादित्वात्' कर्मणि क्विप् । "नहिवृति" इत्यादिना पूर्वपदस्य दीर्घः । उपानद्शब्दः स्त्रीलिङ्गः,—'पादुका, पादूरुपानत्स्त्री' इत्यमरः । कृद-

उष्णिहौ । उष्णिग्भ्याम् । द्यौः, दिवौ, दिवः । द्युभ्याम् । गीः, गिरौ, गिरः । एवं पूः । चतस्रः २ । चतसृणाम् । का, के, काः । सर्वावत् ॥ यः सौ ७।२।११०।

---

न्तत्वात्प्रातिपदिकसंज्ञायां सावागते 'उपानह्+सु' इति स्थिते सोरुकारे गते 'स्' इत्यस्य "हल्ङ्याब्भ्यो दीर्घात्" इति लोपे "नहो धः" इति हकारस्य धत्वे "झलां जशोऽन्ते" इति धकारस्य दत्वे "वावसाने" इति चर्त्वे 'उपानत्' इति । पक्षे—'उपानद्' इति । उपानत्सु । 'उपानह्+सुप्' इत्यत्र पकारस्येत्संज्ञायां लोपे च "नहो धः" इति हस्य धत्वे "झलां जशोऽन्ते" इति धस्य दत्वे "खरि च" इति चर्त्वे 'उपानत्सु' इति रूपं सिद्धम् । उष्णिक् । उत्पूर्वात् ष्णिह्धातोः "ऋत्विग्दधृक्" इत्यादिना क्विनि तस्य सर्वस्य लोपे निपातनाद्धलोपपत्वे च निष्पन्नः—उष्णिह्शब्दः । कृदन्तत्वात्प्रातिपदिकसंज्ञायां सावागते तस्य हल्ङ्यादिना लोपे "क्विन्प्रत्ययस्य कुः" इति कुत्वेन हकारस्य घत्वे "झलां जशोऽन्ते" इति जश्त्वेन गत्वे "वावसाने" इति चर्त्वेन वा कत्वे 'उष्णिक्' इति । पक्षे-'उष्णिग्' इति । उष्णिग्भ्याम् । 'उष्णिह्+भ्याम्' इत्यत्र "क्विन्प्रत्ययस्य कुः" इति कुत्वेन घत्वे तस्य जश्त्वे च कृते रूपम् । सुपि—'उष्णिक्षु' इति । द्यौः । 'दिव्+सु' इत्यत्र "दिव औत्" इति वकारस्य औकारे "इको यणचि" इति यणि सस्य रुत्वे रेफस्य विसर्गत्वे च 'द्यौः' इति सिद्धम्। द्युभ्याम् । 'दिव्+भ्याम्' इत्यत्र "दिव उत्" इति वस्योत्वे "इको यणचि" इति यणि 'द्युभ्याम्' इति रूपं सिद्धम् । गीः । 'गॄ-निगरणे' क्विप् "ॠत इद्धातोः" इति इत्वम्, "उरण् रपरः" इति रपरत्वम् । गिर्शब्दात्सुबुत्पत्तिः, सोर्लोपः, "र्वोरुपधाया दीर्घ इकः" इति दीर्घं, रेफस्य विसर्गः, इति भावः । एवं पूरिति । गीर्वदित्यर्थः । 'पॄ-पालनपूरणयोः' क्विप् "उदोष्ठ्यपूर्वस्य" इत्युत्वं रपरत्वम् । पुर्शब्दात् सोर्लोपः "र्वोरुपधायाः" इति दीर्घः, रेफस्य विसर्ग इति भावः । चतस्रः । 'चतुर्+जस्' इत्यत्र "त्रिचतुरोः स्त्रियां तिसृचतसृ" इति चतुर्शब्दस्य चतस्रादेशे विहिते जसो जकारस्य "चुटू" इतीत्संज्ञायां "तस्य लोपः" इति लोपे च "अचि र ऋतः" इति ऋकारस्य रेफत्वे, सस्य रुत्वे रेफस्य विसर्गत्वे च कृते 'चतस्रः' इति सिद्धम् । एवं शस्यपि—'चतस्रः' इति । चतसृणाम् । 'चतुर्+आम्' इति स्थिते "त्रिचतुरोः स्त्रियां तिसृचतसृ" इति चतस्रादेशे 'चतसृ+आम्' इति जाते अत्र "अचि र ऋतः" इति ऋकारस्य रेफादेशे प्राप्ते "नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन" इति पूर्वविप्रतिषेधेन तं बाधित्वा "ह्रस्वनद्यापो नुट्" इति नुटि, उटि गते टित्वादाद्यावयवे जाते 'चतसृ+नाम्' इति स्थिते "नामि" इति दीर्घे प्राप्ते "न तिसृचतसृ" इति निषिद्धे "ऋवर्णान्नस्य णत्वं वाच्यम्" इति णत्वे 'चतसृणाम्' इति रूपं सिद्धम् । का । 'किम्+सु' अत्र "किमः कः" इति कादेशे "अनेकाल्शित्सर्वस्य" इति सर्वस्य स्थाने जाते "अजाद्यतष्टाप्" इति टापि "चुटू" इति टकारस्य "हलन्त्यम्" इति पकारस्य चेत्संज्ञायां "तस्य लोपः" इति लोपे

इदमो दस्य यः स्यात्सौ । इयम् । त्यदाद्यत्वं पररूपत्वम् । टाप् । "दश्च" इति मः । इमे, इमाः । इमाम् । अनया । हलि लोपः । आभ्याम् , आभिः । अस्यै । अस्याः,

---

"अकः सवर्णे दीर्घः" इति दीर्घादेशे 'का सु' इति भूते उकारस्य "उपदेशेऽजनुनासिक इत्" इति इत्सञ्ज्ञायां "तस्य लोपः" इति लोपे "हल्ङ्याब्भ्यो दीर्घात्" इति सुलोपे 'का' इति सिद्धम् । के । 'किम्+औ' इत्यत्र "किमः कः" इति कादेशे "अजाद्यतष्टाप्" इति टापि टकारपकारयोरित्संज्ञायां लोपे च "अकः सवर्णे दीर्घः" इति दीर्घे "औङ आपः" इति 'शी' आदेशे शकारस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे 'के' इति रूपम् । काः । 'किम्+जस्' अत्र कादेशे टापि, सवर्णदीर्घे, रुत्वे विसर्गे च रूपम् । सर्वात्रदिति । सर्वाशब्दवदित्यर्थः । यः साविति । "इदमो मः" इत्यतः इदमः इत्यनुवर्तते, "दश्च" इत्यतो 'दः' इति च षष्ठ्यन्तमनुवर्तते । तदाह-इदमो दस्येति । इयम् । 'इदम्+स्' इति स्थिते "यः सौ" इति दस्य यकारादेशे 'इयम्+स्' इति जाते "त्यदादीनामः" इत्यकारादेशे प्राप्ते तं बाधित्वा "इदमो मः" इति मकारस्य मकारादेशे कृते "हल्ङ्याब्भ्यो दीर्घात्" इति सुलोपे 'इयम्' इति सिद्धम् । इमे । 'इदम्+औ' इत्यत्र "त्यदादीनामः" इत्यकारान्तादेशे "अतो गुणे" इति पररूपे 'इद औ' इति जाते "अजाद्यतष्टाप्" इति टापि, टकारपकारयोरित्संज्ञायां लोपे च "अकः सवर्णे दीर्घः" इति सवर्णदीर्घे 'इदा+औ' इति भूते "औङ आपः" इति औ स्थाने श्यादेशे शकारस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे 'इदे' इति जाते "दश्च" इति दकारस्य मकारे कृते 'इमे' इति रूपम् । इमाः । 'इदम्+जस्' इत्यत्र त्यदाद्यत्वे पररूपत्वे च, टापि अनुबन्धलोपे, सवर्णदीर्घे 'इदा+जस्' इति स्थिते जकारस्य "चुटू" इतीत्संज्ञायां "तस्य लोपः" इति लोपे च कृते "दश्च" इति दस्य मत्वे विहिते "अकः सवर्णे दीर्घः" इति सवर्णदीर्घे सकारस्य रुत्वे रेफस्य विसर्गत्वे च 'इमाः' इति रूपं सिद्धम् । इमाम् । 'इदम्+अम्' इत्यत्र त्यदाद्यत्वे पररूपे च कृते "अजाद्यतष्टाप्" इति टापि, टकारपकारयोरित्संज्ञायां लोपे च "अकः सवर्णे दीर्घः" इति दीर्घे 'इदा+अम्' इति जाते "दश्च" इति दस्य मत्वे "अमि पूर्वः" इति पूर्वरूपैकादेशे 'इमाम्' इति रूपम् । अनया । 'इदम्+टा' इत्यत्र त्यदाद्यत्वे, पररूपत्वे, टापि, 'इदा+टा' इति जाते "चुटू" इति टकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे सवर्णदीर्घे 'इदा+आ' इति जाते "अनाप्यकः" इतीदम इद्भागस्य अनादेशे 'अना आ' इति जाते "आङि चापः" इत्यावन्ताङ्गस्यैकारे कृते "एचोऽयवायावः" इत्ययादेशे संयोगे च कृते 'अनया' इति रूपम् । आभ्याम् । 'इदम्+भ्याम्' अत्र त्यदाद्यत्वे, पररूपत्वे, टापि अनुबन्धलोपे सवर्णदीर्घे 'इदा+भ्याम्' इति जाते "हलि लोपः" इति इद्भागस्य लोपे कृते 'आभ्याम्' इति । आभिः । 'इदम्+भिस्' इति स्थिते "त्यदादीनामः" इत्यत्वे "अतो गुणे" इति पररूपत्वे "अजाद्यतष्टाप्" इति टापि टकारपकारयोरित्संज्ञायां लोपे च "अकः सवर्णे दीर्घः" इति

अनयोः, आसाम्। अस्याम्। आसु। त्यदाद्यत्वम्। टाप्। स्या, त्ये, त्याः। एवं दीर्घे 'इदा+भिस्' इति जाते "हलि लोपः" इतीद्भागस्य लोपे भिसः सकारस्य रुत्वे रेफस्य विसर्गत्वे च 'आभिः' इति रूपम्। अस्यै। 'इदम्+ङे' इति स्थिते "त्यदादीनामः" इत्यत्वे "अतो गुणे" इति पररूपत्वे "अजाद्यतष्टाप्" इति टापि टकारपकारयोरित्संज्ञायां लोपे च "अकः सवर्णे दीर्घः" इति सवर्णदीर्घे 'इदा+ङे' इति जाते "लशक्वतद्धिते" इति ङकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे च कृते "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति ङेरेकारस्य स्याडागमे आपो ह्रस्वे च जाते टित्वादाद्यावयवे भूते टकारस्य "हलन्त्यम्" इतीत्संज्ञायां "तस्य लोपः" इति लोपे 'इदस्या+ए' इति स्थिते "वृद्धिरेचि" इति वृद्धौ 'इद+स्यै' इति जाते "हलि लोपः" इतीद्भागस्य लोपे "अस्यै" इति। अस्याः। 'इदम् ङसि' इत्यत्र त्यदाद्यत्वे पररूपत्वे च "अजाद्यतष्टाप्" इति टापि अनुबन्धलोपे च "अकः सवर्णे दीर्घः" इति दीर्घे ङकारेकारयोरित्संज्ञायां लोपे च 'इदा+अस्' इति जाते "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति स्याटि, टित्वादाद्यावयवे आपो ह्रस्वे च टकारस्येत्संज्ञायां लोपे च 'इद+स्या अस्' इति भूते "अकः सवर्णे दीर्घः" इति दीर्घे "हलि लोपः" इति इदमो इद्भागस्य लोपे सस्य रुत्वे रेफस्य विसर्गत्वे च 'अस्याः' इति रूपम्। अनयोः। 'इदम्+ओस्' इत्यत्र त्यदाद्यत्वे, पररूपत्वे च कृते "अजाद्यतष्टाप्" इति टापि अनुबन्धलोपे सवर्णदीर्घे 'इदा+ओस्' इति स्थिते "अनाप्यकः" इति इद्भागस्य अनादेशे "आङि चापः" इति आबन्ताङ्गस्यैकारे "एचोऽयवायावः" इत्ययादेशे सस्य रुत्वे रेफस्य विसर्गत्वे च 'अनयोः' इति रूपम्। आसाम्। 'इदम्+आम्' इत्यत्र त्यदाद्यत्वे, पररूपत्वे च कृते टापि, सवर्णदीर्घे 'इदा+आम्' इति जाते, तत्र "आमि सर्वनाम्नः सुट्" इति सुटि, उटि गते, टित्वादाद्यावयवे जाते "हलि लोपः" इति इद्भागस्य लोपे 'आसाम्' इति रूपम्। अस्याम्। 'इदम्+ङि' इत्यत्र त्यदाद्यत्वे, पररूपत्वे, टापि, सवर्णदीर्घे, "ङेराम्नद्याम्नीभ्यः" इति ङेरामि "स्थानिवदादेशोऽनल्विधौ" इति स्थानिवद्भावेन ङित्वमादाय "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति स्याटि, आपश्च ह्रस्वे, "हलि लोपः" इतीद्भागस्य लोपे 'अस्या+आम्' इति जाते "अकः सवर्णे दीर्घः" इति दीर्घे 'अस्याम्' इति। आसु। 'इदम्+सुप्' त्यदाद्यत्वे, पररूपत्वे च कृते, टापि अनुबन्धलोपे सवर्णदीर्घे 'इदा+सुप्' इति भूते "हलन्त्यम्" इति पकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे "हलि लोपः" इति इद्भागस्य लोपे 'आसु' इति रूपं सिद्धम्। स्या। 'त्यद्+सु' इत्यत्र त्यदाद्यत्वे, पररूपत्वे च कृते टापि, टकारपकारयोरित्संज्ञायां लोपे च सवर्णदीर्घे, "तदोः सः सावनन्त्ययोः" इति तस्य सत्वे "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इत्यादिना सोर्लोपे 'स्या' इति रूपम्। त्ये। 'त्यद्+औ' इत्यत्र "त्यदादीनामः" इत्यत्वे "अतो गुणे" इति पररूपत्वे टापि, टकारपकारयोरित्संज्ञायां लोपे च "अकः सवर्णे दीर्घः" इति दीर्घे 'त्या+औ' इति जाते "औङ आपः" इति औकारस्य शयादेशे शकारस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे 'त्ये' इति रूपम्।

तद्, यद्, एतद्। वाक्-वाग्। वाचौ। वाग्भ्याम्। वाक्षु। अप्शब्दो नित्यं बहुवचनान्तः। "अप्तृन्" इति दीर्घः। आपः। अपः॥ **अपो भि ७।४।४८॥** अपस्तकारः स्याद् भादौ प्रत्यये। अद्भिः, अद्भ्यः, अपाम्। अप्सु। दिक्-दिग्, दिशः। दिग्भ्याम्। "त्यदादिषु" इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम्। दृक्-दृग्। दृशौ, दृग्भ्याम्। त्विट्-त्विड्। त्विषौ। त्विड्भ्याम्। "ससजुषोरुः" इति रुत्वम्।

---

त्याः। 'त्यद्+जस्' इत्यत्र त्यदाद्यत्वे, पररूपत्वे टापि च, टकारपकारयोरित्संज्ञायां लोपे च 'त्या+जस्' इति स्थिते "चुटू" इति जकारस्येत्सञ्ज्ञायां "तस्य लोपः" इति लोपे "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घादेशे प्राप्ते "नादिचि" इति निषिद्धे "अकः सवर्णे दीर्घः" इति दीर्घादेशे कृते सस्य "ससजुषो रुः" इति रुत्वे उकारस्येत्संज्ञायां लोपे च रेफस्य विसर्गत्वे च 'त्याः' इति रूपम्। एवं तद्, यद्, एतदिति। तद्, यद् एतद् एतेभ्यो विभक्तौ परे अत्वपररूपटाप्सु सर्वावद्रूपाणि। तच्छब्दस्य तु तकारस्य सत्वम्। एतच्छब्दस्य तु तकारस्य सत्वे "आदेशप्रत्यययोः" इति षत्वमिति विशेषः। वाग्। 'वाच्+सु' इत्यत्र सकारोत्तरवर्तिन उकारस्येत्संज्ञायां लोपे च कृते स् इत्यस्य "हल्ङ्याब्भ्यो दीर्घात्" इत्यादिना लोपे चकारस्य "चोः कुः" इति कुत्वेन कत्वे तस्य "झलां जशोऽन्ते" इति गत्वे "वावसाने" इति विकल्पेन कत्वे 'वाक्' इति। विकल्पाभावपक्षे 'वाग्' इति। वाग्भ्याम्। 'वाच्+भ्याम्' अत्र "चोः कुः" इति कत्वे "झलां जशोऽन्ते" इति गत्वे 'वाग्भ्याम्' इति। वाक्षु। 'वाच्+सुप्' अत्र पकारस्येत्संज्ञायां लोपे च "चोः कुः" इति चकारस्य कुत्वेन कत्वे "आदेशप्रत्यययोः" इति सकारस्य कात्परकत्वात् मूर्धन्यादेशेन षत्वे कष्संयोगेन क्षजाते 'वाक्षु' इति। आपः। 'अप्+जस्' इत्यत्र "अप्तृन्तृच्स्वसृनप्तृ" इत्यादिना उपधादीर्घे कृते "चुटू" इति जकारस्येत्सञ्ज्ञायां "तस्य लोपः" इति लोपे च कृते, कृते च संयोगे सस्य रुत्वे रेफस्य विसर्गत्वे च 'आपः' इति। अपोभिरिति। "अच उपसर्गात्तः" इत्यतः त इत्यनुवर्तते, तदाह—अपस्तकार इति। अद्भिः। 'अप्+भिस्' इत्यत्र "अपो भि" इति पस्य तकारे "झलां जशोऽन्ते" इति तस्य दत्वे सस्य रुत्व रेफस्य विसर्गत्वे च कृते 'अद्भिः' इति। दिक्-दिग्। 'दिश्-अतिसर्जने' "ऋत्विक्" इत्यादिना क्विनि तस्य सर्वस्यापहारे कृदन्तत्वात्प्रातिपदिकसंज्ञायां सावागते लोपे कृते "हल्ङ्यादिना" सलोपे कृते 'दिश्' इति जाते तत्र "व्रश्चभ्रस्जसृजमृज" इति षत्वे "झलां जशोऽन्ते" इति डत्वे "क्विन्प्रत्ययस्य कुः" इति डस्य कुत्वेन गत्वे "वावसाने" इति विकल्पेन कत्वे 'दिक्' इति। पक्षे-'दिग्' इति। दिग्भ्याम्। 'दिश्+भ्याम्' इति स्थिते अत्र "व्रश्च" इति षत्वे "झलां जशोऽन्ते" इति डत्वे "क्विन्प्रत्ययस्य कुः" इति कुत्वेन गत्वे 'दिग्भ्याम्' इति। दृक्-दृग्। 'दृश्+सु' अत्र उकारस्येत्संज्ञायां लोपे च "हल्ङ्याब्भ्यो दीर्घात्" इति सुलोपे "व्रश्चभ्रस्जसृजमृज" इति षत्वे षस्य "झलां जशोऽन्ते" इति डत्वे "क्विन्प्रत्ययस्य कुः" इति (क्विन्प्रत्ययो

सजूः, सजुषौ । सजूर्भ्याम् । आशीः, आशिषौ । आशीर्भ्याम् । असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमूभ्यः । अमुष्याः । अमुयोः । अमूषाम् । अमुष्याम् । अमूषु ॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

---

यस्माद्धिहित इति बहुव्रीह्याश्रयणात्) कुत्वेन गकारे "वावसाने" इति गस्य कत्वे 'दृक्' इति । पक्षे 'दृग्' इति । दृग्भ्याम् । 'दृश्+भ्याम्' अत्र षडगाः प्राग्वत् । त्विट् । 'त्विष्-दीप्तौ' क्विप् । सुलोपः । जश्त्वे चर्त्वे च रूपम् । त्विड्भ्याम् । 'त्विष्+भ्याम्' अत्र "झलां जशोऽन्ते" इति जश्त्वेन डत्वे 'त्विड्भ्याम्' इति । सजूः । 'सजुष्+सु' अत्र सकारोत्तरवर्तिन उकारस्येत्संज्ञायां लोपे च स् इत्यस्य "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति लोपे "ससजुषो रुः" इति षस्य रुत्वे उकारलोपे "र्वोरुपधाया दीर्घ इकः" इति जकारोत्तरवर्त्युकारस्य दीर्घत्वे रेफस्य विसर्गत्वे च 'सजूः' इति रूपम् । सजूर्भ्याम् । 'सजुष्+भ्याम्' इत्यत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां "ससजुषो रुः" इति षकारस्य रुत्वे उकारस्येत्संज्ञायां लोपे च कृते "र्वोरुपधाया दीर्घ इकः" इति जकारोत्तरवर्तिन उकारस्य दीर्घत्वे संयोगे च कृते 'सजूर्भ्याम्' इति । आशीः । 'आशिष्+सु' इत्यत्र उकारस्येत्संज्ञायां लोपे च सकारस्य हल्ङ्यादिना लोपे षत्वस्यासिद्धत्वात् "ससजुषो रुः" इति रुत्वे उकारस्येत्संज्ञायां लोपे च "र्वोरुपधाया दीर्घ इकः" इति शकारोत्तरवर्तिन इकारस्य दीर्घत्वे रेफस्य "खरवसानयोर्विसर्जनीयः" इति विसर्गत्वे 'आशीः' इति रूपम् । आशीर्भ्याम् । 'आशिष्+भ्याम्' इत्यत्र "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायां षत्वस्यासिद्धत्वात् "ससजुषोरुः" इति रुत्वे उकारस्येत्संज्ञायां लोपे च जाते "र्वोरुपधाया दीर्घ इकः" इति उपधाभूतेकारस्य दीर्घत्वे 'आशीर्भ्याम्' इति रूपम् । असौ । 'अदस्+सु' इत्यत्र "अदस औ सुलोपश्च" इति सस्यौत्वे सुलोपे च विहिते 'अद+औ' इति जाते "तदोः सः सावनन्त्ययोः" इति दकारस्य सकारे "वृद्धिरेचि" इति वृद्धौ च कृतायाम् 'असौ' इति । अमू । 'अदस्+औ' इति स्थिते "त्यदादीनामः" इत्यत्वे "अतो गुणे" इति पररूपे च कृते "अजाद्यतष्टाप्" इति टापि, टकारपकारयोरित्संज्ञायां लोपे च कृते "अकः सवर्णे दीर्घः" इति दीर्घे 'अदा+औ' इति जाते, अत्र "औङ आपः" इति औस्थाने श्यादेशे "लशक्वतद्धिते" इति शस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे 'अदे' इति भूते अत्र "अदसोऽसेर्दादु दो मः" इति दात्परस्योत्वे दस्य च मत्वे 'अमू' इति रूपम् । अमूः । 'अदस्+जस्' अत्र त्यदाद्यत्वे पररूपत्वे च टापि सवर्णदीर्घे जसो जकारस्य "चुटू" इतीत्संज्ञायां "तस्य लोपः" इति लोपे 'अदा+अस्' इति जाते, तत्र "अकः सवर्णे दीर्घः" इति दीर्घे च कृते 'अदास्' इति भूते "अदसोऽसेर्दादु दो मः" इति दात्परस्याकारस्योत्वे दस्य च मत्वे सो रुत्वे विसर्गत्वे च 'अमूः' इति रूपम् । द्वितीयायाम्—अमि, औटि, शसि च—अमुम्, अमू , अमूः, इति । अमुया । 'अदस्+टा' इत्यत्र अत्वे पररूपत्वे टापि, सव-

## अथ हलन्तनपुंसकलिङ्गप्रकरणम् ॥

स्वमोर्लुक्। दत्वम्। स्वनडुद्। स्वनडुही। "चतुरनडुहोः" इत्याम्। स्वन-

र्णदीर्घे टकारस्येत्संज्ञायां लोपे च 'अदा+आ' इति स्थिते "आङि चापः" इत्येत्वे अयादेशे संयोगे च कृते 'अदया' इति जाते तत्र "अदसोसेर्दादुदो मः" इति दात्परस्योत्वे दस्य च मत्वे 'अमुया' इति। अमूभ्याम्। 'अदस्+भ्याम्' अत्र त्यदाद्यत्वे पररूपत्वे च कृते टापि, अनुबन्धलोपे सवर्णदीर्घे 'अदा+भ्याम्' इति स्थिते "अदसोसेर्दादुदोमः" इति दात्परस्योत्वे दस्य च मत्वे 'अमूभ्याम्' इति। अमूभिः। अत्वपररूपटाप्सु उत्वमत्वे, रुत्वविसर्गयोः सतोः रूपम्। अमुष्यै। 'अदस्+ए' अत्र अत्वपररूपटाप्सु जातेषु 'अदा+ए' इति जाते तत्र "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति ङेः स्याडागमे आबन्ताङ्गस्य ह्रस्वे च कृते "वृद्धिरेचि" इति वृद्धौ उत्वमत्वे षत्वे च 'अमुष्यै' इति। अमूभ्यः। 'अदस्+भ्यस्' इत्यत्र अत्वपररूपटाप्सु, ऊत्वमत्वे, रुत्वे, विसर्गे च रूपम्। अमुष्याः। ङसिङसोर्ङेवत्, रुत्वविसर्गौ तु विशेषः। अमुयोः। 'अदस्+ओस्' अत्र अत्वपररूपटाप्सु, "आङि चापः" इत्येत्वे, अयादेशे च कृते 'अदयोस्' इति जाते "अदसोसेर्दादुदोमः" इत्युत्वे मत्वे च रुत्वविसर्गयोः 'अमुयोः' इति रूपम्। अमूषाम्। 'अदस्+आम्' अत्र त्यदाद्यत्वे पररूपत्वे टापि, सवर्णदीर्घे 'अदा+आम्' इति जाते तत्र "आमि सर्वनाम्नः सुट्" इति सुटि टित्वादाम आद्यावयवे जाते अनुबन्धलोपे ऊत्वमत्वे सस्य षत्वे च 'अमूषाम्' इति रूपम्। अमुष्याम्। 'अदस्+ङि' इति स्थिते, अत्वपररूपटाप्सु, "ङेराम्नद्याम्नीभ्यः" इति ङेरामि "सर्वनाम्नः स्याड्ढ्रस्वश्च" इत्यामः स्याडि आपो ह्रस्वे च कृते 'अदस्या+आम्' इति जाते "अकः सवर्णे दीर्घः" इति दीर्घे "अदसोसेर्दादुदोमः" इति दात्परस्योत्वे दस्य च मत्वे "आदेशप्रत्यययोः" इति षत्वे 'अमुष्याम्' इति। अमूषु। 'अदस्+सुप्' इत्यत्र त्यदाद्यत्वे पररूपत्वे टापि, सवर्णदीर्घत्वे 'अदासु' इति भूते "अदसोसेर्दादुदोमः" इति दात्परस्योत्वे दस्य च मत्वे "आदेशप्रत्यययोः" इति सस्य षत्वे 'अमूषु' इति रूपं सिद्धम्। इति हलन्तस्त्रीलिङ्गप्रकरणम्।

स्वनुडुत्, स्वनुडुद्। सु-शोभनाः अनड्वाहः यस्य कुलस्येति बहुव्रीहौ, स्वनडुह्शब्दात् नपुंसकलिङ्गात् स्वावागते 'स्वनडुह्+सु' इति स्थिते अत्र "स्वमोर्नपुंसकात्" इति सुलोपे "वसुस्रंसुध्वंस्वनडुहां दः" इति हस्य दत्वे "वावसाने" इति दस्य तत्वे 'स्वनडुत्' इति। पक्षे—'स्वनडुद्' इति। स्वनडुही। 'स्वनडुह्+औ' इत्यत्र "नपुंसकाच्च" इति औस्थाने श्यादेशे शकारस्य "लशक्वतद्धिते" इतीत्सञ्ज्ञायां "तस्य लोपः" इति लोपे संयोगे च कृते 'स्वनडुही' इति। स्वनड्वांहि। 'स्वनडुह्+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने श्यादेशे शस्येत्सञ्ज्ञायां लोपे च "शि सर्वनामस्थानम्" इति सर्वनामस्थानसञ्ज्ञायाम् "चतुरनडुहोरामुदात्तः" इति आमि, मकारस्येत्संज्ञायां लोपे च "इको यणचि" इति यणि 'स्वनड्वाह्+इ' इति जाते "नपुं-

डुह्वांहि। पुनस्तद्वत्। शेषं पुंवत्। वाः, वारी, वारि। वार्भ्याम्। चत्वारि। किम्, के, कानि। इदम्, इमे, इमानि। (अन्वादेशे नपुंसके एनद्वक्तव्यः) एनत्, एनद्, एने, एनानि। एनेन। एनयोः। अहः। "विभाषा ङिश्योः"। अह्नी-अहनी,

---

सकस्य झलचः" इति नुमि, उमि गते मित्वादन्त्यादचः परे "नश्चापदान्तस्य झलि" इत्यनुस्वारे 'स्वनडुह्वांहि' इति रूपम्। पुनस्तद्वदिति। स्वनडुत्-स्वनडुद्। स्वनडुही। स्वनडुह्वांहि। शेषं पुंवदिति। स्वनडुहा, स्वनडुद्भ्याम्, स्वनडुद्भिः तृतीया। एवं सर्वत्र। वाः। 'वार्+सु' इत्यत्र "स्वमोर्नपुंसकात्" इति सुलोपे पदान्तत्वात् "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गे 'वाः' इति रूपम्। वारी। 'वार्+औ' इत्यत्र 'औ' इत्यस्य स्थाने "नपुंसकाच्च" इति श्यादेशे शस्येत्सञ्ज्ञायां लोपे संयोगे च कृते 'वारी' इति। वारि। 'वार्+जस्' इत्यत्र "जश्शसोः शिः" इति जसः स्थाने श्यादेशे शस्येत्संज्ञायां लोपे च; कृते संयोगे 'वारि' इति। चत्वारि। 'चतुर्+जस्' इति स्थिते अत्र "जश्शसोः शिः" इति जसः स्थाने श्यादेशे कृते शस्येत्संज्ञायां लोपे च विहिते "शि सर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञायां "चतुरनडुहोरामुदात्तः" इत्यामि, मकारस्येत्संज्ञायां लोपे च मित्वादन्त्यादचः परे जाते "इको यणचि" इति यणि संयोगे च कृते 'चत्वारि' इति रूपम्। किम्। "किम्+सु" अत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि 'किम्' इति। के। 'किम्+औ' इति दशायां "किमः कः" इति 'क' आदेशे "नपुंसकाच्च" इति औइत्यस्य स्थाने शी आदेशे कृते शस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे 'के' इति। कानि। 'किम्+जस्' अत्र "किमः कः" इति कादेशे "जश्शसोः शिः" इति श्यादेशे शस्येत्संज्ञायां लोपे च "शि सर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञायां "नपुंसकस्य झलचः" इति नुमि उमि गते मित्वादन्त्यादचः परे "सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घत्वे संयोगे च कृते 'कानि' इति रूपम्। इदम्। 'इदम्+सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि 'इदम्' इति। इमे। 'इदम्+औ' इत्यत्र "त्यदादिनामः" इत्यत्वे "अतो गुणे" इति पररूपत्वे "नपुंसकाच्च" इति 'शी' आदेशे शस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे जाते "दश्च" इति दस्य मत्वे 'इमे' इति। इमानि। 'इदम्+जस्' अत्र "त्यदादीनामः" इत्यत्वे "अतो गुणे" इति पररूपत्वे "जश्शसोः शिः" इति शौ, शस्येत्संज्ञायां लोपे च "शि सर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञायां "नपुंसकस्य झलचः" इति नुमि, उमि गते, मित्वात् "मिदचोऽन्त्यात्परः" इत्यन्त्यादचः परे जाते "सर्वनामस्थाने चाऽसम्बुद्धौ" इति नान्तोपधायाः दीर्घत्वे 'इदानि' इति जाते "दश्च" इति दस्य मत्वे 'इमानि' इति रूपम्। अन्वादेशे नपुंसके इति। इदमेतदोरिति शेषः। एनत्, एनद्। 'इदम् अम्' इति स्थिते "स्वमोर्नपुंसकात्" इत्यमो लुकि "अन्वादेशे नपुंसके एनद् वक्तव्यः" इतीदम एनदादेशे "वावसाने" इति विकल्पेन चर्त्वे 'एनत्' इति।

अहानि ॥ **अहन् ८।२।६८॥** अहन्नित्यस्य रुः स्यात् पदान्ते । अहोभ्याम् । दण्डि, दण्डिनी, दण्डीनि । **"सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः"** । हे दण्डिन्, हे दण्डि । दण्डिना । दण्डिभ्याम् । सुपथि । टेर्लोपः । सुपथी । सुपन्थानि । ऊर्क्-

---

पक्षे—'एनद्' इति । एने । 'इदम्+औ' अत्र "अन्वादेशे नपुंसके" इति एनदादेशे, त्यदाद्यत्वे, पररूपत्वे "नपुंसकाच्च" इति शी आदेशे शस्येत्संज्ञायां लोपे गुणे च कृते 'एने' इति । एनानी । 'इदम्+शस्' अत्र एनदादेशे त्यदाद्यत्वे, पररूपत्वे, "जश्शसोः शिः" इति शौ सर्वनामस्थानसंज्ञायां नुमि, दीर्घे च 'एनानि' इति । एनेन । 'इदम्+टा' अत्र अन्वादेशे सति एनदादेशे त्यदाद्यत्वे पररूपत्वे च कृते "टाङसिङसामिनात्स्याः" इति टास्थाने इनादेशे "आद्गुणः" इति गुणे 'एनेन' इति । एनयोः । 'इदम्+ओस्' अत्र एनदादेशे त्यदाद्यत्वे, पररूपत्वे "ओसि च" इत्यदन्ताङ्गस्यैकारे अयादेशे रुत्वे विसर्गे च 'एनयोः' इति । अहः । 'अहन्+सु' इत्यत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि "रोऽसुपि" इति नस्य रेफादेशे "खरवसानयोर्विसर्जनीयः" इति विसर्गे च 'अहः' इति । अह्नी-अहनी । 'अहन्+औ' अत्र 'नपुंसकाच्च' इति 'शी' आदेशे शस्येत्सञ्ज्ञायां लोपे च "यचि भम्" इति भसञ्ज्ञायां "विभाषा ङिश्योः" इति अनोऽकारस्य विकल्पेन लोपे 'अन्ही' इति । लोपाभावपक्षे—'अहनी' इति । अहानि । 'अहन्+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने शौ कृते शस्येत्संज्ञायां लोपे च "शि सर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञायां "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तस्योपधाया दीर्घत्वे 'अहानि' इति । भ्यामादौ हलि विशेषमाह—अहन्निति । "ससजुषो रुः" इत्यतो रुरित्यनुवर्तते, "स्कोः संयोगाद्योः" इत्यतः अन्त इति च, पदस्य इत्यधिकृतम् , 'अहन्' इति लुप्तषष्ठीकम् । तदाह—अहन्नित्यस्येत्यादिना । अहोभ्याम् । 'अहन्+भ्याम्' इत्यत्र "स्वादिष्वसर्वनामस्थाने" इति पदसञ्ज्ञायाम् "अहन्" इति नस्य रुत्वे "हशि च" इत्युत्वे "आद्गुणः" इति गुणे 'अहोभ्याम्' इति । दण्डि । 'दण्डिन्+सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि नस्य "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'दण्डि' इति । हे दण्डिन्—हे दण्डि । 'हे दण्डिन्+सु' अत्र "स्वमोर्लुक्" इति सोर्लुकि कृते नस्य पदान्तत्वात् "नलोपः प्रातिपदिकान्तस्य" इति लोपे प्राप्ते "सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः" इति विकल्पेन निषिद्धे 'हे दण्डिन्' इति । विकल्पाभावपक्षे 'हे दण्डि' इति । दण्डिनी । 'दण्डिन्+औ' अत्र "नपुंसकाच्च" इति श्यादेशे शस्येत्सञ्ज्ञायां लोपे च कृते, 'दण्डिनी' इति । दण्डीनि । 'दण्डिन्+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने शौ "शि सर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञायां "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधाया दीर्घत्वे संयोगे च कृते 'दण्डीनि' इति रूपम् । दण्डिना । 'दण्डिन्+टा' इत्यत्र "चुटू" इति टकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे कृते संयोगे च कृते 'दण्डिना' इति ।

ऊर्ग्, ऊर्जी, ऊर्न्जि । नरजानां संयोगः । तत्, ते, तानि । यत्, ये, यानि । एतत्, एते, एतानि । गवाक्, गोची, गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत्,

---

दण्डिभ्याम् । 'दण्डिन्+भ्याम्' इत्यत्र "स्वादिषु०" इति पदत्वात् "नलोपः प्राति०" इति नलोपे 'दण्डिभ्याम्' इति । सुपथि । 'सुपथिन्+सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि "नलोपः प्राति०" इति नलोपे 'सुपथि' इति । सुपथी । 'सुपथिन्+औ' इत्यत्र "नपुंसकाच्च" इति श्यादेशे शस्येत्संज्ञायाम् लोपे च "यचि भम्" इति भसंज्ञायाम् "भस्य टेर्लोपः" इति टिसंज्ञकस्य भस्य इन्नित्यस्य लोपे संयोगे च कृते 'सुपथी' इति । सुपन्थानि । 'सुपथिन्+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने शौ कृते शस्येत्संज्ञायां लोपे च कृते "शि सर्वनामस्थानम्" इति सर्वनामस्थानसं-ज्ञायाम् "इतोऽत्सर्वनामस्थाने" इति थकारान्तःपातिन इकारस्याकारे कृते 'सुप-थन्+इ' इति जाते "थोन्थः" इति थस्य न्थादेशे "सर्वनामस्थाने चाऽसम्बुद्धौ" इति नान्तोपधायाः दीर्घत्वे 'सुपन्थानि' इति । ऊर्क् । 'ऊर्ज्+सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि "चोः कुः" इति जस्य कुत्वेन गत्वे "वाऽवसाने" इति विकल्पेन कत्वे 'ऊर्क्' इति । पक्षे—ऊर्ग् इति । ऊर्जी । 'ऊर्ज्+औ' अत्र "नपुंसकाच्च" इति श्या-देशे शस्येत्सञ्ज्ञायां लोपे च जाते संयोगे कृते 'ऊर्जी' इति । ऊर्न्जि । 'ऊर्ज्+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने श्यादेशे "शि सर्वनामस्थानम्" इति सर्व-नामस्थानसञ्ज्ञायाम्, शसः शस्येत्संज्ञायां लोपे च "नपुंसकस्य झलचः" इति नुमि उमि गते मित्वादन्त्यादचः परे "नश्चापदान्तस्य झलि" इत्यनुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णे च कृते 'ऊर्न्जि' इति रूपम् । तत् । 'तत्+सु' अत्र "स्व-मोर्नपुंसकात्" इति सोर्लुकि 'तत्' इति । अत्र "त्यदादीनामः" इति अत्वं न श-ङ्क्यम् । विभक्तिपरत्वाभावात् । ते । 'तत्+औ' अत्र "त्यदादीनामः" इत्यत्वे "अलो-ऽन्त्यस्य" इत्यन्त्यस्य जाते 'त+अ+औ' इति स्थिते "अतो गुणे" इपि पररूपत्वे कृते "नपुंसकाच्च" इति श्यादेशे शस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे कृते 'ते' इति । तानि । 'तत्+औ' अत्र त्यदाद्यत्वे, पररूपत्वे, जसः शौ, अनुबन्धलोपे, सर्वनामस्थानसंज्ञायाम्, "नपुंसकस्य झलचः" इति नुमि, उमि गते मित्वादन्त्या-दचः परे "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधाया दीर्घत्वे संयोगे च कृते 'तानि' इति रूपम् । यत् । 'यत्+सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि कृते 'यत्' इति । ये । 'यत्+औ' अत्र त्यदाद्यत्वे पररूपत्वे च कृते औस्थाने श्यादेशे श-स्येत्सञ्ज्ञायाम् लोपे च जाते "आद्गुणः" इति गुणे 'ये' इति । यानि । 'यत्+जस्' अत्र अत्वे, पररूपत्वे जसः शौ अनुबन्धलोपे, सर्वनामस्थानसंज्ञायाम् नुमि, उमि गते नान्तोपधायाः दीर्घत्वे च कृते 'यानि' इति रूपम् । एतत् । 'एतत्+सु' अत्र "स्वमोर्न-पुंसकात्" इति सोर्लुकि 'एतत्' इति । एते । 'एतत्+औ' अत्र त्यदाद्यत्वे पररूपत्वे "न-

शक्ती, शक्न्ति। ददत्। ददती। वा नपुंसकस्य ७।१।७९। अभ्यस्तात्परो यः

---

पुंसकाच्च" इति श्यादेशे शस्येत्संज्ञायां लोपे च "आद्गुणः" इति गुणे 'एते' इति। एतानि। 'एतत्+जस्' अत्र त्यदाद्यत्वे पररूपत्वे "जश्शसोः शिः" इति जसः शौ "शि सर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञायां शस्येत्संज्ञायां लोपे च "नपुंसकस्य झलचः" इति नुमि उमि गते मित्वादन्त्यादचः परे "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधाया दीर्घत्वे संयोगे च कृते 'एतानि' इति। गवाक्। गामञ्चतीति विग्रहे क्विनि उपपदसमासे सुब्लुकि, 'गो अन्च्' इति स्थिते कृदन्तत्वात्प्रातिपदिकसंज्ञायां स्वावागते 'गोअ न् च् सु' इति "अनिदितां हल उपधाया क्ङिति" इति नलोपे 'गो अच सु' इत्यवशिष्टे "अवङ्स्फोटायनस्य" इत्यवङि ङस्येत्संज्ञायां लोपे च "ङिच्च" इत्यन्तादेशे "अकः सवर्णे दीर्घः" इति दीर्घे "स्वमोर्नपुंसकात्" इति सोर्लुकि "क्विन्प्रत्ययस्य कुः" इति चस्य कत्वे "झलां जशोऽन्ते" इति गत्वे "वाऽवसाने" इति वा कत्वे 'गवाक्' इति। चर्त्वाभावपक्षे-'गवाग्' इति। गोची। 'गो अन् च् औ' इत्यत्र "अनिदितां हल उपधायाः क्ङिति" इति नलोपे "नपुंसकाच्च" इति औस्थाने श्यादेशे शस्येत्सञ्ज्ञायां लोपे च "यचि भम्" इति भसञ्ज्ञायाम् "अचः" इति अचोऽकारस्य लोपे संयोगे च कृते 'गोची' इति रूपम्। गवाञ्चि। 'गो-अन् च्+जस्' इति स्थिते "अनिदितां हल उपधायाः क्ङिति" इति नलोपे "जश्शसोः शिः" इति जसः शौ कृते "शि सर्वनामस्थानम्" इति सर्वनामस्थानसञ्ज्ञायां शस्येत्सञ्ज्ञायां लोपे च "नपुंसकस्य झलचः" इति नुमि, उमि गते मित्वादन्त्यादचः परे 'गो अन् च् इ' इति जाते "अवङ्स्फोटायनस्य" इत्यवङि ङस्येत्सञ्ज्ञायां लोपे च "ङिच्च" इत्यन्तादेशे "अकः सवर्णे दीर्घः" इति दीर्घे 'गवान् च् इ' इति जाते "नश्चापदान्तस्य झलि" इत्यनुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णे संयोगे च कृते 'गवाञ्चि' इति भवति। पुनस्तद्वदिति। गवाक्-गवाग्, गोची, गवाञ्चि, इति यावत्। गोचा। 'गो अन् च् टा' इत्यत्र "चुटू" इति टस्येत्सञ्ज्ञायां "तस्य लोपः" इति लोपे "अनिदिताम्" इति नलोपे "यचि भम्" इति भसञ्ज्ञायाम् "अचः" इति अचोऽकारस्य लोपे संयोगे च कृते 'गोचा' इति। गवाग्भ्याम्। 'गोअन् च् भ्याम्' इत्यत्र "अनिदिताम्" इति नलोपे "अवङ्स्फोटायनस्य" इत्यवङि ङस्येत्सञ्ज्ञायां लोपे च "ङिच्च" इत्यन्तादेशे सवर्णदीर्घे च 'गवाच्+भ्याम्' इति जाते "क्विन्प्रत्ययस्य कुः" इति कुत्वे "झलां जशोऽन्ते" इति गत्वे च 'गवाग्भ्याम्' इति रूपम्। एवं सर्वत्र बोध्यम्। शकृत्। 'शकृत्+सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि सति 'शकृत्' इति। शकृती। "नपुंसकाच्च" इति श्यादेशोऽत्र बोध्यः। शकृन्ति। अत्र जसः "जश्शसोः शिः" इति श्यादेशो, अङ्गस्य च "नपुंसकस्य झलचः" इति नुमागमश्च बोध्यः। ददत्। शतृप्रत्ययान्तोऽयं ददत् शब्दः, तस्मात् स्वमोर्लुक्। ददती। 'ददत्+औ' अत्र "नपुंसकाच्च" इति श्यादेशे शस्येत्सञ्ज्ञायां

शता तदन्तस्य क्लीवस्य वा नुम् स्यात् सर्वनामस्थाने । ददन्ति-ददति । तुदत् ॥ **आच्छीनद्योर्नुम् ७।१।८०।** अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम् वा स्यात् शीनद्योः । तुदन्ती-तुदती । तुदन्ति । **शप्श्यनोर्नित्यम् ७।१।८१।** शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् शीनद्योः । पचन्ती, पचन्ति । दीव्यत्, दीव्यन्ती, दीव्यन्ति । धनुः, धनुषी । "सान्त" इति दीर्घः । "नुम्विसर्जनीय" इति

---

लोपे च संयोगे च कृते 'ददती' इति । वा नपुंसकस्येति । "नाभ्यस्ताच्छतुः" इत्यत 'अभ्यस्ताच्छतु'रित्यनुवर्तते, "इदितो नुम् धातोः" इत्यतो नुम् इति, "उगिदचाम्" इत्यतः सर्वनामस्थाने इति च अनुवर्तते । तदाह—अभ्यस्तादित्यादिना । ददन्ति,ददति । 'ददत्+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने शौ कृते शस्येत्सञ्ज्ञायां लोपे च "शि सर्वनामस्थानम्" इति सर्वनामस्थानसञ्ज्ञायां "नपुंसकस्य झलचः" इति नुमि प्राप्ते "नाभ्यस्ताच्छतुः" इति निषिद्धे "वा नपुंसकस्य" इति विकल्पेन नुमि उमि गते मित्वादन्त्यादचः परे "नश्चापदान्तस्य झलि" इति अनुस्वारे, "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णे 'ददन्ति' इति । नुमभावे-'ददति' इति । तुदत् । 'तुद-व्यथने' अस्माच्छतृप्रत्यये "तुदादिभ्यश्शः" इति शः, शपोऽपवादः, "अतो गुणे" इति शतुरकारेण पररूपे तुदच्छब्दः, तस्मात्स्वमोर्लुक् इति भावः । आच्छीनद्योर्नुमिति । अत्र "नाभ्यस्तात्" इत्यतः शतुरिति "वा नपुंसकस्य" इत्यतो वेति चानुवर्तते । तुदन्ती, तुदती । 'तुदत्+औ' इत्यत्र "नपुंसकाच्च" इति श्यादेशे शस्येत्सञ्ज्ञायां लोपे च 'तुदत्+ई' इति स्थिते अत्र "आच्छीनद्योर्नुम्" इति नुमि उमि गते मित्वादन्त्यादचः परे जाते "नश्चापदान्तस्य झलि" इत्यनुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णे 'तुदन्ती' इति । नुमभावे 'तुदती' इति । तुदन्ति । 'तुदत्+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने शौ कृते शस्येत्सञ्ज्ञायां लोपे च सर्वनामस्थान-सञ्ज्ञायाम् "नपंसकस्य झलचः" इति नुमि, उमि गते मित्वादन्त्यादचः परे अनु-स्वारे परसवर्णे च कृते 'तुदन्ति' इति । शप्श्यनोर्नित्यमिति । "आच्छीनद्योर्नुम्" इत्य-नुवर्तते, "नाभ्यस्ताच्छतुः" इत्यतः शतुरित्यनुवर्तते । अवयव इति चाध्याह्रियते । तदाह—शप्श्यनोरादित्यादिना । पचन्ती । 'पचत्+औ' इत्यत्र "नपुंसकाच्च" इति औस्थाने श्यादेशे शस्येत्सञ्ज्ञायां लोपे च "शप्श्यनोर्नित्यम्" इति नुमि उमि गते मित्वादन्त्यादचः परे अनुस्वारे परसवर्णे च कृते; कृते च संयोगे 'पचन्ती' इति । पचन्ति । जश्शसोः शौ सर्वनामस्थानत्वान्नुमि रूपम् । दीव्यत् । दिवुधातोः लटः शतरि, श्यन् "हलि च" इति दीर्घः । दीव्यच्छब्दात् स्वमोर्लुगिति भावः । दीव्यन्ती । औङः श्याम्, "शप्श्यनोर्नित्यम्" इति नुमि रूपम् । दीव्यन्ति । जश्शसोः शौ सर्वना-मस्थानत्वात् नुमिति भावः । धनुः । 'धनुष्+सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि, षस्य असिद्धत्वात् "ससजुषो रुः" इति रुत्वे अनुबन्धलोपे "खरवसानयोर्वि-

षः। धनूंषि। धनुषा, धनुर्भ्याम्। एवं चक्षुर्हविरादयः। पयः, पयसी, पयांसि। पयसा, पयोभ्याम्। सुपुम्, सपुंसी, सुपुमांसि। अदः। विभक्तिकार्यम्, उत्वमत्वे। अमू, अमूनि। शेषं पुंवत्॥ इति हलन्ता नपुंसकलिङ्गाः॥

---

र्जनीयः" इति रेफस्य विसर्गत्वे च कृते 'धनुः' इति रूपम्। धनुषी। 'धनुष्+औ' अत्र "नपुंसकाच्च" इति औस्थाने श्यादेशे शस्येत्सञ्ज्ञायां लोपे संयोगे च कृते 'धनुषी' इति। धनूंषि। 'धनुष्+जस्' अत्र "जश्शसोः शिः" इति जसः शौ कृते शस्येत्सञ्ज्ञायां लोपे च "शि सर्वनामस्थानम्" इति सर्वनामस्थानसञ्ज्ञायाम् "नपुंसकस्य झलचः" इति नुमि, उमि गते मित्वादन्त्यादचः परे जाते "सान्तमहतः संयोगस्य" इति सान्तसंयोगस्योपधायाः दीर्घत्वे "नश्चापदान्तस्य झलि" इत्यनुस्वारे "नुम्विसर्जनीयशर्व्यवायेऽपि" इति सस्य षत्वे संयोगे च कृते 'धनूंषि' इति रूपम्। धनुषा। 'धनुष्+टा' अत्र "चुटू" इति टकारस्येत्सञ्ज्ञायां "तस्य लोपः" इति लोपे संयोगे च कृते 'धनुषा' इति। धनुर्भ्याम्। 'धनुष्+भ्याम्' अत्र षत्वस्यासिद्धत्वात् "ससजुषो रुः" इति रुत्वे उकारस्य "उपदेशेऽजनुनासिक इत्" इतीत्सञ्ज्ञायां "तस्य लोपः" इति लोपे संयोगे च कृते "धनुर्भ्याम्" इति रूपम्। एवं चक्षुर्हविरादय इति। चक्षुः, चक्षुषी, चक्षूंषि। चक्षुषा, चक्षुर्भ्याम्। इत्यादि। हविः, हविषी, हवींषि। हविषा, हविर्भ्याम्। इत्यादि। पयः। 'पयस्+सु' अत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि, सस्य "ससजुषो रुः" इति रुत्वे उकारस्येत्सञ्ज्ञायां लोपे च कृते रेफस्य "खरवसानयोर्विसर्जनीयः" इति विसर्गे 'पयः' इति। पयसी। 'पयस्+औ' अत्र "नपुंसकाच्च" इति औस्थाने श्यादेशे शस्येत्सञ्ज्ञायां लोपे संयोगे च कृते 'पयसी' इति। पयांसि। 'पयस्+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने शौ कृते शस्येत्सञ्ज्ञायां लोपे च "शि सर्वनामस्थानम्" इति सर्वनामस्थानसञ्ज्ञायां "नपुंसकस्य झलचः" इति नुमि उमि गते मित्वादन्त्यादचः परे "सान्तमहतः संयोगस्य" इति सान्तसंयोगस्योपधायाः दीर्घत्वे अनुस्वारे परसवर्णे च जाते संयोगे च कृते 'पयांसि' इति। पयसा। 'पयस्+टा' अत्र टकारस्येत्सञ्ज्ञायां लोपे च कृते, कृते च संयोगे 'पयसा' इति। पयोभ्याम्। सस्य रुत्वे, "हशि च" इति रोरुत्वे, गुणे च रूपम्। सुपुम्। सु-शोभनः पुमान् यस्य गृहस्य इति बहुव्रीहौ, सुपुंस्शब्दात् स्वमोर्लुक्, संयोगान्तलोपः। सुपुंसी। 'सुपुंस्+औ' अत्र "नपुंसकाच्च" इति औस्थाने श्यादेशे शस्येत्सञ्ज्ञायां लोपे संयोगे च कृते 'सुपुंसी' इति। सुपुमांसि। 'सुपुंस्+जस्' अत्र "जश्शसोः शिः" इति जसः स्थाने शौ कृते शस्येत्सञ्ज्ञायाम्, लोपे च "शि सर्वनामस्थानम्" इति सर्वनामस्थानसञ्ज्ञायां "पुंसोऽसुङ्" इति असुङि, ङस्येत्सञ्ज्ञायां लोपे च उकारे गते "अनेकाल्शित्सर्वस्य" इति सर्वस्यादेशे प्राप्ते "ङिच्च" इत्यन्तादेशे जाते 'सुपुमस्+इ' इति जाते "नपुंसकस्य झलचः" इति नुमि, उमि गते, मित्वादन्त्यादचः परे "सान्त-

## ॥ अथाऽव्ययप्रकरणम् ॥

स्वरादिनिपातमव्ययम् १।१।३७। स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर् अन्तर् प्रातर् पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् पृथक् ह्यस् श्वस् दिवा रात्रौ सायं चिरम् मनाक् ईषत् जोषम् तूष्णीम् बहिस् अवस् समया निकषा स्वयम् वृथा नक्तम् नञ् हेतौ इद्धा अद्धा सामि वत्–ब्राह्मणवत् क्षत्रि-

---

महतः संयोगस्य" इति सान्तसंयोगगतस्य नान्तस्योपधाया दीर्घत्वे नस्यानुस्वारे च कृते 'सुपुंमांसि' इति रूपम् । अदः । अदस्शब्दात् स्वमोर्लुक्, रुत्वविसर्गौ, सान्तत्वात् न सुत्वम्, लुका लुप्तत्वात् त्यदाद्यत्वं नेति भावः । औङादावाह—विभक्तिकार्यमिति । त्यदाद्यत्वादिकमित्यर्थः । उत्वमत्वे । "पूर्वत्रासिद्धम्" इति विभक्तिकार्योत्तरम् उत्वमत्वे इत्यर्थः । अमू । 'अदस्+औ' इति स्थिते अत्र "त्यदादीनामः" इत्यत्वे "अतो गुणे" इति पररूपत्वे "नपुंसकाच्च" इति औस्थाने श्यादेशे शस्येत्सञ्ज्ञायां लोपे च "आद्गुणः" इति गुणे 'अदे' इति जाते "अदसोसेर्दादुदोमः" इति दात्परस्योत्वे दस्य च मत्वे 'अमू' इति । अमूनि । 'अदस्+जस्' अत्र त्यदाद्यत्वे पररूपत्वे "जश्शसोः शिः" इति श्यादेशे शस्येत्सञ्ज्ञायां लोपे च "शि सर्वनामस्थानम्" इति सर्वनामस्थानसञ्ज्ञायां "नपुंसकस्य झलचः" इति नुमि, उमि गते मित्वादन्त्यादचः परे "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तोपधाया दीर्घत्वे 'अदानि' इति जाते "अदसोसेर्दादुदोमः" इति दात्परस्याकारस्योत्वे दस्य च मत्वे 'अमूनि' इति रूपम् । शेषम् । अमुना, अमूभ्याम्, अमीभिः । इत्यादिः । पुंवदिति । पुँल्लिङ्गे यथोक्तं, तद्वदिति यावत् ।

इति हलन्तनपुंसकलिङ्गप्रकरणम् ।

स्वरादिनिपातमव्ययमिति । स्वर् आदिर्येषान्ते स्वरादयः, ते च ते निपाताश्चेति समाहारद्वन्द्वः । फलितमाह—स्वरादय इति । स्वरादीन् पठति—स्वरित्यादिना । स्वरादीनां चादीनां च पृथक्पाठस्तु "निपाता आद्युदात्ताः" इति स्वरभेदार्थः, चादीनामसत्त्ववाचिनामेवाऽव्ययत्वम् , स्वरादीनां तु सत्त्ववाचिनामसत्त्ववाचिनां च तदिति व्यवस्थार्थश्च । स्वर्—स्वर्गे—पारत्रिकसुखविशेषे, परलोके च । अन्तर्—मध्ये । प्रातर्—प्रत्यूषे । पुनर्—अप्रथमे विशेषे च । सनुतर्—अन्तर्धाने । स्वराद्याः पञ्च रेफान्ताः । तेन स्वर्याति प्रातरत्रेत्यादौ "हशि च" इत्युत्वं न । तत्र 'रोः' इत्युकारानुबन्धग्रहणात् । उच्चैस्—महति । नीचैस्—अल्पे । शनैस्—क्रियासामान्ये । ऋधक्—सत्ये । वियोगशैघ्र्यसामीप्यलाघवेष्वित्यन्ये । ऋते—वर्जने । युगपत्—एककाले । आरात्—दूरसमीपयोः । पृथक्—भिन्ने । ह्यस्—अतीतेऽह्नि । श्वस्—अनागतेऽह्नि । दिवा—दिवसे । रात्रौ—निशि । सायम्—निशामुखे । चिरम्—बहुकाले । मनाक् , ईषत्—इदं द्वयमल्पे । जोषम्—सुखे, मौने च । तूष्णीम्—मौने । बहिस् , अवस्—इदं द्वयं बाह्ये । समया—समीपे, मध्ये च । निकषा—अन्तिके । स्वयम्—आत्मनेत्यर्थे । वृथा—व्यर्थे ।

यवत् सना सनत् सनात् उपधा तिरस् अन्तरा अन्तरेण ज्योक् कम् शम् सहसा विना नाना स्वस्ति स्वधा अलम् वषट् श्रौषट् वौषट् अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मृषा मिथ्या मुधा पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकं सार्धम् नमस् हिरुक् धिक् अथ अम् आम् प्रताम् प्रशान् प्रतान् मा माङ् । आकृतिगणोऽयम् । च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् कूपत् सूपत् कुवित् नेत् चेत् चण् यत्र कच्चित् नह हन्त माकिः माकिम् नकिः

---

नक्तम्—रात्रौ । नञ्—निषेधे । "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः । इत्यन्ये । हेतौ—निमित्ते । इद्धा—प्राकाश्ये । अद्धा—स्फुटावधारणयोः । सामि—अर्द्धे, जुगुप्सिते च । वत्—तुल्ये । सना, सनत्, सनात्—एतत्त्रयं नित्ये । उपधा—भेदे । तिरस्—अन्तर्द्धौ, तिर्यगर्थे, पराभवे च । अन्तरा—मध्ये, विनार्थे च । अन्तरेण—वर्जने । ज्योक्—कालभूयस्त्वे, प्रश्ने, शीघ्रार्थे, सम्प्रति इत्यर्थे च । कम्—वारिमूर्द्धनिन्दासुखेषु । शम्—सुखे । सहसा—आकस्मिकाविमर्शयोः । विना—वर्जने । नाना—अनेकविनार्थयोः । स्वस्ति—मङ्गले । स्वधा—पितृहविर्दाने । अलम्—भूषणपर्याप्तिशक्तिवारणनिषेधेषु । वषट्, श्रौषट्, वौषट्—एतत्त्रयं देवहविर्दाने । अन्यत्—अन्यार्थे । अस्ति—सत्तायाम् । उपांशु—अप्रकाशोच्चारणे, रहस्ये च । क्षमा—क्षान्तौ । विहायसा—आकाशे । दोषा—रात्रौ । मृषा, मिथ्या—इदं द्वयं वितथे । मुधा—व्यर्थे । पुरा—अविरते, चिरातीते भविष्यदासन्ने च । मिथो, मिथस्—इदं द्वयं रहसि, सहार्थे च । प्रायस्—बाहुल्ये । मुहुस्—पुनरर्थे । प्रवाहुकम्—समकाले, ऊर्ध्वार्थे च । प्रवाहिका—इति पाठान्तरम् । आर्यहलम्—बलात्कारे । अभीक्ष्णम्—पौनःपुन्ये । साकं, सार्धम्—इदं द्वयं सहार्थे । नमस्—नतौ । हिरुक्—वर्जने । धिक्—निन्दाभर्त्सनयोः । अथ—आरम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । अम्—शैघ्र्ये, अल्पे च । आम्—अङ्गीकारे । प्रताम्—ग्लानौ । प्रशान्—समानार्थे । मा, माङ्—एतौ निषेधे । आकृतिगणोऽयमिति । ततश्च अन्येऽप्येवं जातीयकाः—कामम्—स्वाच्छन्द्ये । प्रकामम्—अतिशये । भूयस्—पुनरर्थे, इत्यादयो ज्ञेयाः । अथ चादीनाह—च, वा ह अह एव इत्यादिना । च—समुच्चयान्वाचयेतरेतरयोगसमाहारेषु । वा—विकल्पादिषु । 'वास्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये । ह—प्रसिद्धौ । अह—अद्भुते, खेदे च । एव—अवधारणे, अनवक्लृप्तौ च । एवम्—उक्तपरामर्षे । नूनम्—निश्चये, तर्के च । शश्वत्—पौनःपुन्ये,' नित्ये, सहार्थे च । युगपत्—एककाले । भूयस्—पुनरर्थे, आधिक्ये च । कूपत्—प्रश्ने प्रशंसायाञ्च । कुवित्—भूर्यर्थे प्रशंसायाञ्च । नेत्—शङ्कायां प्रतिषेधविचारसमुच्चयेषु च । चेत्—यद्यर्थे । चण्—अयं चेदर्थे णित्, समुच्चयादिष्वननुबन्धकः । स्वरे भेदः फलम् । कच्चित्—इष्टप्रश्ने । यत्र—अनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नह—प्रत्यारम्भे । हन्त—हर्षे, विषादेऽनुकम्पायां स्ववाक्यारम्भे च । माकिः,

नकिम् माङ् नञ् यावत् तावत् त्वै द्वै न्वै रै श्रौषट् वौषट् स्वाहा स्वधा वषट् तुम् तथाहि खलु किल अथो अथ सुष्ठु स्म आदह । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तम् अहंयुः अस्तिक्षीरा अ आ इ ई उ ऊ ए ऐ ओ औ पशु शुकम् यथाकथाच पाट् प्याट् अङ्ग है हे भोः अये द्य विषु एकपदे युत् आतः । चादिरप्याकृतिगणः । तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक्समासान्तेभ्यः । अम् आम् कृत्वोऽर्थाः तसिवती नानाञौ एतदन्तमप्यव्ययम् । अत इत्यादि ॥ कृन्मेजन्तः १।१।३९। कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारंस्मारम् ।

---

माकिम्, नकिः—इदं त्रयं वर्जने । माङ्—नञौ—स्वरादिपूक्तौ । यावत्, तावत्—इदं द्वयं ।साकल्यावधिमानावधारणेषु । त्वै—विशेषवितर्कयोः । ( न्वै—इति पाठान्तरम् ) । द्वै—वितर्के । रै—दाने अनादरे च । श्रौषट्, वौषट्, स्वाहा—इदं त्रयं देवहविर्दाने । स्वधा—पितृदाने । वषट् तुम्—तुङ्कारे । तथाहि—निदर्शने । खलु—निषेधवाक्यालङ्कारनिश्चयेषु । किल—इवार्थे, वार्तायाम्, अलीके च । अथ—अयं मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । सुष्ठु—स्वरभेदार्थः पुनः पाठः । स्म—अतीते, पादपूरणे च । आदह—उपक्रमहिंसाकुत्सनेषु । उपसर्गविभक्तिस्वरेति । चादिगणसूत्रमेतत् । उपसर्गप्रतिरूपकाः, विभक्त्यन्तप्रतिरूपकाः, अच्प्रतिरूपकाश्च, चादिगणे पाठ्या इत्यर्थः । अवदत्तम्—अत्र अवेत्युपसर्गरूपकं, नतूपसर्गः । तेन "अच उपसर्गात्तः" इति तो न । तस्मिन् सति 'अवत्तम्' स्यान्न तु 'अवदत्तम्' इति भावः । अहंयुः—अहमिति सुबन्तप्रतिरूपकम्, अहङ्कारे । अस्तिक्षीरा। अस्ति क्षीरं यस्याः इति बहुव्रीहिः । अत्र अस्तीति तिङन्तप्रतिरूपकमव्ययम्, न तु तिङन्तम् । स्वरप्रतिरूपकानुदाहरति—अ इत्यादिना । अ—सम्बोधने । आ—वाक्यस्मरणयोः । इ—सम्बोधनजुगुप्साविस्मयेषु । ई, उ, ऊ, ए, ऐ, ओ, औ—इति सप्तकं सम्बोधने । पशु—सम्यगर्थे । शुकम्—शैघ्र्ये । यथाकथाच—सङ्घातोऽयमनादरे । पाट्, प्याट्, अङ्ग, है, हे, भोः, अये—एते सप्त सम्बोधने । द्य—हिंसाप्रातिलोम्यपादपूरणेषु । विषु—नानार्थे । एकपदे—अकस्मादित्यर्थे । युत्—कुत्सायाम् । आतः—इतोऽर्थे । चादिरप्याकृतिगण इति । तेनाऽन्येऽपि—यत्, तत्—द्वयं हेतौ । आहोस्वित्—विकल्पे । सम्—सर्वतो भावे । इत्यादयो बोध्याः । तसिलादय इति । "पञ्चम्यास्तसिल्" इत्यारभ्य "द्वित्र्योश्च धमुञ्" इत्यन्ताः । शस्प्रभृतय इति । "बह्वल्पार्थात्" इत्यारभ्य "अव्यक्तानुकरणात्" इति डाजन्ता इत्यर्थः । अम्, आमिति । "अमु च च्छन्दसि" इत्यम्, "किमेत्तिङव्यय" इत्याम् च गृह्यते । कृत्वोऽर्था इति । "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" "द्वित्रिचतुर्भ्यःसुच्" "विभाषा बहोर्धा" इति त्रय इत्यर्थः । तसिवती इति । "तेनैकदिक्, तसिश्च" इति तसिः "तेन तुल्यम्" इति वतिश्च गृह्यते । नानाञाविति । "विनञ्भ्यां नानाञौ न सह" इति विहितौ नानाञौ । कृन्मेजन्त इति । कृत् मेजन्त इति च्छेदः । म

जीवसे । पिबध्यै । क्त्वातोसुन्कसुनः १।१।४०। एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः । अव्ययीभावश्च १।१।४१। अधिहरि । अव्ययादाप्सुपः २।४।८२। अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् । तत्र शालायाम् । सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ वगाहः, अवगाहः । पिधानम्-अपिधानम् । इत्यव्ययानि ।

## ॥ अथ तिङन्ते भ्वादिप्रकरणम् ॥

तत्र परस्मैपदिनः । लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् ।

---

च एच्च मेचौ तौ अन्ते यस्येति बहुव्रीहिः । तदाह—कृन्मे मान्त इति । स्मारंस्मारमिति । "आभीक्ष्ण्ये णमुल् च" इति स्मृधातोर्णमुल्, "अचोञ्णिति" इति वृद्धिः, रपरत्वम् । "नित्यवीप्सयोः" इति द्वित्वं मान्तकृदन्तत्वादव्ययत्वम् । जीवसे इति । "तुमर्थे सेसेनसे" इत्यादिना असेप्रत्ययः । पिबध्यै इति । "तुमर्थे से" इत्यादिना शध्यैप्रत्ययः । क्त्वातोसुन्कसुनः । कृत्वा । "समानकर्तृकयोः" इति क्त्वा । उदेतोः । उत्पूर्वादिणः "भावलक्षणे" इत्यादिना तोसुन् । विसृप इति । सृपितृदोः कसुन् । अव्ययीभावश्चेति । अव्ययसंज्ञः स्यादिति शेषः । अधिहरीति । विभक्त्यर्थेऽव्ययीभावः, हरावित्यर्थः । अव्ययादाप्सुपः । आप् च सुप् च आप्सुप् , तस्य आप्सुपः । समाहारद्वन्द्वात् षष्ठी । "ण्यक्षत्रियार्ष" इत्यतो लुगित्यनुवर्तते । तदाह—अव्ययाद्विहितस्येति । तत्र शालायामिति । तत्रेत्यस्याव्ययत्वात् आपो लुक् । स्त्रीत्वबोधनाय शालायामिति । तत्रेति । अत्र सुपो लुक् । ननु अव्ययानां लिङ्गाभावे 'सदृशं त्रिषु लिङ्गेषु' इत्याथर्वणश्रुतिविरोध इत्याशङ्क्य परिहरति—सदृशमिति । त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु, सर्वेषु वचनेषु च यत् न व्येति विकारं न प्राप्नोति किन्तु सदृशम् एकप्रकारमेव भवति तदव्ययम् इति आथर्वणश्रुतियोजना । अथप्रसङ्गादाह—वष्टीति । अव अपि इत्युपसर्गयोः अकारस्य लोपम् , हलन्तानाम् आपं च, भागुरिनामकआचार्यः, वष्टि–इच्छतीत्यर्थः । एवशब्दस्तु पादपूरणः । अवेत्युपसर्गे आदेरेवाकारस्य लोपः नान्त्यस्य, अपिना साहचर्यात् । वाचा निशा दिशेति । एतत्परिगणनमित्येके । अत एव हरिप्रभृतिषु न टाप् । अन्ये तु उदाहरणमात्रमिति वदन्ति । अत एव दिशा वाचा क्षुधा गिरा इति वर्धमानः, शरदेति श्रीपतिदत्तश्चोदाजहार । वगाह इति । एतदप्युदाहरणमात्रं न तु परिगणनम् । अत एव 'वलक्षो धवलोऽर्जुनः' इत्यादिसिद्धमिति दिक् । इति अव्ययप्रकरणम् ।

आदौ दशलकाराः प्रदर्श्यन्ते—लट्लिडित्यादिना । पञ्चम इति । लेडित्यर्थः । छन्दोमात्रेति ।"लिङर्थे लेट्" इत्यत्र "छन्दसि लुङ्लङ्लिटः" इति पूर्वसूत्रात् छन्दसीत्यनुवृत्तेरिति भावः । लः कर्मणि चेति । चकारेण "कर्तरि कृत्" इत्यतः कर्तरीत्यनुकृष्यते ।

लुङ् । लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः । **लः कर्मणि च भावे चाकर्मकेभ्यः ३।४।६९।** लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च । **वर्तमाने लट् ३।२।१२३।** वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । उच्चारणसामर्थ्याल्लस्य नेत्वम् । 'भू, सत्तायाम्' । कर्तृविवक्षायां भू ल् इति स्थिते । **तिप्तस्झिसिप्थस्थमिब्वस्मस्ताताञ्झथासाथान्ध्वमिड्वहिमहिङ् ३।४।७८।** एतेऽष्टादश लादेशाः स्युः । **लः परस्मैपदम् १।४।९९।** लादेशाः परस्मैपदसंज्ञाः स्युः । **तङानावात्मनेपदम् १।४।१००।** तङ्प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः । **अनुदात्तङित आत्मनेपदम् १।३।१२।** अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् । **स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२।** स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । **शेषात्कर्तरि परस्मैपदम् १।३।७८।** आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् । **तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १।४।१०१।** तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमा-

---

धातोरित्यधिकृतम् । लकाराः कर्मणि कर्तरि च धातोः स्युरिति लभ्यते । सकर्मकधातुविषयकमेवेदम् । अकर्मकेषु कर्मणीत्यस्य बाधितत्वात् । तदाह—लकाराः सकर्मकेभ्य इत्यादिना । वर्तमाने लडिति । "धातोः" इति सूत्रमातृतीयाध्यायसमाप्तेरधिकृतम् । वर्तमाने इति तत्रान्वेति । वर्तमानेऽर्थे विद्यमानाद्धातोः लडिति लभ्यते । फलितमाह—वर्तमानक्रियावृत्तेरिति । अटाविताविति । अकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेन, टकारस्य तु "हलन्त्यम्" इत्यनेनेति च भावः । तिप्तस् । तिप्, तस्, झि । सिप्, थस्, थ । मिप्, वस्, मस् । त, आताम्, झ । थास्, आथाम्, ध्वम् । इड्, वहि, महिङ् । एषां समाहारद्वन्द्वात्प्रथमैकवचनम् । "लस्य इति स्थानषष्ठ्यन्तमधिकृतम् । तेन आदेश इति लभ्यते । फलितमाह—एत इति । लः परस्मैपदमिति । लः इति स्थानषष्ठी । आदेश इत्यध्याहार्यम् । तदाह—लादेशा इति । तङानौ । तङ् च आनश्चेति द्वन्द्वः । प्रत्याहार इति । त आतामिति तशब्दमारभ्य महिङिति ङकारेणेति शेषः । पूर्वसंज्ञेति । परस्मैपदसंज्ञापवाद इत्यर्थः । अनुदात्तङित इति । अनुदात्तश्च ङ् च अनुदात्तङौ । तौ इतौ यस्य सः अनुदात्तङित् । तस्मात्—अनुदात्तङितः । द्वन्द्वान्ते श्रूयमाणस्येच्छब्दस्य प्रत्येकमन्वयः । "भूवादयो धातवः" इत्यतो धातवः इत्यनुवर्तते । तस्य पञ्चम्यन्तेनान्वयः । स्वरितञित इति । स्वरितश्च ञ् च स्वरितञौ तावितौ यस्य तस्मादिति विग्रहः । इतः प्रत्येकं सम्बन्धः । शेषादिति । उक्तादन्यः शेषः, तस्मात् । "अनुदात्तङित" इति "स्वरितञित" इति चोक्तादात्मनेपदविषयादन्य इत्यर्थः । तिङस्त्रीणि त्रीणीति । तिङः षट् त्रिकाः, संज्ञाश्च तिस्र इति यथासंख्यसम्भवादाह—तिङः उभयोरिति । "लः परस्मैपदम्" इत्यतः परस्मैपदमिति "तङानावात्मनेपदम्" इत्यत आत्मनेपदमिति चानुवृत्तं

देतत्संज्ञाः स्युः । **तान्येकवचनद्विवचनबहुवचनान्येकशः १।४।१०२।** लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः । **युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १।४।१०५।** तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमाने अप्रयुज्यमाने च मध्यमः स्यात् । **अस्मद्युत्तमः १।४।१०७।** तथाभूतेऽस्मद्युत्तमः । **शेषे प्रथमः १।४।१०८।** मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू-ति इति जाते । **तिङ्शित्सार्वधातुकम् ३।४।११३।** तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः । **कर्तरि शप् ३।१।६८।** कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् । **सार्वधातुकार्धधातुकयोः ७।३।८४।** अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः । **झोऽन्तः ७।१।३।** प्रत्ययावयवस्य झस्यान्तादेशः

---

पष्ठ्यन्ततया विपरिणम्यते । ततश्च परस्मैपदात्मनेपदयोरुभयोरपि प्रत्येकं त्रयस्त्रिकाः प्रथमादिसंज्ञाः क्रमेणेति फलितम् । तान्येक इति । तच्छब्देन पूर्वसूत्रोपात्तानि प्रथममध्यमोत्तमाख्यानि तिङस्त्रीणि त्रीणि परामृश्यन्ते । तदाह—लब्धप्रथमादिसंज्ञानीति । एकश इत्यस्य विवरणं प्रत्येकमिति । "संख्यैकवचनाच्च वीप्सायाम्" इति शसिति भावः । युष्मदि । समानाधिकरणे इत्यस्य व्याख्यानं तिङ्वाच्यकारकवाचिनीति । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । स्थानिन्यपि । स्थानम्—प्रसङ्गः । सोऽस्यास्तीति स्थानी, तस्मिन्निति विग्रहः । स्थानिपदस्य अप्रयुज्यमाने वैयाकरणनिकाये रूढिः । अपिना प्रयुज्यमान इति लभ्यते । तथाच तिङ्वाच्यम्—तिङर्थः, यत् कारकम्—कर्ता, कर्म च, तद्वाचके युष्मच्छब्देऽप्रयुज्यमाने प्रयुज्यमाने च मध्यमः पुरुष इति निष्कृष्टोऽर्थः । तथाभूते इति । तिङ्वाच्यकारकवाचिनि अस्मदि अप्रयुज्यमाने प्रयुज्यमाने च उत्तमः पुरुष इत्यर्थः । शेषे प्रथम इति । उक्तान्मध्यमोत्तमविषयादन्यः शेषः । तदाह—मध्ययोत्तमयोरविषय इत्यादिना । तिङ्शित् । । धातोरित्यधिक्रियते । तेन हरीनित्यादौ शसः सार्वधातुकत्वात् "सार्वधातुकमपित्" इति तस्य ङित्वेन "घ्क्ङिति" गुणो न । कर्तरि शबिति । अत्र "सार्वधातुके यक्" इत्यतः सार्वधातुके इति "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यतो धातोरिति चानुवर्तते । सार्वधात्विति । "इको गुणवृद्धी" इति परिभाषया इक इत्युपतिष्ठते । अङ्गस्येत्यधिक्रियते । तदन्तविधिः । भवति । भूसत्तायां धातुः । अयमकर्मकः । तस्मात् "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्तरि 'खले कपोतन्यायेन' दशापि लकाराः प्राप्ताः, एषां मध्यात्केनात्र भाव्यम् । "वर्तमाने लट्" इत्यनेनात्र भूधातोर्वर्तमानक्रियावृत्तित्वाल्लटि सञ्जाते, 'भू लट्' इति स्थिते "हलन्त्यम्" इति टस्येत्संज्ञायां "तस्य लोपः" इति लोपे "उपदेशेऽजनुनासिक इत्" इति लकारोत्तरवर्तिन अकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे 'भू ल्' इति जाते "लस्य" इत्यधिकृत्य "तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझ-

स्यात्। "अतो गुणे"। भवन्ति। भवसि। भवथः। भवथ। अतो दीर्घो यञि

थासाथांध्वमिड्वहिमहिङ्" इत्येतेऽष्टादश लादेशाः प्राप्ताः। "लः परस्मैपदम्" इत्यष्टादशानामप्येषां परस्मैपदसंज्ञा संजाता, "तङानावात्मनेपदम्" इति तङ्प्रत्याहारान्तःपातिनां नवानामात्मनेपदसंज्ञा संजाता, एवं तिबादयः परस्मैपदसंज्ञाः, तादयश्चात्मनेपदसंज्ञाः, एषां मध्यादत्र परस्मैपदसञ्ज्ञिनः प्रत्ययाः स्युः, किमुतात्मनेपदसञ्ज्ञिनः?। इत्याकाङ्क्षायां "शेषात्कर्तरि परस्मैपदम्" इत्यनेनास्य भूधातोरात्मनेपदनिमित्तहीनत्वात्कर्तरि परस्मैपदं प्राप्तम्, परस्मैपदसञ्ज्ञिनां नवानां मध्यात्कतमेन भाव्यमित्याकाङ्क्षायाम् "तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः" इत्यनेन क्रमात् त्रयाणां त्रिकाणां प्रथममध्यमोत्तमसञ्ज्ञासु जातासु च लब्धप्रथमादिसञ्ज्ञानां तिङ्त्रयाणां वचनानां प्रत्येकमेकवचनद्विवचनबहुवचनसञ्ज्ञासु अत्र प्रथमेन भाव्यम्, उत मध्यमेन, उत उत्तमेन, इति शङ्कायाम् "शेषे प्रथमः" इति प्रथमपुरुषो भवितुं युक्तस्तथापि त्रीणि वचनानि, एषां मध्यात् कतमेन भाव्यमित्याकाङ्क्षायां "द्व्येकयोर्द्विवचनैकवचने" इत्यनेनात्रैकवचनस्य विवक्षायां प्रथमपुरुषे तिपि जाते पकारस्येत्सञ्ज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति तिपः सार्वधातुकसञ्ज्ञायां 'भू ति' इति दशायां "सार्वधातुकार्धधातुकयोः" इति गुणे प्राप्ते "भूसुवोस्तिङि" इति गुणनिषेधे "कर्तरि शप्" इति शपि शकारपकारयोरित्सञ्ज्ञायां लोपे च शित्वात् "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसञ्ज्ञायां "सार्वधातुकार्धधातुकयोः" इति भुव ऊकारस्य गुणे—ओकारे जाते "एचोऽयवायावः" इति अवादेशे संयोगे च कृते 'भवति' इति रूपम्। भवतः। भूधातोर्लटि, अकारटकारयोरित्सञ्ज्ञायां लोपे च लः स्थाने प्रथमपुरुषद्विवचनविवक्षायां तसि कृते 'भू+तस्' इति जाते "तिङ्शित्सार्वधातुकम्" इति तसः सार्वधातुकत्वे "कर्तरि शप्" इति शपि शकारपकारयोरित्सञ्ज्ञायां लोपे च 'भू+अ+तस्' इति जाते शित्वात् शपोऽकारस्य सार्वधातुकसञ्ज्ञायां "सार्वधातुकार्धधातुकयोः" इति गुणे विहिते "एचोऽयवायावः" इत्यवादेशे कृते च संयोगे 'भव+तस्' इति जाते "ससजुषोरुः" इति सस्य रुत्वे उकारस्येत्सञ्ज्ञायां लोपे च रेफस्य "खरवसानयोर्विसर्जनीयः" इति विसर्गे 'भवतः' इति रूपम्। झोऽन्त इति। आदेशे तकारे अकार उच्चारणार्थः। एकदेशे स्वरितत्वप्रतिज्ञानात् "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यतोऽवयवषष्ठ्यन्तं प्रत्ययग्रहणमनुवर्तत इति भावः। भवन्ति। भूधातोर्लटि तत्स्थाने प्रथमपुरुषबहुवचनविवक्षायां झौ प्रत्यये कृते झःस्थाने "झोऽन्तः" इत्यन्तादेशे 'भू+अन्ति' इति जाते "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसञ्ज्ञायां "कर्तरि शप्" इति शपि, शकारपकारयोरित्सञ्ज्ञायां लोपे च शित्वात्सार्वधातुकसंज्ञायां "सार्वधातुकार्धधातुकयोः" इति भुव ऊकारस्य गुणे "एचोऽयवायावः" इत्यवादेशे 'भव् अ अन्ति' इति जाते "अतो गुणे" इति पररूपत्वे संयोगे च कृते 'भवन्ति' इति सिद्धम्। भवसि। भूधातोः "वर्तमाने लट्" इति लटि, अकारटकारयोरित्स-

७।३।१०१। अदन्ताऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे। भवामि। भवावः। भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः। **परोक्षे लिट् ३।२।११५।** भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात्। लस्य तिवादयः। **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३।४।८२।** लिटस्तिवादीनां नवानां णलादयो नव स्युः। भू-अ इति स्थिते। **भुवो वुग्लुङ्लिटोः ६।४।८८।** भुवो वुगागमः स्यात् लुङ्लिटोरचि। **लिटि धातोरनभ्यासस्य ६।१।८।** लिटि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य। भूव् भूव् अ इति स्थिते। **पूर्वोऽभ्यासः ६।१।४।** अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात्। **हलादिः शेषः**

---

ज्ञायां लोपे च लः स्थाने मध्यमपुरुषैकवचनविवक्षायां सिपि पकारस्येत्संज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "सार्वधातुकार्धधातुकयोः" इति गुणे अवादेशे संयोगे च कृते 'भवसि' इति सिद्धम्। भवथः। भूधातोर्लटि, लटो लःस्थाने थसि शपि गुणेऽवादेशे रुत्वे विसर्गे च तत्सिद्धिः। भवथ। मध्यमपुरुषबहुवचने थादेशे शपि गुणे अवादेशे च रूपम्। अतो दीर्घ इति। "अङ्गस्य" इत्यधिक्रियते। तस्य अत इति विशेषणम्, तदन्तविधिः। तदाह—अदन्ताङ्गस्येति। "तुरुस्तुशम्यमः सार्वधातुके" इत्यतः 'सार्वधातुके' इत्यनुवर्तते तस्य यञीति विशेषणम्। तदादिविधिः। तदाह—यञादाविति। भवामि। भूधातोर्लटि, तत्स्थाने मिपि, पकारस्येत्संज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि, शकारपकारयोरित्सञ्ज्ञायां लोपे च, शित्वात् शपोऽकारस्यापि सार्वधातुकसंज्ञायां "सार्वधातुकार्धधातुकयोः" इति गुणे अवादेशे च कृते 'भव+मि' इति जाते तत्र "अतो दीर्घो यञि" इत्यदन्ताङ्गस्य दीर्घे 'भवामि' इति सिद्धम्। भवावः। भवामः। लः स्थाने वसि मसि वा, शपि, गुणे अवादेशे अतो दीर्घे रुत्वे विसर्गे च रूपे। अत्रोक्तां प्रथममध्यमोत्तमपुरुषव्यवस्थां स्मारयितुमाह—स भवतीत्यादि। परोक्षे लिट्। "अनद्यतने लङ्" इत्यस्मादनद्यतन इत्यनुवर्तते। "भूते" इत्यधिकृतम्। परोक्षत्वं धातोर्विशेषणम्। तदाह—भूतानद्यतनेत्यादिना। लस्य तिवादय इति। तिवादि नवकमित्यर्थः। परस्मैपदानामिति। अत्र "लिटस्तझयोरेशिरेच्" इत्यतो लिट इत्यनुवर्तते। णलादय इति। णल्, अतुस्, उस्, थल्, अथुस्, अ, णल्, व, म इत्येते नव यथासंख्यं स्युरित्यर्थः। भुवो वुगिति। "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यत अचीत्यनुवर्तते। लिटि धातोरिति। अत्र "एकाचो द्वे प्रथमस्य" "अजादेर्द्वितीयस्य" इति सूत्रद्वयमधिक्रियते। पूर्वोऽभ्यासः। अत्रेति। "एकाचो द्वे प्रथमस्य" इति षाष्ठद्वित्वप्रकरण इत्यर्थः। तेन "सर्वस्य द्वे" इत्यादिविहितस्य द्वित्वस्य न सङ्ग्रहः। हलादिः शेष इति। "अत्र लोपोऽभ्यासस्य"

७।४।६०। अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः । **ह्रस्वः** ७।४।५९। अभ्यासस्याचो ह्रस्वः स्यात् । **भवतेरः** ७।४।७३। भवतेरभ्यासस्योकारस्य अः स्याल्लिटि । **अभ्यासे चर्च** ८।४।५४। अभ्यासे झलां चरः स्युर्जशश्च । "झशां जशः खयां चरः" इति विवेकः । बभूव । बभूवतुः । बभूवुः । **लिट् च** ३।४।११५। लिडादेशस्तिङार्धधातुकसंज्ञः स्यात् । **आर्धधातुकस्येड्वलादेः** ७।२।३५। वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभू-

---

इत्यतोऽभ्यासस्येत्यनुवर्तते । ह्रस्व इति । "अत्र लोपोऽभ्यासस्य" इत्य तोऽभ्यासस्येत्यनुवर्तते । ह्रस्वग्रहणात् "अचश्च" इति परिभाषोपतिष्ठते । भवतेर इति । भवतेः अः इति छेदः । भवतेरिति श्तिपा निर्देशः । भूधातोरित्यर्थः । अभ्यासस्येत्यनुवर्तते । "व्यथो लिटि" इत्यतो लिटीत्यनुवर्तते । भूधातोरभ्यासस्य भवन्नकारः "अलोऽन्त्यस्य" इत्यन्त्यस्योकारस्य भवति । तदाह—अभ्यासोकारस्येति । अभ्यासे चर्चेति । अत्र "झलां जश् झशि" इत्यतो झलामिति चकारात् जश् इति चानुवर्तते । झशां जश इति । वर्गाणां तृतीयचतुर्थाः झशः, तेषां स्थाने जशः–जबगडदा इत्यर्थः । खयां चर इति । वर्गाणां प्रथमद्वितीयाः खयः, तेषां चरः–चटकपा इत्यर्थः । बभूव । भूधातोः "परोक्षे लिट्" इति लिटि, इकारटकारयोरित्संज्ञायां लोपे च लः स्थाने "तिप्तस्झि०" इत्यादिना प्रथमपुरुषैकवचनविवक्षायां तिपि, तत्स्थाने "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति णलि, णकारस्य "चुटू" इतीत्संज्ञायां, लस्य च "हलन्त्यम्" इतीत्संज्ञायां "तस्य लोप" इति तयोर्लोपे, नित्यत्वात् गुणवृद्धी बाधित्वा "भुवो वुग्लुङ्लिटोः" इति भूधातोः वुगागमेऽनुबन्धलोपे कित्वात् अन्त्यावयवे 'भूव्+अ' इति जाते तत्र "लिटि धातोरनभ्यासस्य" इति द्वित्वे 'भूव् भूव्+ अ' इति जाते "पूर्वोऽभ्यासः" इत्यनेन पूर्वस्य 'भूव्' इत्यस्याभ्याससंज्ञायां "हलादिः शेषः" इति वलोपे "ह्रस्वः" इति ह्रस्वे "भवतेरः" इति अभ्यासोकारस्य अकारे "अभ्यासे चर्च" इति अभ्याससंज्ञकस्य भस्य बकारे 'बभूव' इति रूपम् । बभूवतुः । लिटः तसो अतुसादेशे वुगादि पूर्ववत् । सकारस्य रुत्वविसर्गौ । बभूवुः । झेरुसादेशे वुगादि पूर्ववत् । लिट् चेति । लिङिति लुप्तस्थानपष्ठ्यन्तम् । "तिङ्शित्सार्वधातुकम्" इत्यस्मात् तिङित्यनुवर्तते । "आर्धधातुकं शेषः" इत्यस्यादार्धधातुकमिति, तदाह–लिडादेशस्तिङिति । आर्धधातुकस्येडिति । "नेड्वशिकृति" इत्यस्मात् इडित्यनुवर्तमाने पुनरिड्ग्रहणं निषेधसम्बद्धस्येडो निवृत्त्यर्थम् । बभूविथ । भूधातोः "परोक्षे लिट्" इति लिटि अनुबन्धलोपे तत्स्थाने मध्यमपुरुषैकवचनविवक्षायां सिपि, तस्य "लिट् च" इत्यार्धधातुकसंज्ञायां "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति सिपः स्थाने थलादेशे लस्येत्संज्ञायां लोपे च "आर्धधातुकस्येड्वलादेः" इति थस्य इडागमेऽनुबन्धलोपे "भुवो वुग् लुङ्लिटोः" इति वुगागमे कस्येत्संज्ञायां लोपे च कित्वादन्त्यावयवे जाते "लिटि धातोरनभ्यासस्य" इति भूव् इत्यस्य द्वित्वे

विव । बभूविम । **अनद्यतने लुट् ३।३।१५।** भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् । **स्यतासी लृलुटोः ३।१।३३।** धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः । शवाद्यपवादः । लृ इति लृङ्लृटोर्ग्रहणम् । **आर्धधातुकं शेषः ३।४।११४।** तिङ्-शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् । **लुटः प्रथमस्य डारौरसः २।४।८५।** डारौरस् एते क्रमात्स्युः । डित्वसामर्थ्यादभस्यापि टेर्लोपः । भविता । **तासस्त्योर्लोपः ७।४।५०।** तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे ।

---

"पूर्वोऽभ्यासः" इत्यभ्याससंज्ञायां "ह्रस्वः" इति ह्रस्वे "भवतेरः" इत्यभ्यासोकार-स्याकारे "अभ्यासे चर्च" इति जश्त्वेन बकारे 'बभूविथ' इति रूपम् । बभूवथुः । लिटस्थस्य-अथुसादेशे वुगादि पूर्ववत् । बभूव । ननु थस्य स्थाने 'अ' आदेशे प्राप्ते "अलोन्त्यस्य" इत्यन्त्यस्य स्यादिति चेद् ? न, द्वयोरकारयोः पररूपेण अ इति सूत्रे निर्देशादनेकाल्त्वात् । वुगादिपूर्ववत् । बभूव । मिपो णलि वुगादि पूर्ववत् । बभूविव । वसो वादेशे वलादित्वादिडागमे वुगादि पूर्ववत् । नचात्र "श्र्युकः क्किति" इतीडागमनिषेधः शङ्क्यः । "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" इति क्रादिनियमादिट्सिद्धेः । बभूविम । मसो मादेशे इडागमे वुगादि पूर्ववत् । अनद्यतने लुट् । "धातोः" इत्यधि-क्रियते । "भविष्यति गम्यादयः" इत्यतो भविष्यतीत्यनुवर्तते । स्यतासी लृ । स्यश्च तासिश्चेति द्वन्द्वात् प्रथमाद्विवचनम् । तासेरिकार उच्चारणार्थः । लृ लुट् अनयोर्द्व-न्द्वात् सप्तमीद्विवचनम् । ग्रहणमिति । लृस्वरूपस्योभयत्राविशिष्टत्वादिति भावः । आर्ध-धातुकमिति । "तिङ्शित्सार्वधातुकम्" इति पूर्वसूत्रोपात्ततिङ्शिद्भ्योऽन्यः शेषः । तदाह-तिङ्शिद्भ्योऽन्य इति । विहित इति । धातोरित्यधिकृतं विहितविशेषणमाश्रीयत इति भावः । इडिति । तास्प्रत्ययस्योक्तसूत्रेणार्धधातुकत्वात् स्वतो वलादित्वाच्च "आर्ध-धातुकस्येड्वलादेः" इतीडागम इत्यर्थः । लुटः प्रथमस्येति । डा रौ रस् एषां द्वन्द्वात् प्रथमाबहुवचनम् । लुट इति स्थानषष्ठी लुडादेशस्य प्रथमपुरुषस्येत्यर्थः । भविता । भूधातोः "अनद्यतने लुट्" इति लुटि तस्य स्थाने प्रथमपुरुषस्यैकवचनविवक्षायां तिप्प्रत्यये पकारस्येत्सञ्ज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकस-ञ्ज्ञायां "कर्तरि शप्" इति शपि प्राप्ते तं प्रबाध्य "स्यतासी लृलुटोः" इति तास् प्रत्यये कृते "आर्धधातुकं शेषः" इति तास आर्धधातुकसञ्ज्ञायाम् "आर्धधातुकस्येड् वलादेः" इति इडागमे अनुबन्धलोपे टित्वात्तास आद्यावयवे जाते 'भू इ तास् ति' इति स्थिते "सार्वधातुकार्धधातुकयोः" इति गुणे अवादेशे "लुटः प्रथमस्य डारौरसः" इति तिपो डादेशेऽनुबन्धलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'भविता' इति रूपम् । तास-स्त्योरिति । तास् च अस्तिश्चेति द्वन्द्वात् षष्ठी । "सः स्यार्धधातुके" इत्यतः 'सि' इत्य-नुवर्तते । "अङ्गस्य" इत्यधिकारादाक्षिप्तप्रत्ययस्य 'सि' इति विशेषणम् । तदादिविधिः

रिच ७।४।५१। रादौ प्रत्यये तथा। भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः। लृट् शेषे च ३।३।१३। भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायां सत्यामसत्यां च। स्यः। इट्। भवि-

---

तदाह—तासेरित्यादि। रि चेति। "तासस्त्योर्लोपः" इति सूत्रमस्तिवर्जमनुवर्तते। रि इत्यनेनाङ्गाक्षिप्तप्रत्ययस्य विशेषणात्तदादिविधिस्तदाह—रादाविति। भवितारौ। भूधातोः "अनद्यतने लुट्" इति लुटि, अनुबन्धलोपे लः स्थाने "तिप्तस्झिसिप्थस्थ" इत्यादिना प्रथमपुरुषद्विवचनविवक्षायां तसि प्रत्यये "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसञ्ज्ञायां "कर्तरि शप्" इति प्राप्तं शपं बाधित्वा "स्यतासी लृलुटोः" इति तासप्रत्यये तस्य "आर्धधातुकं शेषः" इत्यार्धधातुकसञ्ज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति तास इडागमेऽनुबन्धलोपे टित्वादाद्यवयवे जाते "सार्वधातुकार्धधातुकयोः" इति गुणे "एचोऽयवायावः" इत्यवादेशे "लुटः प्रथमस्य डारौरसः" इति तसः रौ आदेशे "रि च" इति तासः सलोपे 'भवितारौ' इति रूपम्। भवितारः। भूधातोर्लुटि, अनुबन्धलोपे लः स्थाने प्रथमपुरुषबहुवचनविवक्षायां झौ कृते तत्स्थाने "लुटः प्रथमस्य डारौरसः" इति रसादेशे सार्वधातुकसञ्ज्ञायां शपं बाधित्वा तासि कृते तस्यार्धधातुकसञ्ज्ञायाम् इडागमे, गुणे, अवादेशे च 'भवितास्+रस्' इति जाते "रि च" इति तासः सलोपे रसः सस्य रुत्वे विसर्गे च 'भवितारः' इति रूपम्। भवितासि। भूधातोर्लुटि तस्य स्थाने सिपि, पस्येत्सञ्ज्ञायां लोपे च शपं बाधित्वा तासि कृते आर्धधातुकत्वे इडागमे गुणेऽवादेशे "तासस्त्योर्लोपः" इति तासः सस्य लोपे 'भवितासि' इति। भवितास्थः। भूधातोर्मध्यमपुरुषद्विवचने लः स्थाने थसि तासि इडागमे गुणे अवादेशे थसः सस्य रुत्वविसर्गयोः रूपम्। भवितास्थ। बहुवचने थे तासि इटि गुणावादेशौ। भवितास्मि। उत्तमपुरुषैकवचने मिपि, तासि इटि गुणावादेशौ। भवितास्वः। वसि तासि इटि गुणे अवादेशे च रुत्वविसर्गौ। भवितास्मः। भूधातोर्लुटि तत्स्थाने मसि तासि इटि, गुणे अवादेशे रुत्वविसर्गयोः 'भवितास्मः' इति रूपम्। लृट् शेषे चेति। "धातोः" इत्यधिक्रियते। "भविष्यति गम्यादयः" इत्यतो 'भविष्यति' इत्यनुवर्तते। "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्"इतिसूत्रोपात्तक्रियायां क्रियार्थायामित्यतो भिन्नः शेषः। क्रियायां क्रियार्थायाम् असत्यामिति लभ्यते। चकारात् क्रियायां क्रियार्थायां सत्यामित्यपि लभ्यते, तदाह—क्रियार्थायां क्रियायामसत्यां सत्याञ्चेति। भविष्यति। भूधातोः "लृट् शेषे च" इति लृटि ऋकारटकारयोरित्सञ्ज्ञायां लोपे च लः स्थाने "तिप्तस्झि" इत्यादिना प्रथमपुरुषैकवचनविवक्षायां तिपि, पकारस्येत्सञ्ज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसञ्ज्ञायां "कर्तरि शप्" इति प्राप्तं शपं बाधित्वा "स्यतासी लृलुटोः" इति स्यप्रत्यये तस्य "आर्धधातुकं शेषः" इत्यार्धधातुकसञ्ज्ञायाम् "आर्धधातुकस्येड्वलादेः" इतीडागमेऽनुबन्धलोपे टित्वादाद्यवयवे जाते

ष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः । **लोट् च ३।३।१६२।** विध्याद्यर्थेषु धातोर्लोट् स्यात् । **आशिषि लिङ्लोटौ ३।३।१७३। एरुः ३।४।८६।** लोट इकारस्य उः स्यात् । भवतु । **तुह्योस्तातङाशिष्यन्यतरस्याम् ७।१।३५।** आशिषि तुह्योस्तातङ् वा

---

"सार्वधातुकार्धधातुकयोः" इतीगन्ताङ्गस्य 'भू' इत्यस्य गुणे "एचोऽयवायावः" इत्यवादेशे 'भव् इ स्य ति' इति जाते संयोगे च कृते "आदेशप्रत्यययोः" इति षत्वे 'भविष्यति' इति रूपम् । भविष्यतः । भूधातोर्लृटि अनुबन्धलोपे तत्स्थाने प्रथमपुरुषद्विवचने तसि, सार्वधातुकसञ्ज्ञायां शपं बाधित्वा "स्यतासी लृलुटोः" इति स्ये, तस्यार्धधातुकसञ्ज्ञायाम् इटि, अनुबन्धलोपे टित्वादाद्यावयवे जाते, गुणेऽवादेशे षत्वे तसः सकारस्य रुत्वे विसर्गे च 'भविष्यतः' इति रूपम् । भविष्यन्ति । भूधातोर्लृटि, झौ, सार्वधातुकसञ्ज्ञायां शपं बाधित्वा स्ये, आर्धधातुकसञ्ज्ञायाम् इटि गुणेऽवादेशे षत्वे च कृते 'भविष्य झि' इति स्थिते "झोऽन्तः" इति झः स्थानेऽन्तादेशे "अतो गुणे" इति पररूपे संयोगे च कृते 'भविष्यन्ति' इति रूपम् । भविष्यसि । भूधातोर्लृटि, अनुबन्धलोपे मध्यमपुरुषैकवचने सिपि कृते शपं बाधित्वा स्ये, इटि, गुणेऽवादेशे षत्वे च रूपम् । भविष्यथः । मध्यमपुरुषद्विवचने थसि, स्ये, इटि, गुणेऽवादेशे षत्वे चेति पूर्ववद्बोध्यम् । भविष्यथ । लृटि थे स्ये इटि गुणेऽवादेशे षत्वे च सति रूपम् । भविष्यामि । भूधातोर्लृटि अनुबन्धलोपे, तस्य स्थाने उत्तमपुरुषैकवचने मिपि, अनुबन्धलोपे, सार्वधातुकसञ्ज्ञायां शपं बाधित्वा "स्यतासी लृलुटोः" इति स्ये, तस्यार्धधातुकसञ्ज्ञायामिडागमे टस्येत्सञ्ज्ञायां लोपे च गुणेऽवादेशे षत्वे च जाते 'भविष्य मि' इति स्थिते "अतो दीर्घो यञि" इत्यदन्ताङ्गस्य दीर्घे 'भविष्यामि' इति रूपम् । भविष्यावः । लृटि, वसि, स्ये, इडागमे गुणेऽवादेशे षत्वे च जाते "अतो दीर्घो यञि" इत्यदन्ताङ्गस्य दीर्घे वसः सकारस्य रुत्वे विसर्गे च रूपम् । भविष्यामः । लृटि, मसि, स्ये इडागमे गुणेऽवादेशे षत्वे, अदन्ताङ्गस्य दीर्घे रुत्वे विसर्गे चेति पूर्ववद्बोध्यम् । लोट् चेति । "धातोः" इत्यधिक्रियते । "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" इति सूत्रं लिङ्वर्जमनुवर्तते । तदाह—विध्याद्यर्थेष्वित्यादिना । विध्यादिशब्दा अनुपदमेव लिङ्विधौ व्याख्यास्यन्ते । आशिषि लिङिति । आशिष्यपीत्यर्थः । आशासनमाशीः–इष्टप्राप्तीच्छा । एरुरिति । एः उः इतिच्छेदः । एरिति षष्ठ्यन्तम् । इवर्णस्येति लभ्यते । "लोटो लङ्वत्" इत्यतो लोट इत्यनुवर्तते । तदाह—लोट इकारस्येति । भवतु । सत्तार्थकभूधातोः "लोट् च" इति "आशिषि लिङ्लोटौ" इति वा लोटि, अनुबन्धलोपे च लस्थाने प्रथमपुरुषैकवचने तिपि, पकारस्येत्सञ्ज्ञायां लोपे च "तिङ्शित्सार्वधातुक"मिति सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि, शकारपकारयोरित्संज्ञायां लोपे च, शित्वात् "तिङ्शित्सार्वधातुकम्" इति शपोऽकारस्यापि सार्वधातुकसंज्ञायां "सार्वधातुकार्ध-

स्यात् । परत्वादनेकाल्त्वात्सर्वादेशः । भवतात् । **लोटो लङ्वत् ३।४।८५।** लोटो लङ इव कार्यं स्यात् । लोटस्तामादयः सलोपश्च । **तस्थस्थमिपां तान्तन्तामः ३।४।१०१।** ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् । भवन्तु । **सेर्ह्यपिच्च ३।४।८७।** लोटः सेर्हिः स्यात् सोऽपिच्च । **अतो हेः ६।४।१०५।** अतः परस्य हेर्लुक् स्यात् । भव-भवतात् । भवतम् । भवत । **मेर्निः ३।४।८९।** लोटो मेर्निः स्यात् । **आडुत्तमस्य पिच्च ३।४।९२।** लोडुत्तमस्याट् स्यात् स पिच्च । हिन्योरुत्वं न, 'इत्वोच्चारणसामर्थ्यात्' । भवानि । **ते प्राग्धातोः १।४।८०।** ते गत्युपसर्गसंज्ञका धातोः

---

धातुकयोः" इति गुणे "एचोऽयवायावः" इत्यवादेशे 'भवति' इति जाते "एरुः" इति तिप इकारस्य उत्वे 'भवतु' इति सिद्धम् । आशिषि तु "तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्" इति तुइत्यस्य सर्वस्य स्थाने पाक्षिकेऽनेकाल्त्वात्तातङादेशेऽनुबन्धलोपे 'भवतात्' इति भवति, तदभावे 'भवतु' इति च सिद्ध्यति । लोटो लङ्वदिति । लङः इव लङ्वत् । "तत्र तस्येव" इति षष्ठ्यन्ताद्वतिः । तेन तामादयस्सलोपश्चैव, न तु अडागम इति भावः । तस्थस्थमिपामिति । "नित्यं ङितः" इत्यतो ङित इत्यनुवर्तते । भवताम् । भूधातोः "लोट् च" इति लोटि, अनुबन्धलोपे तत्स्थाने प्रथमपुरुषद्विवचनविवक्षायां तसि, सार्वधातुकसंज्ञायां शपि, शकारपकारयोरित्संज्ञायां लोपे च शित्वात्सार्वधातुकत्वे गुणेऽवादेशे च 'भव तस्' इति जाते "लोटो लङ्वत्" इति लङ्कार्यातिदेशे सति तेन ङित्वात् तसः स्थाने "तस्थस्थमिपां तान्तन्तामः" इति तामादेशे च सति 'भवताम्' इति रूपम् । भवन्तु । भूधातोर्लोटि, तत्स्थाने झौ, "झोऽन्तः" इत्यन्तादेशे शपि, गुणेऽवादेशे 'एरुः' इति इकारस्योकारे 'भवन्तु' इति । सेर्ह्यपिच्चेति । हि इति लुप्तषष्ठ्यन्तम् । "लोटो लङ्वत्" इत्यतो लोट इत्यनुवर्तते । अतो हेरिति । अतः इति पञ्चमी, हेरिति षष्ठी । "चिणो लुक्" इत्यतो लुगित्यनुवर्तते । तदाह—अतः परस्येत्यादिना । भव, भवतात् । भूधातोर्लोटि, तत्स्थाने सिपि, सार्वधातुकसंज्ञायां शपि, अनुबन्धलोपे गुणेऽवादेशे 'भव सि' इति जाते तत्र "सेर्ह्यपिच्च" इति सेः स्थाने हौ कृते "तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्" इति हेस्तातङादेशेऽनुबन्धलोपे 'भवतात्' इति । तातङोऽभावपक्षे "अतो हेः" इति हेर्लुकि 'भव' इति च रूपम् । भवतम् । भूधातोर्लोटि, मध्यमपुरुषद्विवचने थसि, शपि, गुणेऽवादेशे "लोटो लङ्वत्" इति लङ्कार्यातिदेशेन ङित्वात् थसः स्थाने "तस्थस्थमिपां तान्तन्तामः" इति तमादेशे 'भवतम्' इति । भवत । भूधातोर्लोटि, थे शपि, गुणेऽवादेशे लङ्वद्भावे तादेशे च पूर्ववद्बोध्यम् । मेर्निरिति । "लोटो लङ्वत्" इत्यतो लोट इत्यनुवर्तते । तदाह—लोट इति । आडुत्तमस्येति । "लोटो लङ्वत्" इत्यतो लोट इत्यनुवर्तते । तदाह—लोडुत्तमस्येति । स्तवानि, स्तवाव, इत्यादौ "सार्वधातुकमपित्" इति ङित्वनिवृत्त्यर्थं पिदिति वचनम् । भवानि । भूधातोः "लोट् च" इति लोटि तत्स्थाने

प्रागेव प्रयोक्तव्याः। आनि लोट् ८।४।१६। उपसर्गस्थान्निमित्तात्परस्य लोडादेश-स्यानीत्यस्य नस्य णः स्यात्। प्रभवाणि। ( दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः ) दुःस्थितिः। दुर्भवानि। ( अन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ) अन्तर्भवाणि। नित्यं ङितः ३।४।९९। सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात्। "अलोऽन्त्यस्य" इति सलोपः। भवाव। भवाम। अनद्यतने लङ्

---

"तिप्तस्झि" इत्यादिना उत्तमपुरुषैकवचने मिपि, अनुबन्धलोपे तस्य सार्वधातुकत्वे शपि, अनुबन्धलोपे शित्वात्सार्वधातुकत्वे गुणेऽवादेशे 'भव+मि' इति जाते "लोटो लङ्वत्" इति लङ्कार्यातिदेशेन "तस्थस्थमिपां तान्तन्तामः" इति मिपोऽमादेशे प्राप्ते तं बाधित्वा "मेर्निः" इति मेर्न्यादेशे, इकारोच्चारणसामर्थ्यात् नेरिकारस्येत्वाभावे "आडुत्तमस्य पिच्च" इत्याडागमेऽनुबन्धलोपे 'भव आ नि' इति जाते "अकः सवर्णे दीर्घः" इति पूर्वपरयोः स्थाने दीर्घे 'भवानि' इति रूपम्। ते प्राग्धातोरिति। "उपसर्गाः क्रियायोगे" "गतिश्च" इत्यनयोः प्रकृतत्वात्तेपदेन गत्युपसर्गयोः परामर्शः। तदाह— गत्युपसर्गसंज्ञा इति। आनि लोडिति। लोडिति आनीति च लुप्तषष्ठीकं पदम्। "रषाभ्यां नो णः" इत्यनुवर्तते। "उपसर्गादसमासेऽपि" इत्यतः उपसर्गादिति च। तदाह— उपसर्गस्थान्निमित्तादिति। प्रभवाणि। भूधातोर्लोटि, तत्स्थाने मिपि शपि गुणेऽवा-देशे मेर्न्यादेशे आडागमे दीर्घे "ते प्राग्धातोः" इति सूत्रबलात्प्र इत्युपसर्गस्य पूर्व-मेव प्रयोगे "आनि लोट्" इति णत्वे च कृते तत्साधु। दुरः षत्वेति। षत्वणत्वयोः कर्तव्ययोः दुर उपसर्गत्वप्रतिषेध इत्यर्थः। दुःस्थितिः। अत्र "उपसर्गात्सुनोति" इति षत्वं न भवति। दुर्भवानि। अत्र "आनि लोट्" इति णत्वं न भवति। अन्तःशब्दस्येति। अङ्विधौ किविधौ णत्वे च कर्तव्ये अन्तर् इत्यस्य उपसर्गत्वमित्यर्थः। प्रादित्वाभावादप्राप्ते वचनम्। अङ उदाहरणम्—'अन्तर्धा' इति। "आतश्चोपसर्गे" इत्यङ् टाप्। किविधेरुदाहरणम्—'अन्तर्धिः' इति। "उपसर्गे घोः किः"। अन्तर्भवाणि। अन्तरुपपदाद् भूधातोर्लोटि, तत्स्थाने मिपि, शपि, गुणेऽवादेशे आटि दीर्घे "मेर्निः" इति मेर्न्यादेशे "अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्" इति अन्तरित्यस्यो-पसर्गत्वे "आनि लोट्" इति णत्वे 'अन्तर्भवाणि' इति रूपम्। नित्यं ङित इति। "स उत्तमस्य" इति सूत्रमनुवर्तते। स इति षष्ठ्यन्तम्, उत्तमस्य विशेषणम्। तदन्तविधिः "इतश्च लोपः परस्मैपदेषु" इत्यतो लोप इत्यनुवर्तते। तदाह—सकारान्तस्य ङिदुत्तम-स्येति। भवाव। भूधातोर्लोटि, तत्स्थाने वस्प्रत्यये शपि गुणेऽवादेशे "आडुत्तमस्य पिच्च" इत्याडागमेऽनुबन्धलोपे सवर्णदीर्घे "लोटो लङ्वत्" इति लङ्कार्यातिदेशेन ङित्वात् "नित्यं ङितः" इति सलोपे 'भवाव' इति रूपम्। भवाम। भूधातोर्लोटि, तत्स्थाने मस्प्रत्यये शपि गुणेऽवादेशे मस आडागमेऽनुबन्धलोपे सवर्णदीर्घे लङ्वदतिदेशेन ङित्वात् "नित्यं ङितः" इति सलोपे 'भवाम' इति रूपम्। अनद्यतने लङिति। "धातोः"

३।२।१११। अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात्। लुङ्लङ्लृङ्क्ष्वडुदात्तः ६।४।७१। एष्वङ्गस्याट् स्यात्स चोदात्तः। इतश्च ३।४।१००। ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः स्यात्। अभवत्। अभवताम्। अभवन्। अभवः। अभवतम्। अभवत। अभवम्। अभवाव। अभवाम। विधिनिमन्त्रणामन्त्रणाधीष्ट-

---

इति "भूते"इति चाधिक्रियेते। 'भूते'इति धात्वर्थेऽन्वेति। तदाह—अनद्यतनभूतार्थवृत्तेर्धातोरिति। अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितः कालोऽद्यतनस्तद्भिन्नोऽनद्यतनः। लुङ्लङिति। अत्र "अङ्गस्य"इत्यधिकारः। इतश्चेति। "लस्य" इत्यधिकृतस्य। "इतश्च लोपः परस्मैपदेषु" इत्यस्मात् लोप इति परस्मैपदेषु इति चानुवर्तते। परस्मैपदेषु इत्येतत् षष्ठ्या विपरिणम्यते। तदाह—ङितो लस्येत्यादिना। अभवत्। भूधातोः "अनद्यतने लङ्"इति लङि, ङस्य "हलन्त्यम्"इति लकारोत्तरवर्तिनोऽकारस्य च "उपदेशेऽजनुनासिक इत्" इतीत्संज्ञायां "तस्य लोपः" इति लोपे, लः स्थाने प्रथमपुरुषैकवचनविवक्षायां "तिप्तस्झि" इति तिपि, पस्येत्संज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्"इति तिपः सार्वधातुकसंज्ञायां "कर्तरि शप्"इति शपि, शकारपकारयोरित्संज्ञायां लोपे च तस्य शित्वात् "तिङ्शित्सार्वधातुकम्"इति सार्वधातुकसंज्ञायां "सार्वधातुकार्धधातुकयोः" इति भूधातोरुकारस्य गुणे ओकारे जाते "एचोऽयवायावः"इत्यवादेशे 'भवति' इति जाते "लुङ्लङ्लृङ्क्ष्वडुदात्तः"इत्यङ्गस्याडागमे टस्येत्संज्ञायां लोपे च "आद्यन्तौ टकितौ" इति टित्वादाद्यावयवे जाते "इतश्च" इति तिप इकारस्य लोपे "अभवत्"इति रूपं सिद्धम्। अभवताम्। भूधातोर्लङि, तत्स्थाने प्रथमपुरुषद्विवचने तसि समागते "लुङ्लङ्लृङ्क्ष्वडुदात्तः"इत्यङ्गस्य अटि, शपि, सार्वधातुकत्वे गुणेऽवादेशे च कृते "तस्थस्थमिपां तान्तन्तामः"इति तसः स्थाने तामि कृते 'अभवताम्'इति रूपम्। अभवन्। भूधातोर्लङि तस्य स्थाने झौ आदेशे झः स्थाने "झोऽन्तः"इत्यन्तादेशे तस्य "तिङ्शित्सार्वधातुकम्"इति सार्वधातुकसंज्ञायां तस्मिन्परे "कर्तरि शप्"इति शपि शप् इत्यनयोरित्संज्ञायां लोपे च शित्वात्सार्वधातुकसंज्ञायां "सार्वधातुकार्धधातुकयोः"इति गुणे "एचोऽयवायावः" इत्यवादेशे "अतो गुणे" इति पररूपे 'भवन्ति' इति जाते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे टस्येत्संज्ञायां लोपे च टित्वादाद्यावयवे जाते "इतश्च" इतीकारलोपे तकारस्य "संयोगान्तस्य लोपः" इति लोपे 'अभवन्' इति रूपम्। अभवः। लङि, तत्स्थाने मध्यमपुरुषैकवचने सिपि शपि, गुणेऽवादेशे अटि, इकारलोपे सस्य रुत्वे विसर्गे च रूपम्। अभवतम्। लङि, थसि, तत्स्थाने तमि, शपि गुणेऽवादेशेऽटि च पूर्ववत्। अभवत। भूधातोर्लङि मध्यमपुरुषबहुवचने थे तत्स्थाने ते, शपि गुणेऽवादेशेऽटि च पूर्ववत्। अभवम्। भूधातोर्लङि, उत्तमपुरुषैकवचने मिपि, तत्स्थाने अमि, शपि गुणेऽवादेशेऽडागमे च 'अभवम्' इति। अभवाव। अभवाम। लङो वसि, मसि अतो दीर्घे "नित्यं ङितः" इति सलोपे शेषं

**संप्रश्नप्रार्थनेषु लिङ् ३।३।१६१।** एष्वर्थेषु धातोर्लिङ् स्यात् । **यासुट् परस्मैपदेषूदात्तो ङिच्च ३।४।१०३।** लिङः परस्मैपदानां यासुडागमो ङिच्च । **लिङः सलोपोऽनन्त्यस्य ७।२।७९।** सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति प्राप्ते । **अतो येयः ७।२।८०।** अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् स्यात् । गुणः । **लोपो व्योर्वलि ६।१।६६।** वकारयकारयोर्लोपः स्याद्वलि । भवेत् । भवेताम् । **झेर्जुस् ३।४।१०८।** लिङो झेर्जुस् स्यात् । भवेयुः । भवेः । भवेतम् ।

---

पूर्ववत् । विधिनिमन्त्रणेत्यादि । "धातोः" इत्यधिक्रियते । विधिः, प्रेरणम्, भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणम्–नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणम्–कामचारानुज्ञा । अधीष्टः – सत्कारपूर्वको व्यापारः । इत्यादि । यासुडिति । "लिङः सीयुट्" इत्यतो लिङ इत्यनुवर्तते । लिङ इति पञ्चम्यर्थे षष्ठी । परस्मैपदेष्विति षष्ठ्यर्थे सप्तमी । तदाह – लिङः परस्मैपदानामिति । लिङः सलोप इति । स इति लुप्तषष्ठीकम् । "रुदादिभ्यः सार्वधातुके" इत्यतः सार्वधातुक इत्यनुवर्तते तस्य षष्ठ्यन्तेन विपरिणामः । तदाह—सार्वधातुकलिङ इत्यादिना । अतो येय इति । "रुदादिभ्यः सार्वधातुके" इत्यतः सार्वधातुके इत्यनुवर्त्य अवयवषष्ठ्यन्तेन विपरिणामः । अत इति पञ्चमी । परस्येत्यध्याह्रियते । यास इति लुप्तषष्ठीकम् । येय इत्यत्र यास् इय् इत्यत्र सन्धिरार्षः । इय इत्यत्र-अकार उच्चारणार्थः । तदाह—अतः परस्येत्यादिना । लोपो व्योरिति । वकारयकारयोर्लोपो वलि परे इत्यर्थः । भवेत् । भूधातोः "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" इति लिङि इकारङकारयोरित्संज्ञायां लोपे च लः स्थाने प्रथमपुरुषैकवचने तिपि, पस्येत्संज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि शकारपकारयोरित्संज्ञायां लोपे च शित्वात् "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "सार्वधातुकार्धधातुकयोः" इति गुणे "एचोऽयवायावः" इत्यवादेशे "इतश्च" इतीकारलोपे "यासुट्परस्मैपदेषूदात्तोङिच्च" इति यासुटि, अनुबन्धलोपे "लिङः सलोपोऽनन्त्यस्य" इति यासः सस्य लोपे प्राप्ते "अतो येयः" इति यासः स्थाने इयादेशे "आद्गुणः" इति गुणे 'भवेय् त्' इति जाते "लोपो व्योर्वलि" इति य्लोपे 'भवेत्' इति रूपं सिद्ध्यति । भवेताम् । भूधातोर्लिङि तस्य स्थाने प्रथमपुरुषद्विवचने तसि तत्स्थाने "तस्थस्थमिपां तान्तन्तामः" इति तसस्तामादेशे शपि, अनुबन्धलोपे गुणेऽवादेशे यासुटि, सलोपं बाधित्वा यास इयादेशे गुणे यलोपे "भवेताम्' इति रूपम् । झेर्जुसिति । अत्र "लिङः सीयुट्" इत्यतो लिङ इत्यनुवर्तते । भवेयुः । भूधातोर्लिङि तत्स्थाने झिप्रत्यये शपि, गुणेऽवादेशे "झोऽन्तः" इति झस्यान्तादेशे प्राप्ते तं बाधित्वा "झेर्जुस्" इति झेर्जुसादेशेऽनुबन्धलोपे "यासुट परस्मैपदेषूदात्तो ङिच्च" इति यासुटि अनुबन्धलोपे "लिङः सलोपोऽनन्त्यस्य" इति प्राप्तं सलोपं बाधित्वा "अतो येयः" इति यास इयादेशे कृते "आद्गुणः" इति गुणे

भवेत । भवेयम् । भवेव । भवेम । लिङाशिषि ३।४।११६। आशिषि लिङस्तिङ्-आर्धधातुकसंज्ञः स्यात् । किदाशिषि ३।४।१०४। आशिषि लिङो यासुट् कित् । "स्कोः संयोगाद्योः" इति सलोपः । ग्क्ङिति च १।१।५। गित्कित्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म । लुङ् ३।२।११०। भूतार्थे धातोर्लुङ् स्यात् । माङि लुङ् ३।३।१७५। सर्वलकारापवादः । स्मोत्तरे लङ् च ३।३।१७६। स्मोत्तरे माङि

---

सस्य रुत्वेऽनुबन्धलोपे रेफस्य विसर्गे च 'भवेयुः' इति रूपम् । भवेः । सिपि, शपि, गुणः । अवादेशः । "इतश्च" इतीकारलोपः । यासुडागमः । "अतो येयः" इति यासः स्थाने इयादेशे आद्गुणः, यलोपः । रुत्वविसर्गौ । एवं थसः तमादेशे थस्य तादेशे च 'भवेतम्' 'भवेत' इति च रूपे । भवेयम् । मिपि अमादेशः । शप्, गुणः अवादेशः । यासुट्, इयादेशः, आद्गुणः । भवेव । वस्, शप्, गुणावादेशौ । 'नित्यं ङितः" इति सकारलोपः । यासुट् । इयादेशः, आद्गुणः । यलोपः । एवं मसि-'भवेम' इति रूपम् । लिङाशिषि । अत्र लिङिति लुप्तषष्ठीकम् । "तिङ्शित्सार्वधातुकम्" इत्यतः तिङ इति "आर्धधातुकं शेषः" इत्यत आर्धधातुकमिति चानुवर्तते । किदाशिषि । "लिङः सीयुट्" इत्यतो लिङ इति "यासुट् परस्मैपदेषूदात्तो ङिच्च" इत्यतो यासुडिति चानुवर्तते । ग्क्ङिति चेति । गक्ङ् एषां समाहारद्वन्द्वः । तत् इत् यस्येति विग्रहः । "इको गुणवृद्धी" इति सूत्रमनुवर्तते । चकारः-इत्यर्थे । तेन इक इति उच्चार्य विहिते इति लभ्यते । "न धातुलोप आर्धधातुके" इत्यतो नेत्यनुवर्तते । तदाह—गित्कित्ङिन्निमित्त इत्यादिना । भूयात् । भूधातोः "आशिषि लिङ्लोटौ" इति लिङि, तत्स्थाने "तिप्तस्झि०" इत्यादिना तिपि "लिङाशिषि" इति तिप आर्धधातुकत्वात् शपोऽभावे, "इतश्च" इतीकारलोपे यासुटि "सुट् तिथोः" इति सुटि, अनुबन्धलोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे "क्ङिति च" इति गुणनिषेधे 'भूयात्' इति सिद्धम् । भूयास्ताम् । भूधातोराशिषि लिङस्तसस्तामादेशे "लिङाशिषि" इत्यार्धधातुकत्वात् शबभावे यासुटि सुटि "स्कोः संयोगाद्योरन्ते च" इति यासुटः सलोपे गुणनिषेधे च तत्सिद्धिः । भूयासुः । भूधातोराशिषि लिङ्, तत्स्थाने झौ आदेशे, तस्य स्थाने "झेर्जुस्" इति जुसि, शपोऽभावे, यासुटि, अनुबन्धलोपे रुत्वविसर्गयोः 'भूयासुः' इति रूपम् । भूयाः । भूधातोराशीर्लिङः सिपि "इतश्च" इतीकारलोपे यासुटि "स्कोः" इति सलोपे कित्वात् गुणनिषेधे रुत्वे विसर्गे च तत्सिद्धिः । भूयास्तम् । थसस्तमादेशे यासुटि गुणनिषेधः । एवं थस्य तादेशेऽपि 'भूयास्त' इति रूपम् । भूयासम् । मिपोऽमादेशे यासुटि गुणनिषेधः । भूयास्व । लिङो वस् "नित्यं ङितः" इति सकारलोपः । यासुट् । गुणनिषेधः । एवं मसि— 'भूयास्म' इति रूपम् । लुङिति । "धातोः" "भूते" इति चाधिक्रियते । ननु "लुङ्" इत्यनेनैव सिद्धेः किमर्थमिदमित्यत आह—सर्वलकारापवाद इति । स्मोत्तरे लङ् च ।

लङ् स्याच्चाल्लुङ्। **च्लि लुङि ३।१।४३।** शबाद्यपवादः। **च्लेः सिच् ३।१।४४।** इचावितौ। **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।७७।** एभ्यः सिचो लुक् स्यात्। गापाविहेणादेशपिबती गृह्येते। **भूसुवोस्तिङि ७।३।८८।** भूसू एतयोः सार्वधातुके तिङि परे गुणो न स्यात्। अभूत्। अभूताम्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम। **न माङ्योगे ६।४।७४।** अडाटौ न स्तः। मा भवान् भूत्। मास्म भवत्। मास्म भूत्। **लिङ्निमित्ते लृङ् क्रियाति-**

---

चकारात् "माङि लुङ्" इत्यनुकृष्यते। अयमपि सर्वलकारापवादो बोध्यः। शबाद्यपवाद इति। आदिना श्यनादिविकरणसङ्ग्रहः। च्लेः सिजिति। चित्त्वस्य चित्स्वरः प्रयोजनम्। इदित्त्वस्य तु 'अमंस्त' इत्यत्र "अनिदितां हल उपधायाः" इति उपधालोपस्याप्रवृत्तिः प्रयोजनम्। गातिस्थेति। गाति स्था घु पा भू एषां द्वन्द्वः। तस्मात्पञ्चमीबहुवचनम्। परस्येत्यध्याह्रियते। सिच इति षष्ठी। गातीति श्तिपा निर्देशात् गाधातोर्ग्रहणम्। 'घु' इत्यनेन "दाधाघ्वदाप्" इति घुसञ्ज्ञकयोः दाधातोः धाधातोश्च ग्रहणम्। "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" इत्यतो लुगित्यनुवर्तते। गापाविहेति। "गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्" इति भाष्यादित्यर्थः। भूसुवोस्तिङि। अत्र "मिदेर्गुणः" इत्यतो गुण इति "नाभ्यस्तस्याचि पिति सार्वधातुके" इत्यतो नेति सार्वधातुक इति चानुवर्तते। सू इत्यनेन षूङ् प्राणिगर्भविमोचने इत्यस्यैव ग्रहणन्तदाह—भूसू एतयोरित्यादिना। अभूत्। भूधातुतः "लुङ्" इति लुङि "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे लुङस्तिपि "च्लि लुङि" इति च्लौ जाते "च्लेः सिच्" इति सिचि इचावित्सञ्ज्ञकौ विधाय तयोर्लोपे 'अभू स् ति' इति जाते "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सलोपे "इतश्च" इतीकारलोपे "भूसुवोस्तिङि" इति गुणाभावे च 'अभूत्' इति रूपम्। अभूताम्। लुङस्तसि तामादेशः, च्लिः, सिच्। अट, गुणनिषेधः। सिचो लुक्। अभूवन्। भूधातोर्लुङि तस्य स्थाने झिप्रत्यये तस्मिन् परे च्लिप्रत्यये तस्य सिजादेशे तस्य लुकि अडागमे "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसि प्राप्ते "आतः" इति सूत्रनियमात् तदभावे "झोऽन्तः" इति झस्यान्तादेशे "इतश्च" इतीकारलोपे तकारस्य संयोगान्तलोपे "भुवो वुग्लुङ्लिटोः" इति वुगागमे अनुबन्धलोपे 'अभूवन्' इत्यस्य सिद्धिः। अभूः। लुङः सिप्, च्लिः, सिच्, तस्य लुक्, अडागमः इकारलोपः, रुत्वविसर्गौ च। अभूतम्। थसस्तम्, च्लिः, सिच्, लुक्, अट्, गुणनिषेधः। एवं थस्य तादेशे। 'अभूत' इति रूपम्। अभूवमिति। मिप्, अम्, च्लिः, सिच्, लुक्, अट्, वुक्। अभूव। वस्, च्लिः, सिच्, लुक्, अट्, "नित्यं ङितः" इति सकारलोपः गुणनिषेधः। एवं मसि 'अभूम' इति रूपम्। न माङ्योगे इति। "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यतोऽड् इति "आडजादीनाम्" इत्यतश्चाडिति चानुवर्तते, तदाह—अडाटौ न स्त इति। मा भवान् भूदिति। अत्र "न माङ्योगे" इत्यडभावः। एवमेव 'मा

पत्तौ ३।३।१३९। हेतुहेतुमद्भावादिलिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अतिपत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । 'सुवृष्टिश्चेद-भविष्यत्तदा सुभिक्षमभविष्यत्' इत्यादि ज्ञेयम् । अत सातत्यगमने ॥२॥ अतति । अत आदेः ७।४।७०। अभ्यासस्यादेरतो दीर्घः स्यात् । आत । आततुः । आतुः ।

---

स्म भवत्' इत्यत्र 'मा स्म भूत्' इत्यत्र च अडागमो न । लिङ्निमित्त इति । "हेतुहेतु-मतोर्लिङ्" "इच्छार्थेषु लिङ्लोटौ" इत्यादि लिङो निमित्तं तस्मिन् इति विग्रहः । क्रियाया अतिपत्तिः—अनिष्पत्तिः, असिद्धिरिति फलितम् । तस्यामिति विग्रहः । "भविष्यति मर्यादावचनेऽवरस्मिन्" इत्यतो भविष्यतीत्यनुवर्तते । तदाह—हेतुहेतुम-द्भावादित्यादिना । अभविष्यत् । भूधातुतः "लिङ्निमित्ते लृङ्क्रियातिपत्तौ" इति लृङि तत्स्थाने तिपि अनुबन्धलोपे "इतश्च" इतीकारलोपे शपं बाधित्वा "स्यतासी लृलुटोः" इति स्यप्रत्यये "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इती-डागमे गुणेऽवादेशे अडागमे "आदेशप्रत्यययोः" इति षत्वे "अभविष्यत्" इति रूपं सिद्धम् । अभविष्यताम् । भूधातोर्लृङस्तामादेशे स्यप्रत्यये इडागमे गुणेऽवादेशे षत्वे अडागमे च तत्सिद्धिः । अभविष्यन् । भूधातोर्लृङि तत्स्थाने झौ अडागमे स्ये इटि गुणेऽवादेशे "झोऽन्तः" इत्यन्तादेशे "इतश्च" इतीकारलोपे तकारस्य संयोगान्तलोपे षत्वे च तत्सिद्धिः । अभविष्यः । भूधातोर्लृङि सिपि अटि स्ये इटि गुणेऽवादेशे "इतश्च" इतीकारलोपे षत्वे रुत्वे विसर्गे च तत्सिद्धिः । अभविष्यतम् । भूधातोर्लृङि तत्स्थाने थसि तस्य तमादेशे स्ये अटि इटि गुणेऽवादेशे षत्वे च तत्सिद्धिः । एवं थस्य स्थाने तादेशे 'अभविष्यत' इति रूपम् । अभविष्यम् । लृङः स्थाने मिपि मिपोऽमादेशे "अमि पूर्वः" इति पूर्वरूपे षत्वे च तत्सिद्धिः । अभविष्याव । लृङः स्थाने वसि स्ये अटि इटि गुणेऽवादेशे "अतो दीर्घो यञि" इति दीर्घे "नित्यं ङितः" इति सलोपे "आदेशप्रत्यययोः" इति षत्वे च तत्सिद्धिः । एवं लृङो मसि 'अभविष्याम' इति बोध्यम् । सातत्यगमनम्—निरन्तरगमनम् । अतति । अत् धातोः "वर्तमाने लट्" इति लटि, प्रथमपुरुषैकवचनविवक्षायां "तिप्तस्झि०" इति तिपि, "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इति शपि 'श्प्' इत्यनयोरित्सञ्ज्ञायां लोपे च शित्वात् शपः सार्वधातुकसञ्ज्ञायां मिलित्वा 'अतति' इति रूपम् । अतति, अततः, अतन्ति । अतसि, अतथः, अतथ । अतामि, अतावः, अतामः । अत आदेरिति । अत्र "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येति "दीर्घ इणः किति" इत्यतो दीर्घ इति चानु-वर्तते । आत । अत्–धातोर्लिटि तस्य स्थाने तिपि "परस्मैपदानाम्" इत्यादिना तिपो णलादेशेऽनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इति अभ्याससञ्ज्ञायाम् "हलादिः शेषः" इति लोपे 'अ अत् अ' इति जाते अभ्यासस्य-

आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु । आडजादीनाम् ६।४।७२। अजादेरङ्गस्याट् स्यात् लुङ्लङ्लृङ्क्षु । आतत् । अतेत् । अत्यात् । अत्यास्ताम् । लुङि सिचि इडागमे कृते । अस्तिसिचोऽपृक्ते

---

दीर्घे सवर्णदीर्घे च तत्सिद्धिः । आततुः । लिटि, तसि, अतुसि, द्वित्वे, अभ्यासकार्ये, सवर्णदीर्घे, रुत्वविसर्गयोः रूपम् । एवं झौ तत्स्थाने उसि 'आतुः' इति रूपम्बोध्यम् । आतिथ । अत्धातुतो लिटः सिपि "परस्मैपदानाम्" इति सिपस्थलादेशे द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति लोपे पररूपं वाधित्वा "अत आदेः" इत्यभ्यासदीर्घे सवर्णदीर्घे च "लिट् च" इत्यनेन थल आर्धधातुकसञ्ज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति इडागमेऽनुवन्धलोपे 'आतिथ' इति रूपम् । एवम् आतथुः, आत। आत, आतिव, आतिम । इत्यत्र बोध्यम् । अतिता । अत्धातोः "अनद्यतने लुट्" इति लुटि, तत्स्थाने तिपि "स्यतासी लृलुटोः" इति तासि "आर्धधातुकं शेषः" इत्यार्धधातुकसञ्ज्ञायाम् "आर्धधातुकस्येड्वलादेः" इतीडागमे अनुवन्धलोपे "लुटः प्रथमस्य डारौरसः" इति तिपो डादेशेऽनुबन्धलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे च तत्सिद्धिः । एवम्-अतितारौ, अतितारः । अतितासि, अतितास्थः, अतितास्थ । अतितास्मि, अतितास्वः, अतितास्मः । अतिष्यति । अत्धातोर्लृटि लृटस्तिपि, "स्यतासी लृलुटोः" इति स्ये तस्यार्धधातुकसञ्ज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति इडागमे सस्य षत्वे च कृते 'अतिष्यति' इति रूपम् । एवम्—अतिष्यतः, अतिष्यन्ति । अतिष्यसि, अतिष्यथः, अतिष्यथ । अतिष्यामि, अतिष्यावः, अतिष्यामः । अततु । अत्धातोर्लोटि, लोटस्तिपि, "कर्तरि शप्" इति शपि, अनुवन्धलोपे "एरुः" इति इकारस्योत्वे च कृते 'अततु' इति रूपम् । एवम्—अततात्, अतताम्, अतन्तु, । अत—अततात्, अततम्, अतत । अतानि, अताव, अताम । आडजादीनामिति । "अङ्गस्य" इत्यधिक्रियते । "लुङ् लङ् लृङ् क्ष्वडुदात्तः" इत्यतो 'लुङ्लङ्लृङ्क्षु' इत्यनुवर्तते । आतत् । अत्धातोर्लङि तत्स्थाने तिपि, शपि, अनुवन्धलोपे अटं वाधित्वा "आडजादीनाम्" इत्याडागमे "आटश्च" इति वृद्धौ "इतश्च" इतीकारलोपे 'आतत्' इति सिद्धम् । एवम्-आतताम्, आतन् । आतः, आततम्, आतत । आतम्, आताव, आताम । अतेत् । अत् धातोर्लिङ्, लिङस्तिपि, शपि, अनुवन्धलोपे यासुडागमे उटि गते यास इयादेशे, गुणे, "लोपो व्योर्वलि" इति यलोपे तिप इकारस्य "इतश्च" इति लोपे 'अतेत्' इति रूपम् । एवम्—अतेताम्, अतेयुः । अतेः, अतेतम्, अतेत । अतेयम्, अतेव, अतेम । इत्यत्र बोध्यम् । अत्यात् । अत्धातोराशिषि लिङि, लिङस्तिपि, "लिङाशिषि" इत्यार्धधातुकत्वे शवभावे "यासुट् परस्मैपदेषु" इति यासुटि, उटि गते "इतश्च" इति तिप इकारस्य लोपे "सुट्तिथोः" इति तकारस्य सुडागमे उटोर्लोपे 'अत्यास् स् त्' इति जाते "स्कोः संयोगाद्योरन्ते च" इति सकारद्वयस्यापि निवृत्तौ, मिलित्वा 'अत्यात्' इति रूपम् ।

७।३।९६। विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात्। इट ईटि ८।२।२८। इटः परस्य सस्य लोपः स्यादीटि परे। ( सिज्लोप एकादेशे सिद्धो वाच्यः )। आतीत्। आतिष्टाम्। सिजभ्यस्तविदिभ्यश्च ३।४।१०९। सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् स्यात्। आतिषुः। आतीः। आतिष्टम्। आतिष्ट। आतिषम्–आतिष्व। आतिष्म। आतिष्यत्। षिध गत्याम् ॥ ३ ॥ ह्रस्वं

---

एवम्—अत्यास्ताम्, अत्यासुः। अत्याः, अत्यास्तम्, अत्यास्त। अत्यासम्, अत्यास्व, अत्यास्म, इत्यत्र बोध्यम्। अस्तिसिचोऽपृक्ते। सिच्च अस्चेति समाहारद्वन्द्वः। सिच्शब्दस्य सौत्रं अत्वम्। तेन पदत्वबाधात् कुत्वाभावः। ततो विद्यमानार्थकास्तीत्यव्ययेन कर्मधारयः। ततः पञ्चम्याः सौत्रो लुक्। "तस्मादित्युत्तरस्य" इति परिभाषया अस्तिसिचसः इति पञ्चमी अपृक्ते इति सप्तम्याः षष्ठीं प्रकल्पयति। "उतो वृद्धिर्लुकि हलि" इत्यतो हलीत्यनुवर्तते। तस्य षष्ठ्यन्तत्वेन विपरिणामः। "ब्रुव ईट" इत्यत ईडित्यनुवर्तते, तदाह—विद्यमानादित्यादिना। इट ईटीति। "संयोगान्तस्य लोपः" इत्यतो लोप इति "रात्सस्य" इत्यतः सस्येति चानुवर्तते। तदाह—सस्य लोप इति। आतीत्। अत्धातोर्लुङि, लुङस्तिपि, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि इचि गते 'अत्+स्+ति' इति जाते "आडजादीनाम्" इत्यादि "आटश्च" इति वृद्धौ, सिचः स आर्धधातुकसञ्ज्ञायाम् "आर्धधातुकस्येड्वलादेः" इतीडागमे 'आति+स्+ति' इति जाते "इतश्च" इति तिप इकारस्य लोपे 'तः' इत्यस्य "अपृक्त एकाल् प्रत्ययः" इत्यपृक्तसञ्ज्ञायाम् "अस्तिसिचोऽपृक्ते" इति ईडागमे 'आत् इ स् ई त्' इति जाते "इट ईटि" इति सलोपे, सलोपस्य त्रैपादिकत्वात् "पूर्वत्रासिद्धम्" इत्यसिद्धत्वेन दीर्घत्वाऽभावे प्राप्ते "सिज्लोप एकादेशे सिद्धो वाच्यः" इति सिज्लोपस्यासिद्धत्वाभावेन सवर्णदीर्घे 'आतीत्' इति रूपं सिद्धम्। आतिष्टाम्। अत्धातोर्लुङि, प्रथमपुरुषद्विवचने तसि, तसस्तामि, आटि वृद्धौ, च्लौ, च्लेः सिचि, इचोर्लोपे इटि सस्य षत्वे ।ष्टुत्वे च तत्सिद्धिः। सिजभ्यस्तेति। अत्र "झेर्जुस्" इति सूत्रम् "नित्यं ङितः" इत्यतो ङित इति चानुवर्तते। आतिषुः। अत्धातोर्लुङो झौ, च्लौ, तस्य सिचि, अनुबन्धलोपे इटि षत्वे "आडजादीनाम्" इत्यादि वृद्धौ "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसादेशेऽनुबन्धलोपे रुत्वे विसर्गे च तत्सिद्धिः। आतीः। लुङि, लः सिपि, च्लौ, सिचि, इटि, ईटि, सलोपे, सवर्णदीर्घे, आटि, वृद्धौ, "इतश्च" इति सिप इकारस्य लोपे रुत्वे, विसर्गे च तत्सिद्धिः। एवम्–आतिष्टम्, आतिष्ट। आतिषम्, आतिष्व, आतिष्म, इत्यत्र ज्ञेयम्। आतिष्यत्। अत्धातोर्लृङः प्रथमपुरुषैकवचने तिपि समागते, तस्य सार्वधातुकसञ्ज्ञायाम् शपि प्राप्ते तम्बाधित्वा "स्यतासी लृलुटोः" इति स्ये; आर्धधातुकसञ्ज्ञायां इडागमे, अङ्गस्य आडागमे वृद्धौ च, इकारलोपे सस्य षत्वे च कृते 'आतिष्यत्' इति रूपम्। एवमग्रेऽपि–आतिष्यताम्, आतिष्यन्। आतिष्यः, आतिष्यतम्, आतिष्यत। आतिष्यम्,

लघु १।४।१०। संयोगे गुरु १।४।११। संयोगे परे ह्रस्वं गुरु स्यात्। दीर्घं च १।४।१२। गुरु स्यात्। पुगन्तलघूपधस्य च ७।३।८६। पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात् सार्वधातुकार्धधातुकयोः। "धात्वादेः" इति सः। सेधति। षत्वम्। सिषेध। असंयोगाल्लिट् कित् १।२।५। असंयोगात्परोऽपित्लिट् कित् स्यात्। सिषिधतुः। सिषिधुः। सिषेधिथ। सिषिधथुः। सिषिध। सिषेध। सिषि-

---

आतिष्याव, आतिष्याम, इति बोध्यम्। पिध—गत्याम्। अच्परकषकारादित्वात् षोपदेशोऽयम्। तथाहि—'सेकसृप्सृस्तृसृजस्तृस्त्यान्ये दन्त्याजन्तसादयः। एकाचः षोपदेशाः ष्वष्क्स्विद्स्वद्स्वञ्जस्वपस्मिङः॥ १॥ इति दन्त्याजन्तषादयः एकाचः षोपदेशाः स्युरित्यन्वयः। दन्त्यश्च अच्च दन्त्याचौ, तौ अन्तौ—अव्यवहितपरौ यस्य सः दन्त्याजन्तः, तथाविधः पः—षकारः आदिर्येषां ते दन्त्याजन्तषादयः। दन्त्यपरकः अच्परकश्च यः षकारः, तदादय एकाचो धातवः षोपदेशा इति यावत्। अतिव्याप्तिदोषं परिहर्तुम्—सेकादिसप्तभिन्नत्वं लक्षणे निविष्टम्। अव्याप्तिदोषं परिहर्तुं ष्वष्कादीनां परिगणनम् इति दिक्। ह्रस्वं लघु। ह्रस्वं लघुसञ्ज्ञं स्यादित्यर्थः। संयोगे गुरु। अत्र ह्रस्वमित्यनुवर्तते। दीर्घं चेति। संयोगे इति नानुवर्तते। पुगन्तेति। "मिदेर्गुणः" इत्यतो गुण इत्यनुवर्तते। "अङ्गस्य" इत्यधिकृतमवयवषष्ठ्यन्ततयाऽऽश्रीयते। पुक् अन्तो यस्य तत्। लघ्वी उपधा यस्य तत्। पुगन्तं च लघूपधं चेति समाहारद्वन्द्वात् षष्ठी। "इको गुणवृद्धी" इति परिभाषया इक इति षष्ठ्यन्तं पदमुपतिष्ठते। तच्च स्थानषष्ठ्यन्तम्। तदाह—पुगन्तस्येत्यादिना। सेधति। षिध्धातोर्लटि, लटः स्थाने तिपि, सार्वधातुकसञ्ज्ञायां शपि, अनुबन्धलोपे शित्वात्सार्वधातुकसञ्ज्ञायां "धात्वादेः षः सः" इति षस्य सत्वे "पुगन्तलघूपधस्य च" इति लघूपधायाः गुणे मिलित्वा 'सेधति' इति रूपम्। एवम्—सेधतः, सेधन्ति। सेधसि, सेधथः, सेधथ। सेधामि, सेधावः, सेधामः। इत्यत्र बोध्यम्। सिषेध। षिध्धातोर्लिटि तत्स्थाने, तिपि, षस्य सत्वे, "लिट् च" इति तिप आर्धधातुकत्वेन शपोऽभावे, तिपः स्थाने "परस्मैपदानाम्०" इत्यादिना णलादेशेऽनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे अभ्याससञ्ज्ञायाम् अभ्यासकार्यं च कृते "पुगन्तलघूपधस्य च" इति लघूतधगुणे "आदेशप्रत्यययोः" इति षत्वे च 'सिषेध' इति रूपम्। असंयोगादिति। "सार्वधातुकमपित्" इत्यतोऽपिदित्यनुवर्तते। सिषिधतुः। षिध्धातोर्लिटस्तसि, षस्य सत्वे, "परस्मैपदानाम्०" इत्यादिना तसोऽतुसादेशे द्वित्वे, अभ्याससञ्ज्ञायाम् अभ्यासकार्ये च कृते "असंयोगाल्लिट् कित्" इति अतुसः कित्वे, "पुगन्त०" इति गुणे प्राप्ते "क्ङिति च" इति निषिद्धे, सस्य रुत्वे विसर्गे च तत्सिद्धिः। एवम् झौ उसि "सिषिधुः" इति बोध्यम्। सिषेधिथ। षिध्धातोर्लिटः सिपि, "धात्वादेः षः सः" इति षस्य सत्वे "परस्मैपदानाम्" इति सिपस्थलि द्वित्वेऽभ्यासकार्ये सस्य षत्वे "लिट् च" इत्यार्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इति थल इडागमे

धिव। सिषिधिम। सेधिता। सेधिष्यति। सेधतु। असेधत्। सेधेत्। सिध्यात्। असेधीत्। असेधिष्यत्। एवं चिती संज्ञाने ॥ ४ ॥ चेतति। चिचेत। चेतिता।

---

"पुगन्तलघूपधस्य च" इति गुणे 'सिषेधिथ' इति रूपम्। एवम्—थसि; तत्स्थाने अथुसि कृते 'सिषेधथुः' इति। एवं थस्य अ आदेशे 'सिषिध' इति च बोध्यम्। सेधिता। षिधूधातुतो लुटस्तिपि "धात्वादेः षः सः" इति षस्य सत्वे "स्यतासी लृलुटोः" इति तासि "आर्धधातुकं शेषः" इति तासेरार्धधातुकत्वे लघूपधगुणे "आर्धधातुकस्ये-ड्वलादेः" इतीटि "लुटः प्रथमस्य डारौरसः" इति तेर्डात्वे डस्येत्सञ्ज्ञायां लोपे च डित्त्वसामर्थ्यादभस्यापि टेर्लोपे 'सेधिता' इति सिद्धम्। एवमग्रेऽपि—सेधितारौ, सेधि-तारः। सेधितासि, सेधितास्थः, सेधितास्थ। सेधितास्मि, सेधितास्वः, सेधितास्मः, इति पूर्ववद् बोध्यम्। सेधिष्यति। षिधूधातोर्लृटि, तिपि, सार्वधातुकसञ्ज्ञायां शपि प्राप्ते तम्बाधित्वा "स्यतासी लृलुटोः" इति स्ये आर्धधातुकसञ्ज्ञायाम् इटि गुणे षत्वे च तत्सिद्धिः। अग्रे सेधिष्यतः, सेधिष्यन्ति। सेधिष्यसि, सेधिष्यथः,सेधिष्यथ। सेधि-ष्यामि, सेधिष्यावः, सेधिष्यामः। सेधतु। षिधूधातोर्लोटि, लोटस्तिपि, शपि, सार्वधा-तुकसञ्ज्ञायां गुणे षस्य सत्वे इकारस्योत्वे च तत्सिद्धिः। अग्रे—सेधताम्, सेधताम्, सेधन्तु। सेध, सेधतात्, सेधतम्, सेधत। सेधानि, सेधाव, सेधाम। असेधत्। षिधू-धातोर्लङि, लङस्तिपि, अटि, शपि, गुणे, षस्य सत्वे, "इतश्च" इतीकारलोपे च कृते 'असेधत्' इति सिद्धम्। अग्रे रूपाणि—असेधताम्, असेधन्। असेधः, असेधतम्, असेधत। असेधम्, असेधाव, असेधाम। सेधेत्। षिधूधातोर्लिङि, लिङस्तिपि, षस्य सत्वे शपि, अनुबन्धलोपे शित्त्वात्सार्वधातुकसंज्ञायां गुणे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुटि, उटि गते "अतो येयः" इति यास इयादेशे गुणे "लोपो व्योर्वलि" इति यलोपे "इतश्च" इति तिप इकारस्य लोपे 'सेधेत्' इति रूपम्। सेधेताम्, सेधेयुः। सेधेः, सेधेतम्, सेधेत। सेधेयम्, सेधेव, सेधेम। सिध्यात्। षिधूधातोरा-शिषि लिङि, लिङस्तिपि, अनुबन्धलोपे "लिङाशिषि" इति तिप आर्धधातुकत्वेन शपोऽभावे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुटि उटि गते "किदाशिषि" इति यासुटः कित्त्वे, कित्त्वाद् गुणाऽभावे "सुट् तिथोः" इति तकारस्य सुडागमे उटि गते "इतश्च" इतीकारलोपे "स्कोः संयोगाद्योरन्ते च" इति सकारद्वयस्य लोपे "धा-त्वादेः षः सः" इति षस्य सत्वे च विहिते 'सिध्यात्' इति रूपम्। द्विवचनादौ रूपा-णि—सिध्यास्ताम्, सिध्यासुः। सिध्याः, सिध्यास्तम्, सिध्यास्त। सिध्यासम्, सिध्यास्व, सिध्यास्म इति। असेधीत्। षिधूधातोर्लुङि, लुङस्तिपि, षस्य सत्वे अनुब-न्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा च्लौ, च्लेः सिचि, इचोरित्संज्ञायां लोपे च, स आर्धधातुकसंज्ञायाम् इटि, गुणे "इतश्च" इति तिप इकारस्य लोपे अपृक्त-संज्ञायाम् "अस्तिसिचोऽपृक्ते" इति ईटि, "इट ईटि" इति सलोपे तस्य "सिज्लोप

चेतिष्यति। चेततु। अचेतत्। चेतेत्। चित्यात्। अचेतीत्। अचेतिष्यत्। **शुच शोके ॥५॥** शोचति। शुशोच। शोचिता। शोचिष्यति। शोचतु। अशोचत्। शोचेत्। शुच्यात्। अशोचीत्। अशोचिष्यत्। **गद व्यक्तायां वाचि ॥६॥** गदति ॥ **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ८।४।१७।** उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्यात् गदादिषु परेषु।

---

एकादेशे सिद्धो वाच्यः" इति सिद्धत्वेन सवर्णदीर्घे अङ्गस्याडागमे 'असेधीत्' इति रूपम्। द्विवचनादौ-असेधिष्टाम्, असेधिषुः। असेधीः, असेधिष्टम्, असेधिष्ट। असेधिषम्, असेधिष्व, असेधिष्म। इति रूपाणि। असेधिष्यत्। षिधूधातोर्लृङि, लृङस्तिपि, षस्य सत्वे, अनुबन्धलोपे तिपः सार्वधातुकसंज्ञायां शपि प्राप्ते, तम्बाधित्वा "स्यतासी लृलुटोः" इति स्ये, तस्यार्धधातुकसंज्ञायाम्, इटि गुणे, अटि, षत्वे "इतश्च" इति तिप इकारस्य लोपे 'असेधिष्यत्' इति रूपम् सिद्धम्। एवम्—असेधिष्यताम्, असेधिष्यन्। असेधिष्यः, असेधिष्यतम्, असेधिष्यत। असेधिष्यम्, असेधिष्याव, असेधिष्याम। इति बोध्यम्। एवं चिती-संज्ञाने इति। चेतति, चेततः, चेतन्ति। चेतसि, चेतथः, चेतथ। चेतामि, चेतावः, चेतामः॥ लिटि—चिचेत, चिचिततुः, चिचितुः। चिचेतिथ। चिचितथुः, चिचित। चिचेत, चिचितिव, चिचितिम। लुटि—चेतिता, चेतितारौ, चेतितारः। चेतितासि, चेतितास्थः, चेतितास्थ। चेतितास्मि, चेतितास्वः, चेतितास्मः। लृटि—चेतिष्यति, चेतिष्यतः, चेतिष्यन्ति। चेतिष्यसि, चेतिष्यथः, चेतिष्यथ। चेतिष्यामि, चेतिष्यावः, चेतिष्यामः। लोटि—चेततु, चेततात्, चेतताम्, चेतन्तु। चेत, चेततात्, चेततम्, चेतत, चेतानि, चेताव, चेताम। लङि—अचेतत्, अचेतताम्, अचेतन्। अचेतः, अचेततम्, अचेतत। अचेतम्, अचेताव, अचेताम। विधिलिङि—चेतेत्, चेतेताम्, चेतेयुः। चेतेः, चेतेतम्, चेतेत। चेतेयम्, चेतेव, चेतेम। आशीर्लिङि—चित्यात्, चित्यास्ताम्, चित्यासुः। चित्याः, चित्यास्तम्, चित्यास्त, चित्यासम्, चित्यास्व, चित्यास्म। लुङि—अचेतीत्, अचेतिष्टाम्, अचेतिषुः। अचेतीः, अचेतिष्टम्, अचेतिष्ट। अचेतिषम्, अचेतिष्व, अचेतिष्म। लृङि—अचेतिष्यत्, अचेतिष्यताम्, अचेतिष्यन्। अचेतिष्यः, अचेतिष्यतम्, अचेतिष्यत। अचेतिष्यम्, अचेतिष्याव, अचेतिष्याम, अत्र सर्वत्र साधनन्तु पूर्ववत्। शुच—शोके इति। लटि—शोचति। लिटि—शुशोच, शुशुचतुः, शुशुचुः। शुशोचिथ, इत्यादि। लुटि—शोचिता, लृटि—शोचिष्यति। लोटि—शोचतु। लङि—अशोचत्। विधिलिङि—शोचेत्। आशिर्लिङि—शुच्यात्। लुङि—अशोचीत्। लृङि—अशोचिष्यत्। साधनं पूर्ववत्। गदति। गद्धातोर्लटि, लटस्तिपि, शपि, अनुबन्धलोपे च तत्सिद्धिः। अत्धातुवत्साधनं रूपाणि च। नेर्गदनदेति। अत्र "रषाभ्यान्नो णः समानपदे" इति "उपसर्गादसमासेऽपि णोपदेशस्य" इत्यत उपसर्गादिति चानुवर्तते।

प्रणिगदति। कुहोश्चुः ७।४।६२। अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात्॥ अत उपधायाः ७।२।११६। उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। जगाद। जगदतुः। जगदुः। जगदिथ। जगदथुः। जगद॥ णलुत्तमो वा ७।१।९१। उत्तमो णल्वा णित्स्यात्। जगाद-जगद। जगदिव। जगदिम। गदिता। गदिष्यति। गदतु। अगदत्। गदेत्। गद्यात्॥ अतो हलादेर्लघोः ७।२।७। हलादेर्लघोरकारस्य वृद्धिर्वा स्यादिडादौ परस्मैपदे सिचि। अगादीत्-अगदीत्। अगदि-

---

लक्षणया उपसर्गपदमत्र उपसर्गस्थपरम्। तदेतदाह—उपसर्गस्थादित्यादिना। प्रणिगदति। अत्र "नेर्गदनद" इत्यादिना प्रोपसर्गस्थरेफात्परस्य नेर्नकारस्य णत्वम्। कुहोश्चुरिति। अत्र "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येत्यनुवर्तते। अत उपधाया इति। "मृजेर्वृद्धिः" इत्यतो वृद्धिः, "अचो ञ्णिति" इत्यतो ञ्णिति इति चानुवर्तते। जगाद। गद्धातोर्लिटस्तिपि, "परस्मैपदानां णलतुसुस्थल०" इति तिपो णलि, अनुबन्धलोपे, "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति लोपे "कुहोश्चुः" इति अभ्यासगकारस्य चुत्वेन जकारे, जगद् अ इति स्थिते "अत उपधायाः" इति उपधाभूताकारस्य वृद्धौ 'जगाद' इति सिद्धम्। णलुत्तमो वा। अत्र "गोतो णित्" इत्यतो णिदित्यनुवर्तते। जगाद—जगद। गद्धातोर्लिटो मिपि "परस्मैपदानाम्" इति मिपो णलादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति लोपे "कुहोश्चुः" इति अभ्यासगकारस्य चुत्वेन जकारे 'जगद्+अ' इति स्थिते "णलुत्तमो वा" इति णलः पाक्षिके णित्वे "अत उपधायाः" इति वृद्धौ 'जगाद' इति, णित्वाभावपक्षे 'जगद' इति च सिद्धम्। गदिता। गद्धातोर्लुटस्तिपि "स्यतासी लृलुटोः" इति तासौ "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इटि, अनुबन्धलोपे "लुटः प्रथमस्य डारौरसः" इति तिपो डादेशे, डस्येत्संज्ञायां लोपे च डित्वसामर्थ्यादभस्यापि टेर्लोपे 'गदिता' इति। अग्रे-'गदितारौ, गदितारः' इत्यादि, 'अतितासि' इत्यादिवद्बोध्यम्। गदिष्यति। गद्धातोर्लृटि, तिपि, स्ये इटि षत्वे च तत्सिद्धिः। अग्रे-गदिष्यतः, इत्यादि, अतिष्यति इत्यादिवत्। गदतु। गद्धातोर्लोटि, लोटस्तिपि, शपि "एरुः" इतीकारस्योत्वे च तत्सिद्धिः। अगदत्। गद्धातोर्लङि, लङस्तिपि, शपि, अटि, "इतश्च" इतीकारलोपे च तत्सिद्धिः। गदेत्। गद्धातोर्लिङस्तिपि, शपि, यासुट, उटि गते "अतो येयः" इति यास इयादेशे गुणे "लोपो व्योर्वलि" इति यलोपे इकारलोपे च कृते तत्सिद्धिः। गद्यात्। गद्धातुत आशीर्लिङस्तिपि "लिङाशिषि" इति तिङ आर्धधातुकत्वेन शबभावे यासुटि, उटि गते "सुट्तिथोः" इति तिपस्तकारस्य सुटि उटि गते "इतश्च" इति तिप इकारलोपे "स्कोः संयोगाद्योरन्ते च" इति सकारद्वयस्य लोपे च तत्सिद्धिः। अतो हलादेरिति। अत्र "सिचि वृद्धिः परस्मैपदेषु" इति सूत्रम्, "नेटि" इत्यत इटीति "ऊर्णोतेर्विभाषा" इत्यतो विभाषेति चानुव-

ष्यत्। णद अव्यक्ते शब्दे ॥ ७ ॥ णो नः ६।१।६५। धात्वादेर्णस्य नः स्यात्। णोपदेशास्त्वनर्दनाटिनाथ्नाध्नन्द्नक्नृनृतः ॥ उपसर्गादसमासेऽपि णोपदेशस्य ८।४।१४। उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्। प्रणदति। प्रणिनदति। नदति। ननाद ॥ अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२०। लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वं स्याद-

---

र्तते। अगादीत्–अगदीत्। गद्धातोर्लुङस्तिपि "इतश्च" इतीकारलोपे अटि, शपं बाधित्वा च्लौ, च्लेः सिचि, इच इत्संज्ञायां लोपे च, सस्य आर्धधातुकसंज्ञायाम् इटि "अस्तिसिचोऽपृक्ते" इति तकारस्येडागमे अनुबन्धलोपे 'अगद् इ स् ई त्' इति जाते "इट ईटि" इति सलोपे "सिज्लोप एकादेशे सिद्धो वाच्यः" इति सिज्लोपस्यासिद्धत्वाभावेन सवर्णदीर्घे "अतो हलादेर्लघोः" इति पाक्षिकवृद्धौ 'अगादीत्' इति, तदभावे 'अगदीत्' इति च सिद्धम्। अग्रे–अगादिष्टाम्–अगदिष्टाम्, अगादिषुः–अगदिषुः। अगादीः–अगदीः, अगादिष्टम्–अगदिष्टम्, अगादिष्ट–अगदिष्ट। अगादिषम्–अगदिषम्। अगादिष्व–अगदिष्व, अगादिष्म–अगदिष्म। इति। अगदिष्यत्। गद्धातोर्लृङस्तिपि, स्ये आर्धधातुकत्वे, इटि; अटि; सस्य षत्वे, तिप इकारलोपे च कृते तत्सिद्धिः। अव्यक्ते शब्दे–अमनुष्यपशुपक्ष्यादिकृतशब्दे इत्यर्थः। णो नः। अत्र "धात्वादेः षः सः" इत्यतो धात्वादेरित्यनुवर्तते। ण इति षष्ठ्यन्तम्। तदाह—णस्येति। णोपदेशास्त्विति। नर्द–शब्दे, नट–अवस्कन्दने, नाथ् नाध्–याच्ञोपतापैश्वर्याशीःषु, टुनदि–समृद्धौ, नक्ष–नाशने, नॄ–नये, नृती–गात्रविक्षेपे, एतेभ्योऽष्टाभ्यो भिन्ना णकारादिधातवो णोपदेशपदेनोच्यन्ते इति यावत्। उपसर्गादसमासेऽपीति। "रषाभ्यां नो णः" इत्यनुवर्तते। अपिशब्दात्समासेऽपीत्यर्थः। प्रणदति। णद्धातोर्लटि, "णो नः" इति णस्य नत्वे प्रथमपुरुषैकवचनविवक्षायां लटस्तिपि, शपि, अनुबन्धलोपे, 'नदति' इति रूपम्। तत्र प्रोपसर्गस्य योगे "उपसर्गादसमासेऽपि णोपदेशस्य" इति प्रोपसर्गस्थरेफात्परस्य नद्धातोर्नस्य णत्वे च तत्सिद्धिः। प्रणिनदति। अत्र "नेर्गदनद" इति णत्वम्। ननाद। णद्धातोर्लिटस्तिपि, "णो नः" इति णस्य नत्वे "परस्मैपदानाम्" इति तिपो णलि, "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इति अभ्याससंज्ञायां "हलादिः शेषः" इति द्लोपे "अत उपधायाः" इत्युपधावृद्धौ च विहितायां 'ननाद' इति रूपम्। अत एकहल्मध्ये। लिटीत्यावर्तते। पूर्वत्र निमित्तसप्तमी। परत्र परसप्तमी। एकशब्दोऽसहायवाची। एकौ–असंयुक्तहलौ, एकहलौ। तयोर्मध्ये इति विग्रहः। "अङ्गस्य" इत्यधिक्रियते। "घ्वसोरेद्धावभ्यासलोपश्च" इत्यत एदिति; अभ्यासलोप इति च, "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्यतः क्ङितीति चानुवर्तते, तदाह—लिण्निमित्तेत्यादिना। नेदतुः। णद्धातोर्लिटस्तसि "णो नः" इति णस्य नत्वे, तस अतुसि, द्वित्वेऽभ्यासकार्ये च कृते 'न नद् अतु' इति जाते, अत्र "अत एकहल्मध्येऽनादेशादेर्लिटि" इति एत्वेऽभ्यास-

भ्यासलोपश्च किति लिटि । नेदतुः । नेदुः । थलि च सेटि ६।४।१२१। प्रागुक्तं स्यात् । नेदिथ । नेदथुः । नेद । ननाद-ननद । नेदिव । नेदिम । नदिता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत्-अनदीत् । अनदिष्यत् । टुनदि समृद्धौ ॥८॥ आदिर्ञिटुडवः १।३।५। उपदेशे धातोराद्या एते इतः स्युः ॥ इदितो नुम् धातोः ७।१।५७। नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु ।

---

लोपे रुत्वे रेफस्य विसर्गे च 'नेदतुः' इति रूपम् । नेदुः । एवम्—लिटो झौ, झेः उसि, द्वित्वेऽभ्यासकार्ये एत्वाभ्यासलोपे रुत्वे विसर्गे च 'नेदुः' इति रूपम् । थलि चेति । किपिनमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहलमध्यस्थस्यात एत्वं स्यादभ्यासलोपश्च सेटि थलि इत्यर्थः । नेदिथ । णद्धातोर्लिटः सिपि, णस्य नत्वे सिपस्थलादेशे द्वित्वेऽभ्यासकार्ये "आर्धधातुकस्येड्वलादेः" इति थल इडागमे "थलि च सेटि" इत्येत्वेऽभ्यासलोपे च कृते 'नेदिथ' इति रूपम् । ननाद-ननद । णद्धातुतो लिट उत्तमपुरुषैकवचने मिपि, मिपः स्थाने णलि, द्वित्वेऽभ्यासकार्ये च णलो "णलुत्तमो वा" इति वैकल्पिकणित्वे "अत उपधायाः" इति उपधावृद्धौ 'ननाद' इति । णित्वाभावपक्षे—'ननद' इति । नदिता । णद्धातोर्लुटस्तिपि "णो नः" इति णस्य नत्वे "स्यतासी लृलुटोः" इति तासि आर्धधातुकसंज्ञायाम् इटि, तिपो डादेशे, डित्वसामर्थ्यादभस्यापि टेर्लोपे च कृते तत्सिद्धिः । नदेत् । णद्धातोर्लिङस्तिपि, णस्य नत्वे, शपि, अनुबन्धलोपे यासुटि, उटि गते, यास इयादेशे गुणे यलोपे तिप इकारलोपे च कृते 'नदेत्' इति रूपम् । अनादीत्-अनदीत् । णद्धातोर्लुङस्तिपि, "णो नः" इति णस्य नत्वे, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इच इत्संज्ञायाम् लोपे च, सस्य आर्धधातुकसंज्ञायां इडागमे "इतश्च" इति तिप इकारस्य लोपे "अस्तिसिचोऽपृक्ते" इतीडागमे "इट ईटि" इति सिचो लोपे "सिज्लोप एकादेशे सिद्धो वाच्यः" इति सिज्लोपस्य सिद्धत्वात् "अकः सवर्णे दीर्घः" इति दीर्घे 'अनद् ई त्' इति जाते "अतो हलादेर्लघोः" इति वा वृद्धौ 'अनादीत्' इति रूपम् । पक्षे-वृद्ध्यभावे 'अनदीत्' इति । आदिर्ञिटुडव इति । "उपदेशेऽजनुनासिक इत्" इत्यत उपदेशे इति, इदिति चानुवर्तते, "भूवादयो धातवः" इत्यतोऽनुवृत्तधातव इति षष्ठ्या विपरिणम्यते, तदेतदाह—उपदेशे इत्यादिना । इदित इति । इत्-ह्रस्व इकारः, इत्—इत्संज्ञको यस्य सः इदित् तस्येति विग्रहः । इत्संज्ञकेदन्तधातोरित्यर्थः । चक्षिङादौ न दोषः । वस्तुतस्तु कर्मधारयोऽत्र, न तु बहुव्रीहिः । कर्मधारयाश्रयणे एव तदन्तविधिना अन्तेदित इत्यर्थलाभात् । नुमि मकार इत् । उकार उच्चारणार्थः । नन्दति । टुनदि इत्यत्र "उपदेशेऽजनुनासिक इत्" इति इकारस्य इत्सञ्ज्ञायां "तस्य लोपः" इति लोपे टुनद् इति जाते, तस्य "भूवादयो धातवः" इति धातुत्वे "आदिर्ञिटुडवः" इति टु इत्यस्ये-

अनन्दत् । नन्देत् । नन्द्यात् । अनन्दीत् । अनन्दिष्यत् । अर्च पूजायाम् ॥ ९ ॥ अर्चति । तस्मान्नुड् द्विहलः ७।४।७१। द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्च । आनर्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् । व्रज गतौ ॥ १० ॥ व्रजति । वव्राज । व्रजिता ।

---

त्सञ्ज्ञायां लोपे च ततो लटि, तत्स्थाने तिपि शपि अनुबन्धलोपे "इदितो नुम् धातोः" इति नुमि, उमि गते "मिदचोऽन्त्यात्परः" इति अन्त्यादचः परे, अनुस्वारे परसवर्णे च कृते 'नन्दति' इति रूपम् । अग्रे-नन्दतः, नन्दन्ति । नन्दसि, नन्दथः, नन्दथ । नन्दामि, नन्दावः, नन्दामः इति । ननन्द । ननन्द, ननन्दतुः, ननन्दुः । ननन्दिथ, ननन्दथुः, ननन्द । ननन्द, ननन्दिव, ननन्दिम । अनन्दीत् । अत्र लघुत्वाभावाद्य वृद्धिः । अर्चति । अच् धातोर्लटि, लटस्तिपि, शपि, अनुबन्धलोपे, सार्वधातुकसञ्ज्ञायाम् 'अर्चति' इति सिद्धं रूपम् भवति । अग्रे—अर्चतः, अर्चन्ति । अर्चसि, अर्चथः, अर्चथ । अर्चामि, अर्चावः, अर्चामः । इति । तस्मान्नुडिति । द्वौ हलौ यस्य तस्येति विग्रहः । तच्छब्देन "अत आदेः" इति कृतदीर्घ आकारः परामृश्यते । तदेतदाह—दीर्घीभूताद-कारादिति । आनर्च । अर्च धातोर्लिटि, लिटस्तिपि, "परस्मैपदानां णलतुसुस्थल॰" इति तिपो णलि, द्वित्वेऽभ्यासत्वे, "हलादिः शेषः" इति लोपे "अत आदेः" इत्यभ्यासा-कारस्य दीर्घे "तस्मान्नुड्द्विहलः" इति नुड्यनुबन्धलोपे च तत्सिद्धिः । आनर्चतुः । अर्चधातोर्लिटि, लिटस्तसि, "परस्मैपदानाम्॰" इति तसोऽतुसि "लिट् च" इत्यार्ध-धातुकत्वे तेन शबभावे, द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति लोपे "अत आदेः" इत्यभ्यासाकारस्य दीर्घे "तस्मान्नुड्द्विहलः" इति नुड्यनुबन्धलोपे च तत्सिद्धिः । अग्रे-आनर्चुः । आनर्चिथ, आनर्चथुः, आनर्च । आनर्च, आनर्चिव, आनर्चिम । अर्चिता । अर्च धातोर्लुटस्तिपि, सार्वधातुकसञ्ज्ञायां शपि प्राप्ते तम्बाधित्वा "स्यतासी लृलुटोः" इति तासौ इकारस्येत्संज्ञायां लोपे च "आर्धधातुकं शेषः" इति तास आर्ध-धातुकत्वे "आर्धधातुकस्येड्वलादेः" इतीडागमे "लुटः प्रथमस्य डारौरसः" इति तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे इत्यासभागस्य लोपे च कृते च तत्सिद्धिः । अर्चिष्यति । लृटस्तिपि, स्ये, इटि, षत्वे च । अर्चतु । लोटि, तिपि, शपि, "एरुः" इति उत्वे च । आर्चत् । लङि, तिपि, शपि, "आडजादीनाम्" इत्याटि "आटश्च" इति वृद्धौ "इतश्च" इति तिप इकारस्य लोपे च तत्सिद्धिः । अर्चेत् । लिङि, तिपि, शपि, यासुटि, इयादेशे गुणे यलोपे इकारलोपे च । अर्च्यात् । आशिर्लिङि तिपि, आर्धधातुकत्वेन शब-भावे यासुटि अनुबन्धलोपे तिप इकारस्य लोपे च तत्सिद्धिः । आर्चीत् । अर्च धातोर्लु-ङस्तिपि अनुबन्धलोपे "इतश्च" इतीकारलोपे "आडजादीनाम्" इत्याटि "आटश्च" इति वृद्धौ, च्लौ, च्लेः सिच्यनुबन्धलोपे इटि ईटि च कृते "इट ईटि" इति सलोपे सिज्लो-पस्यासिद्धत्वाभावेन सवर्णदीर्घे च कृते 'आर्चीत्' इति रूपम् । अग्रे—आर्चिष्टाम्,

व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ॥ **वदव्रजहलन्तस्याचः ७।२।३।** वदेर्व्रजेर्हलन्तस्य चाङ्गस्य वृद्धिः स्यात् सिचि परस्मैपदेषु । अव्राजीत् । अव्रजिष्यत् । **कटे वर्षावरणयोः ॥ ११ ॥** कटति । चकाट । चकटतुः । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् । **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्**

---

आर्चिषुः । आर्चीः, आर्चिष्टम्, आर्चिष्ट । आर्चिषम्, आर्चिष्व, आर्चिष्म । आर्चिष्यत् । लृङि, तिपि, स्ये, इटि, आटि, वृद्धौ, षत्वे, "इतश्च" इति तिप इकारलोपे च तत्सिद्धिः। व्रजति । व्रज्धातोर्लटि, लटस्तिपि, शपि, अनुबन्धलोपे च तत्सिद्धिः । वव्राज । व्रज्धातोर्लिटस्तिपि, "लिट् च" इत्यार्धधातुकत्वेन शबभावे तिपो णलादेशे द्वित्वेऽभ्यासकार्ये "अत उपधायाः" इति उपधावृद्धौ च तत्सिद्धिः । अग्रे—वव्रजतुः, वव्रजुः । वव्रजिथ, वव्रजथुः, वव्रज । वव्राज-वव्रज, वव्रजिव, वव्रजिम । व्रजिता । लुटि, तिपि, तासि, इटि, तिपो डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे च तत्सिद्धिः । व्रजिष्यति । लृटि, तिपि, स्ये, इटि षत्वे च तत्सिद्धम् । व्रजतु । लोटस्तिपि, शपि, अनुबन्धलोपे "एरुः" इतीकारस्योत्वे च तत्सिद्धिः । अव्रजत् । लङस्तिपि, शपि, अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अङ्गस्याडागमे "इतश्च" इति तिप इकारस्य लोपे च तत्सिद्धिः। व्रजेत् । व्रज्धातोर्लिङस्तिपि, शपि अनुबन्धलोपे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुटि उटि गते "अतो येयः" इति यास इयादेशे गुणे यलोपे तिप इकारस्य लोपे च विहिते 'व्रजेत्' इति रूपम् । व्रज्यात् । आशिर्लिङि, तिपि, अनुबन्धलोपे "लिङाशिषि" इत्यार्धधातुकत्वेन शपोऽभावे यासुटि, उटि गते "इतश्च" इति तिप इकारस्य लोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे च तत्सिद्धिः । वदव्रजेति । "अङ्गस्य" इत्यधिक्रियते । "सिचि वृद्धिः परस्मैपदेषु" इति सूत्रमनुवर्तते । अव्राजीत् । व्रजधातोर्लुङस्तिपि अनुबन्धलोपे "इतश्च" इति तिप इकारस्य लोपे अटि, च्लौ, च्लेः सिचि, इचि गते "आर्धधातुकं शेषः" इत्यार्धधातुकसञ्ज्ञायाम् "आर्धधातुकस्येड्वलादेः" इतीटि, "अस्तिसिचोऽपृक्ते" इति ईटि "वदव्रजहलन्तस्याचः' इति वृद्धौ "इट ईटि" इति सलोपे सिज्लोपस्यासिद्धत्वाभावात्सवर्णदीर्घे 'अव्राजीत्' इति रूपम् । अग्रे तु—अव्राजिष्टाम्, अव्राजिषुः । अव्राजीः, अव्राजिष्टम्, अव्राजिष्ट । अव्राजिषम्, अव्राजिष्व, अव्राजिष्म । इति । अव्रजिष्यत् । लृङि, तिपि, स्ये, इटि, अटि, "इतश्च" इतीकारलोपे षत्वे च तत्सिद्धिः । कटति । लटस्तिपि, शपि च तत्सिद्धिः । चकाट । कट्धातोर्लिटस्तिपो णलि द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति लोपे "कुहोश्चुः" इति कस्य चुत्वेन चकारे "अत उपधायाः" इति वृद्धौ 'चकाट' इति रूपम् । एवम् । अतुसि—'चकटतुः' इति । एवम्—अग्रे कटेधातोर्लिडाद्याशिर्लिङ्पर्यन्तम् व्रज्धातुवत्सिद्धिर्ज्ञेया । ह्म्यन्तक्षणेति । अत्र "सिचि वृद्धिः" इति "नेटि" इति चानुवर्तते । ह्म्यन्त क्षण श्वस जागृ णि श्वि एदित् एषां द्वन्द्वात्षष्ठी । ह् म् य् इत्येते वर्णा येषामन्ते ते

७।२।५। हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि। अकटीत्। अकटिष्यत्॥ गुपू रक्षणे॥ १२॥ **गुपूधूपविच्छिपणिपनिभ्य आयः ३।१।२८।** एभ्य आयः प्रत्ययः स्यात् स्वार्थे॥ **सनाद्यन्ता धातवः ३।१।३२।** सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसञ्ज्ञकाः स्युः। धातुत्वाल्लडादयः। गोपायति॥ **आयादय आर्धधातुके वा ३।१।३१।** आर्धधातुकविवक्षायामायादयो वा स्युः। (**कास्यनेकाच आम् वक्तव्यः**) लिटि आस्कासोराम् विधानान्मस्य नेत्वम्॥ **अतो लोपः ६।४।४८।** आर्धधातुकोपदेशे यददन्तं तस्यातो लोपः स्यादार्धधातुके॥ **आमः २।४।८१।** आमः परस्य लुक् स्यात्॥ **कृञ् चानुप्रयुज्यते लिटि ३।१।४०।** आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। तेषां द्वित्वादि॥ **उरत् ७।४।६६।** अभ्यासऋवर्णस्यात् स्यात्। वृद्धिः। गोपायाञ्चकार। द्वित्वात्पर-

---

ह्मयन्ताः। तदाह—ह्‌ म यान्तस्येति। अकटीत्। कट्‌धातोर्लुङस्तिपि, अनुबन्धलोपे अटि, "इतश्च" इतीकारलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा च्लौ, च्लेः सिचि, इचि गते, आर्धधातुकसंज्ञायाम् इटि, ईटि च जाते "अतो हलादेर्लघोः" इति वृद्धौ प्राप्तायां "ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्" इति तन्निषेधे "इट ईटि" इति सलोपे सिज्लोपस्य सिद्धत्वात्सवर्णदीर्घे 'अकटीत्' इति रूपम्। अग्रे अकटिष्टाम्, अकटिषुः। अकटीः, अकटिष्टम्, अकटिष्ट। अकटिषम्, अकटिष्व, अकटिष्म इति। अकटिष्यत्। अजधातुवत्सिद्धिर्बोध्या। गुपूधूपेति। एभ्य इति। गुपू-रक्षणे, धूप-संतापे, 'विच्छ-गतौ, पण-व्यवहारे स्तुतौ च, पन-व्यवहारे, एभ्य इत्यर्थः। सनाद्यन्ता। सनादय इति। सन् क्यच् काम्यच् क्यङ् क्यषोऽथाचारक्विप् णिज्यङौ तथा। यगाययङ्णिङश्चेति द्वादशामी सनादयः। गोपायति। गुप्धातोः "गुपूधूपविच्छिपणिपनिभ्य आयः" इति आयप्रत्यये "आर्धधातुकं शेषः" इति तस्यार्धधातुकत्वेन "पुगन्तलघूपधस्य च" इति गुणे "सनाद्यन्ता धातवः" इति गोपाय इत्यस्य धातुसंज्ञायां धातुत्वाल्लटि, लटस्तिपि, "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इति शपि, अनुबन्धलोपे "अतो गुणे" इति पररूपे 'गोपायति' इति रूपम्। अग्रे—गोपायतः, गोपायन्ति। गोपायसि, गोपायथः, गोपायथ। गोपायामि, गोपायावः, गोपायामः। आयादय इति। 'आर्धधातुके' इत्यत्र विषयसप्तमी। आय्, इयङ्, णिङ् एते त्रय आयादयः। अतो लोप इति। "आर्धधातुके" इत्यधिक्रियते। "अनुदात्तोपदेश" इत्यत उपदेश इत्यनुवर्तते। "आर्धधातुके" इत्यावर्तते। एकमुपदेशेऽन्वेति। द्वितीयं तु लोपे परनिमित्तम् तदाह—आर्धधातुकोपदेश इति। आम इति। "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" इत्यतो लुगित्यनुवर्तते। कृञ्चानुप्रयुज्यत इति। "कास्प्रत्ययादाममन्त्रे लिटि" इत्यत आमित्यनुवृत्तं पञ्चम्यां विपरिणम्यते। प्रत्ययग्रहणपरिभाषया

त्वाद्यणि प्राप्ते ॥ द्विर्वचनेऽचि १।१।५९। द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये । गोपायाञ्चक्रतुः ॥ एकाच उपदेशेऽनुदात्तात् ७।२।१०। उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न स्यात् । "ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्वि-

---

तदन्तविधिः । 'कृञ' इत्यनेन 'कृभ्वस्तीनां ग्रहणम्, व्याख्यानात् । उरदिति । उः अत् इति छेदः । "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येत्यनुवर्तते । "अङ्गस्य" इत्यधिक्रियते । प्रत्यये परत एवाङ्गसंज्ञाविधानात् प्रत्यये परत इति लभ्यते । गोपायाञ्चकार । गुप्धातोः "परोक्षे लिट्" इति लिटि प्राप्ते, तम्बाधित्वा "गुपूधूपविच्छिपणिपनिभ्य आयः" इति नित्यम् आयप्रत्यये प्राप्ते "आयादय आर्धधातुके वा" इति विकल्पेन आयप्रत्यये कृते तस्य आर्धधातुकत्वात् "पुगन्तलघूपधस्य च" इति गुणे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लिटि "कास्यनेकाच आम् वक्तव्यः" इत्याम्प्रत्यये तस्य आर्धधातुकसंज्ञायाम् "अतो लोपः" इत्यल्लोपे "आमः" इति लिटो लुकि, लिटः कृत्त्वा-त्प्रत्ययलक्षणेन गोपायामित्यस्य कृदन्तत्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ "कृन्मेजन्तः" इति अव्ययत्वात् "अव्ययादाप्सुपः" इति तस्यापि लुकि 'गोपायाम्' इत्यवशिष्टे, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकृञि अनुप्रयुज्यमाने 'गोपायाम् कृ लिट्' इति जाते अत्र लिटस्तिपि, तिपो णलादेशे अनुबन्धलोपे द्वित्वेऽभ्याससञ्ज्ञायाम् "उरत्" इत्यभ्यासऋवर्णस्य अकारे "उरण् रपरः" इति रपरे च जाते 'गोपायाम् कर् कृ अ' इति भूते "हलादिः शेषः" इति रलोपे "कुहोश्चुः" इत्यभ्यासकस्य चत्वे मस्य पदान्तत्वादनुस्वारे "वा पदान्तस्य" इति पाक्षिकेऽनुस्वारस्य परसवर्णे भकारे "अचो ञ्णिति" इति वृद्धिं परत्वाद्बाधित्वा "सार्वधातुकार्धधातुकयोः" इति गुणे "उरण् रपरः" इति रपरे च जाते "अत उपधायाः" इति वृद्धौ "गोपायाञ्चकार" इति सिद्धम् । द्विर्वचनेऽचीति । "अचः परस्मिन्पूर्वविधौ" इत्यतो अचः इति, "स्थानिवदादेशोऽनल्विधौ" इत्यत आदेश इति, "न पदान्तद्विर्वचन" इत्यतो नेति चानुवर्तते । "द्विर्वचने" इत्यस्यावृत्तिं कृत्वा एकस्य द्वित्वनिमित्ते इत्यर्थः । अपरस्य तु द्वित्वे कर्तव्ये इत्यर्थः । गोपायाञ्चक्रतुः । गुप्धातोरित्यस्माद् आयप्रत्यये गुणे "सनाद्यन्ता धातवः" इति धातुत्वाल्लिटि "कास्यनेकाच आम्वक्तव्यः" इत्याम्प्रत्यये "अतो लोपः" इत्यल्लोपे लिटो लुकि, लिट्परकृञः प्रयोगे, लिटस्तसोऽतुसि 'गोपायाम् कृ अतुस्' इति जाते द्वित्वापेक्षया परत्वाद् यणि प्राप्ते "द्विर्वचनेऽचि" इति तन्निषेधे कृते, द्वित्वेऽभ्यासत्वे "उरत्" इत्यत्वे रपरत्वे "हलादिः शेषः" इति रलोपे "कुहोश्चुः" इति कस्य चत्वे अनुस्वारे, परसवर्णे यणि रुत्वे विसर्गे च 'गोपायाञ्चक्रतुः' इति रूपम् । उसि–'गोपायाञ्चक्रुः' इति । साधनिका पूर्ववत् । एकाच उपदेश इति । "कृत इड्धातोः" इत्यतो धातोरिति "नेड्वशि कृति" इत्यतो नेडिति चानुवर्तते । पूर्वतोऽनुवृत्त्यसम्भवात् वलादेरार्धधातुकस्येति तु फलितार्थकथनम्बोध्यम् । अनुदात्ताः के इत्याकाङ्क्षायामाह—ऊदृदन्तैरिति ।

डीङ्श्रिभिः । वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः" ॥ कान्तेषु—शक्लृ । चान्तेषु—पच्मुच्रिच्वच्विच्सिचः षट् । छान्तेषु—प्रच्छेकः । जान्तेषु—त्यज्निजिर्भजभञ्जभुज्भ्रस्ज्मस्ज्यज्युजरुज्रञ्ज्विजिर्स्वञ्ज्सञ्ज्सृजः पञ्चदश । दान्तेषु—अद्क्षुद्खिद्छिद्तुद्नुद्पद्यभिद्विद्यतिविनद्विन्द्शद्सद्स्विद्यस्कन्दहदः षोडश । धान्तेषु—क्रुध्क्षुध्बुध्बन्ध्युध्रुध्राध्व्यध्शुध्साध्सिध्या एकादश । नान्तेषु—मन्यहनौ द्वौ । पान्तेषु—आप्छुप्क्षिपतप्तिप्तृप्यदृप्यलप्लुप्वपशप्स्वप्सृपस्त्रयोदश । भान्तेषु—यभ्रभ्लभस्त्रयः । मान्तेषु-गम्नम्यम्रमश्चत्वारः । शान्तेषु-क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । षान्तेषु कृष्त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष एकादश । सान्तेषु—वस्घसती द्वौ । हान्तेषु—दह्दिह्दुह्नहमिहरुह्लिह्वहोऽष्टौ । "अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम्" । गोपायाञ्चकर्थ । गोपायाञ्चक्रथुः । गोपायाञ्चक्र । गोपायाञ्चकार—गोपायाञ्चकर । गोपायाञ्चकृव । गोपायाञ्चकृम । गोपायाम्बभूव । गोपाया-

---

ऊकारान्ता ऋकारान्ता, यु, रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रि वृङ् वृञ् एतान् धातून् वर्जयित्वा एकाचः अजन्तधातवः अनुदात्ताः इति कारिकार्थः । हलन्तेषु अनुदात्तान् धातूनाह—कान्तेषु शक्लृ इत्यादिना । गोपायाञ्चकर्थ । गुप्धातोः आयप्रत्यये तस्यार्धधातुकत्वात् "पुगन्तलघूपधस्य च" इति गुणे "सनाद्यन्ता" इति धातुत्वाल्लिटि "कास्यनेकाच०" इत्यामि तस्य आर्धधातुकत्वात् अल्लोपे ।"आमः" इति लिटो लुकि, लिट्परकृञोऽनुप्रयोगे, लिटः सिपस्थलि, कृञो द्वित्वेऽभ्यासत्वे "उरत्" इत्यत्वे रपरत्वे "हलादिः शेषः" इति लोपे कुत्वेऽनुस्वारे परसवर्णे च 'गोपायाञ्चकृ थ' इति स्थिते 'आर्धधातुकस्येड्वलादेः' इति इडागमे प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति तन्निषेधे "सार्वधातुकार्धधातुकयोः" इति गुणे रपरत्वे 'गोपायाञ्चकर्थ' इति सिद्धम् । एवमेव मध्यमपुरुषद्विवचने—अथुसि—'गोपायाञ्चक्रथुः' इति । लिटो मध्यमपुरुषबहुवचने-'गोपायाञ्चकृ अ' इत्यत्र "इको यणचि" इति यणि 'गोपायाञ्चक्र' इति रूपम् । उत्तमपुरुषैकवचने णलि परे परत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे 'गोपायाञ्चकर् + अ' इति जाते "णलुत्तमो वा" इति वैकल्पिकणित्वेन "अत उपधायाः" इति वृद्धौ-'गोपायाञ्चकार' इति । णित्वाभावे' गोपायाञ्चकर' इति । लिट उत्तमपुरुषद्विवचने—'गोपायाञ्चकृव' इति । अत्र "असंयोगाल्लिट्कित्" इति कित्वात् गुणाभावः, "एकाच उपदेशे" इति निषेधादिडभावश्चेति बोध्यम् । एवम्—'गोपायाञ्चकृम' इति बोध्यम् । गोपायाम्बभूव । गुप्धातोः पाक्षिके आयप्रत्यये गुणे धातुत्वाल्लिटि आम्प्रत्यये अल्लोपे लिटो लुकि, लिट्परभूप्रयोगे, लिटस्तिपो णलि "भुवो वुक्लुङ्लिटोः" इति वुकि द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति लोपे ह्रस्वेऽत्वे "अभ्यासे चर्च" इति जश्त्वे च 'गोपायाम्बभूव' इति रूपम् । अग्रे तु—गोपायाम्बभूवतुः, गोपायाम्ब-

मास । जुगोप । जुगुपतुः । जुगुपुः । स्वरतिसूतिसूयतिधूञूदितो वा ७।२।४४। स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात् । जुगोपिथ–जुगोप्थ । गोपायिता–गोपिता–गोप्ता । गोपायिष्यति–गोपिष्यति–गोप्स्यति । गोपायतु । अगोपायत् ।

---

भूवुः । गोपायाम्बभूविथ । गोपायाम्बभूवथुः, गोपायाम्बभूव । गोपायाम्बभूव, गोपायाम्बभूविव, गोपायाम्बभूविम । इति बोध्यम् । गोपायामास । गुप्धातोरायप्रत्यये गुणे लिटि, आमि, अल्लोपे, लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकअस्धातोरनुप्रयोगे, लिटस्तिपो णलि अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्याससञ्ज्ञायाम् "हलादिः शेषः" इति सलोपे "अत आदेः" इति दीर्घे सवर्णदीर्घे च सिद्धिः 'गोपायामास' इति रूपम् । एवमग्रेऽपि–गोपायामासतुः, गोपायामासुः । गोपायामासिथ, गोपायामासथुः, गोपायामास । गोपायामास, गोपायामासिव, गोपायामासिम । जुगोप । गुप्धातोः "आयादय आर्धधातुके वा" इति आयप्रत्ययाभावपक्षे लिटि तत्स्थाने तिपि, तिपः स्थाने "परस्मैपदानाम्" इति णलि, अनुबन्धलोपे द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति हलादेः शेषे "कुहोश्चुः" इति चुत्वेन जत्वे "पुगन्तलघूपधस्य च" इति गुणे 'जुगोप' इति सिद्धम् । जुगुपतुः । गुप्धातोः पाक्षिकायप्रत्ययाभावे लिटि, तत्स्थाने तसि, तत्स्थाने परस्मैपदानाम्" इत्यतुसि, द्वित्वेऽभ्यासत्वे हलादेः शेषे, चुत्वे च 'जुगुप्+अतुस्' इति जाते "असंयोगाल्लिट् कित्" इति कित्वेन गुणाभावे रुत्वे विसर्गे च तत्सिद्धिः । एवम्—लिटो झेरुसि द्वित्वेऽभ्यासत्वे अभ्यासकार्ये कित्त्वे गुणाभावे रुत्वे विसर्गे च 'जुगुपुः' इति रूपम् । स्वरतिसूतीति । अत्र "आर्धधातुकस्येड्वलादेः" इत्यनुवर्त्तते । जुगोपिथ—जुगोप्थ । आयप्रत्ययाभावे गुप्धातोर्लिटः सिपस्थलि, अनुबन्धलोपे, द्वित्वेऽभ्यासत्वे अभ्यासकार्ये च 'जुगुप् थ' इति स्थिते "लिट् च" इत्यार्धधातुकसञ्ज्ञायां "पुगन्तलघूपधस्य च" इति गुणे "आर्धधातुकस्येड्वलादेः" इति नित्यमिडागमे प्राप्ते तम्बाधित्वा "स्वरतिसूतिसूयतिधुञूदितो वा" इति वा इडागमे अनुबन्धलोपे 'जुगोपिथ' इति रूपम् । इडागमाभावपक्षे—'जुगोप्थ' इति रूपम् । अग्रे—जुगुपथुः, जुगुप । जुगोप, जुगुपिव–जुगुप्व, जुगुपिम जुगुप्म । इति । गोपायिता । गुप्धातोः "आयादय आर्धधातुके वा" इत्यायप्रत्यये "पुगंन्तलघूपधस्य च" इति गुणे "सनाद्यन्ता धातवः" इति धातुत्वाल्लुटि तत्स्थाने तिपि, सार्वधातुकसञ्ज्ञायां शपि प्राप्ते तम्बाधित्वा "स्यतासी लृलुटोः" इति तासि, तस्य "आर्धधातुकं शेषः" इत्यार्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इति इडागमे "अतो लोपः" इत्यल्लोपे तिपो डादेशेऽनुबन्धलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'गोपायिता' इति रूपम् । अग्रेऽपि एवं साधनिका बोध्या । रूपाणि तु—गोपायितारौ, गोपायितारः । गोपायितासि, गोपायितास्थः, गोपायितास्थ । गोपायितास्मि, गोपायितास्वः, गोपायितास्मः । इति । आयप्रत्ययाभावपक्षे गुपो लुटस्तिपि तासि, आर्धधातुकत्वे "स्वरतिसूतिसूयतिधूञूदितो वा" इति पाक्षिके इडागमेऽनुब-

गोपायेत् । गोपाय्यात्–गुप्यात् । अगोपायीत् । नेट्ि ७।२।४। इडादौ सिचि हल-

न्धलोपे, गुणे, तिपो डादेशे, डित्वात् टिलोपे 'गोपिता' इति रूपम् । इडागमाभावपक्षे 'गोप्ता' इति रूपम् । अग्रेऽपि एवं साधनिका ज्ञेया । रूपाणि तु—गोपितारौ–गोप्तारौ, गोपितारः–गोप्तारः । गोपितासि–गोप्तासि, गोपितास्थः–गोप्तास्थः, गोपितास्थ–गोप्तास्थ । गोपितास्मि–गोप्तास्मि, गोपितास्वः–गोप्तास्वः, गोपितास्मः–गोप्तास्मः । इति । गोपायिष्यति । गुप्धातोः "आयादय आर्धधातुके वा" इत्यायप्रत्यये "पुगन्तलघूपधस्य च" इति गुणे "सनाद्यन्ता धातवः" इति धातुत्वाल्लृटि तत्स्थाने तिपि स्ये प्रत्यये आर्धधातुकसञ्ज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति इडागमे "अतो लोपः" इत्यल्लोपे षत्वे च तत्सिद्धिः । आयप्रत्ययाभावपक्षे—गुप्धातोर्लृटि, तिपि, स्ये, "आर्धधातुकसञ्ज्ञायां गुणे "स्वरतिसूतिसूयतिधूञूदितो वा" इति विकल्पेनेडागमे षत्वे च 'गोपिष्यति' इति । इडागमाभावपक्षे—गोप्स्यति । गोपायतु । गुप्धातोः "गुपूधूपविच्छिपणिपनिभ्य आयः" इत्यायप्रत्यये कृते आर्धधातुकत्वे गुणे "सनाद्यन्ता धातवः" इति धातुत्वाल्लोटस्तिपि, शपि, अनुबन्धलोपे "अतो गुणे" इति पररूपे च कृते "एरुः" इति तिप इकारस्योत्वे तत्सिद्धिः । अग्रे रूपाणि—गोपायतात्, गोपायताम्, गोपायन्तु । गोपाय–गोपायतात् । गोपायतम्, गोपायत । गोपायानि, गोपायाव, गोपायाम इति । अगोपायत् । गुप् धातोरायप्रत्यये गुणे धातुसञ्ज्ञायां लङि, तिपि शपि, अनुबन्धलोपे "अतो गुणे" इति पररूपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यङ्गस्याडागमे "इतश्च" इति तिप इकारस्य लोपे च तत्सिद्धिः । गोपायेत् । गुप्धातोरायप्रत्यये गुणे धातुत्वाल्लिङस्तिपि, शपि अनुबन्धलोपे "अतो गुणे" इति पररूपे यासुटि, उटि गते यास इयादेशे "आद्गुणः" इति गुणे "लोपो व्योर्वलि" इति यलोपे "इतश्च" इति तिप इकारलोपे च तत्सिद्धिः । गोपायेताम्, गोपायेयुः । गोपायेः, गोपायेतम्, गोपायेत । गोपायेयम्, गोपायेव, गोपायेम । गोपाय्यात् । गुप्धातोरायप्रत्यये तस्यार्धधातुकत्वात् "पुगन्तलघूपधस्य च" इति गुणे "सनाद्यन्ता धातवः" इति धातुत्वादाशिर्लिङस्तिपि, "लिङाशिषि" इत्यार्धधातुकत्वात् शबभावे यासुटि, उटि गते "अतो लोपः" इति आयप्रत्ययस्याकारस्य लोपे "इतश्च" इति तिप इकारस्य लोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे च तत्सिद्धिः । "आयादय आर्धधातुके वा" इति आयप्रत्ययाभावे गुप्धातोराशिर्लिङस्तिपि अनुबन्धलोपे यासुटि, उट इत्संज्ञायां लोपे च "किदाशिषि" इति यासुटः कित्वाद्गुणाभावे जाते "इतश्च" इति तिप इकारस्य लोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'गुप्यात्' इति रूपम् । अग्रे—गोपाय्यास्ताम्, गोपाय्यासुः । गोपाय्याः, गोपाय्यास्तम्, गोपाय्यास्त । गोपाय्यासम्, गोपाय्यास्व, गोपाय्यास्म । इति । आयप्रत्ययाभावे गुप्यास्ताम्, गुप्यासुः गुप्याः, गुप्यास्तम्, गुप्यास्त । गुप्यासम्, गुप्यास्व, गुप्यास्म । इति । अगोपायीत् । गुप्धातोः "आयादय आर्धधातुके वा" इति पाक्षिके आयप्रत्यये तस्यार्धधातुकत्वात्

न्तस्य वृद्धिर्न स्यात्। अगोपीत्–अगौप्सीत्। झलो झलि ८।२।२६। झलः परस्य सस्य लोपः स्याज्झलि। अगौप्ताम्। अगौप्सुः। अगौप्सीः। अगौप्तम्। अगौप्त। अगौप्सम्। अगौप्स्व। अगौप्स्म। अगोपायिष्यत्–अगोपिष्यत्–अगोप्स्यत्। क्षि

---

"पुगन्तलघूपधस्य च" इति गुणे "सनाद्यन्ता धातवः" इति धातुसञ्ज्ञायां "लुङ्" इति लुङि, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे, लुङः स्थाने तिपि अनुबन्धलोपे "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसञ्ज्ञायां शपि प्राप्ते तम्बाधित्वा "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति च्लेः सिचि, इच इत्सञ्ज्ञायां लोपे च सिच आर्धधातुकत्वादिटि "इतश्च" इति तिप इकारस्य लोपे, तस्य "अस्तिसिचोऽपृक्ते" इति ईडागमे "अतो लोपः" इत्यल्लोपे "इट ईटि" इति सलोपे सिज्लोपस्य सिद्धत्वात्सवर्णदीर्घे 'अगोपायीत्' इति रूपम्। एवम्–अगोपायिष्टाम्, अगोपायिषुः। अगोपायीः, अगोपायिष्टम्, अगोपायिष्ट। अगोपायिषम्, अगोपायिष्व, अगोपायिष्म। इत्यत्रापि बोध्यम्। नेटीति। "सिचि वृद्धिः परस्मैपदेषु" इति, "वदव्रजहलन्तस्याचः" इत्यतो हलन्तस्येति चानुवर्तते। अगोपीत्, अगौप्सीत्। "आयादय आर्धधातुके वा" इत्यायप्रत्ययाभावे गुप् धातोर्लुङस्तिपि, अटि, च्लौ, च्लेः सिचि, अनुबन्धलोपे आर्धधातुकसञ्ज्ञायां गुणे "स्वरतिसूतिसूयतिधूञूदितो वा" इति विकल्पेन इटि, "इतश्च" इति तिप इकारस्य लोपे ईटि, "इट ईटि" इति सलोपे, सवर्णदीर्घे "वदव्रजहलन्तस्याचः" इति वृद्धौ प्राप्तायां "नेटि" इति निषिद्धे 'अगोपीत्' इति रूपम्। अगोपिष्टाम्। अगोपिषुः। अगोपीः, अगोपिष्टम्, अगोपिष्ट। अगोपिषम्, अगोपिष्व, अगोपिष्म। इति। इडागमाभावे 'अगुप् स् ई त्' इति स्थिते "वदव्रजहलन्तस्याचः" इति वृद्धौ 'अगौप्सीत्' इतिरूपम्। झलो झलि। "रात्सस्य" इत्यतः सस्येति "संयोगान्तस्य लोपः" इत्यतो लोप इति चानुवर्तते। अगौप्ताम्। गुप्धातोर्लुङस्तसि अटि तसस्तामादेशे च्लौ, च्लेः सिचि, अनुबन्धलोपे "वदव्रजहलन्तस्याचः" इति वृद्धौ "झलो झलि" इति सलोपे 'अगौप्ताम्' इति सिद्धम्। अगौप्सुः। गुप्धातोर्लुङि, झौ "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसि, इडभावे, जस्येत्संज्ञायां लोपे च सस्य रुत्वे रस्य विसर्गत्वे च कृते 'अगौप्सुः' इति रूपम्। एवमग्रेऽप्यूह्यम्। अगोपायिष्यत्। गुप्धातोः "गुपूधूपविच्छिपणिपनिभ्य आयः" इत्यायप्रत्यये तस्यार्धधातुकसंज्ञायाम् "पुगन्तलघूपधस्य च" इति गुणे 'गोपाय' इति जाते "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम्, धातुत्वाच्च लृङि, तस्य स्थाने तिपि, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यटि, "स्यतासी लृलुटोः" इति स्ये, "आर्धधातुकं शेषः" इति स्यस्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इतीटि "अतो लोपः" इति यकारगताकारलोपे "इतश्च" इति तिप इकारलोपे, "आदेशप्रत्यययोः" इति सस्य षत्वे च कृते 'अगोपायिष्यत्' इति रूपम्। अग्रे—अगोपायिष्यताम्, अगोपायिष्यन्। अगोपायिष्यः, अगोपायिष्यतम्,

क्षये ॥ १३ ॥ क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । "एकाच" इति निषेधे प्राप्ते । **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७।२।१३।** क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् । **अचस्तास्वत्थल्यनिटो नित्यम् ७।२।६१।** उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण् न स्यात् । **उपदेशेऽत्वतः ७।२।६२।** उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण् न स्यात् । **ऋतो भारद्वाजस्य ७।२।६३।** तासौ नित्यानिट ऋदन्तादेव थलो नेड् भारद्वाजस्य मते । तेन अन्यस्य स्यादेव । अयमत्र संग्रहः-"अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् । ऋदन्त

---

अगोपायिष्यत । अगोपायिष्यम्, अगोपायिष्याव, अगोपायिष्याम । इति रूपाणि । अगोपिष्यत् । "आयादय आर्धधातुके वा" इत्यायप्रत्ययाभावे 'अगोप् स्य त्' इति स्थिते इटि च कृते षत्वे च 'अगोपिष्यत्, इति रूपम् । अगोप्स्यत् । आयप्रत्ययाभावे इडभावे च 'अगोप्स्यत्, इति रूपम् । क्षि क्षय इति । क्षयो-नाशः, अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः, नाशनमिति तदर्थः । क्षयति । क्षिधातोर्लटि, तिपि, शपि गुणे अयादेशे च 'क्षयति' इति रूपम् । चिक्षाय । क्षिधातोर्लिटस्तिपि, तिपो णलादेशे अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इति, अभ्याससंज्ञायां "हलादिः शेषः" इति षलोपे 'कि क्षि अ' इति जाते "कुहोश्चुः" इति कस्य चत्वे "अचो ञ्णिति" इति वृद्धौ कृतायाम् "एचोऽयवायावः" इत्यायादेशे च कृते 'चिक्षाय' इति रूपम् । चिक्षियतुः । "असंयोगाल्लिट् कित्" इति कित्त्वान्न गुणः, "अचि श्नुधातु" इति इयङ्, शेषं पूर्ववत् । एकाच इति निषेधे इति । क्षिधातोरेकाच्त्वात्, ऊदृदन्तादि-चतुर्दशभिन्नधातूनामनुदात्तत्वाभ्युपगमादिति भावः । कृसृभृ । 'कृ सृ भृ वृ स्तु द्रु स्रु श्रु' इत्येषां समाहारद्वन्द्वात्पञ्चमी । लिटीति षष्ठ्यर्थे सप्तमी । "नेड्वशि कृति" इत्यतो नेति इडिति चानुवर्तते । "एकाच उपदेशेऽनुदात्तात्" इति "श्र्युकः किति" इति च सिद्धे नियमार्थमिदन्तदेतदाह—क्रादिभ्य एवेत्यादिना । अचस्तास्वदिति । अधातोस्थलोऽभावाद्धातोरिति लभ्यते । अच इति तद्विशेषणम् । तदन्तविधिः । "उपदेशेऽत्वत" इत्युत्तरसूत्रादुपदेश इत्यपकृष्यते, भाष्यप्रामाण्यात् । "तासि च क्लृपः" इत्यतस्तासीत्यनुवर्तते । "गमेरिट् परस्मैपदेषु" इत्यत इडिति, "न वृद्भ्यश्चतुर्भ्यः" इत्यतो नेति चानुवर्तते । तास्वदिति सप्तम्यन्ताद्वतिः, तदाह-उपदेशेऽजन्त इति । उपदेशेऽत्वत इति । अत्वत इति छेदः । अत्-ह्रस्वाकारः सः अस्य अस्तीति अत्वान्, "तसौ मत्वर्थे" इति भत्वान्न जश्त्वम् । अच इति वर्जम् पूर्वसूत्रं तत्र यदनुवृत्तं तदप्यनुवर्तते । तदाह—उपदेशेऽकारवत इति । ऋतो भारद्वाजस्य । तासौ नित्यमनिट इति, थलीति, नेति, इडिति चानुवर्तते । भारद्वाजस्य मते ऋदन्ताद्धातोः परस्य नेडिति फलितम् । हृञ्धृञादौ "अचस्तास्वत्" इत्येव सिद्धम् । अतो नियमार्थमिदमित्याह—ऋदन्तादेव थलो नेडिति । अनृदन्तात्परस्य तु थल इट् स्यादेवेत्येवकारार्थः । तदाह—

ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत्" ॥ चिक्षयिथ–चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय–चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् । **अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५।** अजन्ताङ्गस्य दीर्घः स्यात् यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् । **सिचि वृद्धिः परस्मैपदेषु**

---

अन्यस्य स्यादेवेति । ऋदन्तभिन्नात्परस्य थल इट् स्यादेवेत्यर्थः । अयमत्रेति । कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीति, अचस्तास्वत्थल्यनिटो नित्यमिति, उपदेशेऽत्वत इति, ऋतो भारद्वाजस्येति च सूत्रचतुष्टस्य विषयाणां संग्रहो वक्ष्यत इत्यर्थः । अजन्त इति । यो धातुः ऋदन्तभिन्नोऽजन्तो, ह्रस्वाकारवान् वा तासौ नित्यानिट् सोऽयं थलि विकल्पितेट्क इति पूर्वार्धस्यार्थः । अत्र 'ईदृक्' इत्यस्य तासौ नित्यानिडित्यर्थः । यः ऋदन्तस्तासौ नित्यानिट् सः थलि नित्यानिडित्यर्थः । "अचस्तास्वत्" इति पाणिनिमते "ऋतो भारद्वाजस्य" इति भारद्वाजमतेऽपि तस्य अनिट्कत्वादिति भावः । क्राद्यन्य इति । क्राद्यष्टभ्योऽन्यो धातुः लिटि नित्यं सेडित्यर्थः । क्राद्यष्टभ्य एव परस्य लिटि नेडिति "कृसृभृवृ" इति सूत्रेण नियमितत्वादिति भावः ॥ एवञ्च प्रकृते क्षिधातोरजन्तत्वात्तासौ नित्यानिट्त्वाच्च थल इड्विकल्प इति सिद्धम् । तदाह—चिक्षयिथ, चिक्षेथ इति । चिक्षियथुः । अथुसि द्वित्वे, अभ्यासकार्ये "असंयोगात्" इति कित्वात् गुणाभावे "अचि श्नुधातु०" इति इयङि च रूपम् । वमयोः क्रादिनियमान्नित्यमिटि कृते इयङि च 'चिक्षियिव, चिक्षियिम । क्षेता । क्षिधातोर्लुटस्तिपि, "स्यतासी०" इति तासि, "लुटः प्रथमस्य डारौरसः" इति तिपो डात्वे, डित्वसामर्थ्यादभस्यापि टेर्लोपे, "एकाच उपदेशेऽनुदात्तात्" इतीडभावे गुणे च कृते रूपम् । क्षेष्यति । लृटि, तिपि, स्ये, इडभावे, गुणे च रूपम् । क्षयतु । लोटि, तिपि, शपि, गुणे, अयादेशे "एरुः" इति तिप इकारस्योत्वे च सति रूपम् । अक्षयत् । क्षिधातोर्लङस्तिपि, शपि, गुणे अयादेशे तिप इकारस्य लोपे अडागमे च कृते रूपम् । क्षयेत् । क्षिधातोर्विधिलिङि, तत्स्थाने तिपि, शपि, गुणे अयादेशे यासुटि, तस्य इयादेशे "आद्गुणः" इति गुणे यलोपे तिप इकारलोपे च कृते सति 'क्षयेत्' इति रूपम् । क्षयेताम्, क्षयेयुः । क्षयेः, क्षयेतम्, क्षयेत । क्षयेयम्, क्षयेव, क्षयेम । इति । अकृत्सार्वधातुकयोरिति । अङ्गस्येत्यधिकृतम् । "अयङ् यि क्ङिति" इत्यतो यीति सप्तम्यन्तमनुवृत्तमङ्गाक्षिप्तप्रत्ययविशेषणम् । तदन्तविधिः । तदाह—अजन्तस्येत्यादिना । क्षीयात् । क्षिधातोराशीर्लिङस्तिपि यासुटि, "इतश्च" इति तिप इकारलोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घत्वे च कृते 'क्षीयात्' इति रूपम् । सिचि वृद्धिरिति । वृद्धि श्रुत्या इक इत्युपस्थितमङ्गस्येत्यधिकृतस्य विशेषणम्, तदन्तविधिरिति भावः । अक्षैषीत् । क्षिधातोः "लुङ्" इति लुङि, तस्य स्थाने तिपादेशे अङ्गस्याडागमे, च्लौ, च्लेः सिचि, वृद्धि गते, इडभावे, तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति ईटि विहिते 'अक्षिस् ई त्'

७।२।१। इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि। अक्षैषीत्। अक्षेष्यत्। तप सन्तापे ॥ १४ ॥ तपति। तताप। तेपतुः। तेपुः। तेपिथ-ततप्थ। तप्ता। तप्स्यति। तपतु। अतपत्। तपेत्। तप्यात्। अताप्सीत्। अताप्ताम्। अतप्स्यत्। क्रमु पादविक्षेपे ॥ १५ ॥ वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३।१।७०। एभ्यः श्यन्वा स्यात् कर्त्रर्थे सार्वधातुके परे। पक्षे शप्। क्रमः परस्मैपदेषु ७।३।७६।

---

इति जाते "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ, सस्य षत्वे च 'अक्षैषीत्' इति रूपम्। अग्रे तु रूपाणि-अक्षैष्टाम्, अक्षैषुः। अक्षैषीः, अक्षैष्टम्, अक्षैष्ट। अक्षैषम्, अक्षैष्व, अक्षैष्म। इति। अक्षेष्यत्। क्षिधातोर्लृङस्तिपि, अटि, स्ये, इडभावे, गुणे, मूर्धन्यत्वे, तिप इकारलोपे च विहिते 'अक्षेष्यत्'इति रूपम्। तपति। तप्धातोर्लटस्तिपि, शपि, अनुबन्धलोपे च तत्सिद्धिः। तताप। तप्धातोर्लिटि,तिपि, तिपो णलादेशे द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये, उपधावृद्धौ च तत्सिद्धिः। तेपतुः। तप्धातोर्लिटः स्थाने प्रथमपुरुषद्विवचने तसि, तसश्च तुसि, द्वित्वे अभ्यासत्वे "हलादिः शेषः" इति पलोपे 'ततप्-अतुस्' इति जाते "असंयोगाल्लिट् कित्" इति लिटः कित्वे "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्यकारस्यैत्वेऽभ्यासलोपे च कृते 'तेपतुः' इति रूपम्। एवमुसि—'तेपुः'इति। तेपिथ, ततप्थ। तप्धातोर्लिटो मध्यमपुरुषैकवचने सिपि, सिपः स्थाने थलि, द्वित्वे, अभ्यासत्वे "हलादिः शेषः" इति पलोपे, भारद्वाजमते इडागमे "थलि च सेटि" इत्यकारस्यैत्वेऽभ्यासलोपे च कृते 'तेपिथ' इति रूपम्। पाणिनिमते "उपदेशेऽत्वतः"इतीण्निषेधे 'ततप्थ' इति रूपम्। तेपथुः। तेप। ततप-ततप, तेपिव, तेपिम। इति। तप्ता। तप्धातोर्लुटस्तिपि, तिपो डात्वे, तासि, टेर्लोपे च तत्सिद्धिः। तप्स्यति। लृटस्तिपि, स्ये, इडभावे च रूपम्। तपतु। लोटस्तिपि, शपि, अनुबन्धलोपे "एरुः" इति उत्वे च तत्सिद्धिः। अतपत्। लङि, तिपि शपि, अटि, तिप इलोपे च तत्सिद्धिः। तपेत्। तप्धातोर्विधिलिङस्तिपि, शपि, यासुटि, सर्वत्रानुबन्धलोपे, "अतो येयः" इति यास इयादेशे, गुणे, तिप इलोपे च तत्सिद्धिः। तप्यात्। तप्धातोराशिषि, लिङस्तिपि, यासुटि, अनुबन्धलोपे, तिप इलोपे, सलोपे च तत्सिद्धिः। अताप्सीत्। तप्धातोर्लुङस्तिपि "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते आर्धधातुकत्वे "एकाच उपदेशेऽनुदात्तात्" इति इण्निषेधे, अटि, तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति ईटि, "वदव्रजहलन्तस्याचः" इत्यचो वृद्धौ च कृतायाम् 'अताप्सीत्' इति रूपम्। अताप्ताम्। तप्धातोर्लुङस्तसि तसस्तामि, च्लौ, च्लेः सिचि, इचि गते, आर्धधातुकत्वे "एकाच उपदेशेऽनुदात्तात्" इति इण्निषेधे 'तप् स् ताम्' इति जाते "झलो झलि" इति सलोपे वृद्धौ अडागमे च 'अताप्ताम्' इति रूपम्। अग्रे-अताप्सुः। अताप्सीः, अताप्तम्, अताप्त। अताप्सम्, अताप्स्व, अताप्स्म, इति। वा भ्राशेति। "दिवादिभ्यः श्यन्" इत्यतः श्यन्निति, "कर्तरि शप्" इत्यतः कर्तरीति "सार्वधातुके

क्रमो दीर्घः स्यात् परस्मैपदे परे शिति । क्राम्यति-क्रामति । चक्राम । क्रमिता । क्रमिष्यति । क्राम्यतु क्रामतु । अक्राम्यत्-अक्रामत् । क्राम्येत्-क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् । पा पाने ॥ १६ ॥ पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७।३।७८। पादीनां पिबादयः स्युरित्संज्ञकशादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति । आत औ णलः ७।१।३४। आदन्ताद्धातोर्णल औकारादेशः स्यात् । पपौ ।

---

क्रम्” इत्यतः सार्वधातुक इति चानुवर्तते । तदाह—एभ्यः श्यन्वेति । क्रमः परस्मैपदेषु । “शमामष्टानां दीर्घः श्यनि” इत्यतो दीर्घ इति, “ष्ठिवुक्लमुचमां शिति” इत्यतः शिति इति चानुवर्तत इति भावः । क्राम्यति । क्रमु-पादविक्षेपेऽर्थे धातुर्वर्तते, उकारस्येत्संज्ञायां लोपे च तस्माल्लटस्तिपि, अनुबन्धलोपे “तिङ्शित्सार्वधातुकम्” इति सार्वधातुकत्वे “कर्तरि शप्” इति शपि प्राप्ते तस्वाधित्वा “वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः” इति श्यनि जाते, शस्य नस्य चेत्संज्ञायां लोपे च ‘क्रम् य ति’ इति स्थिते “क्रमः परस्मैपदेषु” इति क्रम उपधाया दीर्घत्वे च कृते‘क्राम्यति’इति रूपम् । पक्षे शपि दीर्घत्वे च—‘क्रामति’ इति रूपम् । क्राम्यति, क्राम्यतः, क्राम्यन्ति । क्राम्यसि, क्राम्यथः । क्राम्यथ । क्राम्यामि, क्राम्यावः, क्राम्यामः । पक्षे—क्रामति, क्रामतः, क्रामन्ति । इत्यादि । चक्राम । क्रम्धातोर्लिटस्तिपि, तिपो णलि, अनुबन्धलोपे, “लिटि धातोरनभ्यासस्य” इति द्वित्वे, “पूर्वोऽभ्यासः” इत्यभ्याससञ्ज्ञायां “हलादिः शेषः” इति लोपे “कुहोश्चुः” इति कस्य चत्वे “अत उपधायाः” इति वृद्धौ च सत्यां ‘चक्राम’ इति सिध्यति । अग्रे—चक्रमतुः, चक्रमुः । चक्रमिथ, चक्रमथुः, चक्रम । चक्राम, चक्रम, चक्रमिव, चक्रमिम ॥ इति ॥ क्रमधातोः सेट्कत्वादाह—क्रमिता । क्रमिष्यति । इति । लोटस्तिपि, श्यनि, दीर्घे—क्राम्यतु । शपि, दीर्घे च क्रामतु । अक्रमीत् । क्रम्धातोर्लुङस्तिपि, अटि, च्लौ, च्लेः सिचि, इचि गते, इटि, तिप इकारलोपे ईटि, सलोपे, “अतो हलादेर्लघोः” इति वृद्धौ प्राप्तायाम् “ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्” इत्यनेन निषिद्धे ‘अक्रमीत्’ इति रूपम् । अक्रमीत्, अक्रमिष्टाम्, अक्रमिषुः । अक्रमीः, अक्रमिष्टम्, अक्रमिष्ट । अक्रमिषम्, अक्रमिष्व, अक्रमिष्म । इति ॥ पाघ्राध्मेति । पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद् सद् एषां द्वन्द्वात् प्रथमाबहुवचनम् । पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद एषां द्वन्द्वात् प्रथमाबहुवचनम् । यथासंख्यमादेशाः । “ष्ठिवुक्लमुचमां शिति” इत्यतः शितीत्यनुवर्तते । श्चासौ इच्चेति कर्मधारयः । अङ्गाक्षिप्तप्रत्ययविशेष त्वात् तदादिविधिस्तदाह—इत्संज्ञकेति । पिबति । पाधातोः “वर्तमाने लट्” इति लटि, लटस्तिबादेशे सार्वधातुकसंज्ञायां “कर्तरि शप्” इति शपि, अनुबन्धलोपे शित्वात्सार्वधातुकसंज्ञायां “पाघ्राध्मास्थाम्ना” इत्यादिना पास्थाने पिबादेशे, पिबादेशस्यादन्तत्वाद्गुणा-

**आतो लोप इटि च ६।४।६४** अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । पपतुः । पपुः । पपिथ-पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् । **एर्लिङि ६।४।६७** घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । पेयात् । "गातिस्था" इति सिचो लुक् । अपात् । अपाताम् । **आतः ३।४।११०** सिज्लुकि आदन्तादेव झेर्जुस् स्यात् ।

---

भावे 'पिब अ ति' इति स्थिते "अतो गुणे" इति पररूपे 'पिबति' इति रूपम् । पिबति, पिबतः, पिबन्ति । पिबसि, पिबथः, पिबथ । पिबामि, पिबावः, पिबामः । इति रूपाणि । आत औ णल इति । औ इति लुप्तप्रथमाकम् । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । आत इति तद्विशेषणम् । तदन्तविधिस्तदाह-आदन्ताद्धातोरिति । पपौ । पाधातोर्लिटस्तिपि, तिपो णलादेशे अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इति अभ्याससञ्ज्ञायां "ह्रस्वः" इति ह्रस्वत्वे 'प पा अ' इति जाते "आत औ णलः" इति णल औत्वे वृद्धौ च सत्यां 'पपौ' इति रूपम् । आतो लोप इति । "आर्धधातुके" इत्यधिकृतम् । "दीङो युड्" इत्यतोऽचि क्ङिति इति चानुवर्तते । अचीत्यार्धधातुकविशेषणत्वात्तदादिविधिः । क्ङिति अजाद्यार्धधातुके, इटि च, आतो लोप इति लभ्यते । तत् फलितमाह—अजाद्योरिति । पपतुः । पाधातोर्लिटस्तसि, तसोऽतुसि, द्वित्वे, अभ्यासत्वे ह्रस्वत्वे च कृते, 'प पा अतुस्' इति जाते "असंयोगाल्लिट् कित्" इति अतुसः कित्वे "आतो लोप इटि च" इति आकारलोपे सस्य रुत्वे विसर्गत्वे च 'पपतुः' इति रूपम् । एवमुसि—पपुः । पाधातुरनिट् । भारद्वाजनियमात् थलि वेडित्याह-पपिथ, पपाथ । इट्पक्षे आल्लोपः । पपिव, पपिम । वसि, मसि च क्रादिनियमादिटि आल्लोप इति भावः । पाता । लुटि, डात्वे तासादि इति भावः । पिबतु । पाधातोर्लोटस्तिपि, शपि "पाघ्राध्मा" इत्यादिना पिबादेशे अदन्तत्वाद् गुणाभावे पररूपत्वे "एरुः" इति तिप इकारस्योत्वे च कृते 'पिबतु' इति । अपिबत् । पाधातोर्लङि, लङस्तिपि शपि, पिबादेशे, अटि, तिप इकारलोपे च रूपम् । पिबेत् । पाधातोर्लिङस्तिपि, शपि, पिबादेशे यासुटि यास इयादेशे गुणे यलोपे तिप इकारलोपे च रूपम् । एर्लिङीति । "आर्धधातुके" इत्यधिकृतम् । "घुमास्थागापाजहातिसाम्" इत्यनुवर्तते । "दीङो युडचि" इत्यतः कितीत्यनुवर्तते । ङितीति तु न । लिङार्धधातुकस्य ङित्त्वाभावात् । तदेतदाह—घुसंज्ञकानामित्यादिना । पेयात् । पाधातोराशीर्लिङस्तिपि, यासुटि उटि गते सुलोपे तिप इकारलोपे "एर्लिङि" इति पकाराकारस्यैत्वे च कृते 'पेयात्' इति रूपम् । पेयास्ताम् , पेयासुः । पेयाः, पेयास्तम्, पेयास्त । पेयासम् , पेयास्व, पेयास्म । इति रूपाणि । अपात् । पाधातोर्लुङस्तिपि, च्लौ, च्लेः सिचि, "गातिस्थाघुपा०" इति सिचो लोपे, तिप इकारलोपे अङ्गस्याडागमे च कृते 'अपात्' इति रूपं सिद्धम् । एवम् 'अपाताम्' इति बोध्यम् । अत्रा इति । "झेर्जुस्" इति सूत्रमनुवर्तते । "आतः सिज्लु-

उस्यपदान्तात् ६।१।९६। अपदान्तादकाराद्डुसि पररूपमेकादेशः स्यात् । अपुः । अपास्यत । ग्लै हर्षक्षये ॥ १७ ॥ ग्लायति । आदेच उपदेशेऽशिति ६।१।४५। उपदेशे एजन्तस्य धातोरात्वं स्यात् न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् । वाऽन्यस्य संयोगादेः ६।४।६८। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं स्यात् वार्धधातुके किति लिङि । ग्लेयात्-ग्लायात् ।

---

गन्तादिति वक्तव्यम्" इति वार्तिकात् सिज्लुकीति लभ्यते । "सिजभ्यस्त" इति पूर्वसूत्रेणैव सिद्धे नियमार्थमिदम् । तदाह—सिज्लुकीत्यादिना । उस्येति । "एकः पूर्वपरयोः" इत्यधिकृतम् । "आद्गुणः" इत्यस्मादादित्यनुवर्तते । "एङि पररूपम्" इत्यस्मात्पररूपमिति । तदाह—अपदान्तादिति । अपुः । पाधातोर्लुङः स्थाने प्रथमपुरुषबहुवचने झावागते अटि, च्लौ, च्लेः सिचि, "गातिस्थाघुपाभूभ्यः" इति सिचो लोपे "आतः" इति झेर्जुसि जस्येत्सञ्ज्ञायां लोपे च "उस्यपदान्तात्" इति पररूपत्वे सस्य रुत्वे विसर्गत्वे च 'अपुः' इति रूपम् । अग्रे—अपाः, अपातम्, अपात । अपाम्, अपाव, अपाम । इति बोध्यम् । हर्षक्षये—धातुक्षये, बलक्षय इति यावत् । ग्लायति । शपि आयादेशः । शिद्विषयत्वादात्वं न । आदेच इति । एजन्तस्य धातोरिति । "लिटि धातोरनभ्यासस्य" इत्यतो धातोरित्यनुवृत्तम् एचा विशेष्यते, तदन्तविधिरिति भावः । जग्लौ । ग्लैधातोर्लिटस्तिपि, तिपो णलादेशे "आदेच उपदेशेऽशिति" इत्यात्वे "लिटि धातोरनभ्यासस्य" इति द्वित्वे सति 'ग्ला अ' इति जाते "पूर्वोऽभ्यासः" इति अभ्यासत्वे "ह्रस्वः" इति अभ्यासह्रस्वत्वे "हलादिः शेषः" इति ल्लोपे "कुहोश्चुः" इति गस्य जत्वे "आत औ णलः" इत्यौत्वे "वृद्धिरेचि" इति वृद्धौ च सत्यां 'जग्लौ' इति रूपम् । अग्रे—जग्लतुः, जग्लुः । भारद्वाजनियमात्थलि वेट्—जग्लिथ-जग्लाथ, जग्लथुः, जग्ल । जग्लौ, जग्लिव, जग्लिम । ग्लाता । ग्लैधातोर्लुटस्तिपि, तासि, तिपो डात्वे, "आदेच उपदेशेऽशिति" इति ग्लैधातोरात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'ग्लाता' इति रूपम् । ग्लास्यति । "आदेच उपदेशेऽशिति" इत्यात्वम् । ग्लायतु । ग्लैधातोर्लोटस्तिपि, शपि, आयादेशे "एरुः" इति तिप इकारस्योत्वे च कृते रूपम् । अग्लायत् । लङस्तिपि, शपि, आयादेशे, अङ्गस्याडागमे तिप इकारस्य लोपे च रूपम् । ग्लायेत् । ग्लैधातोर्लिङस्तिपि, शपि, "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति लिङो यासुडागमे उटि गते "अतो येयः" इति यास इयादेशे "लोपो व्योर्वलि" इति य्लोपे "एचोऽयवायावः" इत्ययादेशे "आद्गुणः" इति गुणे "इतश्च" इति तिप इकारलोपे च कृते 'ग्लायेत्' इति रूपम् । वाऽन्यस्येति । "आर्धधातुके" इत्यधिकृतम् । "एर्लिङि" इत्यनुवर्तते । एरिति प्रथमान्तम् । "आतो लोप इटि च" इत्यत आत इत्यनुवर्तते । कस्मादन्यस्येत्यपेक्षायां "घुमास्थागापाजहातिसां हलि" इति प्रकृतत्वात्तेभ्योऽन्यस्येति लभ्यते । "दीङो युडचि" इत्यतः कितीत्यनुवर्तते । तदाह—घुमास्थादेरन्यस्येति । ग्लेयात्,

**यमरमनमातां सक् च ७।२।७३।** एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु। अग्लासीत्। अग्लास्यत्। **हृञ् कौटिल्ये ॥१८॥** ह्वरति। **ऋतश्च संयोगादेर्गुणः ७।४।१०।** ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्यात् लिटि। उपधाया वृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। जह्वरथुः। जह्वर। जह्वार, जह्वर। जह्वरिव।

---

ग्लायात्। ग्लैधातोराशीर्लिङस्तिपि, तस्य "लिङाशिषि" इत्यार्धधातुकत्वे आर्धधातुकत्वात् शबभावे यासुटि, "आदेच उपदेशेऽशिति" इत्यात्वे तिप इकारलोपे 'ग्ला यास् त्' इति स्थिते "स्कोः संयोगाद्योरन्ते च" इति सलोपे "वान्यस्य संयोगादेः" इति ग्लाइत्यस्य, वैत्वे च कृते 'ग्लेयात्' इति रूपम्। पक्षे वाग्रहणादेत्वाभावे 'ग्लायात्' इति रूपम्। अग्रे तु-ग्लेयास्ताम्, ग्लेयासुः। ग्लेयाः, ग्लेयास्तम्, ग्लेयास्त। ग्लेयासम्, ग्लेयास्व, ग्लेयास्म। ग्लायात्, ग्लायास्ताम्, ग्लायासुः। ग्लायाः, ग्लायास्तम्, ग्लायास्त। ग्लायासम्, ग्लायास्व, ग्लायास्म। इति रूपाणि। यमरसनमेति। सकि ककार इत् अकार उच्चारणार्थः। कित्वादन्तावयवः। चकारेण "इडत्यर्ति" इत्यत इडिति "स्तुसुधूञ्भ्य" इत्यतः परस्मैपदेष्विति चानुकृष्यते "अञ्जेः सिचि" इत्यतः सिचीति च। तच्च षष्ठ्या विपरिणम्यते। तदाह—एषां सक् स्यादित्यादिना। अग्लासीत्। ग्लैधातोर्लुङस्तिपि, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यटि, 'अग्लै स् त्' इति जाते "आदेच उपदेशेऽशिति" इति ग्लैधातोरात्वे "यमरमनमातां सक्च" इति अङ्गस्य सगागमे सिचः सकारस्य इडागमे च कृते "अग्लास् इ स् ति' इति जाते "इतश्च" इति तिप इकारस्य लोपे तस्यापृक्तसंज्ञायाम् "अस्तिसिचोऽपृक्ते" इति अपृक्तत् इत्यस्य ईडागमे "इट ईटि" इति सिचः सकारस्य लोपे "सिज्लोप एकादेशे सिद्धो वाच्यः" इति सलोपस्य सिद्धत्वात् सवर्णदीर्घे 'अग्लासीत्' इति रूपम्। अग्रे—अग्लासिष्टाम्, अग्लासिषुः। अग्लासीः, अग्लासिष्टम्, अग्लासिष्ट। अग्लासिषम्, अग्लासिष्व, अग्लासिष्म। इति रूपाणि। अग्लास्यत्। लृङि, लृङस्तिपि, स्ये, आत्वे, अटि च रूपम्। ह्वरति। शपि, गुणे रपरत्वम्। ऋतश्च संयोगादेरिति। अत्र "दयतेर्दिगि लिटि" इत्यतो लिटीत्यनुवर्तत इति भावः। उपधाया वृद्धिरिति। "अत उपधायाः" इत्यनेनेति शेषः। जह्वार। हृधातोर्लिटस्तिपि, तिपो णलि, "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे, "उरत्" इति अभ्यासऋवर्णस्य अत्वे "उरण् रपरः" इति रपरे च जाते 'ह्वर् अ' इति स्थिते "हलादिः शेषः" इति वस्य रस्य च लोपे "कुहोश्चुः" इति हस्य झत्वे, "अभ्यासे चर्च" इति झस्य जत्वे 'जह्वृ अ' इति जाते "ऋतश्च संयोगादेर्गुणः" इति गुणे, अकारे रपरे च जाते "अत उपधायाः" इति वृद्धौ च सत्याम् 'जह्वार' इति रूपम्। एवमेव जह्वरतुः, जह्वरुः, इति बोध्यम्। जह्वर्थ। क्रादिनियमप्राप्तस्य इटः "अचस्तास्वत्" इति "ऋतो भारद्वाजस्य" इति च निषेधात् इडागमाभाव इति भावः। जह्वरिव, जह्वरिम। क्रादिनियमादिट्।

जहरिम। हर्ता। ऋद्धनोः स्ये ७।२।७०। ऋतो हन्तेश्च स्यस्येट् स्यात्। हरिष्यति। हरतु। अहरत्। हरेत्। गुणोऽर्तिसंयोगाद्योः ७।४।२९। अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्यात् यकि यादावार्धधातुके लिङि च। ह्रियात्। अहार्षीत्। अहरि-

---

हर्ता। हृधातोर्लुटस्तिपि, तासि, तिपो डात्वे, डित्वसामर्थ्यादभस्यापि टेर्लोपे 'हृ त् आ' इति जाते तासस्तकारस्य "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "आर्धधातुकस्येड् वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे; "सार्वधातुकार्धधातुकयोः" इति हृइत्यस्य गुणे अकारे, "उरण् रपरः" इति रपरे च 'हर्ता' इति रूपम्। ऋद्धनोः स्य इति। ऋद्धनोः इति पञ्चम्यर्थे षष्ठी। स्ये इति षष्ठ्यर्थे सप्तमी "आर्धधातुकस्येड्वलादेः" इत्यत इडित्यनुवर्तते, तदाह—ऋतो हन्तेश्चेति। हरिष्यति। हृधातोर्लृटि, लृटस्तिपि, "स्यतासी लृलुटोः" इति स्ये, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे, "आर्धधातुकस्येड्वलादेः" इति इडागमे कृते "सार्वधातुकार्धधातुकयोः" इति गुणे अकारे "उरण् रपरः" इति रपरे "आदेशप्रत्यययोः" इति षत्वे च कृते 'हरिष्यति' इति रूपम्। हरिष्यति, हरिष्यतः, हरिष्यन्ति। हरिष्यसि, हरिष्यथः, हरिष्यथ। हरिष्यामि, हरिष्यावः, हरिष्यामः, इति रूपाणि। हरतु। लोटि, तिपि, शपि, गुणे, रपरे, उत्वम्। अहरत्। अटि, तिप इकारलोप इति लङि विशेषः। हरेत्। हृधातोर्लिङस्तिपि, शपि, गुणे रपरे च 'हर् अ ति' इति जाते "यासुट्परस्मैपदेषूदात्तो ङिच्च" इति यासुटि, उटि गते, "अतो येयः" इति यास इयादेशे "लोपो व्योर्वलि" इति यलोपे "आद्गुणः" इति गुणे तिप इकारस्य "इतश्च" इत्यनेन लोपे कृते रूपम्। गुणोऽर्तीति। "अङ्गस्य" इत्यधिकृतम्। "रीङृतः" इत्यतः ऋत इत्यनुवर्तते। "अकृत्सार्वधातुकयोः" इत्यतोऽसार्वधातुकग्रहणमनुवर्तते। आर्धधातुके इति लभ्यते। "रिङ् शयग्लिङ्क्षु" इत्यतः यकि लिङीति च लभ्यते। "अयङ् यि क्ङिति" इत्यतो यीति सप्तम्यन्तमनुवर्तते। आर्धधातुकविशेषणत्वात्तदादिविधिस्तदाह—अर्तेरित्यादिना। ह्रियात्। हृधातोराशीर्लिङस्तिपि, यासुटि, उटि गते, यासुटः कित्वात् "क्ङिति च" इति गुणनिषेधे "गुणोऽर्ति संयोगाद्योः" इति गुणे "इतश्च" इति तिप इकारलोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे "अचो रहाभ्यां द्वे" इति द्वित्वे च 'ह्रियात् इति। ह्रियास्ताम्, ह्रियासुः। ह्रियाः, ह्रियास्तम्, ह्रियास्त। ह्रियासम्, ह्रियास्व, ह्रियास्म। अहार्षीत्। हृधातोर्लुङस्तिपि, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अडागमे 'अ हृ स् ति' इति जाते सिचः सकारस्य आर्धधातुकत्वे इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे "इतश्च" इति तिप इकारलोपे अपृक्तसंज्ञायाम् "अस्तिसिचोऽपृक्ते" इति तिपस्तकारस्य ईडागमे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ कृतायाम् 'अहार्षीत्' इति रूपम्। अहार्षीत्, अहार्ष्टाम्, अहार्षुः। अहार्षीः, अहार्ष्टम्, अहार्ष्ट। अहार्षम्, अहार्ष्व, अहार्ष्म। इति रूपाणि।

ष्यत् । श्रु श्रवणे ॥ १९ ॥ **श्रुवः शृ च ३।१।७४।** श्रुवः शृ इत्यादेशः स्यात्, श्नुप्रत्ययश्च । शृणोति । **सार्वधातुकमपित् १।२।४।** अपित्सार्वधातुकं ङिद्वत् स्यात् । शृणुतः । **हुश्नुवोः सार्वधातुके ६।४।८७।** हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि । शृणुथः । शृणुथ । शृणोमि । **लोपश्चास्यान्यतरस्यां म्वोः ६।४।१०७।** असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा स्यात् म्वोः परयोः । शृण्वः-शृणुवः । शृण्मः-शृणुमः । शुश्राव ।

---

अह्वरिष्यत । हृवृधातोर्लृङस्तिपि, स्ये, "ऋद्धनोः स्ये" इति स्यस्य इडागमे "सार्वधातुकार्धधातुकयोः" इति गुणे अङ्गस्याडागमे तिप इकारलोपे च कृते रूपम् । श्रुवः शृ चेति । शृ इति लुप्तप्रथमाकम् । चकारेण "स्वादिभ्यः श्नुः" इति सूत्रस्थः श्नुः समुच्चीयते । शृणोति । श्रु-श्रवणार्थकधातोर्लटस्तिपि, अनुबन्धलोपे "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे, "कर्तरि शप्" इति शपि प्राप्ते तम्बाधित्वा "श्रुवः शृ च" इति श्नुप्रत्यये श्रुइत्यस्य स्थाने शृ आदेशे च कृते "लशक्वतद्धिते" इति शकारस्येत्संज्ञायाम् "तस्य लोपः" इति श्लोपे शित्वात्सार्वधातुकत्वे "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावे "सार्वधातुकार्धधातुकयोः" इति नोर्गुणे "ऋवर्णान्नस्य णत्वं वाच्यम्" इति णत्वे च 'शृणोति' इति रूपम् । सार्वधातुकमिति । अत्र "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इत्यतो ङिदित्यनुवर्तते । शृणुतः । 'शृणुतस्' इति स्थिते "सार्वधातुकमपित्" इति तसादीनां ङित्वान्न गुणः । हुश्नुवोरिति । श्नोः प्रत्ययत्वात्तदन्तग्रहणम् । "इणो यण्" इत्यतो यण् इत्यनुवर्तते । "अचि श्नु" इत्यतोऽचीति, तस्य सार्वधातुकविशेषणत्वात्तदादिविधिः । "एरनेकाच" इति सूत्रम् एरिति वर्जमनुवर्तते । "ओः सुपि" इत्यत ओरिति च षष्ठ्यन्तम् । तदाह—हुश्नुवोरित्यादिना । शृण्वन्ति । 'शृणु झि' इति स्थिते झस्य "झोऽन्तः" इत्यन्तादेशे "अचि श्नुधातु०" इति सूत्रेणोवङि प्राप्ते तम्बाधित्वा "हुश्नुवोः सार्वधातुके" इत्यनेन यणि कृते 'शृण्वन्ति' इति रूपम् । शृणोमि । मिपमाश्रित्य श्नोर्गुणः । लोपश्चेति । "उतश्च प्रत्ययादसंयोगपूर्वात्" इति पूर्वसूत्रोक्त उकार अस्येत्यनेन परामृश्यते । प्रत्ययशब्दः प्रत्ययसम्बन्धिनि वर्तते । असंयोगपूर्वात् प्रत्ययादिति च उकारेऽन्वेति । स च अङ्गस्य विशेषणम् । तदन्तविधिस्तदाह—असंयोगेति । शृण्वः-शृणुवः । श्रुधातोर्लटो वसि, "श्रुवः शृ च" इति श्रुवः शृ आदेशे शब्विषये श्नुप्रत्यये च कृते शकारस्येत्संज्ञायां लोपे च शित्वात्सार्वधातुकत्वे "सार्वधातुकमपित्" इति श्नोर्ङित्वे "क्ङिति च" इति गुणाभावे णत्वे च कृते 'शृ णु वस्' इति जाते "लोपश्चास्यान्यतरस्यां म्वोः" इति वा उकारलोपे, रुत्वे विसर्गे च 'शृण्वः' इति रूपम् । लोपाभावपक्षे 'शृणुवः' इति । एवमेव मसि ज्ञेयम् । शुश्राव । श्रुधातोर्लिटस्तिपि, तिपो णलि, "लिटि धातोरनभ्यासस्य" इति द्वित्वे, "पूर्वोऽभ्यासः" इति अभ्यासत्वे "हलादिः शेषः" इति आदिहल्शेषे "सार्वधातुकार्धधातुकयोः" इति गुणे "एचोऽयवायावः" इत्ययादेशे "अत उपधायाः"

शुश्रुवतुः । शुश्रुवुः । शुश्रोथ । शुश्रुवथुः । शुश्रुव । शुश्राव-शुश्रव । शुश्रुव, शुश्रुम । श्रोता । श्रोष्यति । शृणोतु—शृणुतात् । शृणुताम् । शृण्वन्तु । उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६। असंयोगपूर्वात्प्रत्ययादुतो हेर्लुक् स्यात् । शृणु-शृणुतात् । शृणुतम् । शृणुत । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृ-

---

इति उपधावृद्धौ 'शुश्राव'इति रूपम् । शुश्रुवतुः । अतुसि "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ"इति उवङि, सस्य रुत्वे, रस्य विसर्गत्वे च रूपम् । एवमुसि—शुश्रुवुः । थलि, वमयोश्च क्रादित्वान्नित्यमिण्निषेधः । तदाह—शुश्रोथ । शुश्रुवथुः । अथुसि अपित्वाद् "असंयोगाल्लिट् कित्" इति किद्वद्भावे "क्ङिति च"इति गुणनिषेधे उवङि च कृते रूपम् । शुश्रुव । एवं मध्यमपुरुषबहुवचने—अपरे, गुणाभावः, उवङिति च बोध्यम् । शुश्राव-शुश्रव । उत्तमपुरुषैकवचने णलि, "णलुत्तमो वा" इति वा णिद्वद्भावे वृद्धौ आवादेशे च 'शुश्राव' इति, णिद्वद्भावाभावे "सार्वधातुकार्धधातुकयोः"इति गुणे अवादेशे च 'शुश्रव' इति रूपम् । शुश्रुव-शुश्रुम । वमयोस्तु क्रादित्वान्नित्यमिण्निषेधः । श्रोता । श्रुधातोर्लुटस्तिपि, तासि, "एकाच उपदेशेऽनुदात्तात्" इति इण्निषेधे तिपो डात्वे, डित्वसामर्थ्यादभस्यापि टेर्लोपे श्रुधातोर्गुणे च 'श्रोता' इति रूपम् । श्रोष्यति । श्रुधातोर्लृटस्तिपि, स्ये, इडागमाभावे, गुणे, षत्वे च रूपम् । शृणोतु । श्रुधातोर्लोटस्तिपि, अनुबन्धलोपे "श्रुवः शृ च" इति श्रुवः शृ आदेशे श्नुप्रत्यये च कृते श्नोः शस्येत्संज्ञायां लोपे च शित्वात्सार्वधातुकत्वे "सार्वधातुकमपित्"इति ङित्वात् "क्ङिति च"इति गुणाभावे "ऋवर्णान्नस्य णत्वं वाच्यम्" इति णत्वे "सार्वधातुकार्धधातुकयोः"इति श्नोर्गुणे "एरुः"इति तिप इकारस्योत्वे "शृणोतु"इति रूपम् । शृणुतात् । 'शृणु तु'इति स्थिते "तुह्योस्तातङाशिष्यन्यतरस्याम्" इति तोः तातङि, ङित्वात् गुणाभावे रूपम् । शृणुताम् । लोटि, तसि, शृ आदेशे श्नुप्रत्यये च उभयत्र ङित्वाद्गुणाभावे णत्वे "तस्थस्थमिपां तान्तन्तामः" इति तसस्तामि च रूपम् । शृण्वन्तु । 'शृ णु झि' इति स्थिते "झोऽन्तः" इत्यन्तादेशे "हुश्नुवोः सार्वधातुके" इति यणि, "एरुः" इति तिप इकारस्योत्वे 'शृण्वन्तु' इति रूपम् । उतश्च प्रत्ययादिति । अत्र "चिणो लुक्" इत्यतो लुगिति, "अतो हेः" इत्यतो हेरिति चानुवर्तत इति भावः । शृणु । श्रुधातोर्लोटस्सिपि, श्नौ, शृआदेशे च अनुबन्धलोपे णत्वे च कृते "सेर्ह्यपिच्च" इति सेर्हि आदेशे 'शृ णु हि' इति जाते "उतश्च प्रत्ययादसंयोगपूर्वात्" इति हेर्लुकि कृते रूपम् । हेः स्थाने वा तातङि—शृणुतात् । शृणुतम् । शृणुत । अत्र "तस्थस्थमिपां तान्तन्तामः" इति विशेषो बोध्यः । शृणवानि । श्रुधातोर्लोट उत्तमपुरुषैकवचने मिपि "मेर्निः" इति मेः स्थाने नि आदेशे जाते "श्रुवः शृ च" इति श्नुप्रत्यये शृआदेशे च कृते अनुबन्धलोपे 'शृ नु नि' इति भूते अत्र "ऋवर्णान्नस्य णत्वं वाच्यम्" इति णत्वे, "आडुत्तमस्य पिच्च" इति उत्तमपुरुषस्य नेः आडागमे, टित्वादाद्यावयवे "सार्वधातुकार्धधातुकयोः" इति

णोत्। अश्रृणुताम्। अश्रृण्वन्। अश्रृणोः। अश्रृणुतम्। अश्रृणुत। अश्रृणवम्। अश्रृणुव-अश्रृण्व। अश्रृणुम—अश्रृण्म। श्रृणुयात्। श्रृणुयाताम्। श्रृणुयुः। श्रृणुयाः। श्रृणुयातम्। श्रृणुयात। श्रृणुयाम्। श्रृणुयाव। श्रृणुयाम॥ श्रूयात्। अश्रौषीत्। अश्रोष्यत्। गम्लृ गतौ॥ २०॥ इषुगमियमां छः ७।१।७७। एषां

---

गुणे "एचोऽयवायावः" इत्यवादेशे 'श्रृणवानि' इति रूपम्। एवं वमयोरपि बोध्यम्। अश्रृणोत्। श्रुधातोर्लङस्तिपि, "श्रुवः श्रृ च" इति श्नौ श्रृ आदेशे च अनुबन्धलोपे अडागमे णत्वे गुणे तिप इकारस्य लोपे 'अश्रृणोत्' इति रूपम्। अश्रृणुताम्। तसस्तामादेशो विशेषः। अश्रृण्वन्। श्रुधातोर्लङो झौ "झोऽन्तः" इत्यन्तादेशे, अटि, "श्रुवः श्रृ च" इति श्रोः श्रृ आदेशे श्नौ प्रत्यये च कृते शूलोपे, नस्य णत्वे "हुश्नुवोः सार्वधातुके" इति यणि, अन्तेः "इतश्च" इति इकारलोपे "संयोगान्तस्य लोपः" इति तस्य लोपे च कृते 'अश्रृण्वन्' इति रूपम्। अश्रृण्द-अश्रृणुव। श्रुधातोर्लङो वसि "श्रुवः श्रृ च" इति श्रादेशे श्नुप्रत्यये च कृते, शूलोपे अटि णत्वे "नित्यं ङितः" इति सूलोपे 'अ श्रृणु व' इति जाते "लोपश्चास्यान्यतरस्यां म्वोः" इत्युकारलोपे 'अश्रृण्व' इति, उकारलोपाभावे 'अश्रृणुव' इति बोध्यम्। एवं मसि—'अश्रृण्म-अश्रृणुम इति। श्रृणुयात्। श्रुधातोर्लिङस्तिपि, "श्रुवः श्रृ च" इति श्रादेशे श्नुप्रत्यये च कृते शूलोपे णत्वे "यासुट्परस्मैपदेषूदात्तो ङिच्च" इति यासुटि, उटि गते "लिङः सलोपोऽनन्त्यस्य" इति सूलोपे "इतश्च" इति तिप इकारलोपे च कृते "श्रृणुयात्" इति रूपम्। श्रृणुयाताम्। श्रुधातोर्लिङस्तसि, तसस्तामि, 'श्रुवः श्रृ' इत्यादेशे, श्नुप्रत्यये अनुबन्धलोपे च कृते, तामो यासुटि उटि गते, "लिङः सलोपोऽनन्त्यस्य" इति सूलोपे च तत्सिद्धिः। श्रृणुयुः। 'श्रृणु या झि' इति स्थिते "झेर्जुस्" इति जुसि, "चुटू" इति जस्येत्संज्ञायां "तस्य लोपः" इति लोपे "उस्यपदान्तात्" इति पररूपत्वे च कृते रुत्वे विसर्गे च 'श्रृणुयुः' इति रूपम्। श्रृणुयाः। 'श्रृणु यास् सि' इति स्थिते "लिङः सलोपोऽनन्त्यस्य" इति सूलोपे "इतश्च" इति सिप इकारलोपे सिपः सकारस्य रुत्वे विसर्गत्वे च रूपम्। श्रूयात्। श्रुधातोराशिषि लिङि, लिङस्तिपि, यासुटि, उटि गते "इतश्च" इति तिप इकारलोपे "स्कोः संयोगाद्योरन्ते च" इति सूलोपे "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे 'श्रूयात्' इति रूपम्। श्रूयात्, श्रूयास्ताम्, श्रूयासुः, श्रूयाः, श्रूयास्तम्, श्रूयास्त। श्रूयासम्, श्रूयास्व, श्रूयास्म। इति रूपाणि। अश्रौषीत्। श्रुधातोः "लुङ्" इति लुङि, "तिप्तस्झि०" इत्यादिना लुङस्तिपि, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते, अडागमे 'अश्रुस् ति' इति जाते "इतश्च" इति तिप इकारलोपे, अपृक्तसंज्ञायाम् "अस्तिसिचोऽपृक्ते" इति ईटि, सिचः सकारस्य आर्धधातुकत्वादिटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इत्यनेन इटो निषेधे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ "आदेशप्रत्यययोः" इति षत्वे 'अश्रौषीत्' इति रूपम्।

छः स्यात् शिति। गच्छति। जगाम। **गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८।** एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि। जग्मतुः। जग्मुः। जगमिथ–जगन्थ। जग्मथुः। जग्म। जगाम–जगम। जग्मिव। जग्मिम। गन्ता।

---

अश्रौषीत्, अश्रौष्टाम्, अश्रौषुः। अश्रौषीः, अश्रौष्टम्, अश्रौष्ट। अश्रौषम्, अश्रौष्व, अश्रौष्म, इति रूपाणि। अश्रोष्यत्। श्रुधातोर्लृङस्तिपि, अटि, "स्यतासी लृलुटोः" इति स्ये, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे "सार्वधातुकार्धधातुकयोः" इति गुणे, "आदेशप्रत्ययोः" इति षत्वे "इतश्च" इति तिप इकारलोपे च कृते 'अश्रोष्यत्' इति रूपम्। इषुगमियमामिति। अत्र "ष्ठिवुक्लमुचमां शिति" इत्यतः शितीत्यनुवर्तते। गच्छति। गम्लृ गतौ, तत्र "उपदेशेऽजनुनासिक इत्" इति लृकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे, "भूवादयो धातवः" इति धातुसंज्ञायां "वर्तमाने लट्" इति लटि, "तिप्तस्झि" इत्यादिना प्रथमपुरुषैकवचनविवक्षायां तिपि, पकारस्येत्संज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि, शकारस्य पकारस्य चेत्संज्ञायां लोपे च शित्वात्सार्वधातुकत्वे 'गम् अ ति' इति स्थिते "इषुगमियमां छः" इति सर्वस्य गमः छादेशे प्राप्ते "अलोऽन्त्यस्य" इति अन्त्यस्य मकारस्य स्थाने जाते 'गछति' इति भूते "छे च" इति तुगागमे, उकि गते, कित्वादन्त्यावयवे जाते "स्तोः श्चुना श्चुः" इति श्चुत्वे 'गच्छति' इति रूपम्। गच्छति, गच्छतः, गच्छन्ति। गच्छसि, गच्छथः, गच्छथ। गच्छामि, गच्छावः, गच्छामः। इति रूपाणि। जगाम। गम्धातोः "परोक्षे लिट्" इति लिटि, प्रथमपुरुषैकवचनविवक्षायां "तिप्तस्झि" इत्यादिना तिपि, "परस्मैपदानां णलतुसुस्थल्" इत्यादिना तिपः स्थाने णलादेशे, "चुटू" इति णकारस्येत्संज्ञायां "हलन्त्यम्" इति लकारस्य चेत्संज्ञायां "तस्य लोपः" इति उभयोर्लोपे 'गम् अ' इति जाते "लिट् च" इत्यार्धधातुकत्वे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इति गकारेऽवशिष्टे 'गगम् अ' इति भूते "कुहोश्चुः" इति गकारस्य जत्वे "अत उपधायाः" इति वृद्धौ 'जगाम' इति रूपम्। गमहनजनेति। अत्र "ऊदुपधाया गोहः" इत्यत उपधाया इत्यनुवर्तते। "अचि श्नुधातु" इत्यत अचि इत्यनुवर्तते; तस्य अङ्गाक्षिप्तप्रत्ययविशेषणतया तदादिविधिलाभ इति भावः। जग्मतुः। गम्धातोर्लिटस्तसि, तसोऽतुसादेशे, द्वित्वे अभ्यासकार्ये 'जगम् अतुस्' इति जाते, अतुसः "असंयोगाल्लिट् कित्" इति कित्वे "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधाभूताकारस्य लोपे, सस्य रुत्वे विसर्गत्वे च 'जग्मतुः' इति रूपम्। एवम्—'जग्मुः' इति बोध्यम्। भारद्वाजनियमात्थलि वेट्। तदाह—जगमिथ–जगन्थ। जगाम–जगम। "णलुत्तमो वा" इति विकल्पेन णिद्वद्भावपक्षे "अत उपधायाः" इति वृद्धौ 'जगाम' इति। तदभावपक्षे–'जगम' इति। जग्मिव,

**गमेरिट् परस्मैपदेषु ७।२।५८।** गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु। गमिष्यति। गच्छतु। अगच्छत्। गच्छेत्। गम्यात्। **पुषादिद्युताद्यॢदितः परस्मैपदेषु ३।१।५५।** श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात् परस्मैपदेषु। अगमत्। अगमिष्यत्। इति परस्मैपदिनः॥

---

जगाम। अत्र क्रादिनियमादिट्। गन्ता। गम्धातोर्लुटस्तिपि, "स्यतासी लृलुटोः" इति तासि, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे "लुटः प्रथमस्य डारौरसः" इति तिपो डात्वे, डस्येत्संज्ञायां लोपे च, डित्वसामर्थ्यादभस्यापि टेर्लोपे 'गम् ता' इति जाते "नश्चापदान्तस्य झलि" इति मस्यानुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णे च कृते 'गन्ता' इति रूपम्। गन्ता, गन्तारौ, गन्तार। गन्तासि, गन्तास्थः, गन्तास्थ। गन्तास्मि, गन्तास्वः। गन्तास्मः। इति रूपाणि। गमेरिडिति। गमेरिति पञ्चमी। "सेऽसिचि" इत्यतः से इत्यनुवृत्तेन आर्धधातुकस्येत्यनुवृत्तं विशेष्यते। तदादिविधिः। तदाह—गमेः परस्येत्यादिना। गमिष्यति। गम्धातोर्लृटस्तिपि, "स्यतासी लृलुटोः" इति स्ये, तस्य आर्धधातुकत्वादिडागमे प्राप्ते, "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे सति "गमेरिट् परस्मैपदेषु" इति इडागमे "आदेशप्रत्यययोः" इति षत्वे च कृते 'गमिष्यति' इति रूपम्। गच्छतु। गम्धातोर्लोटस्तिपि, शपि अनुबन्धलोपे "इषुगमियमां छः" इति छादेशे "छे च" इति तुकागमे उकि गते "स्तोः श्चुना श्चुः" इति श्चुत्वे "एरुः" इति तिप इकारस्योत्वे 'गच्छतु' इति रूपम्। अगच्छत्। गम्धातोर्लङस्तिपि, शपि, अनुबन्धलोपे "इतश्च" इति तिप इकारलोपे "इषुगमियमां छः" इति छादेशे तुगागमे श्चुत्वे च कृते, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे 'अगच्छत्' इति रूपम्। गच्छेत्। गम्धातोर्लिङस्तिपि शपि अनुबन्धलोपे "इषुगमियमां छः" इति छादेशे "छे च" इति तुकि, उकि गते, श्चुत्वे, "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुटि, उटि गते "अतो येयः" इति यास इयादेशे "गच्छ इय् ति" इति जाते "लोपो व्योर्वलि" इति यलोपे "इतश्च" इति तिप इकारलोपे "आद्गुणः" इति गुणे 'गच्छेत्' इति रूपम्। गच्छेत्, गच्छेताम्, गच्छेयुः। गच्छेः, गच्छेतम्, गच्छेत। गच्छेयम्, गच्छेव, गच्छेम। इति रूपाणि। गम्यात्। गम्धातोराशिषि लिङि, लिङस्तिपि, "लिङाशिषि" इत्यार्धधातुकत्वेन शबभावे "किदाशिषि" इति यासुटि, उटि गते "इतश्च" इति तिप इकारलोपे 'गम्यास्त्' इति जाते "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'गम्यात्' इति रूपम्। पुषादीति। अत्र "च्लेः सिच्" इत्यतः च्लेरिति "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यतोऽङिति चानुवर्तते इति भावः। अगमत्। गम्धातोर्लुङस्तिपि, अटि, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि प्राप्ते तम्बाधित्वा "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इति च्लेरङादेशे ङलोपे "इतश्च"

## ( अथात्मनेपदिनः )

एध वृद्धौ ॥ १ ॥ टित आत्मनेपदानां टेरे ३।४।७९। टितो लस्यात्मनेपदानां टेरेत्वम्। एधते । आतो ङितः ७।२।८१। आतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते । थासः से ३।४।८०। टितो लस्य थासः से स्यात् । एधसे। एधेथे ।

---

इति तिप इकारलोपे च कृते 'अगमत्' इति रूपम् । अगमत् , अगमताम् , अगमन् । अगमः, अगमतम् , अगमत । अगमम् । अगमाव, अगमाम । इति रूपाणि । अगमिष्यत् । गम्धातोर्लृङस्तिपि, स्ये, स्यस्य "गमेरिट् परस्मैपदेषु" इत्यनेन इडागमे, अटि, तिप इकारलोपे, सस्य षत्वे च 'अगमिष्यत्' इति रूपम् । इति श्रीपण्डित-प्रवरजोशीत्युपाह्वसदाशिवशास्त्रिकृतसुधाख्यव्याख्यायां परस्मैपदम् ।

एध वृद्धाविति । जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति षड्भावविकाराः । तत्र चतुर्थावस्था वृद्धिः—उपचयः । टित आत्मनेपदानामिति । टेः ए इति च्छेदः । 'लस्य' इत्यधिकृतम् । तदाह—टितो लस्येति । एधते । एधधातोः अकार उच्चारणार्थः, तस्मिन् गते "वर्तमाने लट्" इति लटि, टकारस्य "हलन्त्यम्" इतीत्संज्ञायां "तस्य लोपः" इति लोपे लकारोत्तरवर्तिन अकारस्य "उपदेशेऽजनुनासिक इत्" इतीत्संज्ञायां "तस्य लोपः" इति लोपे 'एध् ल्' इति भूते अत्र "तिप् तस् झि०" इत्यादिना सर्वे आदेशाः प्राप्ताः । तत्र "अनुदात्तङित आत्मनेपदम्" इति एध्धातोरनुदात्तत्वात् "तङानावात्मनेपदम्" इति त आतां झ इत्येतेषामात्मनेपदसंज्ञत्वात् तेषां प्राप्तिर्जाता । तत्र प्रथमपुरुषैकवचनविवक्षायां तकृते "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वात् "कर्तरि शप्" इति शपि, शपयोरित्संज्ञायां लोपे च 'एध् अ त' इति जाते "अचोऽन्त्यादि टि" इति तकारोत्तरवर्तिन अकारस्य टिसंज्ञायां "टित आत्मनेपदानां टेरे" इति टिसंज्ञकस्यैत्वे 'एधते' इति रूपम् । आतो ङित इति । ङित इत्यवयवषष्ठी । "अतो येयः" इत्यस्मात् अत इति पञ्चम्यन्तम् , इय इति प्रथमान्तं चानुवर्तते । यकारादकार उच्चारणार्थः । तदाह—अतः परस्येति । एधेते । एध्धातोर्लटः स्थाने प्रथमपुरुषद्विवचनविवक्षायाम् आतामि कृते "तिङ्शित्सार्वधातुकम्" इति आतामः सार्वधातुकत्वे "सार्वधातुकमपित्" इति तस्य ङिद्वत्वे "कर्तरि शप्" इति शपि, अनुबन्धलोपे "आतो ङितः" इति शपोऽकारात् परस्य आताम आकारस्य इय् आदेशे कृते, "लोपो व्योर्वलि" इति यलोपे "एध् अ इ ताम्" इति जाते "आद्गुणः" इति गुणे, "टित आत्मनेपदानां टेरे" इति टिसंज्ञकस्य तकारोत्तरवर्तिन आम्भागस्य एत्वे च कृते 'एधेते' इति रूपं सिद्धम् । एधन्ते । एध्धातोर्लटः प्रथमपुरुषबहुवचने झे समागते, "तिङ्शित्सार्वधातुकम्" इति तस्य सार्वधातुकत्वात् "कर्तरि शप्" इति शपि, शपयोरित्संज्ञायां लोपे च, "झोऽन्तः" इति झस्यान्तादेशे 'एध् अ अन्त' इति जाते 'अ अन्त' इत्यत्र "अतो गुणे" इति पररूपे कृते "टित आत्मनेपदानां टेरे" इति

एधध्वे। "अतो गुणे"। एधे। एधावहे। एधामहे। **इजादेश्च गुरुमतोऽनृच्छः ३।१।३६।** इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि॥ **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १।३।६३।** आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदं स्यात्। **लिटस्तझयोरे-**

---

टेरेत्वे च कृते 'एधन्ते' इति रूपम्। थासः से। अत्र से इति लुप्तप्रथमाकम्। एधसे। लटः थासि, शपि, थासः सेभावः। एधेथे। लटो मध्यमपुरुषद्विवचने आथामादेशे, शपि, आम एत्वे आकारस्य इयादेशे गुणे यलोप इति भावः। एधध्वे। लटो मध्यमपुरुषबहुवचने ध्वमादेशे शपि टेरेत्वे च रूपम्। एधे। लट उत्तमपुरुषैकवचने इडादेशे, एत्वे, शपि 'एध ए' इति स्थिते प्रक्रियां दर्शयति—अतो गुणे इति। "अतो गुणे" इति पररूपे वृद्ध्यपवादे कृते सति 'एधे' इति रूपम्। एधावहे। लट उत्तमपुरुषद्विवचने वहि इत्यादेशे शपि, अनुबन्धलोपे टेरेत्वे 'एध वहे' इति जाते तत्र "अतो दीर्घो यञि" इति अतो दीर्घे 'एधावहे' इति रूपम्। एधामहे। लट उत्तमपुरुषबहुवचने महि इत्यादेशे टेरेत्वे शपि, अतो दीर्घः। इजादेश्चेति। नञः ऋच्छ इत्यनेन समासे अनृच्छ इत्यस्मात् पञ्चमी। धातोरेकाच" इत्यतो धातोरित्यनुवर्तते। "कास्प्रत्ययादाममन्त्रे लिटि" इत्यतः आमिति लिटीति चानुवर्तते। तदाह—इजादिरित्यादिना। आम्प्रत्ययवदिति। "अनुदात्तङित आत्मनेपदम्" इत्यत आत्मनेपदमित्यनुवर्तते। तत्राम्प्रत्ययस्यात्मनेपदाभावादाह—आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिरिति। तस्य—अन्यपदार्थस्य, गुणाः—विशेषणानि वर्तिपदार्थरूपाणि, तेषां संविज्ञानं क्रियान्वयितया ज्ञानं न विद्यते यस्य बहुव्रीहेः सः अतद्गुणसंविज्ञानः। यथा—चित्रगुमानयेति। अत्र हि पुरुषस्यैवान्यपदार्थस्य क्रियायामन्वयः, न तु चित्राणां गवामपि। एवं प्रकृते—आम्प्रत्ययविनिर्मुक्तः—आम्प्रत्ययप्रकृतिभूतः, एधादिधातुरेव आम्प्रत्ययशब्देन लभ्यत इति भावः। आम्प्रत्ययवदिति तृतीयान्ताद्वतिः। अनुप्रयुज्यत इत्यनुप्रयोगः। कर्मणि घञ्। पञ्चम्यर्थे षष्ठी। तदाह—आम्प्रकृत्येत्यादिना। लिटस्तझयोरिति। स्पष्टम्। ननु 'लिटस्तझयोरिशिरिच्' इत्येवास्तु। आदेशयोरेकारोच्चारणं व्यर्थम्। "टित आत्मनेपदानां टेरे" इत्येत्वेनैव सिद्धेरिति चेद्? न। 'तङादेशानां टेरेत्वं न' इति एकारोच्चारणस्य ज्ञापकत्वात्। तेन डारौरसाम् एत्वं नेति फलम्। एधाञ्चक्रे। एध्धातोः "परोक्षे लिट्" इति लिटि, "इजादेश्च गुरुमतोऽनृच्छः" इत्यामि, "आमः" इति लिटो लोपे, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परके कृञनुप्रयोगे 'एध् आम् कृ लिट्' इति जाते, लिटः स्थाने प्रथमपुरुषैकवचनविवक्षायां तादेशे "लिट् च" इत्यार्धधातुकत्वे "लिटस्तझयोरेशिरेच्" इति तकारस्य स्थाने एशादेशे कृते शलोपे च जाते 'एध् आम् कृ ए' इति स्थिते अत्र "लिटि धातोरनभ्यासस्य" इति द्वित्वे प्राप्ते तं परत्वाद्बाधित्वा "इको यणचि" इति प्राप्ते तस्य "द्विर्वचनेऽचि"

**शिरेच् ३।४।८१।** लिडादेशयोस्तझयोरेशिरेचौ स्तः। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे। एधाञ्चकृषे। एधाञ्चक्राथे। **इणः षीध्वंलुङ्लिटां धोऽङ्गात् ८।३।७८।** इण्णन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात्। एधाञ्चकृढ्वे। एधाञ्चक्रे।

---

इत्यनेन निषेधे कृते "पुनःप्रसङ्गविज्ञानात्" लिटि धातोरनभ्यासस्य इति द्वित्वे 'एध् आम् कृ कृ ए' इति जाते "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "उरत्" इति अभ्यासऋवर्णस्य अकारे जाते "उरण् रपरः" इति रपरे 'एध् आम् कर् कृ ए' इति भूते "हलादिः शेषः" इति कअवशिष्टे "कुहोश्चुः" इति कस्य चत्वे जाते "सार्वधातुकार्धधातुकयोः" इति गुणे प्राप्ते, परम् "असंयोगाल्लिट्कित्" इति लिटः कित्वात् "क्ङिति च" इति निषेधे जाते, "इको यणचि" इति यणि, सर्वस्मिन् संयुक्ते कृते एधाम् इत्येतद्गतस्य मस्य "मोऽनुस्वारः" इत्यनुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति नित्ये परसवर्णे प्राप्ते "वा पदान्तस्य" इति वा परसवर्णे 'एधाञ्चक्रे' इति रूपम्। एधाञ्चक्राते। एध्-धातोः "परोक्षे लिट्" इति लिटि, "इजादेश्च गुरुमतोऽनृच्छः" इत्यामि, "आमः" इति लिटो लोपे, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परके कृञि कृते 'एधाम् कृ लिट्' इति जाते, लिट इटो लोपे, लः स्थाने प्रथमपुरुषद्विवचने आतामि जाते "लिटि धातोरनभ्यासस्य" इति द्वित्वे 'कृ कृ' इति जाते "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "उरत्" इति अकारे, "उरण् रपरः" इति रपरे "हलादिः शेषः" इति आदिहल् अवशिष्टे "कुहोश्चुः" इति कस्य चत्वे "इको यणचि" इति यणि 'एधाम् चक्रातम्' इति जाते "टित आत्मनेपदानां टेरे" इति टिसञ्ज्ञकस्य आम एत्वे, मस्यानुस्वारे वा परसवर्णे च कृते 'एधाञ्चक्राते' इति रूपम्। एधाञ्चक्रिरे। एध्धातोः लिटि, "इजादेश्च गुरुमतोऽनृच्छः" इत्यामि,"आमः" इति लिटो लुकि,"कृञ्चानुप्रयुज्यते लिटि" इति लिट्परे कृञि विहिते लिट्लकारस्य स्थाने प्रथमपुरुषबहुवचने झादेशे कृते "लिटस्तझयोरेशिरेच्" इति इरेचि, चलोपे, द्वित्वे, अभ्यासत्वे, अभ्यासकार्यं, मस्यानुस्वारे, वा परसवर्णे 'एधाञ्चकृ इरे' इति जाते "इको यणचि" इति यणि, 'एधाञ्चक्रिरे' इति रूपम्। एधाञ्चकृषे। 'एधाञ्चकृ थास्' इति स्थिते "थासः से" इति थासः स्थाने से आदेशे जाते "लिट् च" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इतीटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति इटो निषेधे कृते "आदेशप्रत्यययोः" इति षत्वे 'एधाञ्चकृषे' इति रूपम्। अत्र "असंयोगाल्लिट् कित्" इति कित्वात् "क्ङिति च" इति गुणनिषेधोऽपि ज्ञेयः। एधाञ्चक्राथे। 'एधाञ्चकृ+आथाम्' इति पूर्ववत् साधनिकां कृत्वा "इको यणचि" इति यणि कृते "टित आत्मनेपदानां टेरे" इति आथामः टिसंज्ञकस्य आम एत्वे च कृते रूपम्। इणः षीध्वं लुङ्लिटामिति। षीध्वं लुङ् लिट् एषां द्वन्द्वः। धः इति षष्ठ्येकवचनम्। इण इत्यङ्गविशेषणम्, तदन्तविधिः। "अपदान्तस्य मूर्धन्यः" इत्यधिकृतम्। तदाह—इण्णन्तादित्यादिना। एधाञ्चकृढ्वे। एध्धातोः "परोक्षे लिट्" इति लिटि "इजा-

एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । एधामास । एधिता । एधितारौ । एधि-

---

देश्च गुरुमतोऽनृच्छः" इत्यामि "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परके कृञि अनुप्रयुक्ते, लिटो लस्य स्थाने मध्यमपुरुषबहुवचने ध्वमि आदेशे जाते, 'एध् आम् ध्वम्' इति भूते "लिटि धातोरनभ्यासस्य" इति कृञो द्वित्वे अभ्यासत्वे "उरत्" इति कृञ ऋवर्णस्याकारे जाते "उरण् रपरः" इति रपरे कर् इति जाते "हलादिः शेषः" इति कमात्रावशिष्टे "कुहोश्चुः" इति कस्य चत्वे "इणः षीध्वं लुङ्लिटां धोऽङ्गात्" इति धस्य ढत्वे मस्यानुस्वारे, वा परसवर्णे च कृते "टित आत्मनेपदानां टेरे" इति ध्वमोऽम इत्संज्ञकस्यत्वे 'एधाञ्चकृढ्वे' इति रूपम् । एधाञ्चक्रे । उत्तमपुरुषैकवचने इटि, एत्वे, पूर्ववत् द्वित्वादौ कृते रूपम् । एधाञ्चकृवहे । लिटो वहिभावे, एत्वे, द्वित्वादि पूर्ववत् । एधाञ्चकृमहे । एवं लिटो महिभावे द्वित्वादि पूर्ववद्बोध्यम् । एधाम्बभूव । एध्धातोः "परोक्षे लिट्" इति लिटि, "इजादेश्च गुरुमतोऽनृच्छः" इत्यामि, "आम" इति लिटो लुकि सति "कृञ्चानुप्रयुज्यते लिटि" इत्यत्र कृञ् प्रत्याहारः । तेन 'कृ भू अस्' इत्यस्य लाभः । अत्र लिट्परके भूधातौ अनुप्रयुक्ते सति 'एधाम् भू लिट्' इति जाते, लिट इटि गते, लः स्थाने च भूधातोः परस्मैपदत्वात् प्रथमपुरुषैकवचने तिपादेशे, तिपः स्थाने-"परस्मैपदानां णलतुसुस्थल०" इत्यादिना णलि, णकारस्य लकारस्य चेत्संज्ञायां लोपे च, "भुवो वुग्लुङ्लिटोः" इति भुवो वुगागमे, उकि गते, कित्वादन्त्यावयवत्वे जाते, "लिटि धातोरनभ्यासस्य" इति भुवो द्वित्वे 'एधाम् भूव् भूव अ' इति जाते "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इति भू अवशिष्टे "ह्रस्वः" इति ह्रस्वे "भवतेरः" इति भुवः उकारस्य अत्वे "अभ्यासे चर्च" इति भस्य बकारे जाते सर्वस्मिन् संयुक्ते 'एधाम् बभूव' इति जाते मस्यानुस्वारे वा परसवर्णे च कृते 'एधाम्बभूव' इति रूपम् । अग्रेऽप्येवमेव साधनिका । रूपाणि-एधाम्बभूव, एधाम्बभूवतुः, एधाम्बभूवुः । एधाम्बभूविथ । एधाम्बभूवथुः, एधाम्बभूव । एधाम्बभूव, एधाम्बभूविव, एधाम्बभूविम । इति । एधामास । एध्धातोः "परोक्षे लिट्" इति लिटि, "इजादेश्च गुरुमतोऽनृच्छः" इत्यामि, "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परके अस् धातौ अनुप्रयुक्ते, लिट इटि गते, लः स्थाने प्रथमपुरुषैकवचनविवक्षायां असः परस्मैपदित्वात् तिपि, तिपो णलादेशे, णस्य लस्य चेत्सञ्ज्ञायां लोपे च 'एधाम् अस् अ' इति जाते "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे, "हलादिः शेषः" इति सलोपे "अत आदेः" इति अभ्यासाकारस्य दीर्घे 'एधाम् आ अस् अ' इति भूते "अकः सवर्णे दीर्घः" इति सवर्णदीर्घे सर्वस्मिन् संयुक्ते 'एधामास' इति रूपम् । अग्रेऽप्येवं साधनिका । रूपाणि तु-एधामास, एधामासतुः, एधामासुः । एधामासिथ, एधामासथुः, एधामास । एधामास, एधामासिव, एधामासिम । इति । एधिता । एध्धातोः "अनद्यतने लुट्" इति लुटि, उकारटकारयोरित्संज्ञायां लोपे च, एध्धातोः अनुदात्तेत्वात् "अनुदात्तङित आत्म-

तारः। एधितासे। एधितासाथे। धि च ८।२।२५। धादौ प्रत्यये परे सस्य लोपः स्यात्। एधिताध्वे। ह एति ७।४।५२। तासस्त्योः सस्य हः स्यादेति परे। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते। एधिष्यसे।

---

नेपदम्" इत्यात्मनेपदम्, तत्र "तङानावात्मनेपदम्" इति तङ आत्मनेपदित्वात् लः स्थाने प्रथमपुरुषैकवचने तकृते "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" इति शपि प्राप्ते, तम्बाधित्वा "स्यतासी लृलुटोः" इति तासि, तासः "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे कृते 'एधितास त' इति जाते "लुटः प्रथमस्य डारौरसः" इति तस्य स्थाने डात्वे, डस्येत्संज्ञायां लोपे च 'डित्वसामर्थ्यादभस्यापि टेर्लोपः' इति तासः टिसंज्ञकस्य आस् इत्यस्य लोपे मिलित्वा 'एधिता' इति रूपम्। एधितारौ। एध्धातोः लुट आतामि, तस्मिन् परे तासि, आर्धधातुकत्वे, इडागमे च कृते 'एधितास् आताम्' इति जाते "लुटः प्रथमस्य डारौरसः" इति आतामः स्थाने रौ आदेशे 'रि च' इति सलोपे 'एधितारौ' इति रूपम्। एधितारः। 'एधितास् झ' इति पूर्ववत् प्रसाध्य "लुटः प्रथमस्य डारौरसः" इति झस्थाने रसादेशे "रि च" इति सलोपे रूपम्। एधितासे। एध्धातोः लुटि, उटि गते, लः स्थाने मध्यमपुरुषैकवचने थासि, "थासः से" इति थासः से आदेशे, तासि, इडागमे "एधितास् से" इति जाते "तासस्त्योर्लोपः" इति सलोपे च रूपम्। एधितासाथे। आथामि "टित आत्मनेपदानां टेरे" इति एत्वमिति विशेषः, शेषं पूर्ववत्। धि चेति। "सस्यार्धधातुके" इत्यतः स इत्यनुवर्तते। 'तासस्त्योः" इत्यतो लोप इति। अङ्गाक्षिप्तप्रत्ययो धीत्यनेन विशेष्यते। तदादिविधिः। तदाह—धादाविति। एधिताध्वे। एध्धातोर्लुटि, उटि गते, लः स्थाने मध्यमपुरुषबहुवचने ध्वमि कृते, तासि, तस्य आर्धधातुकत्वे, इडागमे च जाते 'एधितास् ध्वम्' इति भूते "धि च" इति सलोपे "टित आत्मनेपदानां टेरे" इति ध्वमोऽमः टिसंज्ञकस्य एत्वे "एधिताध्वे' इति रूपम्। ह एतीति। ह इति प्रथमान्तम्। अकार उच्चारणार्थः। "सस्यार्धधातुके" इत्यतः स इति "तासस्त्योर्लोपः" इत्यतः तासस्त्योरिति चानुवर्तते। तदाह—तासस्त्योरिति। एधिताहे। एध्धातोर्लुट उत्तमपुरुषैकवचने इटि, तासि, इडागमे 'एधितास् इ' इति स्थिते "टित आत्मनेपदानां टेरे" इति इट इकारस्यैत्वे "ह एति" इति सस्य हत्वे 'एधिताहे' इति रूपम्। एवं वहौ, महिङि च परे साधनिका ज्ञेया। एधिष्यते। एध्धातोः "लृट् शेषे च" इति लृटि, अनुबन्धलोपे प्रथमपुरुषैकवचने ते कृते, "स्यतासी लृलुटोः" इति स्ये, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे "आदेशप्रत्यययोः" इति षत्वे, "टित आत्मनेपदानां टेरे" इत्येत्वे 'एधिष्यते' इति रूपम्। एधिष्येते। 'एधिष्य आताम्' इति पूर्ववत् प्रसाध्य "आतो ङितः" इति आताम् घटकाऽऽकारस्य इयादेशे "लोपो व्योर्वलि" इति यलोपे "आ-

एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ॥ **आमेतः ३।४।९०।** लोट एकारस्याम् स्यात् । एधताम् । एधेताम् । एधन्ताम् ॥ **सवाभ्यां वामौ ३।४।९१।** सवाभ्यां परस्य लोडेतः क्रमाद्वामौ स्तः । एधस्व । एधेथाम् । एधध्वम् ॥ **एत ऐ ३।४।९३।** लोडुत्तमस्य एत ऐ स्यात् । एधै । एधावहै । एधामहै ।

---

द्गुणः" इति गुणे "टित आत्मनेपदानां टेरे" इति एत्वे 'एधिष्येते' इति रूपम् । एधिष्यन्ते । झस्य टेरेत्वम् , झकारस्यान्तादेशः, स्यः, इट् , पररूपं षत्वम् । एधिष्यसे । लृटः थासादेशे, "थासः से" इति थासः से आदेशे "स्यतासी लृलुटोः" इति शबपवादे स्ये, स्यस्य इडागमे, प्रत्ययावयवत्वात् षत्वे च कृते रूपम् । एधिष्येथे । एधिष्येते इतिवदाथामि, 'एधिष्येथे' इति रूपम् । एधिष्यध्वे । ध्वस एत्वे स्यः, इट् षत्वम् । एधिष्ये । इट एत्वे, स्यः, इडागमः, षत्वम् "अतो गुणे" इति पररूपम् । एधिष्यावहे । एधिष्यामहे । वहिमह्योष्टेरेत्वम् , स्यः, इट् 'अतो दीर्घो यञि" इत्यतो दीर्घः । आमेतः । आम् एतः इति च्छेदः । "लोटो लङ्वत्" इत्यतो लोट इत्यनुवर्तते, तदाह—लोट एकारस्येति । एधताम् । एध्धातोः "लोट् च" इति लोटि, ओकारस्य टस्य चेत्संज्ञायां लोपे च जाते, लः स्थाने प्रथमपुरुषैकवचने तादेशे कृते "तिङ्शित्सार्वधातुकम्" इति तस्य सार्वधातुकत्वे "कर्तरि शप्" इति शपि, शपयोरित्सञ्ज्ञकत्वे लोपे च, शित्वादस्यापि सार्वधातुकत्वे "टित आत्मनेपदानां टेरे" इति तकाराकारस्यैत्वे 'एधते' इति जाते "आमेतः" इति एकारस्यामादेशे 'एधताम्' इति रूपम् । एधेताम् । आताम् , टेरेत्वं शप् "सार्वधातुकमपित्" इति ङित्वात् "आतो ङितः" इति आकारस्य इयादेशः, यलोपः, गुणः, "आमेतः" इति एकारस्याम् । एधन्ताम् । झस्य टेरेत्वे शपि, झकारस्यान्तादेशे एकारस्य आम् । सवाभ्यामिति । सश्च वश्च सवौ, ताभ्यामिति विग्रहः । अकारावुच्चारणार्थौ । वश्च अम्च वामौ "लोटो लङ्वत्" इत्यस्मात् लोट इति, "आमेतः" इत्यस्मादेत इति चानुवर्तते । तदाह—सवाभ्यामिति । एधस्व । एध्धातोर्लोटो मध्यमपुरुषैकवचने थास्यागते शपि, अनुबन्धलोपे "थासः से" इति थासः सेत्वे "सवाभ्यां वामौ" इति सकारात्परस्यैकारस्य वादेशे 'एधस्व' इति रूपम् । एधेथाम् । आथाम् टेरेत्वम् , शप् , "आतो ङितः" इत्याकारस्य इय् , गुणः, यलोपः "आमेतः" इत्याम् । एधध्वम् । ध्वमि, शप् , टेरेत्वे कृते "सवाभ्याम्" इति वकारात्परत्वादेकारस्य अम् । एत ऐ । ऐ इति लुप्तप्रथमाकम् । "लोटो लङ्वत्" इत्यस्माल्लोट इति "आडुत्तमस्य पिच्च" इत्यस्मादुत्तमस्येति चानुवर्तते । तदाह—लोडुत्तमस्येति । एधै । एध् धातोः "लोट् च" इति लोटि, ओटि गते, लः स्थाने उत्तमपुरुषैकवचने इटि समागते टस्येत्सञ्ज्ञायां लोपे च कृते "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकत्वे "कर्तरि शप्" इत्यनेन शपि, शकारस्य पकारस्य चेत्सञ्ज्ञायां लोपे च कृते 'एध् अ इ' इति जाते "टित आत्मनेपदानां टेरे" इति इट इकारस्य एत्वे,

"आटश्च" ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ॥ **लिङः सीयुट् ३।४।१०२।** लिङात्मनेपदस्य सीयुडागमः स्यात् । सलोपः । एधेत । एधेयाताम् । **झस्य रन् ३।४।१०५।** लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् । **इटोऽत् ३।४।१०६।** लिङादेशस्य इटोऽत् स्यात् । एधेय । एधेवहि । एधेमहि ॥ **सुट्तिथोः ३।४।१०७।**

---

एकारस्य "एत ऐ" इति ऐत्वे, आडुत्तमस्य पिच्च" इति उत्तमपुरुषस्य एइत्यस्य आडागमे टित्वादाद्यावयवे जाते, 'एध आऐ' इति स्थिते "आटश्च" इति वृद्धौ 'एध ऐ' इति भूते "वृद्धिरेचि" इति वृद्धौ 'एधै' इति रूपम् । एधावहै । एधामहै । वहिमह्योष्टेरेत्वे शपि, एकारस्य ऐत्वे, आटि, सवर्णदीर्घः । ऐधत । एध्धातोः "अनद्यतने लङ्" इति लङि, ङकाराकारयोरित्सञ्ज्ञायां लोपे च, लः स्थाने "तिप्तस्झि०" इत्यादिना तादेशे "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" शपयोरित्सञ्ज्ञायां लोपे च "आडजादीनाम्" इत्याडागमे 'आ एध् अ त' इति जाते "आटश्च" इति वृद्धौ, मिलित्वा 'ऐधत' इति रूपम् । ऐधेताम् । आतामि, शपि, आटि, वृद्धिः । "आतो ङितः" इत्याकारस्य इय् आद्गुणः यलोपः । ऐधन्त । झेरन्तादेशः, शप्, आट्, वृद्धिः । ऐधथाः । थास शप् आट् वृद्धिः । ऐधेथाम् । आथाम्, शप्, आट्, वृद्धिः, इय्, आद्गुणः यलोपः । ऐधध्वम् । ध्वम्, शप्, आट्, वृद्धिः । ऐधे । इट्, शप्, आद्गुणः, आट्, वृद्धिः । ऐधावहि । ऐधामहि । वहिमह्योः शप्, आट्, वृद्धिः, अतो दीर्घः । लिङः सियुट् । स्पष्टम् । एधेत । एध्धातोः "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" इति लिङि, इङि गते, लः स्थाने प्रथमपुरुषैकवचने तादेशे कृते "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" इति शपि, शपयोरित्सञ्ज्ञायां लोपे च, 'एध् अ त' इति जाते "लिङः सीयुट्" इति तकारस्य सीयुडागमे, उटि गते टित्वादाद्यावयवे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "लोपो व्योर्वलि" इति यलोपे "आद्गुणः" इति गुणे 'एधेत' इति रूपम् । एधेयाताम् । आतामि, सीयुट्, शप्, सलोपः, आद्गुणः । झस्य रन्निति । "लिङः सीयुट्" इत्यतो लिङ इत्यनुवर्तते । तदाह–लिङो झस्येति । लिङादेशस्य झस्येत्यर्थः । अनेकाल्त्वात्सर्वादेशः । एधेरन् । झस्य रन्, शप्, सीयुट्, सलोपः, आद्गुणः, यलोपः । एधेथाः । थास्, सीयुट्, शप् सीयुटस्सस्य लोपः, आद्गुणः, यलोपः थासस्सस्य रुत्वविसर्गौ । एधेयाथाम् । आथाम्, सीयुट्, सलोपः शप् आद्गुणः । एधेध्वम् । ध्वम्, सीयुट्, शप्, सीयुटस्सस्य लोपः, आद्गुणः, यलोपः । इटोऽत् । इटः, अत् इति छेदः । "लिङः सीयुट्" इत्यतो लिङ इत्यनुवर्तते । तदाह—लिङादेशस्येति । एधेय । एध्धातोर्लिङ इटि, तस्य स्थाने "इटोऽत्" इति अकारादेशे सीयुटि, उटि गते, शपि, अनुबन्धलोपे, सीयुटस्सस्य लोपे, "आद्गुणः" इति गुणे मिलित्वा 'एधेय' इति रूपम् । एधेवहि । एधे-

लिङ्स्तकारथकारयोः सुट् स्यात् । यलोपः । आर्धधातुकत्वात् सलोपो न । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधीषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट । ऐधिषाताम् । **आत्मनेपदेष्वनतः ७।१।५।** अनकारात्परस्यात्मनेपदस्य झस्य अदित्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः ।

---

महि । वहिमह्योः सीयुट्, सलोपः, शप्, आद्गुणः, यलोपः, इति बोध्यम् । सुट्तिथोः । "लिङ्स्सीयुट्" इत्यतो लिङ इत्यनुवर्तते । तिश्च थ् चेति द्वन्द्वात् षष्ठीद्विवचनम् । इकार उच्चारणार्थः । तदाह—लिङ्स्तकारेति । एधिषीष्ट । एध् धातोः "आशिषि लिङ्लोटौ" इत्याशिषि लिङि, इ ङि गते लः स्थाने प्रथमपुरुषैकवचने ते जाते "लिङाशिषि" इत्यार्धधातुकत्वे, "लिङः सीयुट्" इति सीयुटि, उटि गते, टित्वादाद्यावयवे 'एध् सीय् त' इति जाते "सुट् तिथोः" इति तकारस्य सुडागमे, उटि गते टित्वादाद्यावयवे यकारस्य "लोपो व्योर्वलि" इति यलोपे "आर्धधातुकस्येड्वलादेः" इति इडागमे "आदेशप्रत्यययोः" इति उभयत्र षत्वे, तकारस्य ष्टुत्वे 'एधिषीष्ट' इति रूपम् । एधिषीयास्ताम् । आताम्, सीयुट् । आकारादुपरि तकारात्प्राक् सुट् । सीयुटः प्राक् इट्, तत उत्तरस्य सकारस्य षत्वम् । एधिषीरन् । झस्य रन् । सीयुट् इडागमः यकारलोपः षत्वम् । एधिषीष्ठाः । थास्, सीयुट्, थकारस्य सुट्, सीयुटः प्रागिट्, सकारद्वयस्य षत्वम् । थकारस्य ष्टुत्वेन ठकारः । रुत्वविसर्गौ । एधिषीयास्थाम् । आथाम् सीयुट् । आकारादुपरि थकारात् प्राक् सुट्, सीयुटः प्रागिट् । तत उत्तरस्य सकारस्य षत्वम् । एधिषीध्वम् । ध्वम्, सीयुट्, यलोपः, सीयुटः, प्रागिट् षत्वम् । इणः परत्वेऽपि इण्णन्तादङ्गात्परत्वं नास्ति । इटः प्रत्ययावयवत्वात् । एवञ्च "इणः षीध्वम्" इति ढत्व न । एधिषीय । इटः अत्, सीयुट्, इट्, षत्वम् । एधिषीवहि । एधिषीमहि । वहिमह्योस्सीयुट्, इट्, षत्वम् । ऐधिष्ट । एध्धातोः "लुङ्" इति लुङि, उङि गते, लः स्थाने प्रथमपुरुषैकवचने ते, तस्य सार्वधातुकत्वे, शपि प्राप्ते तम्बाधित्वा "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते, 'एध् स् त' इति स्थिते "आर्धधातुकं शेषः" इति सिच आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे "आदेशप्रत्यययोः" इति सस्य षत्वे, तकारस्य "ष्टुना ष्टुः" इति ष्टुत्वे, "आडजादीनाम्" इत्यङ्गस्याडागमे "आटश्च" इति वृद्धौ 'ऐधिष्ट' इति रूपम् । ऐधिषाताम् । आताम्, च्लिः, सिच्, इट्, आट्, वृद्धिः, षत्वम् । आत्मनेपदेष्वनत इति । "झोऽन्तः" इत्यत झ इति षष्ठ्यन्तमनुवर्तते । आत्मनेपदेष्विति षष्ठ्यर्थे सप्तमी । आत्मनेपदावयवस्य झकारस्येति लभ्यते । "अदभ्यस्तात्" इत्यतः अदित्यनुवर्तते । न अत् अनत् तस्मादिति विग्रहः । तदाह —अनकारादित्यादिना । ऐधिषत । एध्धातोर्लुङः प्रथमपुरुषबहुवचने झे समागते "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते, सिचः सस्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे "आत्मनेपदेष्वनतः" इति झस्य अत् आदेशे "आडजादीनाम्"

ऐधिषाथाम्। ऐधिढ्वम्। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि। कमु कान्तौ॥ २॥ कमेर्णिङ् ३।१।३०। कमेर्णिङ् स्यात् स्वार्थे। ङित्वात्तङ्। कामयते॥ अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५। आम् अन्त

---

इत्यङ्गस्याडागमे "आटश्च" इति वृद्धौ, "आदेशप्रत्यययोः" इति सिचः सस्य षत्वे मिलित्वा 'ऐधिषत' इति रूपम्। ऐधिष्ठाः। लुङः थास्, च्लिः, सिच्, इट्, आट्, वृद्धिः, षत्वं, थकारस्य ष्टुत्वेन ठकारः, रुत्वविसर्गौ। ऐधिषाथाम्। आथाम्, च्लिः, सिच्, इट्, आट्, वृद्धिः, षत्वम्। ऐधिढ्वम्। एध्धातोर्लुङो मध्यमपुरुषबहुवचने ध्वसि कृते, च्लौ च्लेः सिचि, इचि गते, इडागमे, "आडजादीनाम्" इत्याडागमे "आटश्च" इति वृद्धौ, 'ऐधि स् ध्वम्' इति जाते "धि च" इति सलोपे 'ऐधिध्वम्' इति रूपम्। ऐधिषि। लुङः इडादेशः, च्लिः, सिच्, इडागमः आट्, वृद्धिः। ऐधिष्वहि। ऐधिष्महि। वहिमह्योस्तु च्लेः सिचि, इडागमे, आटि, वृद्धौ 'ऐधिष्वहि' 'ऐधिष्महि' इति रूपे। ऐधिष्यत। एध्धातोः "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इति लृङ्, अनुबन्धलोपे, लः स्थाने प्रथमपुरुषैकवचने ते कृते "स्यतासीलृलुटोः" इति स्ये, स्यस्य "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे, "आर्धधातुकस्येड्वलादेः" इति इडागमे "आदेशप्रत्यययोः" इति षत्वे "आडजादीनाम्" इति आडागमे "आटश्च" इति वृद्धौ 'ऐधिष्यत' इति रूपम्। ऐधिष्येताम्। आताम्, स्यः, इट्, आकारस्य इय्, आद्गुणः, यलोपः, आट्, वृद्धिः, षत्वम्। ऐधिष्यन्त। झावयवझकारस्यान्तादेशः, स्यः, इट्, आट्, वृद्धिः, षत्वम्। ऐधिष्यथाः। थास्, स्यः, इट्, आट्, वृद्धिः, षत्वम्, रुत्वविसर्गौ। ऐधिष्येथाम्। आथाम्, स्यः, इट्, आकारस्य इय्, आद्गुणः, यलोपः, आट्, वृद्धिः, षत्वम्। ऐधिष्यध्वम्। ध्वम्, स्यः, इट्, आट्, वृद्धिः, षत्वम्। ऐधिष्ये। इडादेशः, स्यः, इडागमः, षत्वम्, आद्गुणः। वहिमह्योस्तु स्यः, इट्, अतो दीर्घः, आट्, वृद्धिः, षत्वम्–'ऐधिष्यावहि। ऐधिष्यामहि'। इति रूपम्। कमुकान्ताविति। कान्तिरिच्छा, 'स्वर्गकामः' इत्यादौ कमेरिच्छायां प्रयोगबाहुल्यदर्शनात्। 'कामोऽभिलाषस्तर्षश्च' इत्यमरः। कमेर्णिङ्। शेषपूरणेन सूत्रं व्याचष्टे—स्वार्थ इति। अर्थविशेषानिर्देशादिति भावः। कामयते। कमुधातोः उकारस्य "उपदेशेऽजनुनासिक इत्" इतीत्सञ्ज्ञायां "तस्य लोपः" इति लोपे "कमेर्णिङ्" इति णिङि, "चुटू" इति णकारस्य "हलन्त्यम्" इति ङकारस्य चेत्सञ्ज्ञायां "तस्य लोपः" इति लोपे "अत उपधायाः" इति वृद्धौ 'कामि' इति जाते "सनाद्यन्ता धातवः" इति धातुसञ्ज्ञायां "वर्तमाने लट्" इति लटि, अकारटकारयोरित्सञ्ज्ञायां लोपे च "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्तर्यर्थे "अनुदात्तङित आत्मनेपदम्" इति कामिधातोर्ङित्वात् आत्मनेपदस्य प्राप्तौ "तङानावात्मनेपदम्" इति तङ आत्मनेपदसञ्ज्ञत्वात् लःस्थाने। सर्वस्मिन् प्राप्ते प्रथमपुरुषैक-

आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात्। कामयाञ्चक्रे। "आयादय" इति णिङ् वा। चकमे। चकमाते। चकमिरे। चकमिषे। चकमाथे। चकमिढ्वे।

---

वचने तादेशे 'कामि त' इति स्थिते, तत्र तकारस्य "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" इति शपि, शपयोरित्सञ्ज्ञायां लोपे च शित्वात्सार्वधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे "एचोऽयवायावः" इति अयादेशे "टित आत्मनेपदानां टेरे" इति टेरेत्वे 'कामयते' इति रूपम्। कामयते, कामयेते, कामयन्ते। कामयसे, कामयेथे, कामयध्वे। कामये, कामयावहे, कामयामहे। अयामन्तेति। अय् इति च्छेदः। "णेरनिटि" इत्यतो णेरित्यनुवर्तते। तदाह—णेरयादेशः स्यादिति। कामयाञ्चक्रे। कम्धातोः "कमेर्णिङ्" इति णिङि, अनुबन्धलोपे "अत उपधायाः" इति वृद्धित्वे 'कामि' इति भूते "सनाद्यन्ता धातवः" इति धातुत्वे "परोक्षे लिट्" इति लिटि "कास्यनेकाच आम् वक्तव्यः" इत्यामि, "णेरनिटि" इति लोपे प्राप्ते तम्बाधित्वा "अयामन्ताल्वाय्येत्विष्णुषु" इति णिङ इकारस्य अयादेशे 'कामय आम् लिट्' इति जाते "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परके कृञोऽनुप्रयोगे कृते, लिटो लः स्थाने प्रथमपुरुषैकवचने तादेशे कृते, तस्य स्थाने "लिटस्तझयोरेशिरेच्" इति एशि कृते शस्येत्संज्ञायां लोपे च "लिटि धातोरनभ्यासस्य" इति कृञो द्वित्वे "पूर्वोऽभ्यासः" इति अभ्यासत्वे "उरत्" इति अभ्यासऋवर्णस्य अकारे "उरण् रपरः" इति रपरे च कृते 'कामयाम् कर् कृ ए' इति भूते "हलादिः शेषः" इति रलोपे "कुहोश्चुः" इति कस्य चत्वे "इको यणचि" इति यणि, मस्यानुस्वारे वा परसवर्णे च कृते 'कामयाञ्चक्रे' इति रूपम्। अग्रे एवमेव साधनिका ऊह्या। रूपाणि तु—कामयाञ्चक्रे, कामयाञ्चक्राते, कामयाञ्चक्रिरे। कामयाञ्चकृषे, कामयाञ्चक्राथे, कामयाञ्चकृढ्वे। कामयाञ्चक्रे, कामयाञ्चकृवहे, कामयाञ्चकृमहे। एवं 'कामयाम्बभूव' इत्यादि, 'कामयामास' इत्यादि च बोध्यम्। चकमे। "आयादय आर्धधातुके वा" इति आयादेशाभावपक्षे कम्धातोः "परोक्षे लिट्" इति लिटि, इटि गते, लः स्थाने प्रथमपुरुषैकवचने तादेशे, तस्य स्थाने "लिटस्तझयोरेशिरेच्" इति एशि, अनेकाल्त्वात्सर्वादेशे शस्येत्सञ्ज्ञायां लोपे च, "लिट् च" इत्यार्धधातुकत्वे, "लिटि धातोरनभ्यासस्य" इति द्वित्वे 'कम् कम् ए' इति जाते "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इति कअवशिष्टे "कुहोश्चुः" इति कस्य चत्वे 'चकमे' इति। चकमाते। कम्धातोर्लिटि, लः स्थाने प्रथमपुरुषद्विवचने आतामि, द्वित्वे अभ्यासकार्ये च कृते "टित आत्मनेपदानां टेरे" इति टेरेत्वे रूपम्। चकमिरे। कम् धातोर्लिटि, इटि गते, लः स्थाने प्रथमपुरुषबहुवचने झादेशे झस्य स्थाने "लिटस्तझयोरेशिरेच्" इति इरेचि, चगते "लिटि धातोरनभ्यासस्य" इति द्वित्वे अभ्यासत्वे, अभ्यासकार्ये च कृते 'चकमिरे' इति। चकमिषे। लिटि, थासि, "थासः से" इति थासः स्थाने से आदेशे "लिट् च" इत्यार्ध-

चकमे । चकमिवहे । चकमिमहे । कामयिता । कामयितासे । कमिता । कामयिष्यते ।

---

धातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये च कृते रूपम् । चकमाथे । कम्धातो लिटि, लिटो लः स्थाने मध्यमपुरुषद्विवचने आथामि, द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये "टित आत्मनेपदानां टेरे" इति टेरेत्वे च 'चकमाथे' इति रूपम् । चकमिढ्वे । लिटि, ध्वमि, द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये, ध्वम आर्धधातुकत्वे, इडागमे "टित आत्मनेपदानां टेरे" इति टेरेत्वम् । चकमे । लिटः स्थाने उत्तमपुरुषैकवचने इटि, द्वित्वे, अभ्यासकार्ये "टित आत्मनेपदानां टेरे" इति टेरेत्वम् । वहिमह्योस्तु द्वित्वे, अभ्यासकार्ये इडागमे "टित आत्मनेपदानां टेरे" इति टेरेत्वे 'चकमिवहे' 'चकमिमहे' इति रूपे । कामयिता । कम्धातोः "कमेर्णिङ्" इति णिङि, अनुबन्धलोपे "अत उपधायाः" इति वृद्धौ "सनाद्यन्ता धातवः" इति धातुसञ्ज्ञायाम् "अनद्यतने लुट्" इति लुटि, उटि गते, लः स्थाने प्रथमपुरुषैकवचने तादेशे, "स्यतासी लृलुटोः" इति तासि, तासः "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे, 'काम् इ इ तास् त' इति स्थिते "सार्वधातुकार्धधातुकयो" इति गुणे "एचोऽयवायावः" इत्ययादेशे "लुटः प्रथमस्य डारौरसः" इति तस्य स्थाने डात्वे, डस्येत्संज्ञायां लोपे च, "डित्वसामर्थ्यादभस्यापि टेर्लोपः" इति टिसंज्ञकस्य तासः आस इत्येतस्य लोपे 'कामयिता' इति रूपम् । कामयितारौ, कामयितारः, इति पूर्ववत् साधनिका । कामयितासे । कम्धातोः "कमेर्णिङ्" इति णिङि, धातुसंज्ञायां लुटो लः स्थाने मध्यमपुरुषैकवचने थासि, "थासः से" इति थासः से आदेशे, "स्यतासी लृलुटोः" इति तासि, तास आर्धधातुकत्वे, इडागमे, गुणे, अयादेशे "तासस्त्योर्लोपः" इति तासः सकारस्य लोपे च कृते 'कामयितासे' इति रूपम् । अग्रे त्वेवम्—कामयितासाथे, कामयिताध्वे । कामयिताहे, कामयितास्वहे, कामयितास्महे । इति । कमिता । "आयादय आर्धधातुके वा" इति णिङभावे कम्धातोर्लुटो लः स्थाने प्रथमपुरुषैकवचने तादेशे तस्य स्थाने "लुटः प्रथमस्य डारौरसः" इति डात्वे, तासि, "डित्वसामर्थ्यादभस्यापि टेर्लोपः" इति तास आसइत्यस्य लोपे, तास आर्धधातुकत्वे, "आर्धधातुकस्येड्वलादेः" इति इडागमे संयोगे च 'कमिता' इति रूपम् । कमिता, कमितारौ, कमितारः । कमितासे, कमितासाथे, कमिताध्वे । कमिताहे, कमितास्वहे, कमितास्महे । इति । कामयिष्यते । कम्धातोः "कमेर्णिङ्" इति णिङि, इङि गते, णगते च "अत उपधायाः" इति वृद्धौ 'कामि' इति जाते, तस्य "सनाद्यन्ता धातवः" इति धातुत्वे "लृट् शेषे च" इति लृटि, लृटो लः स्थाने तादेशे, "स्यतासी लृलुटोः" इति स्ये, स्यस्य "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे "सार्वधातुकार्धधातुकयोः" इति कामीत्यस्य गुणे "एचोऽयवायावः" इत्ययादेशे 'कामयि स्य त' इति जाते "आदेशप्रत्ययोः" इति षत्वे "टित आत्मनेपदानां टेरे" इति टेरेत्वे "कामयिष्यते' इति रूपम् ।

कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट ॥ विभाषेटः

---

अग्रे रूपाणि—कामयिष्येते, कामयिष्यन्ते । कामयिष्यसे, कामयिष्येथे, कामयिष्यध्वे । कामयिष्ये, कामयिष्यावहे, कामयिष्यामहे । कमिष्यते । "आयादय आर्धधातुके वा" इति णिङभावपक्षे कम्धातोर्लृटि, लृटो लः स्थाने तादेशे, स्ये, इटि, षत्वे, "टित आत्मनेपदानां टेरे" इति टेरेत्वे च रूपम् । कामयताम् । कम्धातोः "कमेर्णिङ्" इति णिङि, इङि गते णगते च "अत उपधायाः" इति वृद्धौ 'कामि' इति जाते तस्य "सनाद्यन्ता धातवः" इति धातुत्वे "लोट् च" इति लोटि, ओटि गते, लः स्थाने प्रथमपुरुषैकवचने तादेशे, तस्य "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे, "कर्तरि शप्" इति शपि, अनुवन्धलोपे अकारेऽवशिष्टे, तस्य शित्वात्सार्वधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति कामेरिकारस्य गुणे, "एचोऽयवायावः" इति अयादेशे, 'कामयत' इति जाते "टित आत्मनेपदानां टेरे" इति टिसंज्ञकस्य तकाराकारस्य एत्वे "आमेतः" इति एकारस्यामि, 'कामयताम्' इति । अग्रे रूपाणि तु—कामयेताम्, कामयन्ताम् । कामयस्व, कामयेथाम्, कामयध्वम् । कामये, कामयावहे, कामयामहे । इति । अकामयत । कम्धातोः "कमेर्णिङ्" इति णिङि, अनुवन्धलोपे "अत उपधायाः" इति कमेरुपधायाः वृद्धौ, 'कामि' इति जाते "सनाद्यन्ता धातवः" इति कामेर्धातुत्वे "अनद्यतने लङ्" इति लङि, इङि गते, लः स्थाने प्रथमपुरुषैकवचने तादेशे "तिङ्शित् सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" इति शपि, शपयोरित्संज्ञायां लोपे च कृते, शित्वात् शपोऽकारस्य सार्वधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति कामेरिकारस्य गुणे "एचोऽयवायावः" इत्ययादेशे 'कामयत' इति जाते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यङ्गस्याडागमे 'अकामयत' इति रूपम् । अग्रे रूपाणि—अकामयेताम्, अकामयन्त । अकामयथाः, अकामयेथाम्, अकामयध्वम् । अकामये, अकामयावहि, अकामयामहि । इति । कामयेत । कम् धातोः "कमेर्णिङ्" इति णिङि, इङि गते णगते च, "अत उपधायाः" इति वृद्धौ 'कामि' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वे "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" इति लिङि, इङि गते, लः स्थाने प्रथमपुरुषैकवचने तादेशे, तस्य "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" इति शपि, अनुवन्धलोपे च, शित्वात्तस्यापि सार्वधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति कामेरिकारस्य गुणे "एचोऽयवायावः" इत्ययादेशे 'कामय त' इति जाते "लिङः सीयुट्" इति सीयुटि, उटि गते टित्वादाद्यावयवे जाते "लिङः सलोपोऽनन्त्यस्य" इत्यनेन सलोपे "आद्गुणः" इति गुणे, "लोपो व्योर्वलि" इति यलोपे 'कामयेत' इति । अग्रे रूपाणि त्वित्थम्—कामयेयाताम्, कामयेरन् । कामयेथाः, कामयेयाथाम्, कामयेध्वम् । कामयेय, कामयेवहि, कामयेमहि । कामयिषीष्ट । कम्धातोः "कमेर्णिङ्" इति नित्ये णिङि प्राप्ते, "आयादय आर्धधातुके वा" इति वा णिङि,

८।३।७९। इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः स्यात्। काम-यिषीढ्वम्। कामयिषीध्वम्। कमिषीष्ट। कमिषीध्वम्। **णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८।** ण्यन्ताच्छ्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे। कामि अ त इति स्थिते॥ **णेरनिटि ६।४।५१।** अनिडादावार्धधातुके परे णेर्लोपः स्यात्॥ **णौ चङ्युपधाया ह्रस्वः ७।४।१।** चङि परे णौ यदङ्गं तस्योपधाया ह्रस्वः

---

अनुबन्धलोपे "अत उपधायाः" इति उपधायाः वृद्धौ, 'कामि' इति जाते "सनाद्यन्ता धातवः" इति कामेर्धातुत्वे, तस्मात् "आशिषि लिङ्लोटौ" इति लिङि, इङि गते, लः स्थाने प्रथमपुरुषैकवचने तादेशे "लिङाशिषि" इति तस्यार्धधातुकसंज्ञायां "लिङः सीयुट्" इति सीयुटि, उटि गते, टित्वादाद्यावयवे 'कामि सीय त' इति जाते, यदाग-मन्यायेन आगमस्य-सीयुटः सीयविशिष्टस्य आर्धधातुकत्वेन "आर्धधातुकस्येड्व-लादेः" इति इडागमे "सार्वधातुकार्धधातुकयोः" इति गुणे "एचोऽयवायावः" इत्ययादेशे "आदेशप्रत्यययोः" इति षत्वे "सुट्तिथोः" इति तकारस्य सुडागमे "लोपो व्योर्वलि" इति यलोपे "आदेशप्रत्यययोः" इति षत्वे तकारस्य ष्टुत्वे 'काम-यिषीष्ट' इति। कामयिषीयास्ताम्, कामयिषीरन्। कामयिषीष्ठाः, कामयि-षीयास्थाम्। विभाषेट इति। "इणः षीध्वं लुङ्लिटां धोऽङ्गात्" इत्यतः 'इणः षीध्वं लुङ्लिटां धः' इत्यनुवर्तते। "अपदान्तस्य मूर्धन्यः" इत्यतो मूर्धन्य इति। तदाह—इणः परो य इडित्यादि। कामयिषीढ्वम्। कम्धातोर्णिङि, इङि गते, धातु-संज्ञायाम् "आशिषि लिङ्लोटौ" इति लिङि, लिङो ध्वमि, सीयुटि उटि गते, इडा-गमे, 'कामयिसीध्वम्' इति भूते, सीयुटः सस्य षत्वे, "विभाषेटः" इति धस्य वा ढत्वे, 'कामयिषीढ्वम्' इति रूपम्। ढत्वाभावे—'कामयिषीध्वम्' इति। कामयिषीय, कामयि-षीवहि, कामयिषीमहि। कमिषीष्ट। "आयादय आर्धधातुके वा" इति णिङभावे कम्-धातोः "आशिषि लिङ्लोटौ" इति आशीर्वादरूपेऽर्थे लिङि, लिङो लः स्थाने प्रथम-पुरुषैकवचने तादेशे, तस्य "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे, "लिङः सीयुट्" इति लिङः स्थानिकतस्य सीयुटि, उटि गते, यदागमन्यायेन सीयुट आर्धधातुकत्वे, "आर्ध-धातुकस्येड्वलादेः" इति इडागमे, "सुट्तिथोः" इति तकारस्य सुडागमे "लोपो व्योर्वलि" इति यलोपे 'कम् इ सी स् त' इति जाते 'आदेशप्रत्यययोः" इति उभयत्र सकारयोः षत्वे "ष्टुना ष्टुः" इति तस्य ष्टुत्वे 'कमिषीष्ट' इति रूपम्। कमिषीयास्ताम्, कमिषीरन्। कमिषीष्ठाः, कमिषीयास्थाम्, कमिषीध्वम्। कमिषीय, कमिषीवहि, कमि-षीमहि। णिश्रिद्रुस्रुभ्य इति। णि श्रि द्रु स्रु एषां द्वन्द्वः। प्रत्ययग्रहणपरिभाषया णीति तदन्तग्रहणम्। "च्लि लुङि" इत्यतो लुङीति, "च्लेः सिच्" इत्यतः च्लेरिति चानु-वर्तते। तदाह—ण्यन्तादित्यादिना। णेरनिटीति। "आर्धधातुके" इत्यधिकृतम्। "अतो लोपः" इत्यस्माल्लोप इत्यनुवर्तते। अनिटीत्यस्य आर्धधातुकविशेषणत्वात् तदादि-

स्यात् ॥ चङि ६।१।११। चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य ॥ सन्वल्लघुनि चङ्परेऽनग्लोपे ७।४।९३। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति । सन्यतः ७।४।७९। अभ्यासस्यात इत् स्यात् सनि ॥ दीर्घो लघोः ७।४।९४। लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये । अचीकमत । णिङभावपक्षे ( कमेश्च्लेश्चङ्

---

विधिः । तदाह—अनभ्यासस्येति । णौ चङीति । अङ्गाधिकारादाह—यदङ्गमिति । उपधायाः किम् ? अचकाङ्क्षत् । चङि किम् ? कारयति । चङीति । "एकाचो द्वे प्रथमस्य" "अजादेर्द्वितीयस्य" इति चाधिकृतम् । "लिटि धातोरनभ्यासस्य" इति सूत्रं लिटि इति वर्जमनुवर्तते । तदाह—चङि परे इत्यादिना । सन्वल्लघुनीति । अनग्लोप इति छेदः । चङ् परो यस्मात् इति विग्रहः । तेन णीत्यस्य लाभः । स च अङ्गस्येति द्वयमप्यावर्तते । तत्र णावित्यावृत्तौ एकं लघुनेत्यत्रान्वेति । तथाच चङ्परे णौ यल्लघु तस्मिन्परत इति लभ्यते । द्वितीयं तु अनग्लोपे इत्यत्रान्वेति । तथाच णौ परतः यः अग्लोपः, तस्याभावे सतीति लभ्यते । अङ्गस्येत्यावृत्तौ एकं चङ्परे इत्यत्रान्वेति । निमित्तनिमित्तिभावे षष्ठी । तथाच अङ्गसंज्ञानिमित्तभूते चङ्परके वर्णे परे इति लभ्यते । चङ्परकश्च वर्णः अर्थात् णेरिकार एवेति भावः । सन्यत इति । सनि अत इति छेदः । "अत्र लोपोभ्यासस्य" इत्यनुवर्तते । "भृञामित्" इत्यस्मात् इदिति । तदाह—अभ्यासस्येति । दीर्घो लघोरिति । "अत्र लोपोऽभ्यासस्य" इत्यत अभ्यासस्येत्यनुवर्तते । तदाह—लघोरभ्यासस्येति । अभ्यासावयवस्य लघोरित्यर्थः । "सन्वल्लघुनि चङ्परे" इति सूत्रं सन्वच्छब्दवर्जमनुवर्तते । तच्च प्राग्वदेव द्वेधा व्याख्येयम् । तथाच फलितमाह—सन्वद्भावविषय इति । अचीकमत । कम्धातोः "कमेर्णिङ्" इति णिङि, इङि गते, णलोपे च "अत उपधायाः" इति उपधावृद्धौ 'कामि' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वे, "लुङ्" इति लुङि, उङि गते, लः स्थाने प्रथमपुरुषैकवचने तादेशे "च्लि लुङि" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति च्लेश्चङि चस्य ङस्य चेत्संज्ञायां लोपे च कृते 'काम् इ अ त' इति जाते "णेरनिटि" इति णेर्लोपे जाते 'काम् अ त' इति भूते "णौ चङ्युपधाया ह्रस्वः" इति प्रत्ययलक्षणेन णेश्चङ्परत्वादुपधाया ह्रस्वत्वे 'कम् अ त' इति जाते "चङि" इति कमो द्वित्वे "पूर्वोऽभ्यासः" इति अभ्याससंज्ञायां 'हलादिः शेषः' इति मूलोपे "ककम् अ त" इति भूते "कुहोश्चुः" इति कस्य चत्वे "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावे कृते "सन्यतः" इत्यभ्यासाकारस्य इत्वे 'चि कम् अ त' इति जाते "दीर्घो लघोः" इत्यभ्यासेकारस्य 'चि' इत्यस्य दीर्घे कृते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यङ्गस्य अडागमे टित्वादाद्यावयवे जाते 'अचीकमत' इति रूपम् । एवमेवाग्रेऽपि साधनिका ऊह्या । रूपाणि त्वित्थम्—अचीकमत, अचीकमेताम्, अचीकमन्त । अचीकमथाः, अचीकमेथाम्, अचीकमध्वम् । अची-

वाच्यः ) अचकमत । अकामयिष्यत । अकमिष्यत । अय गतौ ॥ ३ ॥ अयते ॥ उपसर्गस्यायतौ ८।२।१९। अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते । पलायते ॥ दयायासश्च ३।१।३७। दय् अय् आस् एभ्य आम् स्याल्लिटि । अयाञ्चक्र । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट । "विभा-

---

कमे, अचीकमावहि, अचीकमामहि । अचकमत । "आयादय आर्धधातुके वा" इति णिङभावे कम्धातोः "लुङ्" इति लुङि, लुङो लः स्थाने तादेशे "च्लि लुङि" इति च्लौ "कमेश्च्लेश्चङ् वक्तव्यः" इति च्लेः स्थाने चङादेशे अनुबन्धलोपे "चङि" इति द्वित्वे अभ्यासत्वे अभ्यासकार्ये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे 'अचकमत' इति रूपम् । अचकमेताम्, अचकमन्त । अचकमथाः, अचकमेथाम्, अचकमध्वम् । अचकमे, अचकमावहि, अचकमामहि। इति रूपाणि । अकामयिष्यत। कम्धातोः"आयादय आर्धधातुके वा"इति वा णिङि, इङि गते णलोपे उपधावृद्धौ "सनाद्यन्ता धातवः" इति धातुत्वे "लिङ्निमित्ते लृङ्क्रियातिपत्तौ" इति लृङि, लृङो लःस्थाने प्रथमपुरुषैकवचने तादेशे "स्यतासी लृलुटोः" इति स्ये स्यस्यार्धधातुकत्वे इडागमे गुणे अयादेशे 'कामयि स्य त' इति जाते अङ्गस्याडागमे षत्वे च 'अकामयिष्यत' इति रूपम्। णिङभावे—'अकमिष्यत' इति रूपम्। अयते। अय्धातोर्लटः प्रथमपुरुषैकवचने ते "कर्तरि शप्" इति शपि, अनुबन्धलोपे "टित आत्मनेपदानां टेरे" इति टेरेत्वे 'अयते' इति रूपम् । उपसर्गस्यायताविति । अयताविति श्तिपा निर्देशः । "कृपो रो लः" इत्यत रो ल इत्यनुवर्तते । तदाह—अयतिपरस्येत्यादिना । प्लायते । प्रपूर्वकाय्धातोर्लटस्ते, शपि, टेरेत्वे च कृते "उपसर्गस्यायतौ" इति रेफस्य लत्वे कृते 'प्लायते' इति रूपम् । एवमेव परापूर्वकाय्धातोर्लटस्ते शपि, टेरेत्वे "उपसर्गस्यायतौ" इति रेफस्य लत्वे—'पलायते' इति रूपम् । दयायासश्चेति । दय अय आस् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । "कास्प्रत्ययादाममन्त्रे लिटि" इति सूत्रात् आम्, लिटि, इत्यनुवर्तते । तदाह—एभ्य आम् स्याल्लिटीति । अयाञ्चक्रे । अय्धातोः "परोक्षे लिट्" इति लिटि कृते "दयायासश्च" इत्यामि कृते 'अय् आम् लिट्' इति स्थिते "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परके कृञि प्रयुक्ते, लिटो लः स्थाने ते, तस्य स्थाने "लिटस्तझयोरेशिरेच्" इति एशि, शस्येत्संज्ञायां लोपे च कृते, "लिटि धातोरनभ्यासस्य" इति द्वित्वे 'आयाम् कृ कृ ए' इति स्थिते "पूर्वोऽभ्यासः" इति अभ्यासत्वे "उरत्" इति अभ्यासऋवर्णस्याकारे "उरण् रपरः" इति रपरे च जाते "हलादिः शेषः" इति कावशिष्टे "कुहोश्चुः" इति कस्य चत्वे "इको यणचि" इति यणि, "मोऽनुस्वारः" इत्यनुस्वारे "वा पदान्तस्य" इति वा परसवर्णे कृते 'अयाञ्चक्रे' इति रूपम् । अयाञ्चक्रे, अयाञ्चक्राते, अयाञ्चक्रिरे । अयाञ्चकृषे, अयाञ्चक्राथे, अयाञ्चकृढ्वे । अयाञ्चक्रे, अयाञ्चकृवहे, अयाञ्चकृमहे । इति रूपाणि । अयिता । अय्धातोर्लुटि, लुटो लः स्थाने प्रथमपुरुषैकवचने ते समागते "स्य-

षेटः" । अयिषीढ्वम्-अयिषीध्वम् । आयिष्ट । आयिढ्वम् । आयिध्वम् । आयिष्यत । द्युत दीप्तौ ॥ ४ ॥ द्योतते ॥ द्युतिस्वाप्योः सम्प्रसारणम् ७।४।६७।

---

तासी लृलुटोः" इति तासि, तास आर्धधातुकत्वे, इडागमे च कृते, "लुटः प्रथमस्य डारौरसः" इति तस्य स्थाने डात्वे, डस्येत्संज्ञायां लोपे च कृते डित्वसामर्थ्यादभस्यापि टेर्लोपे 'अयिता' इति रूपम् । अयिष्यते । अय्धातोर्लृटि, लृटो लः स्थाने ते, स्ये स्यस्य इडागमे, षत्वे च जाते "टित आत्मनेपदानां टेरे" इति टेरेत्वे च 'अयिष्यते' इति रूपम् । अयताम् । अय्धातोर्लोटस्तादेशे, शपि, "टित आत्मनेपदानां टेरे" इति टेरेत्वे "आमेतः" इति एकारस्यामादेशे 'अयताम्' इति रूपम् । आयत । अय्धातोर्लङस्तादेशे शपि, अनुबन्धलोपे "आडजादीनाम्" इत्यङ्गस्याडागमे "आटश्च" इति वृद्धौ 'आयत' इति रूपम् । अयेत । अय्धातोर्लिङस्तादेशे शपि, शपयोरित्संज्ञायां लोपे च, "लिङः सीयुट्" इति सीयुटि, उटि गते, टित्वादाद्यावयवे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "सुट्तिथोः" इति सुडागमे, उटि गते टित्वादाद्यावयवे "लिङः सलोपोऽनन्त्यस्य" इत्यनेन अस्यापि सुटः सकारस्य लोपे "लोपो व्योर्वलि" इति यलोपे, "आद्गुणः" इति गुणे 'अयेत' इति रूपम् । अयिषीष्ट । अय्धातोः "आशिषि लिङ्लोटौ" इति लिङि, इङि गते, लः स्थाने तादेशे "लिङः सीयुट्" इति सीयुटि, उटि गते, टित्वादाद्यावयवे, "सुट् तिथोः" इति सुडागमे, उटि गते, टित्वादाद्यावयवे "लिङाशिषि" इति तस्यार्धधातुकत्वे यदागमन्यायेन सीयुटोऽप्यार्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इति इडागमे सीयुटः सस्य षत्वे, "लोपो व्योर्वलि" इति यलोपे, सुटः सस्यापि "आदेशप्रत्यययोः" इति षत्वे "ष्टुनाष्टुः" इति तकारस्य ष्टुत्वे 'अयिषीष्ट' इति रूपम् । अयिषीष्ट, अयिषीयास्ताम्, अयिषीरन् । अयिषीष्ठाः, अयिषीयास्थाम् । अयिषीढ्वम् । अय्धातोः आशीर्लिङो ध्वमः सीयुट्, यलोपः, आर्धधातुकत्वान्न सलोपः । इट् । यकारिणः परो य इट् ततः परत्वात् धस्य मूर्धन्यो ढः । इटः परभक्तत्वाद्यकारान्तादङ्गात् परस्य इपीध्वमः इणन्तादङ्गात्परत्वान्नित्ये प्राप्ते विकल्पोऽयमिति भावः । अयिषीध्वम् । "विभाषेटः" इति ढत्वाभावे एतत् । अयिषीय, अयिषीवहि, अयिषीमहि । इति रूपाणि । आयिष्ट । अय्धातोर्लुङस्तादेशे च्लौ, च्लेः सिजादेशे इचि गते, सिचः आर्धधातुकत्वादिडागमे षत्वे ष्टुत्वे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यङ्गस्याडागमे "आटश्च" इति वृद्धौ 'आयिष्ट' इति रूपम् । आयिषाताम्, आयिषत । आयिष्ठाः, आयिषाथाम् । आयिढ्वम् । आयिध्वम् । लुङो ध्वमि, च्लेः सिचि, आटि, वृद्धौ, सिच इटि "धि च" इति सलोपः । ध्वमः इवर्णादङ्गात्परत्वात् "इणः षीध्वं लुङ्लिटां धोऽङ्गात्" इति नित्ये मूर्धन्यादेशे प्राप्ते "विभाषेटः" इति विकल्पेन मूर्धन्यादेशे 'आयिढ्वम्' इति रूपम् । तदभावे 'आयिध्वम्' इति । अग्रे-आयिषि, आयिष्वहि, आयिष्महि, इति । आयिष्यत । अय्धातोर्लृङस्ते स्ये इटि, आटि, वृद्धौ सस्य षत्वे च कृते 'आयिष्यत' इति । द्योतते ।

अनयोरभ्यासस्य सम्प्रसारणम् स्यात्। दिद्युते॥ द्युद्भ्यो लुङि १।३।९१। द्युतादिभ्यो लुङः परस्मैपदं वा स्यात्। "पुषादि" इत्यङ्। अद्युतत्। अद्योतिष्ट। अद्यो-

---

द्युत्धातोः "वर्तमाने लट्" इति लटि, अटि गते, लः स्थाने प्रथमपुरुषैकवचने ते तस्य "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" इति शपि, शपयोरित्संज्ञायां लोपे च, शित्वात् शपोऽकारस्यापि सार्वधातुकत्वे "पुगन्तलघूपधस्य च" इति द्युत उकारस्य गुणे 'द्योतत' इति जाते "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'द्योतते' इति रूपम्। द्योतेते, द्योतन्ते। द्योतसे, द्योतेथे, द्योतध्वे। द्योते, द्योतावहे, द्योतामहे। द्युतिस्वाप्योरिति। "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येत्यनुवर्तते। तदाह—अभ्यासस्येति। दिद्युते। द्युत्धातोः "परोक्षे लिट्" इति लिटि, इटि गते, लः स्थाने प्रथमपुरुषैकवचने तादेशे "लिट् च" इत्यार्धधातुकत्वे "लिटस्तझयोरेशिरेच्" इति तस्य स्थाने एशि कृते शस्येत्सञ्ज्ञायां लोपे च "लिटि धातोरनभ्यासस्य" इति द्वित्वे 'द्युत्, द्युत् ए' इति स्थिते "पूर्वोऽभ्यासः" इति अभ्यासत्वे "द्युतिस्वाप्योः सम्प्रसारणम्" इति अभ्यासयकारस्य इकाररूपे सम्प्रसारणे जाते "सम्प्रसारणाच्च" इति द्युत उकारस्य पूर्वरूपे 'दित् द्युत् ए' इति जाते "हलादिः शेषः" इति तलोपे मिलित्वा 'दिद्युते' इति रूपम्। दिद्युते, दिद्युताते, दिद्युतिरे, दिद्युतिषे, दिद्युताथे, दिद्युतिध्वे। दिद्युते, दिद्युतिवहे, दिद्युतिमहे, इति रूपाणि। लुटि—द्योतिता। लृटि—द्योतिष्यते। लोटि—द्योतताम्। लङि—अद्योतत। विधिलिङि—द्योतेत। आशीर्लिङि—द्योतिषीष्ट। द्युद्भ्यो लुङीति। बहुवचनात् द्युतादिभ्य इति गम्यते। दिग्योगे पञ्चमी। "तस्मादित्युत्तरस्य" इति परिभाषया परस्येति लभ्यते। "शेषात्कर्तरि" इत्यतः परस्मैपदमित्यनुवर्तते तदाह–द्युतादिभ्य इति। अद्युतत्। द्युत् धातोर्लुङि, उङि गते, लः स्थाने प्रथमपुरुषैकवचनविवक्षायां "द्युद्भ्यो लुङि" इत्यनेन परस्मैपदसंज्ञकतिपि, 'द्युत् ति' इति स्थिते "च्लि लुङि" इति च्लौ, च्लेः स्थाने "च्लेः सिच्" इति सिचि प्राप्ते तम्बाधित्वा "पुषादिद्युताद्य्लृदितः परस्मैपदेषु" इति अङादेशे ङस्येत्संज्ञायां लोपे च ङित्वाद्गुणाभावे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यङ्गस्याडागमे "इतश्च" इति तिप इकारस्य लोपे 'अद्युतत्' इति रूपम्। अद्युतत्, अद्युतताम्, अद्युतन्। अद्युतः, अद्युततम्, अद्युतत। अद्युतम्, अद्युताव, अद्युताम। इति रूपाणि। अद्योतिष्ट। द्युत्धातोर्लुङि, लुङो लः स्थाने "द्युद्भ्यो लुङि" इति विकल्पेन परस्मैपदत्वादत्र तदभावे आत्मनेपदे तादेशे, च्लौ, च्लेः सिचि, इचि गते, सिचः सस्यार्धधातुकत्वे इडागमे "पुगन्तलघूपधस्य च" इति द्युत उकारस्य गुणे षत्वे ष्टुत्वे, अडागमे 'अद्योतिष्ट' इति रूपम्। अद्योतिष्ट, अद्योतिषाताम्, अद्योतिषत। अद्योतिष्ठाः। अद्योतिषाथाम्, अद्योतिध्वम्। अद्योतिषि, अद्योतिष्वहि, अद्योतिष्महि। इति रूपाणि। अद्योतिष्यत। द्युत्धातोर्लृङस्ते समागते, "स्यतासी लृलुटोः" इति स्ये "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे इडागमे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "पुगन्तलघूप-

तिष्यत। एवं श्विता वर्णे ॥ ५ ॥ ञिमिदा स्नेहने ॥ ६ ॥ ञिष्विदा स्नेहनमोचनयोः ॥ ७ ॥ मोहनयोरित्येके। ञिक्ष्विदाचेत्येके। रुच दीप्तावभिप्रीतौ च ॥८॥ घुट परिवर्तने ॥ ९ ॥ शुभ दीप्तौ ॥ १० ॥ क्षुभ सञ्चलने ॥ ११ ॥ णभ, तुभ हिंसायाम् ॥ १३ ॥ स्रंसु भ्रंसु ध्वंसु अवस्रंसने ॥ १६ ॥ ध्वंसु गतौ ॥ १७ ॥ स्रम्भु विश्वासे ॥ १८ ॥ वृतु वर्तने ॥ १९ ॥ वर्तते। ववृते। वर्तिता। वृद्भ्यः

---

धस्य च" इति गुणे सस्य षत्वे च कृते 'अद्योतिष्यत' इति रूपम्। श्विता वर्णे इति। श्वेतवर्णकरणे श्वेतीभवने वेत्यर्थः। लटि-श्वेतति। लिटि-शिश्विते। लुटि-श्वेतिता। लृटि-श्वेतिष्यते। लोटि-श्वेतताम्। लङि-अश्वेतत। लिङि-श्वेतेत। आशीर्लिङि-श्वेतिषीष्ट। लुङि-अश्वितत्, अश्वेतिष्ट। लृङि-अश्वेतिष्यत। ञिमिदा स्नेहने। रूपाणि-मेदते। मिमिदे। मेदिता। मेदिष्यते। मेदताम्। अमेदत। मेदेत। मेदिषीष्ट। अमिदत्, अमेदिष्ट। अमेदिष्यत। इति। ञिष्विदा। अत्र "आदिर्ञिटुडवः" इति ञेरित्संज्ञा ज्ञेया। आकारस्यापीत्संज्ञा। षकारस्य "धात्वादेः षः सः" इति सत्वमपि बोध्यम्। लटि-स्वेदते। लिटि-सिष्विदे। लुङि-अस्विदत्, अस्वेदिष्ट। ञिक्ष्विदा। अस्य-क्ष्वेदते। चिक्ष्विदे। लुङि-अक्ष्विदत्, अक्ष्वेदिष्ट। इति। रुच दीप्तावभिप्रीतौ चेति। अभिप्रीतिः-प्रीतिविषयीभवनम्। दीप्तौ-रोचते सूर्यः इत्युदाहरणम्। प्रकाशते इत्यर्थः। अभिप्रीतौ-हरये रोचते भक्तिः इत्युदाहरणम्। लटि-रोचते। लिटि-रुरुचे। लुङि-अरुचत्, अरोचिष्ट। इति। घुट परिवर्तने। घोटते। जुघुटे। लुङि-अघुटत्, अघोटिष्ट। शुभ दीप्तौ। शोभते। शुशुभे। लुङि-अशुभत्, अशोभिष्ट। णभ। लटि-नभते। लिटि-नेभे, नेभाते, नेभिरे। लुङि-अनभत्, अनभिष्ट। तुभ। तोभते। तुतुभे। लुङि-अतुभत्, अतोभिष्ट। स्रंसु। लटि-स्रंसते। लिटि-सस्रंसे। लुङि-अस्रसत्। अत्र द्युतादित्वात्परस्मैपदे अङि-नलोप इति भावः। पक्षे-अस्रंसिष्ट। ध्वसु। लटि-ध्वंसते। लिटि-दध्वंसे। लुङि-अध्वसत्, अध्वंसिष्ट। भ्रंसु। भ्रंसते। बभ्रंसे। लुङि-अभ्रसत्, अभ्रंसिष्ट। स्रम्भु। लटि-स्रम्भते, लिटि-सस्रम्भे। लुङि-अस्रभत्, अस्रम्भिष्ट। वर्तते। वृत् धातोः "वर्तमाने लट्" इति लटि, लः स्थाने प्रथमपुरुषैकवचने ते कृते, तस्य "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" इति शपि, शपयोरित्संज्ञायां लोपे च, शित्वात्तस्यापि सार्वधातुकत्वे, "पुगन्तलघूपधस्य च" इति वृत ऋकारस्य गुणे अकारे जाते "उरण् रपरः" इति रपरे च जाते "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते मिलित्वा 'वर्तते' इति रूपम्। अग्रे-वर्तेते, वर्तन्ते। वर्तसे, वर्तेथे, वर्तध्वे। वर्ते, वर्तावहे। वर्तामहे। इति रूपाणि। ववृते। वृत्धातोर्लिटस्ते कृते "लिटि धातोरनभ्यासस्य" इति द्वित्वे 'वृत् वृत् त' इति जाते "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "उरत्" इत्यभ्यासऋवर्णस्याकारे "उरण् रपरः" इति रपरे 'वर्त् वृत् ते' इति जाते "हलादिः शेषः" इति 'व' अवशिष्टे "लिटस्तझयोरेशिरेच्" इति एशि शस्येत्संज्ञायां लोपे च

स्यसनोः १।३।९२। वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च ॥ न वृद्भ्यश्चतुर्भ्यः ७।२।५९। वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण्न स्यात् तङानयोरभावे । वर्त्स्यति, वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवृतत् । अवर्तिष्ट । अवर्त्स्यत् । अवर्तिष्यत ॥ दद दाने ॥ २० ॥ ददते ॥ न

---

मिलित्वा 'वर्तते' इति रूपम् । वर्तिता । वृत्धातोर्लुटस्ते कृते "स्यतासी लृलुटोः" इति तासि, तास आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे "लुटः प्रथमस्य डारौरसः" इति तस्थाने डात्वे डलोपे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे 'वृत् इ त् आ' इति जाते "पुगन्तलघूपस्य च" इत्यङ्गस्य गुणे संयुक्ते च जाते 'वर्तिता' इति रूपम् । वृद्भ्यः स्यसनोरिति । बहुवचनाद् वृतादिभ्य इति गम्यते । "शेषात्कर्तरि" इत्यतः परस्मैपदमित्यनुवर्तते, "वा क्यषः" इत्यतो वेति च । तदाह—वृतादिभ्य इति । न वृद्भ्य इति । "सेऽसिचि" इति सूत्रात् से इति, "आर्धधातुकस्येड्वलादेः" इत्यत आर्धधातुकस्येड् इति चानुवर्तते । तदाह—सकारादेरार्धधातुकस्येति । वर्त्स्यति । वृत्धातोर्लृटि, अनुबन्धलोपे 'वृत् ऌ' इति स्थिते "वृद्भ्यः स्यसनोः" इति वा परस्मैपदे प्रथमपुरुषैकवचने तिपि, प्रगते "स्यतासी लृलुटोः" इति स्ये स्यस्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे प्राप्ते "न वृद्भ्यश्चतुर्भ्यः" इति तस्य निषेधे कृते "पुगन्तलघूपधस्य च" इति लघूपधगुणे "उरण्रपरः" इति रपरे 'वर्त्स्यति' इति रूपम् । वर्त्स्यति, वर्त्स्यतः, वर्त्स्यन्ति । वर्त्स्यसि, वर्त्स्यथः, वर्त्स्यथ । वर्त्स्यामि, वर्त्स्यावः, वर्त्स्यामः । इति पत्ते रूपाणि । वर्तिष्यते । वृत्धातोर्लृटि, "वृद्भ्यः स्यसनोः" इति विकल्पेन परस्मैपदविधानात्तदभावे इटि "पुगन्तलघूपधस्य च" इति गुणे "टित आत्मनेपदानां टेरे" इति टेरेत्वे, स्यस्य षत्वे च 'वर्तिष्यते' इति रूपम् । वर्तताम् । वृत्धातोर्लोटि, ते, शपि, लघूपधगुणे, टेरेत्वे "आमेतः" इति एकारस्यामादेशे 'वर्तताम्' इति रूपम् । अवर्तत । वृत्धातोर्लङि, लङस्ते शपि, "पुगन्तलघूपधस्य च" इति गुणे अकारे जाते "उरण्रपरः" इति रपरे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अडागमे 'अवर्तत' इति रूपम् । वर्तेत । वृत्धातोर्लिङि, इङि गते, लःस्थाने प्रथमपुरुषैकवचने तादेशे कृते शपि "पुगन्तलघूपधस्य च" इति गुणे रपरे च जाते 'वर्त् अ त' इति स्थिते "लिङः सीयुट्" इति सीयुटागमे उटि गते टित्वादाद्यावयवे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "आद्गुणः" इति गुणे "लोपो व्योर्वलि" इति यलोपे 'वर्तेत' इति रूपम् । वर्तिषीष्ट । वृत्धातोराशिषि लिङस्ते सीयुटि, उटि गते टित्वादाद्यावयवे आर्धधातुकत्वादिडागमे गुणे 'वर्तिसी त' इति जाते "सुट्तिथोः" इति तकारस्य सुटागमे उटि गते तस्याद्यावयवे जाते उभयत्र सकारद्वयस्य षत्वे तकारस्य ष्टुत्वे च कृते 'वर्तिषीष्ट' इति रूपम् । अवृतत् । वृत्धातोर्लुङि अनुबन्धलोपे लः स्थाने "द्युद्भ्यो लुङि" इति वा परस्मैपदे तिपि अनुबन्धलोपे, च्लौ, "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इति

**शसददवादिगुणानाम् ६।४।१२६।** शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य एत्वाभ्यासलोपौ न स्तः। ददे। ददाते। ददिरे। ददिता। ददिष्यते। ददताम्। अददत। ददेत। ददिषीष्ट। अददिष्ट। अददिष्यत। त्रपूष

---

च्लेरङि अङ्गस्याडागमे "इतश्च" इति तिप इकारलोपे 'अवृतत्' इति रूपम्। अवृतत्, अवृतताम्, अवृतन्। अवृतः, अवृततम्, अवृतत। अवृतम्, अवृताव, अवृताम, इति रूपाणि। पक्षे 'अवर्तिष्ट' इति। अत्र लुङस्ते, च्लौ, च्लेः सिचिं, इचि गते सिचः सकारस्येडागमे गुणे अडागमे सिचः सकारस्य षत्वे ष्टुत्वे च रूपम्। अवर्त्स्यत्। वृत्धातोर्लृङि कृते "स्यतासी लृलुटोः" इति स्ये "वृद्भ्यः स्यसनोः" इति परस्मैपदत्वे लृङो लस्य तिपि च कृते 'वृत् स्य ति' इति जाते स्यस्यार्धधातुकत्वादिटि प्राप्ते "न वृद्भ्यश्चतुर्भ्यः" इति तस्य इटो निषेधे "पुगन्तलघूपधस्य च" इति लघूपधगुणे "इतश्च" इति तिप इकारलोपे अडागमे 'अवर्त्स्यत्' इति रूपम्। पक्षे लृङस्ते स्ये इटि गुणे षत्वे अटि च कृते 'अवर्तिष्यत' इति रूपम्। दद–दाने। दानञ्च–स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनमिति यावत्। ददते। दद्धातोर्लटस्ते शपि, "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'ददते' इति रूपम्। न शसददेति। शस दद वादि गुण एषां द्वन्द्वः। अवयवषष्ठी। गुणशब्देन विहित एव गुणोऽत्र गुणशब्देन विवक्षितः। अन्यथा शसददिग्रहणवैयर्थ्यात्। "अत एकहल्मध्ये" इत्यतोऽत इति "घ्वसोरेद्धौ" इत्यस्मात् एदिति, अभ्यासलोप इति चानुवर्तते। तदाह—शसेरित्यादिना। ददे। दद्धातोर्लिटस्तादेशस्य एशि, द्वित्वे अभ्यासकार्यं च जाते 'ददद् ए' इति भूते "अत एकहल्मध्ये नादेशादेशादेर्लिटि" इति एत्वेऽभ्यासलोपे, "न शसददवादिगुणानाम्" इति निषेधात्। ददिता। दद्धातोर्लुटस्तादेशस्य डात्वे, तासि, इटि, डित्वसामर्थ्यादभस्यापि टेर्लोपे 'ददिता' इति रूपम्। ददिष्यते। दद्धातोर्लृटस्तादेशे स्ये इटि षत्वे टेरेत्वे च 'ददिष्यते' इति रूपम्। ददताम्। दद्धातोर्लोटस्तादेशे, शपि, टेरेत्वे "आमेतः" इति एकारस्यामादेशे 'ददताम्' इति रूपम्। अददत। दद्धातोर्लङस्तादेशे शपि, अटि च 'अददत' इति रूपम्। ददेत। दद्धातोर्लिङस्तादेशे शपि, सीयुटि, उटि गते "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "आद्गुणः" इति गुणे "लोपो व्योर्वलि" इति यलोपे च कृते 'ददेत' इति रूपम्। ददिषीष्ट। दद्धातोराशिषो लिङस्तादेशे लिङ आर्धधातुकत्वात् शबभावे "लिङः सीयुट्" इति सीयुडागमे अनुबन्धलोपे टित्वादाद्यावयवे यदागमास्तद्गुणीभूतस्तद्ग्रहणेन गृह्यन्ते' इति न्यायेन सीयुट अप्यार्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इति इडागमे "सुट् तिथोः" इति तकारस्य सुडागमे "आदेशप्रत्यययोः" इति सकारद्वयस्यापि षत्वे "ष्टुना ष्टुः" इति तकारस्य ष्टुत्वे च कृते 'ददिषीष्ट' इति रूपम्। ददिषीष्ट, ददिषीयास्ताम्, ददिषीरन्। ददिषीष्ठाः, ददिषीयास्थाम्, ददिषीध्वम्। ददिषीय, ददिषीवहि, ददिषीमहि।

लज्जायाम् ॥ २१ ॥ त्रपते ॥ **तृफलभजत्रपश्च ६।४।१२२।** एषामत एत्वमभ्यास-लोपश्च स्यात् किति लिटि सेटि थलि च। त्रेपे। त्रपिता-त्रप्ता। त्रपिष्यते-त्रप्स्यते। त्रपताम्। अत्रपत। त्रपेत ॥ त्रपिषीष्ट-त्रप्सीष्ट। अत्रपिष्ट-अत्रप्त। अत्रपिष्यत-अत्रप्स्यत। इत्यात्मनेपदिनः ॥

---

इति रूपाणि। अददिष्ट। दद्धातोर्लुङस्ते, च्लौ, च्लेः सिचि, इचि गते सिचः सकारस्यार्धधातुकत्वे इडागमे षत्वे ष्टुत्वे च जाते अडागमे 'अददिष्ट' इति रूपम्। अददिष्यत। दद्धातोर्लृङस्ते स्ये इटि षत्वे अडागमे च 'अददिष्यत' इति रूपम्। त्रपूषिति। ऊकारः षकारश्च इत्। त्रपते। त्रप्धातोः "वर्तमाने लट्" इति लटि अटावितौ, तयोर्लोपे लः स्थाने प्रथमपुरुषैकवचने ते तस्य "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" इति शपि, शपयोरित्सञ्ज्ञायां लोपे च "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'त्रपते'-इति रूपम्। तृफलभजत्रपश्चेति। "अत एकहल्मध्ये" इत्यत अत इति, लिटीति चानुवर्तते। "घ्वसोरेद्धावभ्यासलोपश्च" इत्यत एदिति अभ्यासलोपश्चेति च, "गमहन" इत्यस्मात् कितीति, "थलि च सेटि" इति सूत्रञ्चानुवर्तते। तदाह—एषामत इति। त्रेपे। त्रप्धातोर्लिटस्तादेशस्य स्थाने "लिटस्तझयोरेशिरेच्" इति एशि, शगते 'त्रप् ए' इति स्थिते "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "तृफलभजत्रपश्च" इति त्रप अकारस्यैत्वे अभ्यासलोपे च कृते मिलित्वा 'त्रेपे' इति रूपम्। त्रेपे, त्रेपाते, त्रेपिरे। त्रेपिषे त्रेप्से, त्रेपाथे, त्रेपिध्वे त्रेप्ध्वे। त्रेपे, त्रेपिवहे, त्रेप्वहे, त्रेपिमहे त्रेप्महे। इति रूपाणि। त्रपिता। त्रप्धातोर्लुटस्तादेशस्य स्थाने डात्वे तासि, डित्वसामर्थ्यादभस्यापि टेर्लोपे 'त्रप् त् आ' इति जाते "स्वतिसूतिसूयतिधूञूदितो वा" इति विकल्पेनेडागमे 'त्रपिता' इति रूपम्। इडागमाभावे 'त्रप्ता' इति। त्रपिष्यते। त्रप्धातोर्लृटस्तादेशे स्ये 'त्रप् स्य त' इति स्थिते "स्वरतिसूतिसूयतिधूञूदितो वा" इति वा इडागमे टेरेत्वे षत्वे च 'त्रपिष्यते' इति रूपम्। इडागमाभावे 'त्रप्स्यते' इति। त्रपताम्। त्रप्धातोर्लोटस्तादेशे शपि, टेरेत्वे च कृते "आमेतः" इति एकारस्यामादेशे 'त्रपताम्' इति रूपम्। अत्रपत। त्रप्धातोर्लङस्ते कृते शपि, अटि 'अत्रपत' इति रूपम्। त्रपेत। त्रप्धातोर्लिङस्ते शपि, "लिङः सीयुट्" इति सीयुटि, उटि गते टित्वाद्याद्यवयवे जाते "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "आद्गुणः" इति गुणे "लोपो व्योर्वलि" इति यलोपे 'त्रपेत' इति रूपम्। त्रपिषीष्ट। त्रप्धातोराशिषि लिङस्तादेशे तस्यार्धधातुकत्वे सीयुटि, उटि गते "स्वरतिसूतिसूयतिधूञूदितो वा" इति वा इटि "सुट्तिथोः" इति तकारस्य सुडागमे 'त्रप् इ सी स् त' इति जाते इड्निमित्तके सीयुटः सस्य षत्वे, सीयुट इनिमित्तके सुटः सस्य षत्वे तकारस्य ष्टुत्वे च जाते 'त्रपिषीष्ट' इति रूपम्। इडभावे—'त्रप्सीष्ट' इति। अत्रपिष्ट। त्रप्धातोर्लुङस्ते च्लौ, च्लेः स्थाने सिचि, इचि गते, "स्वरतिसूति०" इति इडागमे अङ्गस्याडागमे षत्वे ष्टुत्वे च

## ( अथोभयपदिनः )

**श्रिञ् सेवायाम् ॥ १ ॥ श्रयति, श्रयते । शिश्राय, शिश्रिये । श्रयिता ।**

---

'अत्रपिष्ट' इति रूपम् । अत्रप्त । त्रप्धातोर्लुङस्ते च्लौ च्लेः सिचि इचि गते इडभावे अङ्गस्याडागमे च कृते 'अ त्रप् स् त' इति जाते "झलो झलि" इति सलोपे 'अत्रप्त' इति रूपम् । अत्रप्त, अत्रप्साताम्, अत्रप्सत । अत्रप्थाः, अत्रप्साथाम्, अत्रप्ध्वम् । अत्रप्सि, अत्रप्स्वहि, अत्रप्स्महि । इति रूपाणि । अत्रपिष्यत । त्रप्धातोर्लृङस्ते स्ये "स्वरतिसूति०" इति वा इटि, अटि षत्वे च 'अत्रपिष्यत' इति रूपम् । इडभावे— 'अत्रप्स्यत' । इति । इत्यात्मनेपदिनः ।

श्रयति । श्रिञो ञकारस्य "हलन्त्यम्" इतीत्संज्ञायां "तस्य लोपः" इति लोपे कृते श्रिधातोः "वर्तमाने लट्" इति लटि, अटि गते "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति कर्तृगामिक्रियाफलाभावे ।"शेषात्कर्तरि परस्मैपदम्" इति परस्मैपदत्वात् लः स्थाने प्रथमपुरुषैकवचने तिपि कृते तस्य सार्वधातुकत्वे "कर्तरि शप्" इति शपि, शपयोरित्संज्ञायां लोपे च शपोऽकारस्यापि शित्वात्सार्वधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति श्रिञ इकारस्य गुणे "एचोऽयवायावः" इत्ययादेशे संयुक्ते च जाते 'श्रयति' इति रूपम् । श्रयते । श्रिधातोर्लटो लः स्थाने "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यात्मनेपदत्वात् प्रथमपुरुषैकवचने तादेशे शपि गुणे अयादेशे च कृते "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'श्रयते' इति रूपम् । शिश्राय । श्रिधातोः "परोक्षे लिट्" इति लिटि, लिटो लःस्थाने कर्तृगामिक्रियाफलाभावे प्रथमपुरुषैकवचने तिपि, "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति तिपो णलि, णकारस्य लकारस्य चेत्संज्ञायां लोपे च "लिटि धातोरनभ्यासस्य" इति द्वित्वे 'श्रि श्रि अ' इति जाते "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इति 'शि' अवशिष्टे "श्रिञ" इकारस्य "सार्वधातुकार्धधातुकयोः" इति गुणे "एचोऽयवायावः" इत्ययादेशे 'शिश्रय् अ' इति जाते "अत उपधायाः" इत्युपधाकारस्य वृद्धौ मिलित्वा 'शिश्राय' इति रूपम् । शिश्राय, शिश्रियतुः, शिश्रियुः । शिश्रयिथ, शिश्रियथुः, शिश्रिय । शिश्राय, शिश्रय, शिश्रियिव, शिश्रियिम । इति रूपाणि । शिश्रिये । श्रिधातोर्लिटि, लिटो लः स्थाने "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति कर्तृगामिक्रियाफलत्वेन आत्मनेपदत्वेन प्रथमपुरुषैकवचने तादेशे तस्य स्थाने "लिटस्तझयोरेशिरेच्" इति एशि, शगते "लिटि धातोरनभ्यासस्य" इति द्वित्वे, अभ्यासत्वे "हलादिः शेषः" इति 'शि' अवशिष्टे 'शि श्रि ए' इति जाते "असंयोगाल्लिट् कित्" इति लिट एकारस्य कित्वात् गुणाभावे "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इतीयङि कृते 'शिश्रिये' इति रूपम् । शिश्रिये, शिश्रियाते, शिश्रियिरे । शिश्रियिषे, शिश्रियाथे, शिश्रियिध्वे । शिश्रिये, शिश्रियिवहे, शिश्रियिमहे । इति रूपाणि ।

श्रयिष्यति । श्रयिष्यते । श्रयतु । श्रयताम् । अश्रयत् । अश्रयत । श्रयेत् । श्रयेत । श्रीयात् । श्रयिषीष्ट । चङ् । अशिश्रियत् । अशिश्रियत । अश्रयिष्यत् ।

---

श्रयिता । श्रिधातोर्लुटस्तिपो डात्वे, तासि, इटि, गुणे अयादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'श्रयिता' इति रूपम् । एवमेव लुटस्ते कृतेऽपि रूपम् । श्रयिष्यति । श्रिधातोर्लृटस्तिपि, स्ये इटि, गुणे अयादेशे षत्वे च 'श्रयिष्यति' इति रूपम् । श्रयिष्यते । श्रिधातोर्लृटस्ते स्ये इटि गुणे अयादेशे षत्वे च कृते "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'श्रयिष्यते' इति रूपम् । श्रयतु । श्रिधातोर्लोटस्तिपि, शपि, गुणे अयादेशे "एरुः" इति तिप इकारस्योत्वे 'श्रयतु' इति रूपम् । श्रयताम् । श्रिधातोर्लोटि, लोटो लः स्थाने "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति कर्त्रभिप्राये क्रियाफले आत्मनेपदसंज्ञके प्रथमपुरुषैकवचने तादेशे शपि, गुणे अयादेशे "टित आत्मनेपदानां टेरे" इति टेरेत्वे "आमेतः" इति एकारस्यामादेशे 'श्रयताम्' इति रूपम् । अश्रयत् । श्रिधातोर्लङस्तिपि, शपि, गुणे अयादेशे अडागमे "इतश्च" इति तिप इकारस्य लोपे च कृते 'अश्रयत्' इति रूपम् । अश्रयत । श्रिधातोर्लङस्ते शपि गुणे अयादेशे अटि च कृते 'अश्रयत' इति रूपम् । श्रयेत् । श्रिधातोर्लिङस्तिपि, शपि, गुणे अयादेशे च कृते 'श्रय ति' इति जाते तत्र "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमे उटि गते टित्वादाद्यावयवे जाते "अतो येयः" इति यास इयादेशे "आद्गुणः" इति गुणे "लोपो व्योर्वलि" इति यलोपे "इतश्च" इति तिप इकारलोपे 'श्रयेत्' इति रूपम् । श्रयेत । अत्र "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इ त वा आत्मनेपदे तेन लिङो लः स्थाने तादेशे, शपि, गुणे अयादेशे सीयुटि, उटि गते "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "आद्गुणः" इति गुणे यलोपे च कृते 'श्रयेत' इति रूपम् । श्रीयात् । श्रिधातोराशिषि लिङस्तिपि, यासुटि, उटि गते टित्वादाद्यावयवे जाते "अकृत्सार्वधातुकयोर्दीर्घः" इति श्रिय इकारस्य दीर्घे 'श्रीयास्ति' इति भूते "इतश्च" इति तिप इकारस्य लोपे, "स्कोः संयोगाद्योरन्ते च" इति सलोपे च 'श्रीयात्' इति रूपम् । श्रयिषीष्ट । श्रिधातोराशिषि लिङि, लिङो लः स्थाने ञित्वात् वा आत्मनेपदत्वेन तादेशे सीयुटि, उटि गते, टित्वादाद्यावयवे जाते "सुट्तिथोः" इति तस्य सुटि, सीयुड्विशिष्टस्य इटि, गुणे अयादेशे उभयत्र सस्य षत्वे, यलोपे, ष्टुत्वे च 'श्रयिषीष्ट' इति रूपम् । अशिश्रियत् । श्रिधातोर्लुङस्तिपि "च्लि लुङि" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति च्लेः स्थाने चङि, चकारस्य ङकारस्य चेत्सञ्ज्ञायां लोपे च कृते, "चङि" इति द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये च कृते 'शिश्रि अति' इति जाते "इतश्च" इति तिप इकारस्य लोपे, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अङ्गस्याडागमे "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इति इयङि 'अशिश्रियत्' इति रूपम् । अशिश्रियत्, अशिश्रियताम्, अशिश्रियन् । अशिश्रियः, अशिश्रियतम्, अशिश्रियत । अशिश्रियम्, अशिश्रियाव, अशिश्रियाम ।

अश्रयिष्यत ॥ भृञ् भरणे ॥ ५ ॥ भरति । भरते । बभार । बभ्रतुः । बभ्रुः ।

इति रूपाणि । अशिश्रियत । श्रिधातोर्लुङस्ते, च्लौ "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति च्लेश्चङि, द्वित्वे, अभ्यासकार्ये अडागमे, 'अ शि श्रि अ त' इति स्थिते "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इति इयङि, 'अशिश्रियत' इति रूपम् । अशिश्रियेताम्, अशिश्रियन्त । अशिश्रियथाः, अशिश्रियेथाम्, अशिश्रियध्वम् । अशिश्रिये, अशिश्रियावहि, अशिश्रियामहि । अश्रयिष्यत् । लृङस्तिपि, स्ये, इटि, गुणे, अयादेशे षत्वे अटि, तिप इकारलोपे च रूपम् । अश्रयिष्यत । एवं लृङस्ते स्ये इटि, गुणे, अयादेशे षत्वे अटि च रूपम् । भरति । ञित्वादुभयपदम् । तत्र कर्तृगामिक्रियाफलाभावे भृधातोः "वर्तमाने लट्" इति लटि, लटोः लः स्थाने 'तिप्तस्झि०" इत्यादिना प्रथमपुरुषैकवचने तिपि, शपि, "सार्वधातुकार्धधातुकयोः" इति गुणे अकारे जाते "उरण् रपरः" इति रपरे 'भरति' इति रूपम् । कर्तृगामिक्रियाफले तु भृधातोर्लटस्ते शपि गुणे रपरे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते, 'भरते' इति रूपम् । बभार । भृधातोः "परोक्षे लिट्" इति लिटि, प्रथमपुरुषैकवचने परस्मैपदसञ्ज्ञके "तिप्तस्झि०" इत्यादिना तिपि, तिपः स्थाने "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति णलि, णस्य लस्य चेत्सञ्ज्ञायां लोपे च "लिट् च" इत्यार्धधातुकत्वे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "उरत्" इत्यभ्यासऋवर्णस्यात्वे "उरण् रपरः" इति रपरत्वे च कृते 'भर् भृ अ' इति जाते "हलादिः शेषः" इति भअवशिष्टे "अभ्यासे चर्च" इति अभ्यासभस्य बत्वे 'बभृ अ' इति स्थिते "सार्वधातुकार्धधातुकयोः" इति ऋकारस्य गुणे अकारे जाते "उरण् रपरः" इति रपरे भूते "अत उपधायाः" इति वृद्धौ कृतायां 'बभार' इति रूपम् । बभ्रतुः । भृधातोर्लिटस्तसि, तसोऽतुसि, द्वित्वे अभ्यासत्वे अभ्यासकार्ये च कृते 'बभृ अतुस्' इति स्थिते "असंयोगाल्लिट् कित्" इति कित्वाद्गुणाभावे "इको यणचि" इति यणि, रुत्वे विसर्गे च 'बभ्रतुः' इति रूपम् । एवं 'बभ्रुः' इति । बभर्थ । भृधातोर्लिटः सिपि, सिपस्थलि, द्वित्वे अभ्यासकार्ये च कृते 'बभृ थ' इति स्थिते "एकाच उपदेशेऽनुदात्तात्" इति इडभावे थलः पित्वाद् "असंयोगाल्लिट् कित्" कित्वाभावे "लिट् च" इत्यार्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे 'बभर्थ' इति रूपम् । न चात्र क्रादिनियमादिडागमस्य प्रवृत्तिरिति वाच्यम् । "अचस्तास्वत्" इति तन्निषेधात् । भारद्वाजमतेऽपि ऋदन्तेषु थलि निषेधाच्चेति यावत् । बभ्रथुः, बभ्र । बभार-बभर । बभृव । बभृम । अत्र पूर्वोक्तरीत्या इडभावो बोध्यः, शेषं पूर्ववत् । बभ्रे । भृधातोर्ञित्वात् कर्तृगामिक्रियाफलत्वाच्च आत्मनेपदम् । तत्र भृधातोः लिटि, लिटो लः स्थाने तादेशे तस्य स्थाने "लिटस्तझयोरेशिरेच्" इति एशि, शगते द्वित्वे अभ्यासकार्ये कित्वाद्गुणाभावे यणि च 'बभ्रे' इति रूपम् । बभ्राते, बभ्रिरे । बभृषे । अत्र "एकाच उपदेशेऽनुदात्तात्" इति इडभावः, कित्वाद्गुणाभावश्च ज्ञेयः । बभ्राथे, बभृध्वे । बभ्रे, बभृवहे,

बभर्थ। बभ्रिव। बभ्रिम। बभ्रे। बभृषे। भर्तासि। भर्तासे। भरिष्यति, भरिष्यते। भरतु, भरताम्। अभरत्, अभरत। भरेत्, भरेत॥ रिङ् शयग्लिङ्क्षु ७।४।२८॥ शे यकि यादावार्धधातुके लिङि च ऋतोरिङ् आदेशः स्यात्। रीङिप्रकृते रिङ्विधानसामर्थ्याद्दीर्घो न। भ्रियात्॥ उश्च १।२।१२। ऋवर्णात्परौ झलादी लिङ्सिचौ कितौ स्तस्तङि। भृषीष्ट। भृषीयास्ताम्।

---

बभृमहे। इति। भर्तासि। भृधातोर्लुटो लः स्थाने मध्यमपुरुषैकवचने सिपि कृते पूगते तासि, गुणे, "एकाच उपदेशेऽनुदात्तात्" इति इण्निषेधे "तासस्त्योर्लोपः" इति सलोपे 'भर्तासि' इति रूपम्। भर्तासे। भृधातोर्लुटो लः स्थाने आत्मनेपदसंज्ञके मध्यमपुरुषैकवचने थासि, थासः स्थाने "थासः से" इति से कृते, तासि, "एकाच उपदेशेऽनुदात्तात्" इति इडभावे गुणे च कृते "तासस्त्योर्लोपः" इति सलोपे 'भर्तासे' इति रूपम्। भरिष्यति। भृधातोर्लृटस्तिपि, स्ये "ऋद्धनोः स्ये" इति इटि, गुणे सस्य षत्वे च रूपम्। भरिष्यते। लृटस्ते, स्ये "ऋद्धनोः स्ये" इति इटि, गुणे षत्वे च रूपम्। भरतु। लोटस्तिपि, शपि, गुणे रपरे "एरुः" इति तिप इकारस्योत्वे च कृते रूपम्। भरताम्। लोटस्ते शपि, गुणे रपरे टेरेत्वे च कृते "आमेतः" इति एकारस्यामि च सति रूपम्। अभरत्। लङस्तिपि, शपि, गुणे अटि, तिप इकारलोपे च रूपम्। अभरत। लङस्ते शपि, गुणे, अटि च रूपम्। भरेत्। लिङस्तिपि, शपि, गुणे, यासुटि, उटि गते, यास इयादेशे "आद्गुणः" इति गुणे यलोपे तिप इकारलोपे च विहिते रूपम्। भरेत। लिङस्ते शपि, गुणे सीयुटि, उटि गते सलोपे "आद्गुणः" इति गुणे यलोपे च रूपम्। रिङ् शय इति। श यक् लिङ् एषां द्वन्द्वात्सप्तमीबहुवचनम्। "अयङ्यि क्ङिति" इत्यतो यीति सप्तम्यन्तमनुवृत्तं लिङो विशेषणम्। तदादिविधिः। शे तु यीति नान्वेति, असंभवात्। नापि यकि, अव्यभिचारात्। अत एव 'अकृत्सार्वधातुकयो'रित्यनुवृत्तमपि लिङ एव विशेषणम्। तदाह—शे यकीत्यादिना। ननु भ्रियादिति वक्ष्यमाणमुदाहरणमयुक्तम्, कृते रिङि "अकृत्सार्वधातुकयोः" इति दीर्घप्रसङ्गादित्यत आह—रीङि प्रकृते इति। कृते रिङि यदि दीर्घः स्यात्तर्हि रिङ्विधिर्व्यर्थः स्यात्, 'रीङ्त' इत्येव सिद्धेः। अतो रिङि कृते सति न दीर्घ इत्यर्थः। भ्रियात्। भृधातोराशीर्लिङस्तिपि, पूगते "लिङाशिषि" इति तिप आर्धधातुकत्वे "किदाशिषि" इति यासुटि उटि गते टित्वादाद्यावयवे, यासुटः कित्वात् गुणाभावे "रिङ्शयग्लिङ्क्षु" इति भकारोत्तरवर्तिन ऋकारस्य रिङि कृते ङस्येत्संज्ञायां लोपे च जाते तिप इकारस्य "इतश्च" इति लोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'भ्रियात्' इति रूपम्। भ्रियात्, भ्रियास्ताम्, भ्रियासुः। भ्रियाः, भ्रियास्तम्, भ्रियास्त। भ्रियासम्, भ्रियास्व, भ्रियास्म। इति रूपाणि। उश्चेति। लिङ्सिचावात्मनेपदेषु" इति सूत्रमनुवर्तते। "इको झल्" इत्यतो झलिति च। तदाह—ऋवर्णादिति। भृषीष्ट। भृधातोराशीर्लिङस्ते

अभार्षीत् ॥ **ह्रस्वादङ्गात् ८।२।२७।** सिचो लोपः स्यात् झलि । अभृत । अभृषाताम् । अभरिष्यत्, अभरिष्यत ॥ **हृञ् हरणे** ॥ ३ ॥ हरति, हरते । जहार, जह्रे । जहर्थ । जह्रिव । जह्रिम । जहृषे । हर्ता । हरिष्यति, हरिष्यते । हरतु, हर-

---

सीयुटि, उटि गते यलोपे "सुट्तिथोः" इति तस्य सुडागमे, उटि गते, 'भृ सी स् त' इति जाते "एकाच उपदेशेऽनुदात्तात्" इति इटो निषेधे "उश्च" इति कित्त्वात् "सार्वधातुकार्धधातुकयोः" इति प्राप्तगुणस्य "क्ङिति च" इति निषेधे, षत्वे पुनः षत्वे ष्टुत्वे च 'भृषीष्ट' इति रूपम् । भृषीयास्ताम् । भृधातोराशीर्लिङ आतामि, सीयुटि, उटि गते, सुटि, उटि गते "उश्च" इति कित्वाद्गुणाभावे षत्वे च रूपम् । भृषीरन् । भृषीष्ठाः, भृषीयास्थाम्, भृषीध्वम् । भृषीय, भृषीवहि, भृषीमहि । इति रूपाणि । अभार्षीत् । भृधातोर्लुङस्तिपि, च्लौ, "च्लेः सिच्" इति सिचि, इचि गते, अटि तिप इकारलोपे 'अ भृ स् त्' इति स्थिते "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ, रपरत्वे षत्वे च 'अभार्षीत्' इति रूपम् । अभार्ष्टाम्, अभार्षुः । अभार्षीः, अभार्ष्टम्, अभार्ष्ट । अभार्षम्, अभार्ष्व, अभार्ष्म । इति रूपाणि । ह्रस्वादङ्गादिति । ह्रस्वान्तादित्यर्थः । सिच इति भाष्यम् । "झलो झलि" इत्यतो झलीति "संयोगान्तस्य लोपः" इत्यतो लोप इति चानुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—सिचो लोपो झलीति । अभृत । भृधातोर्लुङस्ते, च्लौ च्लेः सिचि, इचि गते, अटि, "उश्च" इति सिचः कित्वाद्गुणाभावे "ह्रस्वादङ्गात्" इति सिचः सस्य लोपे 'अभृत' इति रूपम् । अभृषाताम् । लुङः स्थाने आतामि, हल्परकत्वाभावात् सिचः सकारस्य लोपाभावः, शेषं पूर्ववत् । अभृषत, अभृथाः, अभृषाथाम्, अभृध्वम् । अभृषि, अभृष्वहि, अभृष्महि । इति रूपाणि । अभरिष्यत् । लृङस्तिपि, स्ये, स्यस्यार्धधातुकत्वे "ऋद्धनोः स्ये" इति इटि, गुणे, रपरत्वे, अटि, षत्वे तिप इकारलोपे च सति रूपम् । अभरिष्यत । लृङस्ते शेषं पूर्ववत् । हरति । हृधातोर्लटस्तिपि, शपि, गुणे रपरत्वे च रूपम् । हरते । लटस्ते, शपि, गुणे रपरत्वे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च रूपम् । जहार । हृधातोर्लिटस्तिपि, तिपो णलादेशे, अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "उरत्" इति अभ्यासऋवर्णस्याऽकारे "उरण् रपरः" इति रपरत्वे च कृते 'हर् हृ अ' इति स्थिते "हलादिः शेषः" इति र्लोपे "कुहोश्चुः" इति अभ्यासहस्य झत्वे "अभ्यासे चर्च" इति झस्य जत्वे 'जहृ अ' इति भूते "सार्वधातुकार्धधातुकयोः" इति गुणे रपरत्वे च "अत उपधायाः" इति वृद्धौ 'जहार' इति रूपम् । जह्रतुः, जह्रुः । जह्रे । लिटस्ते "लिटस्तझयोरेशिरेच्" इति तस्य एशि, शगते, द्वित्वे, पूर्ववत् अभ्यासकार्ये 'जहृ ए' इति भूते कित्वाद्गुणाभावे "इको यणचि" इति यणि 'जह्रे' इति रूपम् । जह्राते, जह्रिरे । जहर्थ । 'जहृ थ' इति पूर्ववत्प्रसाध्य "एकाच उपदेशेऽनुदात्तात्" इति इण्निषेधस्य क्रादिष्वेव लिटि नियमितत्वादिह थलि इटि प्राप्ते "अचस्ता-

ताम् । अहरत्, अहरत । हरेत्, हरेत । ह्रियात्, हृषीष्ट । हृषीयास्ताम् । अहार्षीत्, अहृत । अहरिष्यत्, अहरिष्यत । धृञ् धारणे ॥४॥ धरति, धरते । णीञ् प्रापणे ॥५॥ नयति, नयते । डुपचष् पाके ॥६॥ पचति, पचते । पपाच । पेचिथ-

---

स्वत्" इति तन्निषेधः । ऋदन्तत्वेन भारद्वाजमतेऽपि इण् निषेध एव । एवञ्च इडभावे गुणे च तद्रूपम् । जह्रथुः, जह्र । जहर, जहार । सिद्धवत्कृत्याह—जह्रिव । जह्रिम । क्रादिनियमादिट् । जह्रिषे । क्रादिनियमादिट् । जह्राथे, जह्रिढ्वे-जह्रिध्वे । जह्रे, जह्रिवहे, जह्रिमहे । हर्ता । हृधातोर्लुटस्तिपि, तिपो डात्वे, तासि, "एकाच" इति इडभावे, गुणे, रपरत्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'हर्ता' इति रूपम् । हरिष्यति । "ऋद्धनोः स्ये" इति इट् । हरिष्यते । भृञ इव सर्वत्र साधनिकोह्या । ह्रियात् । हृधातोराशीर्लिङि, लिङस्तिपि, यासुटि, उटि गते "रिङ्शयग्लिङ्क्षु" इति हकारोत्तरवर्तिन ऋकारस्य रिङादेशे कृते तिप इकारलोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'ह्रियात्' इति रूपम् । हृषीष्ट । हृधातोराशीर्लिङि, लिङस्ते सीयुटि, उटि गते यलोपे तस्य सुटि, उटि गते "उश्च" इति कित्वात् गुणाभावे उभयत्र सस्य षत्वे ष्टुत्वे च रूपम् । आतामि—हृषीयास्ताम् । अहार्षीत् । परस्मैपदे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ रपरत्वम् । अहृत । तङि कृते 'अ हृ स् त' इति स्थिते "उश्च" इति कित्वात् "क्ङिति च" इति गुणनिषेधे "ह्रस्वादङ्गात्" इति सिचः सलोपे सति रूपम् । अहरिष्यत् । "ऋद्धनोः स्ये" इति इट् । धरति । धृधातोर्लटस्तिपि, शपि, गुणे रपरत्वे च कृते रूपम् । धरते । धृधातोर्लटस्ते शपि, गुणे रपरत्वे च कृते "टित आत्मनेपदानां टेरे" इति टेरेत्वे च विहिते 'धरते' इति रूपम् । लिटि-दधार, दध्रे । लुटि—धर्ता, धर्तासि, धर्तासे । लृटि—धरिष्यति, धरिष्यते । लोटि—धरतु, धरताम् । लङि—अधरत्, अधरत । विधिलिङि—धरेत्, धरेत । आशीर्लिङि—ध्रियात्, धृषीष्ट । लुङि—अधार्षीत्, अधृत । लृङि—अधरिष्यत्, अधरिष्यत । साधनिका हृञ्धातुवज्ज्ञेया । णीञ् प्रापण इति । णीञ्धातुरनिट्, णोपदेशः । नयति । णीञो ञकारस्य "हलन्त्यम्" इतीत्संज्ञायां "तस्य लोपः" इति लोपे "भूवादयो धातवः" इति धातुत्वे, तस्मात् लटि, "णो नः" इति णस्य नत्वे लटो लः स्थाने तिपि, शपि गुणे अयादेशे च 'नयति' इति रूपम् । नयते । धातोर्नत्वे तस्मात् लटः स्थाने ते शपि, गुणे अयादेशे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते "नयते' इति रूपम् । लिटि—निनाय, निन्यतुः, निन्युः । निनयिथ—निनेथ, निन्यथुः, निन्य । निनाय—निनय, निन्यिव, निन्यिम । आत्मनेपदे—निन्ये, निन्याते, इत्यादि । लुटि—नेता । नेतासि, नेतासे । लृटि—नेष्यति, नेष्यते । लोटि—नयतु, नयताम् । लङि—अनयत्, अनयत । लिङि—नयेत्, नयेत । आशीर्लिङि—नीयात्, नेषीष्ट । लुङि—अनैषीत्, अनेष्ट । लृङि—अनेष्यत्, अनेष्यत । साधनिका यथायथमूह्या । डुपचष्

पपक्थ। पेचे। पक्ता। भज सेवायाम् ॥ ७ ॥ भजति, भजते। बभाज, भेजे। भक्ता। भक्ष्यति, भक्ष्यते। अभाक्षीत्, अभक्त। अभक्षाताम्। यज देवपूजासङ्ग-

---

पाके इति। डुः, षकारः, चकारादकारश्च इत्। स्वरितत्वादुभयपदी। तदाह—पचति इति। पच्धातोर्लटस्तिपि शपि च, रूपम्। पचते। अत्र च लटस्ते शपि, टेरेत्वम्। पेचिथ। पच्धातोर्लिटसिपि, सिपोः थलि, अनुबन्धलोपे, "लिटि धातोरनभ्यासस्य" इति द्वित्वे, अभ्यासत्वे "हलादिः शेषः" इति चलोपे 'प पच् थ' इति जाते "लिट् च" इति थल आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति तस्य निषेधे क्रादिनियमान्नित्ये इ ट्वे प्राप्ते भारद्वाजनियमात् वा इटि कृते "थलि च सेटि" इति एत्वेऽभ्यासलोपे च 'पेचिथ' इति रूपम्। इडागमाभावपक्षे सेट्थलाभावात् एत्वाभ्यासलोपाभावेन 'प पच् थ' इत्यत्र "चोः कुः" इति कुत्वे 'पपक्थ' इति रूपम्। पेचे। पच्धातोर्लिटस्ते, तस्य स्थाने "लिटस्तझयोरेशिरेच्" इति एशि, शृगते "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इति अभ्यासत्वे "हलादिः शेषः" इति चलोपे 'पपच् ए' इति भूते "अत एकहल्मध्येऽनादेशादेर्लिटि" इति पच अकारस्यैत्वे अभ्यासलोपे च जाते संयुक्ते कृते सति 'पेचे' इति रूपम्। पेचे, पेचाते, पेचिरे। पेचिषे, पेचाथे, पेचिध्वे। पेचे, पेचिवहे, पेचिमहे। इति रूपाणि। पक्ता। पच्धातोर्लुटस्तिपि, तासि "एकाच उपदेशेऽनुदात्तात्" इति इडभावे "चोः कुः" इति चस्य कत्वे तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'पक्ता' इति रूपम्। एवमात्मनेपदेऽपि। लृटि—पक्ष्यति, पक्ष्यते। लोटि—पचतु, पचताम्। लङि—अपचत्, अपचत। लिङि—पचेत्, पचेत। आशीर्लिङि—पच्यात्, पक्षीष्ट। लुङि—अपाक्षीत्, अपक्त। लृङि—अपक्ष्यत्, अपक्ष्यत, इति। भजति। भज्धातोर्लटस्तिपि शपि, च रूपम्। भजते। लटस्ते, शपि, "टित आत्मनेपदानां टेरे" इति टेरेत्वम्। बभाज। भज्धातोर्लिटस्तिपि, तिपो णलि, अनुबन्धलोपे द्वित्वे अभ्यासकार्ये "अत उपधायाः" इति वृद्धौ 'बभाज' इति रूपम्। भेजतुः, भेजुः। भेजिथ, भेजथुः, भेज। बभाज—बभज, भेजिव, भेजिम। भेजे। भज्धातोर्लिटस्ते, "लिटस्तझयोरेशिरेच्" इति तस्य स्थाने एशि, शृगते "लिटि धातोरनभ्यासस्य" इति द्वित्वे अभ्यासत्वे, अभ्यासकार्ये च 'बभज् ए' इति स्थिते "तॄफलभजत्रपश्च" इति भकारोत्तरवर्तिन अकारस्यैत्वे अभ्यासलोपे च 'भेजे' इति रूपम्। भेजाते, भेजिरे। भेजिषे, भेजाथे, भेजिध्वे। भेजे, भेजिवहे, भेजिमहे। इति लिटो रूपाणि। भक्ता। भज्धातोर्लुटस्तिपि, तासि, "एकाच उपदेशेऽनुदात्तात्" इति इडभावे "चोः कुः" इति कुत्वे तिपो डात्वे, डित्वसामर्थ्यादभस्यापि टेर्लोपे, 'भक्ता' इति रूपम्। भक्ष्यति। भज्धातोर्लृटस्तिपि, स्ये, इडभावे कुत्वे षत्वे च रूपम्। भक्ष्यते। अत्र टेरेत्वमिति विशेषः। शेषं पूर्ववत्। लोटि—भजतु, भजताम्। लङि—अभजत्,

तिकरणदानेषु ॥८॥ यजति, यजते ॥ **लिट्यभ्यासस्योभयेषाम् ६।१।१७** वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं स्यात् लिटि। इयाज ॥ **वचिस्वपियजादीनां किति ६।१।१५** वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात् किति। ईजतुः।

---

अभजत। लिङि—भजेत्, भजेत। आशीर्लिङि—भज्यात्, भक्षीष्ट। अभाक्षीत्। भज्धातोः "लुङ्" इति लुङि, लुङः स्थाने प्रथमपुरुषैकवचने तिपि, पूगते "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते, सिचः सस्यार्धधातुकत्वे, इटि प्राप्ते "एकाच" इति तस्य निषेधे अटि, तिप इकारस्य "इतश्च" इति लोपे 'अभज् स् त्' इति जाते "अस्तिसिचोऽपृक्ते" इति तिपस्तकारस्य ईटि, "वदव्रजहलन्तस्याचः" इति वृद्धौ, जस्य कुत्वे चर्त्वे, सस्य षत्वे च 'अभाक्षीत्' इति। अभाक्ताम्, अभाक्षुः। अभाक्षीः, अभाक्तम्, अभाक्त। अभाक्षम्, अभाक्ष्व, अभाक्ष्म। इति। अभक्त। भज्धातोर्लुङस्ते, च्लौ, च्लेः सिचि, इचि गते, अटि, 'अभज् स् त' इति स्थिते "झलो झलि" इति सूलोपे, कुत्वे चर्त्वे च 'अभक्त' इति रूपम्। अभक्षाताम्। भज्धातोर्लुङि, लुङ आतामि, च्लौ, च्लेः सिचि, इचि गते, "चोः कुः" इति कुत्वेन जकारस्य गकारे "खरि च" इति गस्य कत्वे "आदेशप्रत्यययोः" इति सस्य षत्वे अङ्गस्याडागमे 'अभक्षाताम्' इति रूपम्। अभक्षत। अभक्थाः, अभक्षाथाम्, अभग्ध्वम्। अभक्षि, अभक्ष्वहि, अभक्ष्महि। इति लुङो रूपाणि। यजति। यज्धातोर्लटस्तिपि, शपि, 'यजति' इति। यजते। यज्धातोर्लटस्ते, शपि "टित आत्मनेपदानां टेरे" इति टेरेत्वे च 'यजते' इति रूपम्। लिट्यभ्यासस्योभयेषाम्। "ष्यङः सम्प्रसारणम्" इत्यतः सम्प्रसारणमित्यनुवर्तते। "वचिस्वपियजादीनाम्" इति सूत्रोपात्ताः, "ग्रहिज्यावयि" इति सूत्रोपात्ताश्च उभयशब्देन गृह्यन्ते। तदाह—वच्यादीनां ग्रह्यादीनाञ्चेति। इयाज। यजधातोः "परोक्षे लिट्" इति लिटि, लिटो लः स्थाने प्रथमपुरुषैकवचने तिपि, "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति तिपो णलि, णस्य लस्य चेत्संज्ञायां लोपे च 'यज अ' इति जाते "लिट् च"। इत्यार्धधातुकत्वेन शपोऽभावे, "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इति जूलोपे 'ययज् अ' इति भूते "लिट्यभ्यासस्योभयेषाम्" इति अभ्यासयकारस्य सम्प्रसारणेन इकारे जाते "सम्प्रसारणाच्च" इति पूर्वरूपे "अत उपधायाः" इति उपधावृद्धौ मिलित्वा 'इयाज' इति रूपम्। वचिस्वपीति। वचिस्वपीति इका निर्देशः। सौत्रः सम्प्रसारणाभावः। आदिशब्दो यजिनैव सम्बध्यते, न तु वचिस्वपिभ्याम्, तथासति हि वच्यादेः स्वप्यादेर्यजादेश्चेत्यर्थः स्यात्। तथा सति पृथक्स्वपिग्रहणं व्यर्थं स्यात्, अदादिगणे लुग्विकरणे 'वच परिभाषणे' इत्यारभ्य षष्ठस्य 'ञिष्वप् शये' इत्यस्य वच्यादिग्रहणेनैव सिद्धेः। तदाह—वचिस्वप्योर्यजादीनाञ्चेति। यजादिपदेन—"यजिर्वपिवहिश्चैव वसिवेञ्व्येञ इत्यपि।

ईजुः । इयजिथ—इयष्ठ । ईजे । यष्टा । "षढोः कः सि" । यक्ष्यति, यक्ष्यते ।

ह्वयतिः श्वयतिश्चैव यजाद्याः स्युरिमे नव" ॥ १ ॥ इति नव ग्राह्याः । ईजतुः । यज्-धातोः "परोक्षे लिट्" इति लिटि, लिटो लः स्थाने प्रथमपुरुषद्विवचने तसि, "परस्मैपदानां णलतुसुस्थल्" इत्यादिना तसोऽतुसि, तस्य "लिट् च" इत्यार्धधातुकत्वे "असंयोगाल्लिट् कित्" इति अतुसः कित्त्वे, "वचिस्वपियजादीनां किति" इति यजो यकारस्य सम्प्रसारणे इकारे जाते "सम्प्रसारणाच्च" इति पररूपे 'इज् अतुस्'इति जाते "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः"इत्यभ्यासत्वे "हलादिः शेषः" इति इअवशिष्टे 'इ इज् अतुस'इति भूते "अकः सवर्णे दीर्घः"इति सवर्णदीर्घे सस्य रुत्वे विसर्गत्वे च 'ईजतुः' इति रूपम् । ईजुः । यज्धातोर्लिटो लः स्थाने झौ, झेः स्थाने उसि, "असंयोगाल्लिट् कित्" इति कित्वे "वचिस्वपियजादीनाम्"इति सम्प्रसारणे इकारे "सम्प्रसारणाच्च"इति पररूपे, द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये च कृते 'इ इज् उस्'इति स्थिते सवर्णदीर्घे सस्य रुत्वे, रेफस्य विसर्गत्वे च 'ईजुः'इति रूपम् । इयजिथ । यज्-धातोर्लिटः सिप्, "परस्मैपदानां णलतुसुस्थल्" इत्यादिना सिपः स्थाने थलि, "लिट् च" इत्यार्धधातुकत्वे सिपः पित्त्वात् "असंयोगाल्लिट् कित्"इति कित्त्वाभावे प्रथमतः "लिटि धातोरनभ्यासस्य"इति द्वित्वे 'यज् यज् थ' इति जाते "लिट्यभ्यासस्योभयेषाम्" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे 'इयज् थ' इति भूते "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति इटो निषेधे क्रादिनियमान्नित्यमिटि प्राप्ते, भारद्वाजनियमेन वा इडागमे 'इयजिथ'इति । इडागमाभावे 'इयज् थ' इति स्थिते "व्रश्चभ्रस्जसृजमृजयज"इत्यादिना षत्वे थस्य "ष्टुना ष्टुः" इति ष्टुत्वे च 'इयष्ठ' इति । ईजथुः, ईज । इयाज—इयज, ईजिव, ईजिम । ईजे । यज्-धातोर्लिटस्ते, तस्यार्धधातुकत्वे "असंयोगाल्लिट्कित्" इति कित्वे च "वचिस्वपियजादीनां किति" इति सम्प्रसारणे,"सम्प्रसारणाच्च" इति पूर्वरूपे इज् त इति जाते द्वित्वे, अभ्यासत्वे अभ्यासकार्ये च कृते 'इ इज् त'इति भूते "अकः सवर्णे दीर्घः"इति दीर्घे "लिटस्तझयोरेशिरेच्"इति तस्य स्थाने एशि शूगते संयोगे च कृते 'ईजे'इति । ईजाते, ईजिरे । ईजिषे, ईजाथे, ईजिध्वे । ईजे, ईजिवहे, ईजिमहे । इति । यष्टा । यज्धातोर्लुटस्तिपि, तिपो डात्वे, तासि, तासः आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति इटो निषेधे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः"इति जस्य षत्वे तासस्तकारस्य "ष्टुना ष्टुः" इति ष्टुत्वे, डित्वसामर्थ्यादभस्यापि टेर्लोपे 'यष्टा'इति रूपम् । यक्ष्यति । यज्धातोर्लृटस्तिपि, स्ये, स्यस्यार्धधातुकत्वे "एकाच उपदेशेऽनुदात्तात्" इति इडभावे "व्रश्चभ्रस्ज" इति जस्य षत्वे 'यष् स्य ति' इति जाते "षढोः कः सि" इति षस्य कत्वे कात्परकत्वात् "आदेशप्रत्यययोः" इति स्यस्यावयवसकारस्य षत्वे कूष्योगे क्षे जाते 'यक्ष्यति' इति रूपम् । यक्ष्यते । यज्-धातोर्लृटस्ते स्ये इडभावे "व्रश्चभ्रस्ज" इति जस्य षत्वे तस्य "षढोः कः सि" इति कत्वे

इज्यात्। यक्षीष्ट। अयाक्षीत्, अयष्ट। वह प्रापणे॥ ९॥ वहति, वहते। उवाह। ऊहतुः। ऊहुः। उवहिथ॥ झषस्तथोर्धोऽधः ८।२।४०। झषः परयोस्तथोर्धः स्यान्नतु

कात्परकत्वात् स्यस्यावयवसकारस्य षत्वे कृष्योगे क्षे जाते "टित आत्मनेपदानां टेरे" इति टेरेत्वे च 'यक्ष्यते' इति रूपम्। लोटि—यजतु, यजताम्। लङि—अयजत्, अयजत। लिङि—यजेत्, यजेत। इज्यात्। यज्धातोराशिषो लिङस्तिपि, यासुटि, उटि गते टित्वादाद्यावयवे जाते "लिङाशिषि" इति यासुटः कित्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे तिप इकारलोपे "स्कोः संयोगाद्योरन्ते च" इति सूलो 'इज्यात्' इति रूपम्। इज्यास्ताम्, इज्यासुः। इज्याः, इज्यास्तम्, इज्यास्त। इज्यासम्, इज्यास्व, इज्यास्म। यक्षीष्ट। यज्धातोराशिषो लिङस्ते सीयुटि, उटि गते टित्वादाद्यावयवे जाते 'सुट् तिथोः" इति तस्य सुडागमे उटिगते टित्वात्तस्याद्यावयवे जाते "एकाच उपदेशेऽनुदात्तात्" इति इडभावे "व्रश्चभ्रस्ज" इति जस्य षत्वे षस्य "षढोः कः सि" इति कत्वे कृष्योगे क्षे जाते सुटः सस्य षत्वे तस्य ष्टुत्वे च 'यक्षीष्ट' इति रूपम्। यक्षीयास्ताम्, यक्षीरन्। यक्षीष्ठाः, यक्षीयास्थाम्, यक्षीध्वम्। यक्षीय, यक्षीवहि, यक्षीमहि। अयाक्षीत। यज्धातोर्लुङस्तिपि, च्लौ, च्लेः सिचि, इचि गते सिचः सस्यार्धधातुकत्वे "एकाच उपदेशेऽनुदात्तात्" इति इडभावे अटि तिपः इकारलोपे "अस्तिसिचोऽपृक्ते" इति तिपस्तस्य ईडागमे 'अयज् स् ई त्' इति जाते "व्रश्चभ्रस्जसृजमृज" इति जस्य षत्वे "षढोः कः सि" इति षस्य कत्वे कात्परकत्वात् सिचः सकारस्य "आदेशप्रत्यययोः" इति षत्वे कृष्योगे क्षे जाते "वदव्रजहलन्तस्याचः" इति वृद्धौ 'अयाक्षीत्' इति रूपम्। अयाष्टाम्, अयाक्षुः। अयाक्षीः, अयाष्टम्, अयाष्ट। अयाक्षम्, अयाक्ष्व, अयाक्ष्म। अयष्ट। यज्धातोर्लुङस्ते, च्लौ, च्लेः सिचि, इचि गते, अटि, 'अयज् स् त' इति भूते "झलो झलि" इति सूलोपे "व्रश्चभ्रस्ज" इति जस्य षत्वे तकारस्य ष्टुत्वे च 'अयष्ट' इति रूपम्। अयक्षाताम्, अयक्षत। अयष्ठाः, अयक्षाथाम्, अयड्ढ्वम्। अयक्षि, अयक्ष्वहि, अयक्ष्महि। लृङि—अयक्ष्यत्, अयक्ष्यत। वहति। वह्धातोर्लटस्तिपि, शपि, 'वहति' इति रूपम्। वहते। वह्धातोर्लटस्ते शपि, "टित आत्मनेपदानां टेरे" इति टेरेत्वे च 'वहते' इति रूपम्। उवाह—वह्धातोर्लिटस्तिपि, तिपो णलि, अनुबन्धलोपे, द्वित्वे, 'वह् वह् अ' इति भूते "पूर्वोऽभ्यासः" इति अभ्यासत्वे "लिट्यभ्यासस्योभयेषाम्" इति अभ्यासवकारस्य सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "हलादिः शेषः" इति हलोपे 'उ वह् अ' इति स्थिते "अत उपधायाः" इति उपधावृद्धौ 'उवाह' इति रूपम्। ऊहतुः। वह्धातोर्लिटस्तसि, तसोऽतुसि, "लिट् च" इत्यार्धधातुकत्वे "असंयोगाल्लिट् कित्" इति कित्त्वात् "वचिस्वपियजादीनां किति" इति वहो वकारस्य सम्प्रसारणे, "सम्प्रसारणाच्च" इति पूर्वरूपे 'उह् अतुस्' इति स्थिते "लिटि धातोरनभ्यासस्य"

दधातेः । "ढो ढे लोपः" । सहिवहोरोदवर्णस्य ६।३।११२। अनयोरवर्णस्य ओत्स्याड्ढलोपे । उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः ।

---

इति द्वित्वे अभ्यासत्वे अभ्यासकार्ये च जाते "अकः सवर्णे दीर्घः" इति दीर्घे सस्य रुत्वे रेफस्य विसर्गे च 'ऊहतुः' इति रूपम् । एवम्—'ऊहुः' इत्यपि बोध्यम् । उवहिथ । वह्धातोर्लिटः सिपि, सिपस्थलादेशे, "लिट् च" इत्यार्धधातुकत्वेन "आर्धधातुकस्येड् वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति इटो निषेधे "कृसृभृवृ" इति क्रादिनियमादिटि प्राप्ते "उपदेशेऽत्वतः" इति थल इटो निषेधे "ऋतो भारद्वाजस्य" इति नियमात् भारद्वाजमतेन इटि जाते 'वह् इ थ' इति भूते पित्वात् किद्भावेन प्रथमतो द्वित्वे अभ्यासत्वे "लिट्यभ्यासस्योभयेषाम्" इति अभ्यासवकारस्य सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "हलादिः शेषः" इति हलोपे 'उवहिथ' इति रूपम् । झषस्तथोरिति । झषः इति पञ्चमी । तश्च थ् चेति द्वन्द्वः । तकारादकार उच्चारणार्थः । तकारथकारयोरिति लभ्यते । अधः इति षष्ठ्यन्तम् । धाधातुभिन्नस्येति लभ्यते । तदाह—झषः परयोरिति । सहिवहोः । ढलोप इति । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यस्मात् ढलोपे इत्यनुवृत्तेरिति भावः । उवोढ । वहधातोर्लिटः सिपि, सिपस्थलि, "एकाच" इति इडभावे प्राप्ते क्रादिनियमादिटि प्राप्ते "उपदेशेऽत्वतः" इति इटो निषेधे थलः स्थानिवत्वेन पित्वात् "असंयोगाल्लिट् कित्" इति किदभावे, अतः "वचिस्वपियजादीनां किति" इति न सम्प्रसारणम्, किन्तु "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "लिट्यभ्यासस्योभयेषाम्" इति अभ्यासवकारस्य सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "हलादिः शेषः" इति ह् लोपे 'उ वह् थ' इति जाते "हो ढः" इति हस्य ढत्वे "झषस्तथोर्धोऽधः" इति थकारस्य धकारे "ष्टुना ष्टुः" इति ष्टुत्वेन धस्य ढत्वे 'उवढ्ढ' इति जाते "ढो ढे लोपः" इति पूर्वढस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति पूर्वस्याणो दीर्घे प्राप्ते तम्बाधित्वा "सहिवहोरोदवर्णस्य" इति अकारस्य ओत्वे 'उवोढ' इति रूपम् । ऊहथुः, ऊहुः । उवाह-उवह, ऊहिव, ऊहिम । इति अवशिष्टरूपाणि । ऊहे । वह्धातोर्लिटस्ते, "लिटस्तझयोरेशिरेच्" इति तस्य स्थाने एशि, शित्वात् 'वह् ए' इति स्थिते "असंयोगाल्लिट् कित्" इति लिटः कित्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणे, सम्प्रसारणाच्च" इति पूर्वरूपे 'उह् ए' इति भूते "लिटि धातोरनभ्यासस्य" इति द्वित्वे अभ्यासत्वे, अभ्यासकार्ये सवर्णदीर्घे च 'ऊहे' इति रूपम् । ऊहाते, ऊहिरे । ऊहिषे, ऊहाथे, ऊहिध्वे । ऊहे, ऊहिवहे, ऊहिमहे । इत्यवशिष्टरूपाणि । वोढा । वह्धातोर्लुटस्तिपि, तिपो डात्वे, तासि, तासः आर्धधातुकत्वे, इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति इटो निषेधे "हो ढः" इति हस्य ढत्वे, "झषस्तथोर्धोऽधः" इति तासस्तकारस्य धकारे "ष्टुना ष्टुः" इति ष्टुत्वेन धस्य ढत्वे "ढो ढे लोपः" इति पूर्वढ्लोपे "सहिवहोरोदवर्णस्य" इति वकारोत्तरवर्तिन अकारस्य

अवाक्षीः । अवोढम् । अवोढ । अवाक्ष्म् । अवाक्ष्म । अवाक्ष्व । अवोढ । अवक्षा-

ओकारे, डित्वसामर्थ्याद्भस्यापि टेर्लोपे 'वोढा' इति रूपम्। वोढारौ, वोढारः। वोढासि, वोढास्थः, वोढास्थ। वोढास्मि, वोढास्वः, वोढास्मः। इत्यवशिष्टरूपाणि। आत्मनेपदे तु—वोढा, वोढारौ, वोढारः। वोढासे, वोढासाथे, वोढाध्वे। वोढाहे, वोढास्वहे, वोढास्महे। इति। वक्ष्यति। वह् धातोर्लृटस्तिपि, स्ये, इडभावे "हो ढः" इति हस्य ढत्वे, "षढोः कः सि" इति ढस्य कत्वे, कात्परकत्वात् स्यस्यावयवसस्य षत्वे, कृष्योगे चे 'वक्ष्यति' इति रूपम्। एवमात्मनेपदे–वक्ष्यते। लोटि–वहतु–वहताम्। लङि-अवहत्, अवहत। लिङि–वहेत्, वहेत। आशीर्लिङि–उह्यात्, उह्यास्ताम्, उह्यासुः। उह्याः, उह्यास्तम्, उह्यास्त। उह्यासम्, उह्यास्व, उह्यास्म। इति। आत्मनेपदे आशीर्लिङि–वक्षीष्ट, वक्षीयास्ताम्, वक्षीरन्। वक्षीष्ठाः, वक्षीयास्थाम्, वक्षीध्वम्। वक्षीय, वक्षीवहि, वक्षीमहि। इति। अवाक्षीत्। वह् धातोर्लुङस्तिपि, च्लौ, च्लेः सिचि, इचि गते, अटि, तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति तिपस्तकारस्य ईडागमे 'अ वह् स् ई त्' इति स्थिते "वदव्रजहलन्तस्याचः" इति वकाराकारस्य वृद्धौ "हो ढः" इति हस्य ढत्वे, "षढोः कः सि" इति ढस्य कत्वे कात्परकत्वात् "आदेशप्रत्यययोः" इति सिचः सस्य षत्वे कृष्योगे चे जाते संयोगे कृते 'अवाक्षीत्' इति रूपम्। अवोढाम्। वह्धातोर्लुङस्तसि, च्लौ, च्लेः सिचि, इचि गते, तसः स्थाने "तस्थस्थमिपां तान्तन्तामः" इति तामि, अङ्गस्याडागमे वहोऽकारस्य "वदव्रज" इति वृद्धौ, हस्य ढत्वे 'अवाढ् स् ताम्' इति स्थिते "झलो झलि" इति सलोपे तामस्तकारस्य "झषस्तथोर्धोऽधः" इति धत्वे ष्टुत्वे, ढलोपे "सहिवहोरोदवर्णस्य" इति वह आकारस्य ओकारे 'अवोढाम्' इति रूपम्। अवाक्षुः। वह्धातोर्लुङो झौ, च्लौ च्लेः सिचि, इचि गते, "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसि, जस्येत्संज्ञायां लोपे च "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अटि, 'अवह् स् उस्' इति स्थिते "हो ढः" इति हस्य ढत्वे "षढोः कः सि" इति ढस्य कत्वे "आदेशप्रत्यययोः" इति सस्य षत्वे कृष्योगे चे जाते "वदव्रजहलन्तस्याचः" इत्यचो वृद्धौ सस्य रुत्वे रस्य विसर्गत्वे, कृते च संयोगे 'अवाक्षुः' इति रूपम्। अवाक्षीः। वह्धातोर्लुङो मध्यमपुरुषैकवचने सिपि समागते, च्लौ, च्लेः सिचि, इचो लोपे, अटि, "इतश्च" इति सिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति सिपःसस्य ईटि कृते 'अ वह् स् ईत्' इति स्थिते "हो ढः" इति हस्य ढत्वे "षढोः कः सि" इति ढस्य कत्वे, सस्य षत्वे कृष्योगे चे जाते "वदव्रजहलन्तस्याचः" इति अचो वृद्धौ सस्य रुत्वे, रेफस्य विसर्गत्वे च कृते 'अवाक्षीः' इति रूपम्। अवोढम्। वह्धातोर्लुङस्थसि, थसः स्थाने "तस्थस्थमिपां तान्तन्तामः" इति तामि, च्लौ, च्लेः सिचि, इचि गते, अटि, हस्य ढत्वे, "झलो झलि" इति सलोपे तमस्तस्य धत्वे ष्टुत्वेन ढत्वे, पूर्वढस्य "ढो ढे लोपः" इति लोपे "सहिवहोरोदवर्णस्य" इति अवर्णस्य ओकारे 'अवोढम्' इति रूपम्। अवोढ। वह्धातोर्लुङस्थे, च्लौ, च्लेः सिचि, इचो लोपे, अटि, "हो ढः" इति हस्य ढत्वे "झलो झलि" इति

ताम् । अवक्षत । अवोढाः । अवक्षाथाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि । अवक्ष्यत्, अवक्ष्यत । ( इत्युभयपदिनः ) इति भ्वादयः ॥

---

सलोपे "झषस्तथोर्धोऽधः" इति थस्य धकारे "ष्टुना ष्टुः" इति धस्य ढत्वे "ढो ढे लोपः" इति पूर्वढस्य लोपे "सहिवहोरोदवर्णस्य" इति वकाराकारस्यौत्वे 'अवोढ' इति रूपम् । अवाक्षम् । वह्धातोर्लुङ उत्तमपुरुषैकवचने मिपि, "तस्थस्थमिपां तान्तन्तामः" इति मिपः स्थाने अमि, च्लौ च्लेः सिचि, इचो लोपे अटि, 'अवह् स् अम्' इति स्थिते "वदव्रजहलन्तस्याचः" इति वकाराकारस्य वृद्धौ "हो ढः" इति हस्य ढत्वे "षढोः कः सि" इति ढस्य कत्वे "आदेशप्रत्यययोः" इति सिचः सस्य षत्वे कृष्योगे क्षे जाते 'अवाक्षम्' इति रूपम् । अवाक्ष्व । वह्धातोर्लुङो वसि, च्लौ, च्लेः सिचि, इचो लोपे अटि, "वदव्रजहलन्तस्याचः" इति वकाराकारस्य वृद्धौ 'अवाह् स् वस्' इति स्थिते "नित्यं ङितः" इति वसः सकारस्य लोपे "हो ढः" इति हस्य ढत्वे "षढोः कः सि" इति ढस्य कत्वे "आदेशप्रत्यययोः" इति सिचः सकारस्य षत्वे कृष्योगे क्षे सम्पन्ने 'अवाक्ष्व' इति रूपम् । एवं मसि—अवाक्ष्म । इति । अवोढ । वह्धातोर्लुङस्ते च्लौ च्लेः सिचि, इचो लोपे अटि, 'अवह् स् त' इति स्थिते "हो ढः" इति हस्य ढत्वे "झलो झलि" इति सलोपे, "झषस्तथोर्धोऽधः" इति तस्य धत्वे "ष्टुना ष्टुः" इति धस्य ष्टुत्वेन ढकारे "ढो ढे लोपः" इति पूर्वढस्य लोपे "सहिवहोरोदवर्णस्य" इति वकाराकारस्य ओकारे 'अवोढ' इति रूपम् । अवक्षाताम् । वहधातोर्लुङ आतामि, च्लौ, च्लेः सिचि, इचो लोपे, अटि, हस्य ढत्वे "षढोः कः सि" इति ढस्य कत्वे "आदेशप्रत्यययोः" इति सिचः सस्य षत्वे कृष्योगे क्षे जाते, कृते च संयोगे 'अवक्षाताम्' इति रूपम् । अवक्षत । वह्धातोर्लुङः स्थाने झे आदेशे "आत्मनेपदेष्वनतः" इति झस्य अतादेशे च्लौ, च्लेः सिचि, इचो लोपे, अटि हस्य ढत्वे, ढस्य "षढोः कः सि" इति कत्वे "आदेशप्रत्यययोः" इति सिचः सस्य षत्वे कृष्योगे क्षे जाते 'अवक्षत' इति रूपम् । अवोढाः । वह्धातोर्लुङो मध्यमपुरुषैकवचने थासि, च्लौ, च्लेः सिचि, इचि गते, अटि, हस्य ढत्वे "झलो झलि" इति सलोपे थासस्थकारस्य "झषस्तथोर्धोऽधः" इति धत्वे ष्टुत्वेन ढकारे "ढो ढे लोपः" इति ढलोपे "सहिवहोरोदवर्णस्य" इति वकाराकारस्य ओकारे, सस्य रुत्वे, रेफस्य विसर्गत्वे च 'अवोढाः' इति रूपम् । अवक्षाथाम् । वह्धातोर्लुङ आथामि, च्लौ च्लेः सिचि, इचो लोपे, अटि, हस्य ढत्वे "षढोः कः सि" इति ढस्य कत्वे "आदेशप्रत्यययोः" इति सिचः सस्य षत्वे कृष्योगे क्षे जाते 'अवक्षाथाम्' इति रूपम् । अवोढ्वम् । वह्धातोर्लुङो ध्वमि, च्लौ, च्लेः सिचि, इचो लोपे, अटि "हो ढः" इति हस्य ढत्वे "झलो झलि" इति सलोपे ष्टुत्वे ढलोपे "सहिवहोरोदवर्णस्य" इति वकाराकारस्य ओकारे 'अवोढ्वम्' इति रूपम् । अवक्षि । वह्धातोर्लुङ उत्तमपुरुषैकवचने इटि, च्लौ, च्लेः सिचि, इचो लोपे, अटि, हस्य ढत्वे "षढोः कः सि" इति

## अथादादयः।

अद भक्षणे ॥१॥ अदिप्रभृतिभ्यः शपः २।४।७२ लुक् स्यात्। अत्ति। अत्तः। अदन्ति। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः॥ लिट्यन्यतरस्याम् २।४।४०। अदो घस्लृ वा स्याल्लिटि। जघास। उपधालोपः॥ शासिवसिघसीनां च ८।३।६०। इणकुभ्यां सस्य षः स्यात्। घस्य चर्त्वम्। जक्षतुः। जक्षुः। जघसिथ।

---

तस्य कत्वे "आदेशप्रत्यययोः" इति षत्वे कृष्योगे क्षे 'अवक्षि' इति रूपम्। अवक्ष्वहि, अवक्ष्महि। वह्धातोः वहिमह्योः परयोः च्लौ, च्लेः सिचि, इचो लोपे, अटि, हस्य ढत्वे ढस्य कत्वे, कात्परकत्वात् षत्वे च रूपे स्तः। अवक्ष्यत्। वह्धातोर्लृङस्तिपि "इतश्च" इति तिप इकारस्य लोपे स्ये, इडभावे अटि, हस्य ढत्वे ढस्य कत्वे, स्यस्य सकारस्य षत्वे, कृष्योगे क्षे 'अवक्ष्यत्' इति रूपम्। अवक्ष्यत। वह्धातोर्लृङस्ते 'स्ये' इडभावे अटि, हस्य ढत्वे, ढस्य कत्वे, कात्परकत्वात् "आदेशप्रत्यययोः" इति स्यस्यावयवसस्य षत्वे, कृते च संयोगे 'अवक्ष्यत' इतिं रूपम्। इति भ्वादयः।

अथ लुग्विकरणान् धातून् निरूपयितुमुपक्रमते—अद भक्षणे इति। अनिडयम्। अदिप्रभृतिभ्य इति। "ण्यक्षत्रियार्षञितो लुक् च" इत्यतो लुगित्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—लुक् स्यादिति। अदिप्रभृतिभ्यः परस्य शपो लुगिति फलितम्। अत्ति। अद् भक्षणे, अस्मात् धातोः "वर्तमाने लट्" इति लटि अटयोरित्संज्ञायां लोपे च, लः स्थाने "तिप्तस्झि" इत्यादिना प्रथमपुरुषैकवचने तिपि, पृगते 'अद् ति' इति जाते "तिङ्शित्सार्वधातुकम्" इति तिपः सार्वधातुकत्वे "कर्तरि शप्" इति तिपि परे शपि जाते "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, "खरि च" इति दस्य चर्त्वे, 'अत्ति' इति रूपम्। अत्तः। शपो लुकि, दस्य चर्त्वम्। अदन्ति। शपो लुकि, "झोऽन्तः" इति झस्यान्तादेशः। एवं सर्वत्र। लिट्यन्यतरस्याम्। "अदो जग्धिः" इत्यत अद इति "लुङ्सनोर्घस्लृ" इत्यतो घस्लृ इति चानुवर्तते। तदाह—अद इति। आदेशे लृकार इत्। घसादेश अनिट्। जघास। अद्धातोः "परोक्षे लिट्" इति लिटि, लिटो लः स्थाने प्रथमपुरुषैकवचने तिपि, तिपो णलि, अनुबन्धलोपे "लिट्यन्यतरस्याम्" इति अदो घस्लृ आदेशे जाते लृकारस्येत्संज्ञायां लोपे च 'घस् अ' इति स्थिते "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यास" इत्यभ्यासत्वे "हलादिः शेषः" इति सलोपे "कुहोश्चुः" इति घस्य झत्वे "अभ्यासे चर्च" इति झस्य जत्वे "अत उपधायाः" इति घकाराकारस्य वृद्धौ 'जघास' इति रूपम्। उपधालोप इति। "गमहनजनखनघसाम्" इत्यनेनेति भावः। शासिवसीति। "सहेः साडः सः" इत्यतः स इति षष्ठ्यन्तमनुवर्तते। "इण्कोः" इति "अपदान्तस्य मूर्धन्यः" इति चाधिकृतम्। तदाह—इण्कुभ्यामिति। जक्षतुः। अद्धातोर्लिटस्तसि, तसोऽतुसि, "लिट्यन्तरस्याम्"

जक्षथुः। जक्ष। जघास, जघस। जक्षिव। जक्षिम। आद। आदतुः। आदुः। इडत्त्यर्तिव्ययतीनाम् ७।२।६६। अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात्। आदिथ। अत्ता। अत्स्यति। अत्तु, अत्तात्। अत्ताम्। अदन्तु। हुझल्भ्यो हेर्धिः ६।४।

---

इति अदो घस्लादेशे, लकारस्येत्संज्ञायां लोपे च "लिटि धातोरनभ्यासस्य" इति द्वित्वे अभ्यासत्वे, पूर्ववदभ्यासकार्ये च, 'जघस् अतुस्' इति स्थिते "असंयोगाल्लिट् कित्" इति अतुसः कित्वे "गमहनजनखनघसां लोपः क्ङिति" इति उपधाकारस्य लोपे 'जघ्स् अतुस्' इति जाते "खरि च" इति घस्य चर्त्वेन ककारे "शासिवसिघसीनाञ्च" इति सस्य षत्वे कष्योगे क्षे जाते संयोगे च कृते अतुसः सस्य रुत्वे रस्य विसर्गत्वे च 'जक्षतुः' इति। जक्षुः। अद्धातोर्लिटो झौ "परस्मैपदानां णलतुसुस्थल्" इत्यादिना झेः स्थाने उसि, लिट्यन्यतरस्याम्" इति अदो घस्लादेशे लृगते द्वित्वे अभ्यासत्वे अभ्यासकार्ये च कृते 'जघस् उस्' इति भूते "असंयोगाल्लिट् कित्" इति कित्वात् "गमहनजनखनघसां लोपः क्ङिति" इति उपधाकारस्य लोपे "खरि च" इति घस्य चर्त्वेन ककारे "शासिवसिघसीनाञ्च" इति सस्य षत्वे कष्योगे क्षे संयोगे कृते, उसः सकारस्य रुत्वे, रेफस्य विसर्गत्वे च 'जक्षुः' इति रूपम्। जघसिथ। अत्र थल इडागमे थलः पित्वात् किद्भावेन न उपधालोप इति भावः। जक्षथुः। अत्र पूर्ववत्साधनिका। एवं सर्वत्र लिटि बोध्यम्। आद। घस्लादेशाभावपक्षे—अद्धातोर्लिटस्तिपि, तिपो णलि, अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इति दलोपे "अत आदेः" इति अभ्यासाकारस्य दीर्घे आकारे जाते, "अत उपधायाः" इति उपाधाया वृद्धौ "अकः सवर्णे दीर्घः" इति दीर्घे 'आद' इति रूपम्। अतुसि—आदतुः। उसि—आदुः। इडत्यर्ति। पञ्चम्यर्थे षष्ठी। "अचस्तास्वत्" इत्यतः थलीत्यनुवर्तते। "विभाषा सृजिदृशोः" इति पूर्वसूत्राद्विभाषा ग्रहणमस्वरितत्वान्नानुवर्तते। तदाह—अद् ऋइत्यादिना। आदिथ। अद्धातोर्लिटः सिपि, सिपस्थलि, लृगते "लिट् च" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इति दलोपे "अत आदेः" इत्यभ्यासाकारस्य दीर्घे "अकः सवर्णे दीर्घः" इति दीर्घे, कृते च संयोगे 'आदिथ' इति रूपम्। एवमेव सर्वत्र। आदथुः, आद। आद, आदिव, आदिम। इति शेषरूपाणि। अत्ता। अद्धातोर्लुटस्तिपि, तिपो डात्वे तासि, तासः "आर्धधातुकं शेषः इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति इटो निषेधे "खरि च" इति दस्य चर्त्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'अत्ता' इति रूपम्। अत्स्यति। अद्धातोर्लृटस्तिपि पृगते स्ये, इडभावे, "खरि च" इति दस्य चर्त्वे 'अत्स्यति' इति रूपम्। अत्तु। अद्धातोर्लोटस्तिपि, पगते शपि, "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, "खरि च" इति दस्य

१०१। होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि, अत्तात्। अत्तम्। अत्त। अदानि। अदाव। अदाम। अदः सर्वेषाम् ७।३।१००। अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यात्। अद्यास्ताम्। अद्यासुः। लुङ्

---

चर्त्वे, "एरुः" इति तिप इकारस्योत्वे 'अत्तु' इति पम्। "तुह्योस्तातङाशिष्यन्यतरस्याम्" इति तोःस्थाने तातङि, 'अत्तात्' इति। अत्ताम्। अद्धातोर्लोटस्तसि, शपि, शपो लुकि तसः स्थाने "तस्थस्थमिपां तान्तन्तामः" इति तामि, चर्त्वे च रूपम्। अदन्तु। अद्धातोर्लोटो झौ, शपि, शपो लुकि, झस्य स्थाने "झोऽन्तः" इत्यन्तादेशे 'अदन्ति' इति जाते तत्र "एरुः" इति अन्तेरिकारस्योत्वे 'अदन्तु इति रूपम्। हुझल्भ्यो हेर्धिः। झलन्तेभ्य इति। अङ्गविशेषणत्वात्तदन्तविधिरिति भावः। अनेकाल्त्वात् सर्वादेशो बोध्यः। अद्धि। अद्धातोर्लोटः सिपि, पृगते, शपि, शपो लुकि, 'अद् सि' इति स्थिते "हुझल्भ्यो हेर्धिः" इति हेः स्थाने धिजाते 'अद्धि' इति सम्पन्नम्। तातङि अत्तात्। थसस्तमादेशे—अत्तम्। थस्य स्थाने ते—अत्त। अदानि। अद्धातोर्लोटो मिपि, पृगते शपि, शपो लुकि, "मेर्निः" इति मेःस्थाने निजाते उत्तमपुरुषसंज्ञकस्य नेः "आडुत्तमस्य पिच्च" इति आडागमे टित्वादाद्यावयवे जाते 'अदानि' इति रूपम्। अदाव। लोटो वसि, शपि, शपो लुकि, वस आडागमे, "नित्यं ङितः" इति वसः सकारस्य लोपः। एवं मसि—अदाम इति। अदः सर्वेषामिति। अदः इति पञ्चमी। "तस्मादित्युत्तरस्य" इति परिभाषया परस्येति लभ्यते। "गुणोऽपृक्ते" इत्यतोऽपृक्ते इति "तुरुस्तुशम्यमः सार्वधातुके" इत्यतः सार्वधातुके इति चानुवर्तते। सप्तमीद्वयं च षष्ठ्या विपरिणस्यते। "अड्गार्ग्यगालवयोः" इत्यतः अडित्यनुवर्तते। गार्ग्यगालवयोरनुवृत्तिनिवृत्त्यर्थं सर्वेषामिति, तदाह—अदः परस्येत्यादिना। आदत्। अद्धातोर्लङ्स्तिपि, शपि, "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, "आडजादीनाम्" इति अङ्गस्य आडागमे टित्वादाद्यावयवे जाते 'आ अद् ति' इति स्थिते "आटश्च" इति वृद्धौ, "इतश्च" इति तिप इकारलोपे "अपृक्त एकाल्प्रत्ययः" इति तिपस्तकारस्यापृक्तसंज्ञायाम् "अदः सर्वेषाम्" इति अपृक्तसंज्ञकस्य तिपस्तकारस्य अडागमे टगते टित्वादाद्यावयवे जाते 'आदत्' इति रूपम्। आत्ताम्। अपृक्तग्रहणान्नेहाडागम इति भावः। अद्यात्। अद्धातोर्लिङस्तिपि, शपि, शपो लुकि, "यासुट्परस्मैपदेषूदात्तो ङिच्च" इति यासुटि, उटि गते, टित्वादाद्यावयवे जाते "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "इतश्च" इति तिप इकारलोपे 'अद्यात्' इति रूपम्। अद्याताम्। अत्र शपो लुकि, अतः परत्वाभावात् "अतो येयः" इति नेति भावः। अद्युः। झौ, "झेर्जुस्" इति जुसि, "चुटू" इति जस्येत्संज्ञायां लोपे च "उस्यपदान्तात्" इति पररूपत्वे सस्य रुत्वे, विसर्गत्वे चोक्तं रूपम्। अद्याः, अद्यातम्, अद्यात। अद्याम्, अद्याव, अद्याम। इति अवशिष्टरूपाणि।

**लुङ्सनोर्घस्लृ २।४।३७** अदो घस्लृ स्याल्लुङि सनि च । लृदित्वादङ् । अघसत् । आत्स्यत् । **हन हिंसागत्योः** ॥२॥ हन्ति ॥ **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६।४।३७।** अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति च परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः ॥ हतः । घ्नन्ति ।

---

अद्यात् । अद्धातोराशीर्लिङस्तिपि, तिपः "लिङाशिषि" इत्यार्धधातुकत्वात् शपोऽभावे यासुटि, उटि गते, टित्वादाद्यावयवे "इतश्च" इति तिप इकारलोपे 'अद्यास्त्' इति जाते "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'अद्यात्' इति रूपम् । लुङ्सनोर्घस्लृ । "अदो जग्धिः" इत्यत अद इत्यनुवर्तते । तदाह—अद इति । लृदित्वस्य प्रयोजनमाह—लृदित्वादङिति । अघसत् । अद्धातोः "लुङ्" इति लुङि, उङि गते, लः स्थानेप्रथमपुरुषैकवचनविवक्षायां "तिप्तस्झि" इत्यादिना तिपि, पृगते "लुङ्सनोर्घस्लृ" इति अदः स्थाने घस्लृ इत्यादेशे कृते लृकारस्येत्संज्ञायां लोपे च "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति प्राप्ते तम्बाधित्वा "पुषादिद्युताद्य्लृदितः परस्मैपदेषु" इति च्लेः स्थाने अङि, ङ्गते अङ्गस्य अडागमे जाते, तिप इकारस्य "इतश्च" इति लोपे 'अघसत्' इति रूपम् । अघसताम्, अघसन् । अघसः, अघसतम्, अघसत । अघसम्, अघसाव, अघसाम । इत्यवशिष्टरूपाणि । आत्स्यत् । अद्धातोर्लृङस्तिपि, स्ये, इडभावे, आटि, "आटश्च इति वृद्धौ तिप इकारलोपे दस्य चर्त्वे च 'आत्स्यत्" इति रूपम् । हन हिंसागत्योरिति । हनधातोरनिट् । हन्ति । हन्धातोः "वर्तमाने लट्" इति लटि, अटि गते लः स्थाने प्रथमपुरुषैकवचने तिपि पृगते, "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि, "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, मिलित्वा 'हन्ति' इति रूपम् । अनुदात्तोपदेशेति । अनुनासिक इति लुप्तषष्ठीकं पदं वनतीतरेषां विशेषणम् । वनधातोस्तु अनुनासिकान्तत्वान्न विशेषणम् । अव्यभिचाराद् । तदेवाह—अनुनासिकान्तानामेषामिति । अनुदात्तोपदेशान् अनुनासिकान्तान् दर्शयति—यमिरमिति । अनुदात्तोपदेशेषु एतेषामेव षण्णामनुनासिकान्तत्वादिति भावः । अथ तनोत्यादीननुनासिकान्तान् दर्शयति—तनुषणुक्षणुक्षिणिवति । एतेऽष्टौ तनोत्यादयोऽनुनासिकान्ता इत्यर्थः । हतः । हन्धातोर्लटस्तसि, शपि, शपो लुकि, "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "सार्वधातुकमपित्" इति तस्य ङिद्वत्त्वे "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इति हनो नस्य लोपे तसः सकारस्य रुत्वे रेफस्य विसर्गत्वे च 'हतः' इति रूपम् । घ्नन्ति । हन्धातोर्लटो झौ, शपि, शपो लुकि, "झोऽन्तः" इति झस्य अन्तादेशे 'हन् अन्ति' इति जाते "तिङ्शित्सार्वधातुकम्" इति अन्तेः सार्वधातुकत्वे "सार्वधातुकमपित्" इति अन्तेर्ङिद्वत्त्वे "गमहनजनखनघसां लोपः क्ङि-

हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । जघान । जघ्नतुः । जघ्नुः । अभ्यासाच्च ७।३।५५। अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ, जघन्थ । जघ्नथुः । जघ्न । जघान, जघन । जघ्निव । जघ्निम । हन्ता । हनिष्यति । हन्तु,

---

ति" इति हन उपधालोपे "हो हन्तेर्ञ्णिन्नेषु" इति हस्य कुत्वेन घकारे 'घ्नन्ति' इति रूपम् । हंसि । हन्धातोर्लटस्सिपि प्रगते शपि, शपो लुकि, "नश्चापदान्तस्य झलि" इति नस्यानुस्वारे 'हंसि' इति रूपम् हथः । थसः "सार्वधातुकमपित्" इति ङिद्वत्त्वात् "अनुदात्तोपदेशवनति" इति नलोपे सस्य रुत्वे, रेफस्य विसर्गत्वे च 'हथः' इति रूपम् । जघान । हन्धातोः "परोक्षे लिट्" इति लिटि, इटि गते प्रथमपुरुषैकवचने तिपि, "परस्मैपदानां णलतुसुस्थल" इत्यादिना तिपो णलि, अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इति नलोपे 'ह हन् अ' इति जाते "कुहोश्चुः" इति अभ्यासहकारस्य चुत्वेन झकारे "अभ्यासे चर्च" इति झस्य जकारे "अत उपधायाः" इति वृद्धौ "हो हन्तेर्ञ्णिन्नेषु" इति हनो हस्य कुत्वेन घत्वे 'जघान' इति रूपम् । जघ्नतुः । हन्धातोर्लिटस्तसि, तसोऽतुसि, द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये च 'ज हन् अतुस्' इति जाते "असंयोगाल्लिट् कित्" इति अतुसः कित्वात् "गमहनजनखनघसाम्" इति हन उपधाकारस्य लोपे "हो हन्तेर्ञ्णिन्नेषु" इति हनो हस्य कुत्वेन घकारे अतुसः सस्य रुत्वे रेफस्य विसर्गत्वे च 'जघ्नतुः' इति रूपम् । अभ्यासाच्चेति । "हो हन्तेः" इत्यनुवर्तते । "चजोः कुघिण्यतोः" इत्यतः कुग्रहणञ्च । तदाह—अभ्यासात्परस्येत्यादिना । जघनिथ । हन्धातोर्लिटः सिपि, सिपः स्थाने "परस्मैपदानां णलतुसुस्थल्" इत्यादिना थलि, लगते "लिट् च" इत्यार्धधातुकत्वे भारद्वाजनियमादिड्विकल्पे, द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये च जाते 'ज हन् इ थ' इति स्थिते ञ्णित्प्रत्ययपरत्वाभावान्नकारपरत्वाभावाच्च "हो हन्तेः" इति कुत्वाप्राप्तौ "अभ्यासाच्च" इति कुत्वे 'जघनिथ' इति रूपम् । इडभावे पूर्ववत्प्रसाध्य 'जघन्थ' इति रूपम् । अथुसि "असंयोगाल्लिट्कित्" इति कित्वात् "गमहन०" इत्युपधालोपे 'जघ्नथुः' इति । जघान । जघन । "णलुत्तमो वा" इति विकल्पेन णित्वात् उपधावृद्धौ 'जघान' इति । णिदभावे—'जघन' इति । जघ्निव । वसो वादेशे द्वित्वे अभ्यासकार्ये "असंयोगाल्लिट् कित्" इति कित्वे क्रादिनियमादिटि, उपधालोपे 'जघ्निव' इति रूपम् । एवं मसि—जघ्निम । इति । हन्ता । हन्धातोर्लुटस्तिपि, तासि, तिपो डात्वे, डगते "एकाच उपदेशेऽनुदात्तात्" इति इडभावे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'हन्ता' इति रूपम् । हनिष्यति । हन्धातोर्लृटस्तिपि, स्ये, "ऋद्धनोः स्ये" इति स्यस्य इटि 'हनिष्यति' इति रूपम् । हन्तु । हन्धातोर्लोटस्तिपि, शपि, "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, "एरुः" इति तिप इकारस्योत्वे 'हन्तु' इति रूपम् । हतात् । तातङि—"अनुदात्तोपदेश०" इति नलोपः । घ्नन्तु । झौ "झोऽन्तः"

हतात् । हताम् । घ्नन्तु । **हन्तेर्जः ६।४।३६।** हौ परे । **असिद्धवदत्राभात् ६।४।२२।** इत ऊर्ध्वमापादसमाप्तेराभीयम् । समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात् ॥ इति जस्यासिद्धत्वान्न हेर्लुक् । जहि, हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् ॥ **आर्धधातुके २।४।३५।** इत्यधिकृत्य । **हनो वध लिङि २।४।४२। लुङि च २।४।४३।** वधादेशोऽदन्तः । आर्धधातुके इति विषयसप्तमी । तेनार्धधातुकोपदेशे अकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । अवधीत् । अह-

---

इति अन्तादेशे "असंयोगाल्लिट् कित्" तस्य कित्वात् "गमहनजन०" इति उपधाकारस्य लोपे, कुत्वे उत्वे च रूपम् । हन्तेर्ज इति । "शा हौ" इत्यतो हौ इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—हौ परे इति । असिद्धवदत्रेति । षष्ठस्य चतुर्थपादे इदं सूत्रम् । "श्नान्नलोपः" इति सूत्रात्पूर्वं पठितम् । आभादित्यभिविधावाङ् । भस्येत्यधिकारमभिव्याप्येत्यर्थः । भाधिकारश्च आपादपरिसमाप्तेरिति सिद्धान्तः । तथाच आपादपरिसमाप्तेरिति लभ्यते । जहि । हन्धातोर्लोटः सिपि, शपि, शपो लुकि, "सेर्ह्यपिच्च" इति सिपः सेः स्थाने हौ कृते 'हन् हौ' इति भूते "हन्तेर्जः" इति हनः स्थाने जादेशे जाते 'ज हि' इति स्थिते अत्र "अतो हेः" इति अतः परस्य हेर्लुक् न भवति । "असिद्धवदत्राभात्" इति जादेशस्य असिद्धत्वात् । तेन 'जहि' इति रूपं सिद्धम् । हनानि । हन्धातोर्लोटो मिपि, शपि, शपो लुकि, "मेर्निः" इति मेः स्थाने 'नि' इत्यादेशे "आडुत्तमस्य पिच्च" इति नेः आटि, 'हनानि' इति रूपम् । एवं वस्मसोः । अहन् । हन्धातोर्लङि, लङस्तिपि, णत्वे, शपि, शपो लुकि, अटि, "इतश्च" इति तिप इकारलोपे 'अहन् त्' इति भूते "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति त्लोपे 'अहन्' इति रूपम् । अहताम् । लङस्तसि, तसस्तामि, शपो लुकि, अटि, न्लोपे च उक्तं रूपम् । अघ्नन् । लङो झौ, शपो लुकि, अटि, "झोऽन्तः" इत्यन्तादेशे "गमहन०" इत्युपधाकारलोपे कुत्वे "इतश्च" इति अन्तेरिकारलोपे "संयोगान्तस्य लोपः" इति त्लोपे "अघ्नन्" इति रूपम् । हन्यात् । हन्धातोर्लिङस्तिपि, शपि, शपो लुकि, यासुटि, उटि गते टित्वादाद्यावयवे "इतश्च" इति तिप इकारलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे 'हन्यात्' इति रूपम् । हन्याताम्, हन्युः । हन्याः, हन्यातम्, हन्यात । हन्याम्, हन्याव, हन्याम । हनो वध लिङीति । वधेति लुप्तप्रथमाकम् । हनो वधादेशः स्यादार्धधातुके लिङीत्यर्थः । लुङि चेति । हनो वधादेशः स्यात् । लुङीत्यर्थः स्पष्टः । वध्यात् । हन्धातोः "आशिषि लिङ्लोटौ" इति लिङि, लिङो लः स्थाने तिपि, "लिङाशिषि" इति तिप आर्धधातुकत्वे "हनो वध लिङि" इति हनः स्थाने वधादेशे "किदाशिषि" इति यासुटि, उटि गते टित्वादाद्यावयवे 'वध यास्ति' इति जाते "अतो लोपः" इति वधाकारस्य लोपे तिप इकारस्य

निष्यत् । यु मिश्रणामिश्रणयोः ॥३॥ उतो वृद्धिर्लुकि हलि ।७।३।८९ लुग्विषये उतो वृद्धिः स्यात् पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । यविता । यविष्यति ।

---

"इतश्च" इति लोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'वध्यात्' इति रूपम् । वध्यास्ताम् । हन्धातोराशिषो लिङस्तसि, "तस्थस्थमिपान्तान्तताम:" इति तसस्तामि "लिङाशिषि" इत्यार्धधातुकत्वे "हनो वध लिङि" इति हनो वधादेशे "अतो लोपः" इति वधाकारस्य लोपे यासुटि, उटि गते टित्वादाद्यावयवे 'वध्यास्ताम्' इति रूपम् । वध्यासुः । वध्याः, वध्यास्तम् , वध्यास्त । वध्यासम् , वध्यास्व, वध्यास्म । अवधीत् । हन्धातोः "लुङ् च" इति लुङि, "लुङि च" इति हनः स्थाने वधादेशे कृते लुङो लः स्थाने तिपि, "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिचि, इचि गते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अटि, "इतश्च" इति तिप इकारलोपे 'अवधस् त्' इति स्थिते सिचः सकारस्यार्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इति इटि, "अतो लोपः" इति वधाकारस्य लोपे "अस्तिसिचोऽपृक्ते" इति तिपस्तकारस्य ईडागमे "इट ईटि" इति सलोपे "सिज्लोप एकादेशे सिद्धो वाच्यः" इति सिज्लोपस्य सिद्धत्वात् "अकः सवर्णे दीर्घः" इति दीर्घे 'अवधीत्' इति रूपम् । अवधिष्टाम् , अवधिषुः । अवधीः, अवधीष्टम्, अवधिष्ट । अवधिषम् , अवधिष्व, अवधिष्म । इति लुङि रूपाणि । अहनिष्यत् । हन्धातोर्लृङस्तिपि, स्ये, "ऋद्धनोः स्ये" इति स्यस्य इडागमे "आदेशप्रत्यययोः" इति स्यस्य सकारस्य षत्वे "इतश्च" इति तिप इकारस्य लोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अङ्गस्याडागमे 'अहनिष्यत्' इति रूपम् । यु मिश्रणामिश्रणयोः । अमिश्रणं पृथक् भावः । सेडयम् । उतो वृद्धिर्लुकीति । "नाभ्यस्तस्याचि पिति सार्वधातुके" इति अचिवर्जमनुवर्तते । लुकीति विषयसप्तमी, दर्शनाभावस्य लुकः परत्वासम्भवात् । तदाह—लुग्विषय इत्यादिना । यौति । युधातोर्लटस्तिपि, शपि, शपो लुकि, 'यु ति' इति स्थिते "उतो वृद्धिर्लुकि हलि" इति यौतेरुकारस्य वृद्धौ 'यौति' इति रूपम् । युतः । युधातोर्लटस्तसि, शपि, शपो लुकि, तसस्सस्य रुत्वे रेफस्य विसर्गत्वे च 'युतः' इति रूपम् । युवन्ति । लटो लः स्थाने झौ, "झोऽन्तः" इति अन्तादेशे अपित्वाद्वृद्ध्यभावे ङित्वाद्गुणाभावे "अचि श्नुधातुभ्रुवांय्वोरियङुवङौ" इति उवङि कृते 'युवन्ति' इति रूपम् । यौषि । "उतो वृद्धिर्लुकि हलि" इति वृद्धिः । युयाव । युधातोर्लिटस्तिपि, तिपो णलि, अनुबन्धलोपे द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये च 'यु यु अ' इति भूते "अतो ञ्णिति" इति वृद्धौ "एचोऽयवायावः" इत्यावादेशे 'युयाव' इति रूपम् । युयुवतुः, युयुवुः । युयविथ, युयुवथुः, युयुव । युयाव–युयव, युयुविव, युयुविम । यविता । युधातोर्लुटस्तिपि, तासि, तास आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इटि, गुणे अवादेशे इलोपे

यौतु, युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह उतो वृद्धिर्न । भाष्ये 'पिच्च ङिन्न ङिच्च पिन्न' इति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् । या प्रापणे ॥ ४ ॥ याति । यातः । यान्ति ।

---

ङित्वसामर्थ्यादभस्यापि टेर्लोपे 'यविता' इति रूपम् । यविष्यति । युधातोर्लृटस्तिपि, स्ये, इटि, गुणे, अवादेशे षत्वे च रूपम् । यौतु । युधातोर्लोटस्तिपि, शपि, शपो लुकि, "उतो वृद्धिर्लुकि हलि" इति वृद्धौ "एरुः" इति तिप इकारस्य उकारे 'यौतु' इति रूपम् । युतात् । तातङो ङित्वात् गुणो न, पित्वाभावात् वृद्धिर्न । युताम्, युवन्तु । हौ अपित्वान्न वृद्धिः । युहि–युतात्, युतम्, युत । आटि पित्वेऽपि हलादित्वाभावान्न वृद्धिः । पित्वेन ङित्वाभावाद् गुणः । यवानि, यवाव, यवाम । अयौत् । युधातोर्लङस्तिपि, शपि, शपो लुकि, "उतो वृद्धिर्लुकि हलि" इति वृद्धौ अटि, तिप इकारलोपे च 'अयौत्' इति रूपम् । अयुवन् । युधातोर्लङो झौ, शपि, शपो लुकि, "झोऽन्तः" इत्यन्तादेशे इकारलोपे संयोगान्तलोपे उवङि, अटि च रूपम् । अयौः, अयुतम्, अयुत । अयवम्, अयुव, अयुम । युयात् । युधातोः "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" इति लिङि, लिङो लः स्थाने तिपि, शपि, शपो लुकि, यासुटि, उटि गते "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "इतश्च" इति तिप इकारस्य लोपे 'युयात्' इति रूपम् । नचात्र तिपः पित्वं यदागमन्यायेन यासुटि आनीय "उतो वृद्धिः" इति वृद्धिः स्यादिति वाच्यम् । भाष्ये 'ङिच्च पिन्न, पिच्च ङिन्न' इति व्याख्यानात् । तसस्तामि–युयाताम् । युयुः । युधातोर्लिङो झौ शपि, शपो लुकि, यासुटि, उटि गते "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "झेर्जुस्" इति जुसि, जूगते "उस्यपदान्तात्" इति पररूपे सस्य रुत्वे रेफस्य विसर्गत्वे च "युयुः" इति रूपम् । युयाः, युयातम्, युयात । युयाम्, युयाव, युयाम । यूयात् । युधातोराशिषो लिङस्तिपि, तिप आर्धधातुकत्वे तेन शबभावे यासुटि, उटि गते तिप इकारलोपे "अकृत्सार्वधातुकयोर्दीर्घः" इति युधातोर्दीर्घे "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'यूयात्' इति रूपम् । यूयास्ताम्, यूयासुः । यूयाः, यूयास्तम्, यूयास्त । यूयासम्, यूयास्व, यूयास्म । अयावीत् । युधातोः "लुङ्" इति लुङि, लुङो लः स्थाने तिपि, च्लौ, च्लेः सिच्, इचि गते अटि, तिप इकारलोपे सिचः सस्य इटि तिपस्तस्य ईटि, "इट ईटि" इति सिचः सस्य लोपे सिज्लोप एकादेशे कर्तव्ये सिद्धत्वात् सवर्णदीर्घे 'अयु ई त्' इति जाते "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ आवादेशे च 'अयावीत्' इति रूपम् । अयाविष्टाम्, अयाविषुः । अयावीः, अयाविष्टम्, अयाविष्ट । अयाविषम्, अयाविष्व, अयाविष्म । इति लुङो रूपाणि । अयविष्यत् । युधातोर्लृङस्तिपि, स्ये इटि, गुणे अवादेशे षत्वे, तिप इकारलोपे अङ्गस्याडागमे च 'अयविष्यत्' इति रूपम् । या–प्रापणे । प्रापणमिह गतिः । णिजर्थस्तु अविवक्षित इति भावः । याति । याधातोर्लटस्तिपि, शपि, शपो लुकि, उक्तं रूपम् । यान्ति । झौ "झोऽ-

ययौ । याता । यास्यति । यातु । अयात् । अयाताम् । लङः शाकटायनस्यैव ३।४।१११ आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः, अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयास्यत् । वा

---

न्तः" इति अन्तादेशे सवर्णदीर्घः । यासि, याथः, याथ । यामि, यावः, यामः । ययौ । याधातोर्लिटस्तिपि, तिपो णलि, "आत औ णलः" इति णल औ आदेशे द्वित्वे अभ्यासत्वे "ह्रस्वः" इति अभ्यासस्य अचो ह्रस्वत्वे 'य या औ' इति स्थिते "वृद्धिरेचि" इति वृद्धौ 'ययौ' इति रूपम् । ययतुः, ययुः । ययिथ–ययाथ, ययथुः, यय । ययौ, ययिव, ययिम । याता । याधातोर्लुटस्तिपि, तिपो डात्वे तासि । तास आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति इटो निषेधे, डित्वसामर्थ्यादभस्यापि टेर्लोपे 'याता' इति रूपम् । यास्यति । याधातोर्लृटस्तिपि, स्ये इडभावे उक्तं रूपम् । यातु । याधातोर्लोटस्तिपि, शपि, शपो लुकि, "एरुः" इति तिप इकारस्य उकारे 'यातु' इति रूपम् । यातात्, याताम्, यान्तु । याहि-यातात्, यातम्, यात । यानि, याव, याम । अयात् । याधातोर्लङस्तिपि, शपि शपो लुकि, अटि, तिप इकारस्य "इतश्च" इति लोपे 'अयात्' इति रूपम् । अयाताम् । याधातोर्लङस्तसि, "तस्थस्थमिपां तान्तन्तामः" इति तसः स्थाने तामि, शपि, शपो लुकि, अटि 'अयाताम्' इति रूपम् । लङः शाकटायनस्यैवेति । "झेर्जुस्" इति "आत" इति चानुवर्तते । तदाह—आदन्तादिति । अयुः । याधातोर्लङो झौ शपि, शपो लुकि अटि, 'अया झि' इति जाते "लङः शाकटायनस्यैव" इति झेर्जुसि, "चुटू" इति जस्येत्सञ्ज्ञायां लोपे च "उस्यपदान्तात्" इति पररूपे उसः सस्य रुत्वे रेफस्य विसर्गत्वे च 'अयुः' इति रूपम् । जुसोऽभावे "झोऽन्तः" इत्यन्तादेशे इकारलोपे तलोपे च जाते सवर्णदीर्घे च कृते "अयान्" इति रूपम् । अयाः, अयातम्, अयात । अयाम्, अयाव, अयाम । यायात् । याधातोर्लिङस्तिपि, शपि, शपो लुकि, यासुटि, उटि गते "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "इतश्च" इति तिप इकारलोपे "यायात्" इति रूपम् । यायाताम् । तसस्तामि, यासुट् सलोपश्च । यायुः । याधातोर्लिङो झौ यासुटि, उटि गते, सलोपे "झेर्जुस्" इति जुसि, जगते "उस्यपदान्तात्" इति पररूपत्वे सस्य रुत्वे रेफस्य विसर्गत्वे च 'यायुः' इति रूपम् । यायाः, यायातम्, यायात । यायाम्, यायाव, यायाम । यायात् । याधातोराशिषो लिङस्तिपि, यासुटि, उटि गते, तिप इकारलोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'यायात्' इति रूपम् । तामि—यायास्ताम् । यायासुः । अत्र "झेर्जुस्" इति विशेषः । यायाः, यायास्तम्, यायास्त । यायासम्, यायास्व, यायास्म । अयासीत् । याधातोर्लुङस्तिपि, च्लौ, च्लेः सिचि, इचि गते अटि, तिप इकारलोपे 'अया स् त्' इति स्थिते अत्र "यमरमनमातां सक्च" इत्यनेन सिचः सकारस्य इडागमे आकारान्तधातोः सकागमे 'अयासीस् त्' इति भूते "अस्तिसिचो-

गतिगन्धनयोः ॥ ५ ॥ भा दीप्तौ ॥ ६ ॥ ष्णा शौचे ॥ ७ ॥ श्रा पाके ॥ ८ ॥ द्रा कुत्सायां गतौ ॥ ९ ॥ प्सा भक्षणे ॥ १० ॥ रा दाने ॥ ११ ॥ ला आदाने ॥ १२ ॥ दाप् लवने ॥ १३ ॥ पा रक्षणे ॥ १४ ॥ ख्या प्रकथने ॥ १५ ॥ अयं सार्वधातुके एव प्रयोक्तव्यः । विद् ज्ञाने ॥ १६ ॥ विदो लटो वा ३।४।८३ वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः ।

---

ऽपृक्ते" इति तिपस्तकारस्य ईडागमे "इट ईटि" इति सिचः सस्य लोपे एकादेशे कर्तव्ये सिज्लोपस्य सिद्धत्वात्सवर्णदीर्घे 'अयासीत्' इति रूपम् । अयासिष्टाम्, अयासिषुः । अयासीः, अयासिष्टम्, अयासिष्ट । अयासिषम्, अयासिष्व, अयासिष्म । इति लुङो रूपाणि । अयास्यत् । याधातोर्लृङस्तिपि, स्ये "एकाच उपदेशेऽनुदात्तात्" इति इडभावे अटि, तिप इकारलोपे 'अयास्यत्' इति रूपम् । वा गतिगन्धनयोः । लटि-वाति । लिटि-ववौ । लुटि-वाता । लृटि-वास्यति । लोटि-वातु । लङि-अवात्, अवाताम्, अवुः-अवान् । लिङि-वायात् । आशीर्लिङि-वायात्, वायास्ताम् । लुङि-अवासीत् । लृङि-अवास्यत् । भा दीप्तौ । लटि-भाति । लिटि-बभौ । लुङि-अभासीत् । ष्णा शौचे । लटि-स्नाति । लिटि-सस्नौ । लुङि-अस्नासीत् । श्रा पाके । लटि-श्राति । लिटि-शश्रौ । लुङि-अश्रासीत् । द्रा कुत्सायां गतौ । लटि-द्राति, लिटि-दद्रौ, लुङि-अद्रासीत् । प्सा भक्षणे । लटि-प्साति, लिटि-पप्सौ । लुङि-अप्सासीत् । रा दाने । लटि-राति । लिटि-ररौ । लुङि-अरासीत् । ला आदाने । आदानं स्वीकरणमिति यावत् । लटि-लाति । लिटि-ललौ । लुङि-अलासीत् । दाप् लवने । लवनम्-छेदनमिति यावत् । पस्येत्संज्ञा । लटि-दाति । लिटि-ददौ । लुङि-अदासीत् । पा रक्षणे । लटि-पाति, लिटि-पपौ, लुङि-अपासीत् । अन्यत्र सुगमम् । ख्या प्रकथने । अयं सार्वधातुक इति । अत्र प्रमाणम्-"सस्थानत्वं नमः ख्यात्रे" इति वार्तिकम्, तद्भाष्यञ्च । सस्थानो जिह्वामूलीयः । स नेति ख्याआदेशस्य खशादित्वे प्रयोजनमित्यर्थः । लटि-ख्याति, ख्यातः, ख्यान्ति । लोटि-ख्यातु । लङि-अख्यात् । विधिलिङि-ख्यायात्, ख्यायाताम्, ख्यायुरित्यादिः । विद ज्ञाने । सेडयं धातुः, अनिट्सु लुग्विकरणस्याग्रहणात् । विदो लटो वेति । "परस्मैपदानां णलतुस्" इत्यादिसूत्रमनुवर्तते । विद इति पञ्चमी । तदाह—वेत्तेर्लट इति । वेद । विद्धातोः "वर्तमाने लट्" इति लटि, अटि गते लः स्थाने "तिप्तस्झि" इत्यादिना तिपि, "विदो लटो वा" इति तिपः स्थाने णलि, णस्य लस्य चेत्संज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे, "कर्तरि शप्" इति शपि, "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, "पुगन्तलघूपधस्य च" इति विद उपधाइकारस्य गुणे वेद इति रूपम् । विदतुः । विद्धातोर्लटस्तसि, शपि, "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, "विदो लटो वा" इति विकल्पेन तसोऽतुसि, अतुसः सस्य रुत्वे, रेफस्य विसर्गत्वे च 'विदतुः' इति रूपम् । विदुः । विद्धातोर्लटो झौ, शपि, शपो लुकि, "विदो लटो वा" इति झेः स्थाने

विद । वेद । विद्व । विद्म । पक्षे । वेत्ति । वित्तः । विदन्ति ॥ **उषविदजागृभ्यो-ऽन्यतरस्याम् ३।१।३८** एभ्यो लिटि आम्वा स्यात् । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदाञ्चकार । विवेद । वेदिता । वेदिष्यति । **विदांकुर्वन्त्वित्यन्यतर-स्याम् ३।१।४१** वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते ॥ **तनादिकृञ्भ्य उः ३।१।७९** तनादेः कृञश्च

---

उसि, "सार्वधातुकमपित्" इति ङिद्वत्वात् लघूपधगुणाभावे सस्य रुत्वे रेफस्य विस-र्गत्वे च 'विदुः' इति रूपम् । वेत्थ । विद्धातोर्लटः सिपि, सिपस्थलि कृते शपो लुकि, लघूपधगुणे चर्त्वे च 'वेत्थ' इति रूपम् । पक्षे—वेत्ति । विद्धातोर्लटस्तिपि, शपि, शपो लुकि, लघूपधगुणे "खरि च" इति चर्त्वे च 'वेत्ति' इति रूपम् । झौ—विदन्ति । वेत्सि, वित्थः, वित्थ । वेद्मि, विद्वः, विद्मः । इति अवशेषरूपाणि । उषविदजागृभ्य इति । "कास्प्रत्ययादाममन्त्रे लिटि" इत्यतः आम् लिटीत्यनुवर्तते । तदाह—एभ्यो लिटीति । विदाञ्चकार । विद्धातोः "परोक्षे लिट्" इति लिटि, "उषविदजागृभ्योऽन्यतरस्याम्" इति आमि, "आमः" इति लिटो लुकि, अत्र आमः आर्धधातुकत्वेऽपि विद उपधायाः लघूपधगुणो न । विदेरदन्तत्वप्रतिज्ञानात् । "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकृञि अनुप्रयुक्ते 'विदाम् कृ लिट्' इति जाते लिटो लः स्थाने तिपि, तिपो णलि, अनुबन्ध-लोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इति अभ्यासत्वे "उरत्" इति अभ्यासऋवर्णस्य अकारे "उरण् रपरः" इति रपरत्वे "हलादिः शेषः" इति रलोपे 'विदाम् क कृ अ' इति भूते "कुहोश्चुः" इति अभ्यासकस्य चुत्वेन चकारे कृ इत्यस्य "सार्वधातुकार्धधातुकयोः" इति गुणे अकारे "उरण् रपरः" इति रपरे "अत उपधायाः" इति वृद्धौ आमो मस्यानुस्वारे वा परसवर्णे च 'विदाञ्चकार' इति रूपम् । विदाञ्चक्रतुः, विदाञ्चक्रुः । विदाञ्चकर्थ । विदाञ्चक्रथुः । विदाचक्र । विदाञ्चकार–विदा-ञ्चकर, विदाञ्चकृव, विदाञ्चकृम । विवेद । विद्धातोर्लिटस्तिपि, तिपो णलि, अनुबन्धलोपे, द्वित्वे अभ्यासत्वे, अभ्यासकार्ये च जाते "लिट् च" इति णलोऽकारस्यार्धधातुकत्वात् "पुगन्तलघूपधस्य च" इति लघूपधगुणे 'विवेद' इति रूपम् । विविदतुः, विविदुः । विवेदिथ, विविदथुः, विविद । विवेद, विविदिव, विविदिम । वेदिता । विद्धातोर्लुट-स्तिपि, तासि, तास आर्धधातुकत्वे, इटि, "पुगन्तलघूपधस्य च" इति गुणे तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'वेदिता' इति । वेदिष्यति । विद्धातोर्लृटस्तिपि, स्ये, इटि, गुणे, षत्वे च 'वेदिष्यति' इति रूपम् । विदाङ्कुर्वन्त्विति । "कृञ् चानुप्रयु-ज्यते लिटि" इत्युत्तरमिदं सूत्रम् । इति शब्दः प्रकारे । एवं जातीयकं वैकल्पेन प्रत्ये-तव्यमित्यर्थः । वेत्तेरिति । लुग्विकरणात् विदधातोः लोटि परे आम्प्रत्ययो निपात्यत इत्यर्थः । लोडन्तेति । आमन्ताद्विदेः लोडन्तकृञ्धातोः अनुप्रयोगश्च निपात्यत इत्यर्थः । पुरुषेति । कुर्वन्त्विति प्रथमपुरुषो बहुवचनञ्च न विवक्षितमित्यर्थः । तयोस्तु नान्तरी-

उः प्रत्ययः स्यात् । शपोऽपवादः । विदांकरोतु ॥ वेत्तु । **अत उत्सार्वधातुके ६।४।११० उप्रत्ययान्तस्य कृञोऽत उत्स्यात् सार्वधातुके क्ङिति** । विदांकुरुतात् । विदांकुरुताम् । विदांकुर्वन्तु । विदांकुरु । विदांकरवाणि । अवेत् । अविताम् ।

---

यकमुच्चारणमिति भावः । तनादिकृञ्भ्य इति । शपोऽपवाद इति । अनेन शब्विषय एवास्य प्रवृत्तिरिति सूचितम् । "सार्वधातुके यक्" इत्यतः सार्वधातुकग्रहणस्य "कर्तरि शप्" इत्यतः कर्तरीत्यस्य चानुवृत्तेरिति भावः । विदाङ्करोतु । विद्धातोर्लोटि, "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" इत्यामि, 'आमः' इति लोटो लुकि, लोट्परके कृञि अनुप्रयुक्ते 'विदाम् कृ लोट्' इति स्थिते लोटः स्थाने तिपि, तिपः सार्वधातुकत्वात् शपि प्राप्ते तम्बाधित्वा "तनादिकृञ्भ्य उः" इत्युकारे कृते 'विदाम् कृ उ ति' इति जाते "आर्धधातुकं शेषः" इति उकारस्यार्धधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति उभयत्र गुणे "एरुः" इति तिप इकारस्योत्वे मस्यानुस्वारे वा परसवर्णे संयोगे च कृते 'विदाङ्करोतु' इति रूपम् । अत उत् । उप्रत्ययान्तस्येति । "उतश्च प्रत्ययात्" इत्यतः तदनुवृत्तेरिति भावः । कृञोऽकारस्य उदिति । "नित्यं करोतेः" इत्यतस्तदनुवृत्तेरिति भावः । क्ङितीति । "गमहन" इत्यतः तदनुवृत्तेरिति भावः । विदाङ्कुरुतात् । विद्धातोर्लोटि, "विदां कुर्वन्त्वित्यन्यतरस्याम्" इति आमि, "आमः" इति लोटो लुकि, लोट्पर कृञि चानुप्रयुक्ते 'विदाम् कृ लोट्' इति जाते, लोटस्तिपि "एरुः" इति उत्वे, तातङि, शपं वाधित्वा "तनादिकृञ्भ्य उः" इति उविकरणे कृते तस्यार्धधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे रपरे च कृते "अत उत्सार्वधातुके" इति ककाराकारस्य उत्वे, मस्यानुस्वारे वा परसवर्णे च कृते 'विदाङ्कुरुतात्' इति रूपम् । विदाङ्कुरुताम् । विद्धातोर्लोटि, "विदां कुर्वन्त्वित्यन्यतरस्याम्" इति आमि, "आमः" इति लोटो लुकि, लोट्परके कृञि कृते, लोटो लः स्थाने तसि, "तनादिकृञ्भ्य उः" इति उकृते कृञ ऋकारस्य गुणे रपरत्वे "अत उत्सार्वधातुके" इति ककाराकारस्योत्वे "तस्थस्थमिपां तान्तन्तामः" इति तसस्तामि, आमो मस्यानुस्वारे वा परसवर्णे च 'विदाङ्कुरुताम्' इति रूपम् । विदाङ्कुर्वन्तु । झौ परे 'विदाङ्कुरु झि' इति पूर्ववत् प्रसाध्य "झोऽन्तः" इति झेः स्थाने अन्ति इति आदेशे कृते "एरुः" इति उत्वे च जाते "इको यणचि" इति यणि 'विदाङ्कुर्वन्तु' इति रूपम् । विदाङ्कुरु । सिपि परे 'विदाङ्कुरु' इति पूर्ववत्प्रसाध्य "सेर्ह्यपिच्च" इति सिपः सेः स्थाने हौ 'विदाङ्कुरु हि' इति जाते "उतश्च प्रत्ययादसंयोगपूर्वात्" इति हेर्लुकि, 'विदाङ्कुरु' इति रूपम् । तातङि— 'विदाङ्कुरुतात्' । विदाङ्कुरुतम्, विदाङ्कुरुत । विदाङ्करवाणि । विद्धातोः "लोट् च" इति लोटि, "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" इति आमि, लोटो लुकि, लोट्परके कृञोऽनुप्रयोगे 'विदाम् कृ लोट्' इति जाते लोटो लः स्थाने मिपि, शपं वाधित्वा "तनादिकृञ्भ्य उः" इति उकृते तस्य आर्धधातुकत्वे "सार्वधातुकार्धधातुकयोः"

अविदुः। दश्च ८।२।७५ धातोर्दस्य पदान्तस्य सिपि परे रुर्वा स्यात्। अवेः।
अवेत्। विद्यात्। विद्यास्ताम्। अवेदीत्। अवेदिष्यत्। अस भुवि ॥ १७ ॥

---

इति गुणे अकारे "उरण् रपरः" इति रपरे च जाते आसो मस्यानुस्वारे परसवर्णे च कृते 'विदाङ्कर सि' इति स्थिते "सेर्ह्यपिच्च" इति सेःस्थाने 'नि' इत्यादेशे "आडुत्तमस्य पिच्च" इति नेराडागमे 'विदाङ्करु आ नि' इति भूते उकारस्य "सार्वधातुकार्धधातुकयोः" इति गुणेन ओकारे जाते "एचोऽयवायावः" इति अवादेशे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति नेर्नस्य णत्वे 'विदाङ्करवाणि' इति रूपम्। विदाङ्करवाव; विङ्करवाम। पक्षे—वेत्तु, वित्ताव्, वित्ताम्, विदन्तु। विद्धि, वित्तात्, वित्तम्, वित्त। वेदानि, वेदाव, वेदाम। अवेत्। विद्धातोर्लङस्तिपि, शपि, शपो, लुकि, अटि, लघूपधगुणे "इतश्च" इति तिप इकारलोपे 'अवेद् त्' इति भूते "हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति तिपस्तकारस्य लोपे "वावसाने" इति वा दस्य चर्त्वे 'अवेत्' इति रूपम्। अवित्ताम्। विद्धातोर्लङस्तसि, शपि, शपो लुकि, अटि, "तस्थस्थमिपां तान्तन्तामः" इति तसस्तामि, "खरि च" इति दस्य चर्त्वे 'अवित्ताम्' इति रूपम्। अविदुः। विद्धातोर्लङो झौ, शपि, शपो लुकि, अटि "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसि, "चुटू" इति जस्येत्सञ्ज्ञायां लोपे च सस्य रुत्वे रेफस्य विसर्गत्वे च 'अविदुः' इति रूपम्। दश्चेति। "सिपि धातोर्रुर्वा" इत्यनुवृत्तम्। द इति षष्ठ्यन्तेन धातुर्विशेष्यते। तदन्तविधिः। "पदस्य" इत्यधिकृतम्। तदाह—धातोर्दस्य पदान्तस्येति। अवेः। विद्धातोर्लङस्सिपि, शपि, शपो लुकि, अटि सिप इकारस्य "इतश्च" इति लोपे "पुगन्तलघूपधस्य च" इति उपधागुणे 'अवेद् स्' इति भूते "हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सिपः सस्य लोपे "दश्च" इति विदेर्दस्य वा रुत्वे रेफस्य विसर्गत्वे च 'अवेः' इति रूपम्। रुत्वाभावपक्षे—'अवेत्' इति रूपम्। अवित्तम्, अवित्त। अवेदम्, अविद्व, अविद्म। इति। विद्यात्। विद्धातोर्लिङस्तिपि, शपि, शपो लुकि, यासुटि, उटिगते, टित्वादाद्यावयवे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे ङित्वाद्गुणाभावे तिप इकारलोपे 'विद्यात्' इति रूपम्। विद्याताम्, विद्युः। विद्यात्। विद्धातोराशिषो लिङस्तिपि यासुटि, उटि गते टित्वादाद्यावयवे "इतश्च" इति तिप इकारलोपे 'विद्यास्त्' इति भूते "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'विद्यात्' इति रूपम्। विद्यास्ताम्। विद्धातोराशिषो लिङस्तसि, तसस्तामि, यासुटि, उटि गते, टित्वादाद्यावयवे 'विद्यास्ताम्' इति रूपम्। विद्यासुः। विद्याः, विद्यास्तम्, विद्यास्त। विद्यासम्, विद्यास्व, विद्यास्म। अवेदीत्। विद्धातोः "लुङ्" इति सूत्रेण लुङि लकारे उकारेतौ लस्य तिबादेशे, च्लौ, च्लेः सिचि, इचोर्लोपे "आर्धधातुकस्येड्वलादेः" इतीटि "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "इतश्च" इति तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति अपृक्तसञ्ज्ञकस्य तकारस्य ईडागमे "इट ईटि" इति

अस्ति । श्नसोरल्लोपः ६।४।१११ श्नस्यास्तेश्चातो लोपः स्यात् सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८।३।८७ उपसर्गेणप्रादुसश्चास्तेः सस्य षः स्यात् यकारेऽचि च परे । निष्यात् । प्रनिषन्ति । प्रादुःषन्ति । यच्परः किम् । अभिस्तः । अस्तेर्भूः २।४।५२ आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु, स्तात् । स्ताम् । सन्तु ॥ घ्व-

---

इटः परस्य सिचः सकारस्य लोपे "अकःसवर्णेदीर्घः" इति दीर्घे "पुगन्तलघूपधस्यच" इति लघूपधस्येकारस्य गुणे 'अवेदीत्' इति । अवेदिष्टाम्, अवेदिषुः । अवेदीः, अवेदिष्टम्, अवेदिष्ट । अवेदिषम्, अवेदिष्व, अवेदिष्म । अवेदिष्यत । विद्धातोर्लृङस्तिपि "स्यतासी लृलुटोः" इति स्यप्रत्यये तस्य "आर्धधातुकं शेषः" इति आर्धधातुकत्वेऽटि इटि "इतश्च" इति इकारलोपे 'अविद् इ स्य ति' इति स्थिते लघूपधगुणे सस्य षत्वे 'अवेदिष्यत्' इति निष्पद्यते । अस्ति । असभुविधातोर्लटि तिपि शपि शपो लुकि 'अस्ति' इति सिद्धम् । श्नसोरल्लोप इति । अत् इति लुप्तषष्ठीकं पदम् । श्न अस् अनयोर्द्वन्द्वात्षष्ठीद्विवचनम् । शकन्ध्वादित्वात् पररूपम् । श्नेति श्नम्प्रत्ययैकदेशनिर्देशः । "अत उत्सार्वधातुके" इत्यतः सार्वधातुके इत्यनुवर्तते "गमहन" इत्यतः क्ङितीति । तदाह—श्नस्येत्यादिना । स्तः । अस् धातोस्तसि "श्नसोरल्लोपः" इत्यस्तेरकारलोपे सस्य रुत्वे रस्य विसर्गे च कृते 'स्तः' इति ज्ञेयम् । सन्ति । झौ, झेरन्तादेशे "श्नसोरल्लोपः" इत्यस्तेरकारलोपे सन्तीति रूपं साधु । असि । सिपि "तासस्त्योर्लोपः" इति असधातोः सकारलोपे 'असि' इति बोध्यम् । थसि—स्थः । थे—स्थ । मिपि—अस्मि । वसि—स्वः । मसि—स्मः । उपसर्गप्रादुर्भ्यामिति—उपसर्गः प्रादुस्, अनयोर्द्वन्द्वः । "इण्को" रित्यधिकृतम् । तत्र इण इत्युपसर्गेण सम्बध्यते, न तु प्रादुसि, ततः परस्य अस्तेः सस्य इणः परत्वासम्भवात् । कोरित्यपि असम्भवान्न सम्बध्यते । अस्तिरिति पञ्चम्यर्थे प्रथमा "सहेः साडः सः" इत्यतः स इति पञ्चम्यन्तमनुवर्तते, "मूर्धन्य" इत्यधिकृतम् । य् अच् अनयोर्द्वन्द्वः । यचौ परौ यस्मादिति विग्रहः । यकारे अकारे च परे इति लभ्यते । तदाह—उपसर्गेति । निष्यात् । निउपसर्गादस् भुवि धातोर्लिङि तिबादिकार्ये च विहिते "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" इति सोपसर्गत्वात् सस्य षत्वे 'निष्यात्' इति साधु । अच्परः—यथा प्रनिषन्ति । प्रादुःषन्ति । अस्तेर्भूरिति । असधातोर्भूभावः स्यात् आर्धधातुके परे इत्यर्थः । बभूव । असधातोर्लिटो लः स्थाने तिपि, तिपो णलादेशे, अनुबन्धलोपे "लिट् च" इत्यार्धधातुकत्वे "अस्तेर्भूः" इति असधातोः स्थाने 'भू' इत्यादेशे "भुवो वुग्लुङ्लिटोः" इति वुगागमे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इति अभ्यासत्वे "हलादिः शेषः" इति वलोपे "ह्रस्वः" इति ह्रस्वे "भवतेरः" इति भूव उकारस्य अकारे "अभ्यासे चर्च" इति अभ्यासभकारस्य बकारे 'बभूव' इति रूपम् । लुटि—भविता । लृटि—भविष्यति । अस्तु । असधातोः "लोट् च" इति लोटि लोटो लः

घ्वसोरेद्धावभ्यासलोपश्च ६।४।११९ घोरस्तेश्च एत्वं स्याद् हौ परे अभ्यासलोपश्च । एत्वस्यासिद्धत्वाद्धेर्धिः । "श्नसोः" इत्यल्लोपः । तातङ्पक्षे एत्व न । परेण तातङा बाधात् । एधि, स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् । इण् गतौ ॥ १८ ॥ एति । इतः ॥ इणो यण् ६।४।८१ अजादौ प्रत्यये परे । यन्ति । अभ्यासस्यासवर्णे ६।४।७८ अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि ।

---

स्थाने तिपि, शपि, "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, 'अस्ति' इति स्थिते "एरुः" इति तिप इकारस्योत्वे 'अस्तु' इति रूपम् । "तुह्योस्तातङाशिष्यन्यतरस्याम्" इति लोः स्थाने तातङि, तस्य ङित्वात् "श्नसोरल्लोपः" इति अस्तेरकारलोपे 'स्तात्' इति पक्षे रूपम् । स्ताम् । लोटस्तसि, शपि, शपो लुकि, "लोटो लङ्वत्" इति लङ्वद्भावात् "तस्थस्थमिपान्तान्तन्तामः" इति तसस्तामादेशे "श्नसोरल्लोपः" इति अस्तेरकारस्य लोपे सति रूपम् । सन्तु । झौ "झोऽन्तः" इत्यन्तादेशे "एरुः" इति उत्वे असोऽकारलोपे रूपम् । घ्वसोरेद्धावभ्यासलोपश्चेति । घु अस् अनयोर्द्वन्द्वः । एत् हौ इति च्छेदः । ननु 'अस् हि' इति स्थिते "हुझल्भ्यो हेर्धिः" इति धित्वं परत्वाद्बाधित्वा "घ्वसोः" इति सकारस्य एत्वे कृते हुझल्भ्यः परत्वाभावात् कथं धिभाव इत्यत आह—एत्वस्यासिद्धत्वादिति । "असिद्धवदत्राभात्" इति आभीयत्वेनासिद्धत्वादित्यर्थः । तथाच 'अ ए धि' इति स्थिते आह—श्नसोरित्यल्लोप इति । ननु आशिषि 'अस् हि' इति स्थिते तातङं बाधित्वा परत्वादेत्वं प्राप्नोतीत्यत आह—तातङ्पक्षे एत्वं नेति । एधि । अस्धातोर्लोटि सिपि "सेर्ह्यपिच्च" इति सिपो हिरादेशः स च अपित्, "घ्वसोरेद्धावभ्यासलोपश्च" इति सस्य एत्वे, एत्वस्यासिद्धत्वाद् "हुझल्भ्यो हेर्धिः" इति हेर्धौ, "श्नसोरल्लोपः" इत्यल्लोपे 'एधि' इति जायते । तातङ्पक्षे परेण तातङा बाधादेत्वाभावे 'स्तात्' इति रूपम् । असानि । अस्धातोर्लोटो मिबादेशे "मेर्निः" इति मिपो निरादेशे "आडुत्तमस्य पिच्च" इति आटि 'असानि' इति बोध्यम् । आसीत् । अस्धातोर्लङस्तिपि इलोपे "आडजादीनाम्" इति आटि "आटश्च" इति वृद्धौ, शपो लुकि "अस्तिसिचोऽपृक्ते" इति अपृक्तसञ्ज्ञकस्य तकारस्य ईडागमे 'आसीत्' इति रूपम् । एति । इण् गतौ धातोर्लटि तिपि "सार्वधातुकार्धधातुकयोः" इति गुणे शपो लुकि विहिते 'एति' इति सिद्धम् । इणो यण् । अत्र "अचि श्नुधातु०" इत्यतोऽचि इत्यनुवर्त्य अङ्गाधिकारात्तिप्रत्ययविशेषणत्वात्तदादिविधिरित्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—अजादौ प्रत्यये पर इति । यन्ति । गत्यर्थकादिण्धातोर्लटि, झौ, झेरन्तादेशे, शपो लुकि, इयङादेशं बाधित्वा "इणो इण्" इति यणि च कृते तत्सिद्धिः । अभ्यासस्यासवर्णे इति । "अचि श्नुधातु०" इत्यतोऽचीति, य्वोरियङुवङाविति चानुवर्तते । इश्च उश्च यू तयोरिति विग्रहः । अभ्यासविशेषणमिदम् । तेन तदन्तविधिरिति यावत् । इयाय । इणो

इयाय ॥ **दीर्घ इणः किति ७।४।६९** इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः । ईयुः । इययिथ, इयेथ । एता । एष्यति । एतु । ऐत् । ऐताम् । आयन् । इयात् । ईयात् । **एतेर्लिङि ७।४।२४** उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । **'उभयत आश्रयणे नान्तादिवत्'** । अभीयात् । अणः किम् ? समेयात् । **इणो गा लुङि २।४।४५** "गातिस्था" इति सिचो लुक् । अगात् । ऐष्यत् । **शीङ् स्वप्ने ॥ १६ ॥ शीङः सार्वधातुके गुणः ७।४।२१**

---

लिटस्तिपो णलि, द्वित्वेऽभ्यासत्वे "अचो ञ्णिति" इति वृद्धौ आयादेशे "अभ्यासस्यासवर्णे" इतीयङि च तत्सिद्धम् । दीर्घ इण इति । "अत्र लोपोऽभ्यासस्य" इत्यतः अभ्यासस्येति "व्यथो लिटि" इत्यतो लिटीति चानुवर्तते । तदाह—इणोऽभ्यासस्येति । ईयतुः । इणो लिटस्तसोऽतुसि द्वित्वेऽभ्यासत्वे 'इ इ अतुस्' इति जाते "इणो यण्" इत्यनेन यणि "दीर्घ इणः किति" इत्यनेन दीर्घे रुत्वे विसर्गे च तत्सिद्धिः । इययिथ । इणो लिटः सिपस्थलि द्वित्वे भारद्वाजनियमात् पाक्षिके इटि गुणेऽयादेशे, "अभ्यासस्यासवर्णे" इति इयङि च 'इययिथ' इति, इडभावपक्षे तु गुणे अभ्यासस्य इयङि 'इयेथ' इति । ऐत् । इणो लङस्तिप इलोपे इकारस्य गुणे आटि वृद्धौ च तत्साधु । आयन् । इणो लङो झौ झस्यान्तादेशे इकारस्य "इणो यण्" इति यणि तस्याभीयत्वेनासिद्धत्वादाटि च तत्सिद्धिर्ज्ञेया । एतेर्लिङि । "उपसर्गादृस्व ऊहतेः" इत्यतः उपसर्गाद्ध्रस्व इति "केऽणः" इत्यतः अण इति "अयङ् यि क्ङिति" इत्यतः कितीति चानुवर्तते तदाह—उपसर्गात्परस्येति । निरियात् । निरुपसर्गपूर्वात् इण्धातोराशीर्लिङस्तिप इलोपे यासुटि तस्यार्धधातुकत्वे कित्वे सलोपे "अकृत्सार्वधातुकयोः" इति दीर्घे "एतेर्लिङि" इति ह्रस्वे निरियादिति निष्पन्नम् । ननु 'अभीयात्' इत्यत्रापि ह्रस्वः स्यादित्यत आह—उभयत इति । अत्र एकादेशस्य ईकारस्य पूर्वान्तत्वे उपसर्गानुप्रवेशादिण्धातुत्वं न सम्भवति । परादित्वेन इण्धातुत्वाश्रयणे तु नोपसर्गात्परत्वम् । उपसर्गैकदेशस्य इकारस्य ईकारात्मना सत्वेन अभ् इत्यस्य उपसर्गत्वाभावात् । एकादेशस्य आदिवत्वमाश्रित्य इण्धातुत्वम्, अन्तवत्वमाश्रित्य तस्य उपसर्गानुप्रवेशश्चेत्यपि न सम्भवति । पूर्वपरशब्दाभ्याम् अन्तादिशब्दाभ्याञ्च विरोधस्य पुरःस्फूर्तिकतया विरुद्धातिदेशद्वयस्य युगपदसम्भवादित्यर्थः । समेयादिति । सम् आ इयात् समेयादित्यत्र एकारस्य अनण्त्वान्न ह्रस्वः । ग्रहणकसूत्रादन्यत्र पूर्वेणैव णकारेण प्रत्याहाराश्रयणादिति भावः । इणो गा लुङि । इण्धातोः गा इत्यादेशः स्याल्लुङीति सूत्रार्थः स्पष्टः । अगात् । "इणो लुङि" इति गादेशे तिप इकारलोपे अटि, च्लौ, च्लेः सिचि, इचि गते 'अ गा स त्' इति स्थिते "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचः लोपे 'अगात्' इति रूपम् । अगाताम्, अगुः । अगाः, अगातम्, अगात । अगाम् । अगाव, अगाम । इत्यवशिष्टरूपाणि । ऐष्यत् । इण्धातोर्लृङस्तिपि, स्ये आटि, वृद्धौ सस्य षत्वे तिप इकारलोपे च

"क्ङिति च" इत्यस्यापवादः । शेते । शयाते ॥ शीङो रुट् ७।१।७ शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शेमहे । शिश्ये । शिश्याते । शिश्यिरे । शयिता । शयिष्यते । शेताम् । शयाताम् । शेरताम् । अशेत । अशयाताम् । अशेरत । शयीत । शयीयाताम् । शयीरन् । शयि-

---

'ऐष्यत्' इति रूपम् । शीङः सार्वधातुक इति । स्पष्टम् । "सार्वधातुकार्धधातुकयोः" इत्येव सिद्धे किमर्थमिदमित्यत आह—क्ङिति चेत्यस्यापवाद इति । शेते । शीङ्धातोः "वर्तमाने लट्" इति लटि, लटो लः स्थाने शीङो ङित्वात् "अनुदात्तङित आत्मने-पदम्" इत्यात्मनेपदम् । प्रथमपुरुषैकवचनविवक्षायां 'त' कृते, शपि, शपो लुकि, तस्य अपित्सार्वधातुकत्वात् "सार्वधातुकमपित्" इति ङिद्वत्वेन गुणाभावे प्राप्ते "शीङः सार्वधातुके गुणः" इति गुणे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च 'शेते' इति रूपम् । शयाते । लट आतामि शपो लुकि, "शीङः सार्वधातुके गुणः" इति गुणे अयादेशे टेरेत्वे च रूपम् । शीङो रुडिति । "झोऽन्तः" इत्यतो 'झो' इत्यनुवर्तते । "अदभ्यस्तात्" इत्यतः अदित्यनुवृत्तं षष्ठ्या विपरिणम्यते । तदाह—शीङः परस्य झादेशस्येति । शेरते । शीङो लटो झप्रत्यये, शपो लुकि "शीङः सार्वधातुके गुणः" इति गुणे "आत्मनेपदे-ष्वनतः" इति झस्यातादेशे टेरेत्वे "शीङो रुट्" इति रुटि, उटि गते 'टित्वादाद्यावयवे जाते सति 'शेरते' इति रूपम् । शेषे । लटः सिपि, शपो लुकि, "थासः से" इति से आदेशे "शीङः सार्वधातुके गुणः" इति गुणे षत्वे च रूपम् । शये । शीङो लट उत्तम-पुरुषैकवचने इटि गुणे अयादेशे टेरेत्वे च कृते 'शये' इति रूपम् । शिश्ये । शीङो लिटस्ते "लिटस्तझयोरेशिरेच्" इति तस्य स्थाने एशि शगते "लिटि धातोरनभ्यासस्य" इति इति द्वित्वे अभ्यासत्वे अभ्यासकार्ये च कृते "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि 'शिश्ये' इति रूपम् । शिश्याते । शीङो लिट आतामि, द्वित्वे अभ्यासत्वे अभ्यास-कार्ये यणि, टेरेत्वे च रूपम् । शिश्यिरे । लिटस्थाने झे कृते, "लिटस्तझयोरेशिरेच्" इति इरेचि शगते द्वित्वे अभ्यासकार्ये यणि च रूपम् । शिश्यिषे, शिश्याथे, शिश्यि-ध्वे । शिश्ये, शिश्यिवहे, शिश्यिमहे । शयिता । लुटस्ते, तस्य स्थाने डास्वे, तासि, इटि, गुणे अयादेशे डित्वसामर्थ्याद्भस्यापि टेर्लोपे च कृते रूपम् । शयिष्यते । लृटस्ते स्ये इटि, गुणे अयादेशे षत्वे च कृते टेरेत्वम् । शेताम् । लोटस्ते शपि, शपो लुकि, "शीङः सार्वधातुके गुणः" इति गुणे, टेरेत्वे "आमेतः" इति एकारस्यामि कृते रूपम् । शयाताम् । लोट आतामि, शपो लुकि, गुणे अयादेशे, टेरत्वे, एकार-स्यामि कृते रूपम् । शेरताम् । लोटो लः स्थाने झादेशे शपो लुकि, "आत्मने-पदेष्वनतः" इति झस्य स्थाने अतादेशे "शीङो रुट्" इति रुडागमे टेरेत्वे, एत्वस्य चामि कृते रूपम् । शेष्व, शयाथाम्, शेध्वम्, शयानि, शयाव, शयाम इति अव-शिष्टरूपाणि । अशेत । शीङो लङि, लङस्ते, शपि, शपो लुकि, अटि, "शीङः सार्व-

षीष्ट । अशयिष्ट । अशयिष्यत । इङ् अध्ययने ॥ २० ॥ इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते । अधीयाते । अधीयते ॥ गाङ् लिटि २।४।४९ इङो गाङ् स्याल्लिटि । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अधी-

---

धातुके गुणः" इति गुणे 'अशेत' इति रूपम् । शयीत । शीङो लङस्तप्रत्यये शपो लुकि "शीङः सार्वधातुके गुणः" इति गुणे "लिङः सीयुट्" इति सीयुटि, उटि गते टित्वा-द्याद्यवयवे "लिङः सलोपोऽनन्त्यस्य" इति स्लोपे अयादेशे य्लोपे च तत्सिद्धिः । शयीयाताम् । लिङ आतामि, शपो लुकि, य्लोपाभावे च 'शयीयाताम् , इति रूपम् । शयीरन् । झे शपो लुकि, सीयुटि उटो लोपे गुणे सलोपे "झस्य रन्" इति रनि "लोपो व्योर्वलि" इति य्लोपे "एचोऽयवायावः" इति अयादेशे ,च कृते रूपम् । शयीथाः, शयीयाथाम् , शयीध्वम् । शयीय, शयीवहि, शयीमहि । इति रूपाणि । शयिषीष्ट । शीङित्यस्माद्धातोराशीर्लिङस्ते सीयुटि उटो लोपे "सार्वधातुकार्धधातुकयोः" इति गुणे "आर्धधातुकस्येड्वलादेः" इतीटि "एचोऽयवायावः" इति अयि 'शय् इ सीय् त' इति स्थिते "लोपो व्योर्वलि" इति यलोपे "सुट् तिथोः" इति सुटि उटावितौ सस्य षत्वे तस्य ष्टुत्वे च विहिते 'शयिषीष्ट' इति वेद्यम् । अशयिष्ट । शीङो लुङस्ते च्लौ "च्लेस्सिच्" इति च्लेस्सिजादेशे इचावितौ इटि "सार्वधातुकार्धधातुकयोः" इति गुणेऽयादेशे सकारस्य षत्वे ष्टुत्वे च विहिते अडागमे "अशयिष्ट" इति सङ्गम-नीयम् । अशयिष्यत । शीङो लृङि, अटि तादेशे स्ये तस्यार्धधातुकत्वे इटि गुणेऽयि षत्वे च कृते । 'अशयिष्यत' इति अवगन्तव्यम् । अधीते । अधिपूर्वकात् इङ् अध्ययने धातोर्लटि तादेशे टेरेत्वे च कृते "इको यणचि" इति यणं बाधित्वा सवर्णदीर्घे 'अधीते' इति वेदनीयम् । अधीयाते । अधिउपसर्गात् अध्ययनार्थकेङ्धातोर्लट आतामि, अधि इ आताम् इति स्थिते "सार्वधातुकमपित्" इति पिद्भिन्नत्वादातामो ङित्वं, ङित्वात् "सार्वधातुकार्धधातुकयोः" इति प्राप्तस्य गुणस्य निषेधः । ननु अत्र "धातूपसर्गयोः कार्यमन्तरङ्गम्" इति अन्तरङ्गत्वात्पूर्वं सवर्णदीर्घस्य प्राप्तिः, "बहिर्भूतनिमित्तकत्वं बहिरङ्गमिति इयङो बहिरङ्गत्वात् "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया अन्त-रङ्गत्वेन सवर्णदीर्घेणैव भाव्यमिति चेत् ? न । "वर्णादाङ्गं बलीयः" इति न्यायेन इयङ एवोचितत्वात् । इतीयङि, टेः—आमः, एत्वम् । "अकः सवर्णे दीर्घः" इति इयङः इकारेण सह उपसर्गेकारस्य सवर्णदीर्घे 'अधीयाते' इति रूपम् । अधीयते । लटो झे, "आत्मनेपदेष्वनतः" इति झस्यात्येवं विशेषः । टेः एत्वे 'अधीयते' इति बोध्यम् । अधीषे, अधीयाथे, अधीध्वे । अधीये, अधीवहे अधीमहे । गाङ्लिटि । "इङश्च" इत्यतस्तदनुवृत्तेरिति भावः । स्थानिवत्त्वादेव ङित्वे सिद्धे ङित्करण "गाङ्-कुटादिभ्यः" इत्यत्र "इणो गा लुङि" इत्यस्य ग्रहणाभावार्थमिति भाष्यम् । अधिजगे । अधिपूर्वादिङो लिटि "गाङ् लिटि" इति इङो गाङादेशेऽनुबन्धलोपे लिटो लः स्थाने

ताम् । अधीयाताम् । अधीयताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै । अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैयाताम् । अध्यैयत । अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीया-

---

से, तस्य एशि, श्नाते द्वित्वे, अभ्यासत्वे, ह्रस्वे, चुत्वे, "आतो लोप इटि च" इत्यालोपे च तत्सिद्धिः । आतामि—अधिजगाते । झे—अधिजगिरे । अधिजगिषे, अधिजगाथे, अधिजगिध्वे । अधिजगे, अधिजगिवहे, अधिजगिमहे । अध्येता । अधिपूर्वादिङो लुटस्ते तासि, 'अधि इ तास् त' इति स्थिते "लुटः प्रथमस्य डारौरसः" इति तस्य स्थाने डात्वे, डित्वसामर्थ्यादभस्यापि टेर्लोपे तास आर्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे 'अधि ए त् आ' इति जाते "इको यणचि" इति यणि, 'अध्येता' इति रूपम् । अग्रे–अध्येतारौ, अध्येतारः । अध्येतासे, अध्येतासाथे, अध्येताध्वे । अध्येताहे, अध्येतास्वहे, अध्येतास्महे । इति रूपाणि । अध्येष्यते । अधिपूर्वादिङो लृटस्ते, "स्यतासी लृलुटोः" इति स्ये टेरेत्वे सस्य षत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे "इको यणचि" इति यणि च कृते 'अध्येष्यते' इति रूपम् । अध्येष्येते, अध्येष्यन्ते । अध्येष्यसे, अध्येष्येथे, अध्येष्यध्वे । अध्येष्ये, अध्येष्यावहे, अध्येष्यामहे । इति । अधीताम् । अधिपूर्वादिङो लोटि, लोटो लः स्थाने ते, शपि, शपो लुकि, टेरेत्वे "आमेतः" इत्येकारस्यामि, धातूपसर्गयोः सवर्णदीर्घे च जाते 'अधीताम्' इति रूपम् । अधीयाताम् । अधिपूर्वादिङो लोट आतामि, शपि, शपो लुकि, इयङि, सवर्णदीर्घे टेरेत्वे, "आमेतः" इति एकारस्यामि च कृते रूपम् । अधीयताम् । लोटो झे झस्याति, शपो लुकि, इयङि टेरेत्वे "आमेतः" इति एकारस्यामि च कृते 'अधीयताम्' इति रूपम् । अधीष्व । लोटो मध्यमपुरुषैकवचने थासि शपो लुकि "थासः से" इति थासः सेत्वे "सवाभ्यां वामौ" इति सकारोत्तरवर्त्त्येकारस्य वकारे सस्य षत्वे, विहिते च दीर्घत्वे "अधीष्व" इति सिद्धम् । अधीयाथाम् । इत्यस्य तु अधीयातामितिवत् साधनिका अवगन्तव्या । ध्वमि–दीर्घत्वे—अधीध्वम् । अध्ययै । इङो लोट उत्तमपुरुषैकवचने इटि शपो लुकि "टित आत्मनेपदानां टेरे" इति टेरेत्वे "एत ऐ" इत्येकारस्यैकारे कृते 'अधि इ ऐ' इति स्थिते, लोट आटि "आटश्च" इति वृद्धौ 'ऐ' इति जाते पित्वात् पूर्वस्येकारस्य गुणे 'अधि ए ऐ' इति स्थिते "एचोऽयवायावः" इत्ययादेशे पूर्वस्येको यणि 'अध् य् अय् ऐ' इति जाते अज्झीनं परेण संयुक्ते 'अध्ययै' इति बोध्यम् । अध्ययावहै । लोटो वहिप्रत्यये शपो लुकि टेरेत्वे एकारस्य ऐकारे आटि गुणेऽयादेशे यणि 'अध्ययावहै' इति सिध्यति । एवम्—अध्ययामहै । अध्यैत । अधिपूर्वादिङो लङस्तप्रत्यये शपो लुकि आटि वृद्धौ यणि च तत्सिद्धिः । अध्यैयाताम् । आतामि शपो लुकि परत्वादियङि तत आटि वृद्धौ यणि च तत्सिद्धम् । अध्यैयत । "आत्मनेपदेष्वनतः" इति झस्याते शेषं पूर्ववत् ।

ताम्। अधियीरन्। अध्येषीष्ट। **विभाषा लुङ्लृङोः २।४।५०** इङो गाङ् वा स्यात् लुङ्लृङोः। **गाङ्कुटादिभ्योऽञ्णिन्ङित् १।२।१** गाङादेशात्कुटादिभ्यश्च परेऽञ्णित प्रत्यया ङितः स्युः। **घुमास्थागापाजहातिसां हलि ६।४।६६** एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके। अध्यगीष्ट, अध्यैष्ट। अध्यगीष्यत, अध्यैष्यत। **दुह प्रपूरणे ॥ २१ ॥** दोग्धि। दुग्धः। दुहन्ति। धोक्षि। दुग्धः। दुग्धे। दुहाते। दुहते।

---

थासि–अध्यैथाः। आथामि–अध्यैयाथाम्। ध्वसि–अध्यैध्वम्। इटि–अध्यैयि। अध्यैवहि। अध्यैमहि। अधीयीत। अधिपूर्वात् इङो लिङस्तप्रत्यये शपो लुकि सीयुटि सुटि सलोपे यलोपे इयङि सवर्णदीर्घे च तत्साधु। अध्येषीष्ट। इङ आशीर्लिङस्ते सीयुटि उटि गते यलोपे "सार्वधातुकार्धधातुकयोः" इति गुणे 'अधि ए सी स् त' इति स्थिते "सुट्तिथोः" इति सुटि उटि गते यणि च कृते 'अध्ये सी स् त' इति जाते द्वयोः सकारयोः षत्वे, ष्टुत्वे च विहिते च 'अध्येषीष्ट' इति। विभाषालुङ्लृङोः। शेषं पूरयति–इङो गाङ् वा स्यादिति। "इङश्च" इत्यतो "गाङ् लिटि" इत्यतश्च तदनुवृत्तेरिति भावः। गाङ्कुटादिभ्योऽञ्णिन्ङित्। ञ् ण्च ञ्णौ तौ इतौ यस्य स ञ्णित् स न भवतीति अञ्णित् गाङ् च कुटादयश्चेति द्वन्द्वात्पञ्चमी। गाङिति ङकारानुबन्धात् "इणो गा लुङि" इत्यस्य न ग्रहणमित्युक्तम्। नापि गाङ् गतौ, इत्यस्यात्र ग्रहणम्। तत्र ङकारस्यात्मनेपदप्रापणेन चरितार्थत्वात् इङादेशस्य गाङो ङकारो नात्मनेपदप्रापणेन चरितार्थः। स्थानिवत्त्वेनैव तत्सिद्धेः। तदाह—गाङादेशादिति। घुमास्थागापाजहातिसां हलि। षोऽन्तकर्मणि इत्यस्य कृतात्वस्य निर्देशः। घु मा स्था गा पा जहाति सा एषां द्वन्द्वात् षष्ठी। "आर्धधातुके" इत्यधिकृतम्। "आतो लोप इटि च" इत्यतः आत इति "ईद्यति" इत्यतः ईदिति "अनुदात्तोपदेश" इत्यतः क्ङिति इति चानुवर्तते। तदाह—एषामित्यादिना॥ अध्यगीष्ट। अधिपूर्वकादिङ्धातोर्लुङि तप्रत्यये "विभाषा लुङ्लृङोः" इतीङो गाङादेशे इटि च्लेः सिचि 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इति सिचो ङित्त्वे "घुमास्थागापाजहातिसां हलि" इति ईत्वे यणि षत्वे ष्टुत्वे च 'अध्यगीष्ट' इति प्रक्लृप्तिर्ज्ञेया। गाङोऽभावे आटि वृद्धौ पूर्वोक्तकार्ये च 'अध्यैष्ट' इति। अध्यगीषाताम्, अध्यगीषत। अध्यगीष्ठाः, अध्यगीषाथाम्, अध्यगीढ्वम्। अध्यगीषि। अध्यगीष्वहि। अध्यगीष्महि। अध्यगीष्यत। इङो लृङस्ते समागते "विभाषा लुङ्लृङोः" इति गाङादेशे तस्य ङित्वे आकारस्येकारे अटि यणि सस्य षत्वे कृते 'अध्यगीष्यत' इति। गाङादेशाभावे—आटि वृद्धौ यणि स्ये सस्य षत्वे च कृते 'अध्यैष्यत' इति। दोग्धि। दुह् प्रपूरणे इत्यस्माद्धातोर्लटस्तिपि समागते शपो लुकि "दादेर्धातोर्घः" इति हस्य घत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे 'दुघ् धि' इति जाते 'झलां जश् झशि' इति घस्य गत्वे "पुगन्तलघूपधस्य च" इति गुणे 'दोग्धि' इत्यस्य निष्पत्तिः। दुग्धः। तसि समागते शपो लुकि, "दादेर्धातोर्घः" इति हस्य घत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे

धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह, दुदुहे । दोग्धा । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि, दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै ।

---

"झलां जश् झशि" इति घस्य गत्वे सस्य रुत्वे रस्य विसर्गे, अपित्त्वेन ङित्वात् गुणाभावः । झौ सु—दुहन्ति । धोक्षि । दुहेर्लटः सिपि, शपो लुकि, गुणे हस्य घत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति दस्य धत्वे घस्य गत्वे "खरि च" इति चर्त्वेन कत्वे "आदेशप्रत्यययोः" इति षत्वे, कषोः संयोगे क्षत्वे 'धोक्षि' । थसि—दुग्धः । पूर्ववत् । दुग्ध, दोह्मि, दुह्वः, दुह्मः । दुग्धे—दुहो लटः प्रथमपुरुषैकवचने आत्मनेपदप्रत्यये ते सआगते शपो लुकि टेरेत्वे "सार्वधातुकमपित्" इति ङिद्वत्त्वे "क्ङिति च" इति गुणाभावे "दादेर्धातोर्घः" इति हस्य घत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "झलां जश् झशि" इति घस्य गत्वे 'दुग्धे' इति साधु । धुक्षे । थासि शपो लुकि हस्य घत्वे "एकाचो बशः" इति दस्य धत्वे "झलां जश् झशि" इति घस्य गत्वे "खरि च" इति कत्वे "थासः से" इति थासः से कृते 'धुक्षे' इति रूपं बोध्यम् । दुदोह । दुहेर्लिटस्तिपि, तिपो णलि, धातोर्द्वित्वे हलोपे "पुगन्तलघूपधस्य च" इति गुणे 'दुदोह' इति सिद्धम् । दुदुहतुः, दुदुहुः । दुदोहिथ, दुदोग्ध । दुदुहथुः, दुदुह । दुदोह । दुदुहिव । दुदुहिम । दुदुहे । दुहेर्लिटः स्थाने आत्मनेपदिते, द्वित्वेऽभ्यासकार्ये हलोपे, तस्यैशि शलोपे, दुदुहे । दुदुहाते, दुदुहिरे । दुदुहिषे, दुदुहाथे दुदुहिढ्वे, दुदुहिध्वे । दुदुहे, दुदुहिवहे, दुदुहिमहे । दोग्धा । दुहो लुटस्तिपि "स्यतासीलृलुटोः" इति तासि "दादेर्धातोः" इति हस्य घत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "लुटः प्रथमस्य" इति तिपो डात्वे टेर्लोपे "पुगन्तलघूपधस्य च" इति गुणे 'दोग्धा' इति सिद्धम् । दोग्धारौ, दोग्धारः, दोग्धासि, दोग्धास्थः, दोग्धास्थ, दोग्धास्मि, दोग्धास्वः, दोग्धास्मः । दोग्धासे, दोग्धासाथे, दोग्धाध्वे । दोग्धाहे । दोग्धास्वहे, दोग्धास्महे । धोक्ष्यति । दुह्धातोर्लृटस्तिपि, स्ये, इडभावे, "पुगन्तलघूपस्य च" इति गुणे "दादेर्धातोर्घः" इति हस्य घत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति दस्य भष्भावेन धत्वे "खरि च" इति घस्य कत्वे कात्परकत्वात्षत्वे कषयोगे चे 'धोक्ष्यति' इति रूपम् । धोक्ष्यते । आत्मनेपदिप्रत्यये लृटस्ते, टेरेत्वे शेषं पूर्ववत् । दोग्धु । दुहधातोर्लोटस्तिपि, शपि, शपो लुकि, "पुगन्तलघूपधस्य च" इति गुणे "दादेर्धातोर्घः" इति हस्य घत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "झलां जश् झशि" इति घस्य गत्वे "एरुः" इति तिप इकारस्योत्वे 'दोग्धु' इति रूपम् । दुग्धात् । तातङि, गुणाऽभावे अङोऽलोपे शेषं पूर्ववत् । तामि—दुग्धाम् । दोहानि । दुहो लोटो मिपि, शपो लुकि "मेर्निः" इति मेर्नौ "आडुत्तमस्य पिच्च" इति आटि टगते, टित्वादाद्यावयवे "पुगन्तलघूपधस्य च" इति गुणे 'दोहानि' इति रूपम् । दोहाव, दोहाम । वसि, मसि च, "लोटो लङ्वत्" इति लङ्वत्वे "नित्यं

दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात् । दुहीत । लिङ्सिचावात्मनेपदेषु १।२।११

ङितः" इति सलोपे "आद्युत्तमस्य पिच्च" इत्यादि, "पुगन्तलघूपधस्य च" इति गुणः। दुग्धाम । दुहधातोर्लोटि, लोटो लः स्थाने आत्मनेपदसञ्ज्ञके ते शपि, शपोलुकि, "सार्वधातुकमपित्" इति तस्य ङित्वाद्गुणाभावे "दादेर्धातोर्घः" इति हस्य घत्वे "झषस्तथोर्धो धः" इति तस्य धत्वे घस्य जश्त्वे टेरेत्वे "आमेतः" इति एकारस्यामि कृते 'दुग्धाम्' इति रूपम् । दुहाताम् । "आत्मनेपदेष्वनतः" इति झस्य अत आदेशः, शेषं पूर्ववत् । धुक्ष्व । दुहधातोर्लोटस्थासि, शपो लुकि, थासः से, "सवाभ्यां वामौ" इति एकारस्य वादेशे हस्य घत्वे दुहो दस्य भष्भावे घस्य चर्त्वेन कत्वे कात्परकत्वात्सस्य षत्वे क्षयोगे 'धुक्ष्व' इति रूपम् । आथामि—दुहाथाम् । धुग्ध्वम् । दुहधातोर्ध्वमि, शपो लुकि "दादेर्धातोर्घः" इति हस्य घत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति दस्य धत्वे "झलां जश् झशि" इति घस्य गत्वे टेरेत्वे "सवाभ्यां वामौ" इति 'ध्वे' एकारस्यामि कृते रूपम् । दोहै । टेरेत्वे आटि "एत ऐ" इति एकारस्य ऐकारः, शेषं पूर्ववत् । दोहावहै । दोहामहै । आटि "एत ऐ" इति विशेषः । अधोक् । दुहधातोर्लङस्तिपि, शपो लुकि, अङ्स्याडागमे, "पुगन्त०" इति लघूपधगुणे "इतश्च" इति तिप इकारलोपे "हल्ङ्याब्भ्य०" इति तलोपे "दादेर्धातोर्घः" इति हस्य घत्वे "एकाच०" इति भष्भावेन दस्य धत्वे घस्य जश्त्वेन गकारे तस्य चर्त्वेन ककारे 'अधोक्' इति रूपम् । अदुग्धाम् । दुहधातोर्लङस्तसि तसस्तामि शपि, शपो लुकि "दादेर्धातोर्घः" इति हस्य घत्वे "झषस्तथोर्धो धः" इति तस्य धत्वे घस्य "झलां जश् झशि" इति गत्वे अटि 'अदुग्धाम्' इति रूपम् । अदुहन् । झस्य "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावे "झोऽन्तः" इत्यन्तादेशे "इतश्च" इति इकारलोपे तकारस्य संयोगान्तलोपे अटि च रूपम् । सिपि—अधोक् । थसि—अदुग्धम् । थे—अदुग्ध । मिपि—अदोहम् । मिपः पित्वाल्लघूपधगुणे मिपोऽमादेशः शेषं पूर्ववत् । वसि—अदुह्व । मसि—अदुह्म । अत्र "नित्यं ङितः" इति सलोपः । अदुग्ध । दुहधातोर्लङः स्थाने आत्मनेपदसञ्ज्ञके ते, शपि, शपो लुकि, "दादेर्धातोर्घः" इति हस्य घत्वे "झषस्तथोर्धोधः" इति तस्य धत्वे "झलां जश् झशि" इति जश्त्वेन घस्यगत्वे अटि च कृते 'अदुग्ध' इति रूपम् । अदुहाताम् । लङ आत्मनेपदे आतामि, शपो लुकि अटि च रूपम् । अदुहत । लङो झे, शपो लुकि "आत्मनेपदेष्वन्यतरस्याम्" इति अतादेशे अटि च कृते रूपम् । अदुग्धाः, अदुहाथाम् । अधुग्ध्वम् । दुहधातोर्लङि, लङः स्थाने मध्यमपुरुषबहुवचने ध्वमि कृते शपो लुकि "दादेर्धातोर्घः" इति हस्य घत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति दस्य भष्भावेन धत्वे "झलां जश् झशि" इति जश्त्वेन घस्य गत्वे अटि च 'अधुग्ध्वम्' इति रूपम् । अदुहि, अदुह्वहि, अदुह्महि । दुह्यात् । विधिलिङि रूपम् । आशिषि तु—दुहधातोः "आशिषि लिङ्लोटौ" इति लिङि, लिङस्तिपि, तस्यार्धधातुकत्वात् शबभावे यासुटि, उटि गते टित्वादाद्या-

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट । शल इगुपधादनिटः क्सः ३।१।४५ इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अधुक्षत् । लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७।३।७३ एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध–अधुक्षत । क्सस्याचि ७।३।७२ अजादौ

---

वयवे "इतश्च" इति तिप इकार लोपे 'दुहयास् त्' इति जाते "स्कोः संयोगाद्योरन्ते च" इति सलोपे च रूपम् । दुहीत । दुह्धातोर्विधिलिङस्ते समागते शपो लुकि "लिङः सीयुट्" इति सीयुडागमे उटो लोपे टित्वादाद्यावयवे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे 'दुह् ईय् त' इति जाते "लोपो व्योर्वलि" इति यलोपे हकारस्येकारेण सह संयोगे च विहिते 'दुहीत' इति । दुहीयाताम्, दुहीरन् । दुहीथाः, दुहीयाथाम्, दुहीध्वम् । दुहीय । दुहीवहि । दुहीमहि । लिङ्सिचावात्मनेपदेषु । "इको झल्" इति "हलन्ताच्च" इति च सूत्रमनुवर्तते । "असंयोगाद्" इत्यतः किदिति चानुवर्तते । इक इति सामीप्ये षष्ठी हलि अन्वेति । तदाह—इक्समीपाद्धल इत्यादिना । धुक्षीष्ट । दुह्धातोराशीर्लिङस्ते, सीयुटि, उटि गते "लिङ्सिचावात्मने०" इति लिङः कित्वे "क्ङिति च" इति गुणाभावे "लोपो व्योर्वलि" इति यलोपे "दादेर्धातोर्घः" इति हस्य घत्वे "एकाचो बशः" इति भष्भावे "खरि च" इति घस्य कत्वे "आदेशप्रत्यययोः" इति सस्य षत्वे कृष्योगे क्षे "सुट्तिथोः" इति सुटि, उटि गते टित्वादाद्यावयवे, सस्य षत्वे "ष्टुना ष्टुः" इति ष्टुत्वे च कृते 'धुक्षीष्ट' इति रूपम् । धुक्षीयास्ताम्, धुक्षीरन् । धुक्षीष्ठाः, धुक्षीयास्थाम्, धुक्षीध्वम् । धुक्षीय, धुक्षीवहि, धुक्षीमहि । शल इगुपधादनिटः क्सः । "धातोरेकाच" इत्यतोऽनुवृत्तधातुविशेषणत्वात्तदन्तविधिरिति भावः । सिचोऽपवादः क्सादेशः अदन्तः । ककार इत् । अधुक्षत् । दुहो लुङस्तिपि "च्लि लुङि" इति च्लौ, "शल इगुपधादनिटः क्सः" इति च्लेः क्सादेशे कृते 'दुह क्स' इति स्थिते कस्येत्सञ्ज्ञायां लोपे च "दादेर्धातोर्घः" इति हस्य घत्वे "एकाचो बशः" इति भष्भावेन दस्य धत्वे 'धुघ् स् ति' इति जाते "खरि च" इति घस्य कत्वे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अडागमे तिप इकारलोपे सस्य षत्वे क्षोः संयोगे क्षे च कृते 'अधुक्षत्' इति रूपम् । अग्रे—अधुक्षताम्, अधुक्षन् । अधुक्षः, अधुक्षतम्, अधुक्षत । अधुक्षम्, अधुक्षाव, अधुक्षाम । इति । लुग्वा दुह० । दन्त्ये तङीति । दन्त्यादौ तङीत्यर्थः । प्रत्ययादर्शनत्वात्सर्वादेशोऽयं लुक् । अदुग्ध । दुह्धातोः लुङ आत्मनेपदिप्रत्यये ते समागते च्लौ "शल इगुपधादनिटः क्सः" इति क्सादेशे "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति क्सस्य लुकि "दादेर्धातोर्घः" इति हस्य घत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "झलां जश् झशि" इति घस्य गत्वे अटि च 'अदुग्ध' इति रूपम् । क्सस्य लुगभावे 'अधुक्षत' इति रूपम् । क्सस्याचीति । अचीत्यस्याक्षिप्तप्रत्ययविशेषणत्वात् तदादिविधिः । "घोर्लोपो लेटि वा" इत्यतो लोप इत्यनुवर्तते ।

तङि क्सस्य लोपः स्यात्। "अलोन्त्यस्य" इत्यकारलोपः। अधुक्षाताम्। अधुक्षन्त। अदुग्धाः-अधुक्षथाः। अधुक्षाथाम्। अधुग्ध्वम्, अधुक्षध्वम्। अधुक्षि, अदुह्वहि, अधुक्षावहि। अधुक्षामहि। अधोक्ष्यत। एवं दिह उपचये॥ २२॥ लिह आस्वा-

---

तदाह—अजादावित्यादिना। अलोऽन्त्यस्येति। अन्त्यस्याकारस्य लोप इति भावः। अधुक्षाताम्। दुहो लुङ आतामि, "च्लि लुङि" इति च्लौ "शल इगुपधादनिटः क्सः" इति क्से, कलोपे 'दुह् स आताम्' इति स्थिते "क्सस्याचि" इति सलोपे प्राप्ते "अलोऽन्त्यस्य" इत्यन्त्याकारलोपे "दादेर्धातोर्घः" इति हस्य घत्वे, दस्य भष्भावेन धत्वे "खरि च" इति घस्य कत्वे कात्परकत्वात् सस्य षत्वे कृष्योगेन क्षे जाते अटि च कृते क्सस्य कित्वाद्गुणाभावे 'अधुक्षाताम्' इति रूपम्। अधुक्षन्त। दुहो लुङो झे, च्लौ, च्लेः स्थाने क्से, कलोपे, "झोऽन्तः" इत्यन्तादेशे "क्सस्याचि" इति अन्त्याकारलोपे हस्य घत्वे, दस्य भष्भावेन धत्वे घस्य "खरि च" इति चर्त्वेन कत्वे कात्परकत्वात् षत्वे कृष्योगेन क्षे जाते अटि च कृते 'अधुक्षन्त' इति रूपम्। अदुग्धाः। दुहो लुङ्स्थासि च्लौ च्लेः स्थाने "शल इगुपधादनिटः क्सः" इति क्से कलोपे "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति क्सस्य लुकि, हस्य घत्वे थासस्थकारस्य "झषस्तथोर्धोऽधः" इति धत्वे "झलां जश् झशि" इति घस्य गत्वे, अटि सस्य रुत्वे, रेफस्य विसर्गत्वे च 'अदुग्धाः' इति रूपम्। क्सस्य लुगभावे 'अधुक्षथाः' इति रूपम्। साधनिका पूर्ववत्। आथामि—अधुक्षाथाम्। अत्र क्से "क्सस्याचि" इत्यकारलोपः, हस्य घत्वे भष्भावे अटि च रूपम्। अधुग्ध्वम्। ध्वमि, क्से "लुग्वा दुहदिह०" इत्यादिना वा क्सस्य लुकि, घत्वे भष्भावे जश्त्वे अटि च रूपम्। लुगभावे—अधुक्षध्वम्। अधुक्षि। दुहो लुङ इटि, च्लौ, च्लेः स्थाने क्से, कलोपे "क्सस्याचि" इति अकारलोपे, घत्वे भष्भावे घस्य चर्त्वेन कत्वे कात्परकत्वात्षत्वे कृष्योगे क्षे अटि च मिलित्वा 'अधुक्षि' इति रूपम्। अदुह्वहि। अत्र वकारस्य दन्त्योष्ठ्यत्वात् "लुग्वा दुहदिह०" इति क्सलोपः, शेषं पूर्ववत्। क्सलोपाभावे 'अधुक्षावहि' इति रूपम्। अधुक्षामहि। दुहो लुङो महिङि क्से कलोपे हस्य घत्वे दस्य भष्भावेन धत्वे, घस्य चर्त्वेन कत्वे कात्परकत्वात्षत्वे कृष्योगे क्षे "अतो दीर्घो यञि" इति क्सस्याकारस्य दीर्घे अटि च रूपम्। अधोक्ष्यत्। दुह्धातोः "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इति लृङि, अनुबन्धलोपे लृङो लः स्थाने तिपि, स्ये इडभावे स्यस्यार्धधातुकत्वात् "पुगन्तलघूपधस्य च" इति गुणे "दादेर्धातोर्घः" इति हस्य घत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति भष्भावेन दस्य धत्वे घस्य चर्त्वेन कत्वे "आदेशप्रत्यययोः" इति कात्परकत्वात्सस्य षत्वे कृष्योगे क्षे जाते "इतश्च" इति तिप इकारलोपे अटि च कृते 'अधोक्ष्यत्' इति रूपम्। एवमात्मनेपदेऽपि—'अधोक्ष्यत' इति रूपम्। उपचय इति। उपचयो—वृद्धिः। देग्धि, दिग्धे। दिदेह, दिदिहे। देग्धासि, देग्धासे। धेक्ष्यति,

दने ॥ २३ ॥ लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिहाते । लिहते । लिक्षे ।
लिहाथे । लीढ्वे । लिलेह, लिलिहे । लीढासि । लीढासे । लेक्ष्यति । लेक्ष्यते । लेढु,

---

धेक्ष्यते । देग्धु, दिग्धाम् । अधेक्, अदिग्ध । दिह्यात्, दिहीत । दिह्यात्, धिक्षीष्ट । अधिक्षत्, अदिग्ध–अधिक्षत । अधेक्ष्यत्, अधेक्ष्यत । लेढि । लिह्धातोर्लटस्तिपि, शपि, शपो लुकि, "पुगन्तलघूपधस्य च" इति गुणे "हो ढः" इति हस्य ढत्वे तस्य "झषस्तथोर्धो धः" इति धत्वे "ष्टुना ष्टुः" इति धस्य ष्टुत्वेन ढत्वे "ढो ढे लोपः" इति पूर्वढस्य लोपे च विहिते 'लेढि' इति रूपम् । लीढः । लिह्धातोर्लटस्तसि, शपो लुकि, तसः "सार्वधातुकमपित्" इति ङित्वात् गुणाभावे, हस्य ढत्वे, तसस्तकारस्य धत्वे ष्टुत्वेन धस्य ढत्वे "ढो ढे लोपः" इति पूर्वढस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति लिह इकारस्य दीर्घे सस्य रुत्वे रेफस्य विसर्गत्वे च 'लीढः' इति रूपम् । लिहन्ति । लटो झौ "झोऽन्तः" इत्यन्तादेशः । लेक्षि । लिह्धातोर्लटः सिपि, शपि, शपो लुकि, "पुगन्तलघूपधस्य च" इति लघूपधगुणे "हो ढः" इति हस्य ढत्वे, "षढोः कः सि" इति ढस्य कत्वे "आदेशप्रत्यययोः" इति कात्परकत्वात्सिपः सस्य षत्वे, कषयोगे क्षे, 'लक्षि' इति रूपम् । अग्रे रूपाणि—लीढः, लीढ । लेह्मि, लिह्वः, लिह्मः । लीढे । लिहो लटस्ते आत्मनेपदके, शपि, शपो लुकि, "हो ढः" इति हस्य ढत्वे धत्वे, ष्टुत्वेन धस्य ढत्वे, "ढो ढे लोपः" इति पूर्वढस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति पूर्वस्याणो दीर्घे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च 'लीढे' इति रूपम् । आतासि—लिहाते । झे—लिहते । "आत्मनेष्वनतः" इति झस्य अत आदेशः, टेरेत्वञ्च । लिक्षे । लिह्धातोर्लटस्थासि, शपो लुकि "थासः से" इति थासः स्थाने से आदेशे, "हो ढः" इति हस्य ढत्वे, "षढोः कः सि" इति ढस्य कत्वे कात्परकत्वात्सस्य षत्वे कषयोगे क्षे जाते 'लिक्षे' इति रूपम् । आथासि—लिहाथे । लीढ्वे । लिह्धातोर्लटो ध्वमि, शपि, शपो लुकि "हो ढः" इति हस्य ढत्वे "ष्टुना ष्टुः" इति धस्य ष्टुत्वेन ढत्वे, "ढो ढे लोपः" इति ढलोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति पूर्वस्याण इकारस्य दीर्घे टेरेत्वे च 'लीढ्वे' इति रूपम् । अग्रे–लिहे, लिह्वहे, लिह्महे । इति । लिलेह । लिह्धातोः "परोक्षे लिट्" इति लिटि, लिटस्तिपि "परस्मैपदानां णलतुसु०" इत्यादिना तिपो णलि, अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे, अभ्यासत्वे अभ्यासकार्ये च कृते 'लि लिह् अ' इति स्थिते "पुगन्तलघूपधस्य च" इति लघूपधगुणे 'लिलेह' इति । अग्रे—लिलिहतुः, लिलिहुः । लिलेहिथ, लिलिहथुः, लिलिह । लिलेह, लिलिहिव, लिलिहिम । इति । लिलिहे । लिह्धातोर्लिटस्ते, तस्य स्थाने "लिटस्तझयोरेशिरेच्" इति एशि, शगते द्वित्वे अभ्यासत्वेअभ्यासकार्ये च कृते मिलित्वा 'लिलिहे' इति रूपम् । शेषम्—लिलिहाते, लिलिहिरे । लिलिहिषे, लिलिहाथे, लिलिहिध्वे । लिलिहे, लिलिहिवहे, लिलिहिमहे । इति । लुटि—लीढा, लीढारौ लीढारः । लीढासि । लिह्धातोर्लुटः सिपि, पुगते

लीढात् । लीढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट्-अलेड् । अ लि-

तासि, "आर्धधातुकं शेषः" इति आर्धधातुकत्वे "एकाच उपदेशेऽनुदात्तात्" इति इड-भावे "हो ढः" इति हस्य ढत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे, "ष्टुना ष्टुः" इति ष्टुत्वेन धस्य ढत्वे, "ढो ढे लोपः" इति ढ्लोपे, "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति पूर्व-स्याणो दीर्घे "तासस्त्योर्लोपः" इति सूलोपे 'लीढासि' इति रूपम् । अग्रे—लीढास्थः, लीढास्थ । लीढास्मि, लीढास्वः, लीढास्मः । इति । आत्मनेपदे—लीढा, लीढारौ, ली-ढारः । लीढासे । लिह्धातोर्लुटस्थासि, तासि "थासः से" इति थासः से आदेशे "हो ढः" इति हस्य ढत्वे तासस्तकारस्य धत्वे ष्टुत्वे ढो ढे लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति पूर्वस्याणो दीर्घत्वे "तासस्त्योर्लोपः" इति सूलोपे 'लीढासे' इति रूपम् । अग्रे—लीढा-साथे, लीढाध्वे । लीढाहे, लीढास्वहे, लीढास्महे । इति । लेक्ष्यति । लिहो लृटस्तिपि, स्ये हस्य ढत्वे "षढोः कः सि" इति ढस्य कत्वे लघूपधगुणे कात्परकत्वात्सस्य षत्वे कृष्योगे क्षे जाते 'लेक्ष्यति' इति रूपम् । एवमात्मनेपदे—लेक्ष्यते । इति । लेढु । लिहो लोटस्तिपि, शपि, शपो लुकि "हो ढः" इति हस्य ढत्वे "पुगन्तलघूपधस्य च" इति लघूपधगुणे "झषस्तथोर्धोऽधः" इति तस्य धत्वे ष्टुत्वे ढो ढे लोपे च कृते "एरुः" इति इकारस्योत्वे 'लेढु' इति निष्पन्नम् । तातङि—लीढात् । लीढाम् । लिहो लोट-स्तसि, शपो लुकि, तसस्तामि हस्य ढत्वे तस्य धत्वे, धस्य ष्टुत्वेन ढत्वे, "ढो ढे लोपः" इति ढ्लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति पूर्वस्याणो दीर्घे 'लीढाम्' इति रूपम् । लिहन्तु । लोटो झौ "झोऽन्तः" इत्यन्तादेशे शपो लुकि "एरुः" इति उत्वे च तत्सिद्धिः । लीढि । लिह्धातोर्लोटः सिपि, शपो लुकि, "सेर्ह्यपिच्च" इति सिपो हौ "हो ढः" इति हस्य ढत्वे "हुझल्भ्यो हेर्धिः" इति हेर्धित्वे "ष्टुना ष्टुः" इति ष्टुत्वेन धस्य ढत्वे "ढो ढे लोपः" इति ढलोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति पूर्व-स्याणो दीर्घे 'लीढि' इति सम्पन्नम् । तातङि—लीढात् । लीढम्, लीढ । लेहानि । लिहो लोटो मिपि, शपो लुकि "मेर्निः" इति मेर्नित्वे "आडुत्तमस्य पिच्च" इति उत्तमस्य नेराटि, "पुगन्तलघूपधस्य च" इति लघूपधगुणे 'लेहानि' इति रूपम् । लेहाव, लेहाम । इति अवशिष्टरूपाणि । लीढाम् । लिहो लोटि, लोटो लः स्थाने आत्म-नेपदसंज्ञके ते कृते, शपि, शपो लुकि, "हो ढः" इति हस्य ढत्वे, "झषस्तथोर्धोऽधः" इति तस्य धत्वे, ष्टुत्वे ढो ढे लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति पूर्वस्याणो दीर्घे टेरेत्वे "आमेतः" इति एकारस्यामि 'लीढाम्' इति रूपम् । अग्रे त्वेवं रूपाणि—लिहा-ताम्, लिहताम् । लिक्ष्व, लिहाथाम्, लीढ्वम् । लेहै, लेहावहै, लेहामहै । अलेट् । लिहो लङस्तिपि, शपो लुकि, अटि, "इतश्च" इति तिप इकारलोपे "पुगन्तलघूपधस्य च" इति गुणे "हल्ङ्याब्भ्यो दीर्घात्" इत्यादिना तिपस्तकारस्य लोपे "हो ढः" इति हस्य ढत्वे "झलां जशोऽन्ते" इति डत्वे "वावसाने" इति टत्वे च कृते 'अलेट्' इति रूपम् । चर्त्वाभावपक्षे—'अलेड्' इति रूपम् । अग्रे—अलीढाम्, अलिहन् । अलेट्,

क्षत्, अलिक्षत, अलीढ । अलेक्ष्यत् । ब्रूञ् व्यक्तायां वाचि ॥ २४ ॥ ब्रुवः पञ्चानामादित आहो ब्रुवः ।३।४।८४। ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः । आहस्थः ।८।२।३५। झलि परे हस्य थः स्यात् । चर्त्वम् । आत्थ । आहथुः । ब्रुव ईट् ।७।३।९३। ब्रुवः परस्य

---

अलेढ्, अलीढम्, अलीढ । अलेहम्, अलिह्व, अलिह्म । आत्मनेपदे—अलीढ, अलिहाताम्, अलिहत । अलीढाः, अलिहाथाम्, अलीढ्वम् । अलिहि, अलिह्वहि, अलिह्महि । लिङि—लिह्यात् । आत्मनेपदे लिङि—लिहीत । आशीर्लिङि—लिह्यात्, लिह्यास्ताम्, लिह्यासुः । आत्मनेपदे आशीर्लिङि—लिक्षीष्ट । लिक्षीयास्ताम्, लिक्षीरन् । लिक्षीष्ठाः, लिक्षीयास्थाम्, लिक्षीध्वम् । लिक्षीय, लिक्षीवहि, लिक्षीमहि । इति । अलिक्षत । लिह्धातोः "लुङ्" इति लुङि लुङस्तिपि च्लौ, "शल इगुपधादनिटः क्सः" इति च्लेः स्थाने क्से, ककारलोपे हस्य ढत्वे ढस्य "षढोः कः सि" इति कत्वे कात्परकत्वात्सस्य षत्वे क्षयोगे क्षे अटि च 'अलिक्षत्' इति रूपम् । अलिक्षताम्, अलिक्षन् । अलिक्षः, अलिक्षतम्, अलिक्षत । अलिक्षम्, अलिक्षाव, अलिक्षाम । इति लुङोऽवशिष्टरूपाणि । अलीढ । लिह्धातोर्लुङः स्थाने आत्मनेपदसंज्ञके ते "च्लि लुङि" इति च्लौ, च्लेः स्थाने, "शल इगुपधादनिटः क्सः" इति क्से, ककारलोपे "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति क्सलुकि, हस्य ढत्वे तस्य धत्वे धस्य ष्टुत्वे ढलोपे "ढ्लोपे पूर्वस्य दीर्घोऽणः" इति पूर्वस्याणो दीर्घे 'अलीढ' इति रूपम् । लुगभावे हस्य ढत्वे "षढोः कः सि" इति ढस्य कत्वे कात्परकत्वात्सस्य षत्वे 'अलिक्षत' इति च रूपम् । अग्रे अलिक्षाताम्, अलिक्षन्त । अलीढाः, अलिक्षथाः, अलिक्षाथाम् । अलीढ्वम्, अलिक्षध्वम् । अलिक्षि, अलिह्वहि, अलिक्षावहि । अलिक्षामहि । इति । अलेक्ष्यत् । लिहो लृङस्तिपि स्ये लघूपधगुणे, हस्य ढत्वे, ढस्य कत्वे, कात्परकत्वात्षत्वे क्षयोगे क्षे अटि, तिप इकारलोपे च तत्सिद्धिः । एवम्—अलेक्ष्यत । इत्यपि बोध्यम् । ब्रुवः पञ्चानामिति । "परस्मैपदानां णलतुस्०" इत्यत उत्तरसूत्रमिदम् । "विदो लटो वा" इत्यतो लटो वेत्यनुवर्तते । तदाह—ब्रुवो लट इति । आह । ब्रूधातोर्लटस्तिपि, शपो लुकि "ब्रुवः पञ्चानामादित आहो ब्रुवः" इति तिपो णलि, ब्रुव आहादेशे च कृते णलोऽनुबन्धलोपे 'आह' इति रूपम् । आहतुः । ब्रूधातोर्लटस्तसि, शपो लुकि, "ब्रुवः पञ्चानामादित" इति तसोऽतुसि ब्रुव आहादेशे सस्य रुत्वे रेफस्य विसर्गत्वे च तत्सिद्धिः । आहुः । ब्रूधातोर्लटो झौ, शपो लुकि "ब्रुवः पञ्चानामादित आहो ब्रुवः" इति झेरुसि ब्रुव आहादेशे च तत्सिद्धिः । आहस्थ इति । आह षष्ठ्यन्तम् । "झलो झलि" इत्यतो झलीत्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—झलि परे इति । आत्थ । ब्रुवो लटः सिपि शपो लुकि "ब्रुवः पञ्चानाम्" इति सिपस्थलि ब्रुव आहादेशे च "आहस्थः" इति हस्य थत्वे तस्य "खरि च" इति चर्त्वेन तकारे 'आत्थ' इति रूपम् । आहथुः ।

हलादेः पित ईट् स्यात्। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। ब्रुवाते। ब्रुवते। ब्रुवो वचिः।२।४।५३। आर्धधातुके। उवाच। ऊचतुः। ऊचुः। उवचिथ, उवक्थ। ऊचे। वक्ता। वक्ष्यति, वक्ष्यते। ब्रवीतु-ब्रूतात्। ब्रुवन्तु। ब्रूहि। ब्रवाणि। ब्रूताम्।

---

लटस्थलोऽथुसि, शेषं पूर्ववत्। ब्रुव ईट्। "नाभ्यस्तस्य" इत्यतः पितीति "उतो वृद्धिः" इत्यतो हलीति चानुवर्तते। तदाह—ब्रुवः परस्येत्यादिना। ब्रवीति। ब्रूधातोर्लटस्तिपि, शपो लुकि आहादेशाभावपक्षे "ब्रुव ईट्" इति तिप ईटि, टगते टित्वात् तिप आद्यावयवे जाते "सार्वधातुकार्धधातुकयोः" इति ब्रुव उकारस्य गुणेऽवादेशे च कृते 'ब्रवीति' इति रूपम्। तसि—'ब्रूतः' इति। ब्रुवन्ति। "झोऽन्तः" इति झेरन्तादेशे कृते उवङ्। सिपादिविशिष्टास्त्वेवम्—ब्रवीषि, ब्रूथः, ब्रूथ। ब्रवीमि, ब्रूवः, ब्रूमः। इति। ब्रूते। ब्रूधातोर्लटस्थाने आत्मनेपदे ते शपो लुकि "टित आत्मनेपदानां टेरे" इति टेरेत्वे च तत्सिद्धिः। ब्रुवाते। लट आतामि शपो लुकि उवङि टेरेत्वम्। ब्रुवते। लटो झे, शपो लुकि, "आत्मनेपदेष्वनतः" इति झेरतादेशे उवङि टेरेत्वम्। एवं ब्रूषे, ब्रुवाथे ब्रूध्वे। ब्रुवे, ब्रूवहे, ब्रूमहे, इति। ब्रुवो वचिरिति। ब्रुवो वचिरादेशः स्यादार्धधातुके इत्यर्थः। इकार उच्चारणार्थः। उवाच। ब्रूधातोः "परोक्षे लिट्" इति लिटि, तत्स्थाने तिपि "लिट् च" इत्यार्धधातुकत्वे "ब्रुवो वचिः" इति ब्रूस्थाने वच् आदेशे, तिपो णलि, अनुबन्धलोपे द्वित्वे अभ्यासत्वे 'वच् वच् अ' इति जाते "लिट्यभ्यासस्योभयेषाम्" इति अभ्यासवचः सम्प्रसारणत्वे "सम्प्रसारणाच्च" इति पूर्वरूपे "हलादिः शेषः" इति च्लोपे "अत उपधायाः" इति उपधावृद्धौ 'उवाच' इति रूपम्। ऊचतुः। ब्रूधातोर्लिटस्तसि, तसोऽतुसि, "लिट् च" इत्यार्धधातुकत्वे "असंयोगाल्लिट् कित्" इति कित्त्वे, ब्रुवो वचादेशे "वचिस्वपि०" इत्यादिना सम्प्रसारणत्वे "संप्रसारणाच्च" इति पूर्वरूपे "उच् अतुस्" इति जाते द्वित्वे अभ्यासत्वे "हलादिः शेषः" इति चूलोपे सवर्णदीर्घ, रुत्वे विसर्गत्वे च तत्सिद्धिः। एवम्—'ऊचुः' इत्यत्र बोध्यम्। उवचिथ, उवक्थ। ब्रुवो लिटः सिपि, सिपस्थलादेशे ब्रुवो वचादेशे द्वित्वे अभ्यासत्वे "हलादिः शेषः" इति चलोपे "लिट्यभ्यासस्योभयेषाम्" इति अभ्यासस्य सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे थल आर्धधातुकत्वादिटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे भारद्वाजनियमाद्वा इटि 'उवचिथ' इति रूपम्। इडागमाभावपक्षे—"चोः कुः" इति चस्य कत्वे 'उवक्थ' इति रूपम्। अग्रे—ऊचथुः, ऊचुः। उवाच—उवच, ऊचिव, ऊचिम, इति। ऊचे। ब्रूञ्धातोः आत्मनेपदे लिटस्ते समागते "ब्रुवो वचिः" इति ब्रुवो वचिरादेशे, "वचिस्वपियजादीनां किति" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे, "पूर्वोऽभ्यासः" इति अभ्याससंज्ञायां "हलादिः शेषः" इति चलोपे 'उ उच् त' इति जाते "अकः सवर्णे दीर्घः" इति दीर्घे "लिटस्तझयोरेशिरेच्" इत्येशि 'ऊचे' इति रूपम्। ऊचाते, ऊचिरे, ऊचिषे, ऊचाथे, ऊचिध्वे। ऊचे, ऊचिवहे ऊचिमहे।

ब्रवै। अब्रवीत्। अब्रूत। ब्रूयात्, ब्रुवीत। उच्यात्, वक्षीष्ट। **अस्यतिवक्तिख्यातिभ्योऽङ्।३।१।५२।** एभ्यश्च्लेरङ् स्यात्। **वच उम्।७।४।२०।** अङि परे। अवोचत्, अवोचत। अवक्ष्यत्, अवक्ष्यत। **चर्करीतञ्च।** चर्करीतमिति यङ्लु-

---

वक्ष्यति। ब्रूञो लृटस्तिपि स्ये "ब्रुवो वचिः" इति ब्रुवो वचादेशे "चोः कुः" इति चस्य कत्वे, सस्य षत्वे कष् संयोगे क्षे जाते 'वक्ष्यति' इति रूपम्। आत्मनेपदे—वक्ष्यते। ब्रवीतु। ब्रुवो लोटि, तिपि "ब्रुव ईट्" इति ईटि "सार्वधातुकार्धधातुकयोः" इति गुणे "एचोऽयवायावः" इत्यवि "एरुः" इति तिप इकारस्योत्वे 'ब्रवीतु' इति रूपम्। तातङि—ब्रूतात्। ब्रूताम्, ब्रुवन्तु, ब्रूहि, ब्रूतात्, ब्रूतम्, ब्रूत,। ब्रवाणि। मिपि, मेर्नित्वे आटि गुणे अवि नस्य णत्वे 'ब्रवाणि' इति साधु। ब्रवाव, ब्रवाम। ब्रूताम्, ब्रुवाताम् ब्रुवताम्। ब्रूष्व, ब्रुवाथाम्, ब्रूध्वम्। ब्रवै। ब्रूञो लोटि आत्मनेपदे इटि समागते शपि, शपो लुकि, "टित आत्मनेपदानां टेरे" इति टेरेत्वे "एत ऐ" इति ऐत्वे, ब्रू ऐ इति जाते आटि गुणेऽवि संयोगे च 'ब्रवै' इति रूपं बोध्यम्। ब्रवावहै, ब्रवामहै।। अब्रवीत्। ब्रुवो लङस्तिपि, शपि, शपो लुकि तिप ईटि तिप इकारलोपे "सार्वधातुकार्धधातुकयोः" इति गुणेऽवि, अटि च 'अब्रवीत्' इति। अग्रे त्वेवं रूपाणि अब्रूताम्, अब्रुवन्। अब्रवीः, अब्रूतम्, अब्रूत। अब्रवम् अब्रूव, अब्रूम। अब्रूत। लङ आत्मनेपदे ते समागते शपो लुकि अटि च 'अब्रूत' इति ध्येयम्। अग्रे—अब्रुवाताम्, अब्रुवत। अब्रूथाः, अब्रुवाथाम्, अब्रूध्वम्। अब्रुवि, अब्रूवहि, अब्रूमहि। ब्रूयात्। ब्रुवो विधिलिङस्तिपि शपि शपो लुकि यासुटि उटो लोपे, तिप इकारलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे च विहिते 'ब्रूयात्' इति साधु। आत्मनेपदे—विधिलिङस्ते समागते शपि, शपो लुकि, "लिङः सीयुट्" इति सीयुटि, उटो लोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "लोपो व्योर्वलि" इति यलोपे "अचिश्नुधातुभ्रुवाम्"इत्युवङि 'ब्रुवीत' इति साधु। अग्रे—ब्रुवीयाताम्, ब्रुवीरन्। ब्रुवीथाः, ब्रुवीयाथाम्, ब्रुवीध्वम्। ब्रुवीय। ब्रुवीवहि। ब्रुवीमहि, इति। उच्यात्। ब्रूञ्धातोराशीर्लिङस्तिपि, यासुटि, उटो लोपे "ब्रुवो वचिः" इति वचौ, "वचिस्वपियजादीनां किति" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे 'उच् यास् ति' इति स्थिते "इतश्च" इति तिप इकारलोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'उच्यात्' इति रूपम्। आत्मनेपदसञ्ज्ञके ते समागते सीयुटि उटो लोपे यलोपे 'ब्रूसी त' इति दशायां "ब्रुवो वचिः" इति वचादेशे "चोः कुः" इति कुत्वे "सुट् तिथोः" इति सुटि उटावितौ, सकारद्वयोः षत्वे, कषयोः संयोगे चे 'वक्षीष्ट' इति रूपं ज्ञेयम्॥ अस्यतिवक्तिख्यातिभ्योऽङ्। "च्लेस्सिच्" इत्यतः च्लेरित्यनुवर्तते तदाह—एभ्यश्च्लेरङ् स्यादिति। वच उम्। शेषपूरणेन सूत्रं व्याचष्टे—अङि पर इति। "ऋदृशोऽङि गुणः" इत्यतस्तदनुवर्तते इति भावः। मित्वादन्त्यादचः परः, आद्गुणः, तदाह—अवोचत्। ब्रुवो लुङस्तिपि, "च्लि लुङि"

गन्तमदाद्यौ बोध्यम् । ऊर्णुञ् आच्छादने ॥ २५ ॥ ऊर्णोतेर्विभाषा ।७।३।९०। वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति, ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते । ( ऊर्णोतेराम्नेति वाच्यम् ) ॥ नन्द्राः संयोगादयः ।६।१।३। अचः पराः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य द्वित्वम् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः । विभाषोर्णोः १।२।३ इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ, ऊर्णुनविथ । ऊर्णुविता, ऊर्णविता । ऊर्णुविष्यति, ऊर्ण-

---

इति च्लौ "ब्रुवो वचिः" इति वचादेशे "अस्यतिवक्तिख्यातिभ्योऽङ्" इति च्लेरङादेशे कृते 'वच् अ ति' इति जाते तिप इकारलोपे "वच उम्" इति उमि 'व उम् च् अ त्' इति जाते मलोपे आद्गुणे अटि च कृते 'अवोचत्' इति रूपं साधु । अवोचताम्, अवोचन् । अवोचः, अवोचतम् । अवोचत । अवोचम् । अवोचाव । अवोचाम । एवं आत्मनेपदे ते समागते 'अवोचत' इति बोध्यम् । ऊर्णोतेर्विभाषा । "उतो वृद्धिर्लुकि हलि" इत्यतो वृद्धिरिति हलीति चानुवर्तते "नाभ्यस्तस्य" इत्यतः 'पिति सार्वधातुके' इति च, इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—वा वृद्धिः स्यादित्यादिना । ऊर्णौति । ऊर्णुञ् आच्छादने इत्यस्माद्धातोर्लटस्तिपि समागते, शपि, शपो लुकि च "ऊर्णोतेर्विभाषा" इति वृद्धौ 'ऊर्णौति' इति । वृद्ध्यभावे गुणे च कृते 'ऊर्णोति' इति । तसि—ऊर्णुतः । झौ—झेरन्तादेशे उवङि च ऊर्णुवन्ति । आत्मनेपदसञ्ज्ञके लटस्ते, शपो लुकि, टेरेत्वे च 'ऊर्णुते' इति । नन्द्राः संयोगादयः । "एकाचो द्वे प्रथमस्य" इत्यतो द्वे इत्यनुवर्तते। "अजादेर्द्वितीयस्य" इत्यतः अजादेरिति। अच्चासौ आदिश्चेति कर्मधारयात्पञ्चमी। न् द् र् एषां द्वन्द्वः । तदाह—अचः परा इति। ऊर्णुनाव । ऊर्णुधातोर्लिटस्तिपि, तिपो णलि चागते 'ऊर्णु अ' इति स्थिते "इजादेश्च गुरुमतोऽनृच्छः" इति आमि प्राप्ते "ऊर्णोतेराम् नेति वाच्यम्" इति निषेधे "अजादेर्द्वितीयस्य" इति सरेफस्य णोर्द्वित्वे प्राप्ते "नन्द्राः संयोगादयः" इति रेफस्य द्वित्वाभावे णत्वस्यासिद्धत्वाद् नुशब्दस्य द्वित्वे, प्रथमनस्य "रषाभ्यां नो णः समानपदे" इति णत्वे, द्वितीयनकारस्य तु "अट्कुप्वाङ्" इति णत्वे, 'ऊर्णु णु अ' इति जाते "सार्वधातुकार्धधातुकयोः" इति परत्वात् गुणे प्राप्ते तं प्रबाध्य कृताकृतप्रसंगित्वेन नित्यत्वात् "अचोऽञ्णिति" इति वृद्धौ "एचोऽयवायावः" इति औकारस्य आवि कृते 'ऊर्णुनाव' इति रूपम् । अतुसि—उवङि, ऊर्णुनुवतुः । उसि—ऊर्णुनुवुः । विभाषोर्णोः । "गाङ्कुटादिभ्यः" इत्यतो ङिदित्यनुवर्तते "विज इट्" इत्यतः इडिति, इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—इडादीति । लिटस्थलि, इटि द्वित्वे "विभाषोर्णोः" इति इडादिप्रत्ययस्य ङित्वात् "क्ङिति च" इति गुणाभावे उवङि च 'ऊर्णुनुविथ' इति । ङित्वाभावे गुणेऽवादेशे च कृते—ऊर्णुनविथ इति । ऊर्णुविता । लुटि तिपि तासि, तास इटि "लुटः प्रथमस्य डारौरसः" इति तिपो डात्वे । ङित्वसामर्थ्यादभस्यापि टेर्लोपे "विभाषोर्णोः" इति ङित्वाद्गुणाभावे, उवङि च 'ऊर्णुविता' इति ।

विष्यति । ऊर्णौतु, ऊर्णोतु, ऊर्णवानि, ऊर्णवै । **गुणोऽपृक्ते ७।३।९१** ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुवीत । ऊर्णूयात् । ऊर्णुविषीष्ट । ऊर्णविषीष्ट । **ऊर्णोतेर्विभाषा ७।२।६** इडादौ परस्मैपदे परे सिचि वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत् ,

---

विभाषाग्रहणात् ङित्वाभावपक्षे "सार्वधातुकार्धधातुकयोः" इति गुणेऽवादेशे । 'ऊर्णविता' इति रूपं संगमनीयम् । ऊर्णुविष्यति । लृटस्तिपि स्ये इटि "विभाषोर्णोः" इति इडादि-प्रत्ययस्य ङित्वमाश्रित्य गुणनिषेधे उवङि सस्य षत्वे कृते 'ऊर्णुविष्यति' इति रूपम् । ङित्वाभावे गुणे अवादेशे 'ऊर्णविष्यति' इति । ऊर्णौतु । लोटस्तिपि समागते शपो लुकि "ऊर्णोतेर्विभाषा" इति वृद्धौ "एरुः" इति तिप इकारस्योत्वे विहिते 'ऊर्णौतु' इति । वृद्ध्यभावे गुणे कृते 'ऊर्णोतु' इति । मिपि-मेर्नित्वे आटि, गुणेऽवादेशे च, ऊर्णवानि । आत्मनेपदसंज्ञके लोटः स्थाने उत्तमपुरुषैकवचने इटि, शपो लुकि, टेरेत्वे आटि "एत ऐ" इत्यैत्वे "आटश्च" इति वृद्धौ गुणेऽवादेशे 'ऊर्णवै' इति । गुणोऽपृक्ते । "ऊर्णोतेर्विभाषा" इत्यतः ऊर्णोतेरिति "नाभ्यस्तस्य" इत्यतः 'पिति सार्वधातुके' इति "उतो वृद्धिः" इत्यतः हलीति चानुवर्तते, तदाह—ऊर्णोतेरित्यादिना । और्णोत् । लङस्तिपि शपि शपो लुकि आटि तिप इकारलोपे "उतो वृद्धिर्लुकि हलि" इति प्राप्ते तम्बाधित्वा "गुणोऽपृक्ते" इति गुणे "आटश्च" इति वृद्धौ च 'और्णोत्' इति । सिपि—और्णोः । लङ आत्मनेपदे त्वेवम्—और्णुत, और्णुवाताम्, और्णुवत । और्णुथाः, और्णुवाथाम्, और्णुध्वम् । और्णुवि, और्णुवहि, और्णुमहि । ऊर्णुयात् । विधिलिङस्तिपि, शपि, शपो लुकि यासुटि उटो लोपे तिप इकारलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे 'ऊर्णुयात्' इति रूपम् । सिपि—ऊर्णुयाः । विधिलिङः स्थाने आत्मनेपदे ते समागते सीयुटि उटि गते "लिङः सलोपोऽनन्त्यस्य" इति सलोपे यलोपे उवङि च 'ऊर्णुवीत' इति सिद्धम् । ऊर्णूयात् । आशीर्लिङस्तिपि यासुटि उटि गते "स्कोः संयोगाद्योरन्ते च" इति सलोपे, तिप इकारलोपे "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे 'ऊर्णूयात्' इति । आत्मनेपदे ते सीयुटि, उटि गते, यलोपे "आर्धधातुकस्येड्" इति इटि इटो ङित्वात् गुणाभावे उवङि सुटि षत्वे ष्टुत्वे च 'ऊर्णुविषीष्ट' इति सिद्धम् । ङित्वाभावपक्षे-गुणेऽवादेशे—ऊर्णवि-षीष्ट' इति बोध्यम् । ऊर्णोतेर्विभाषा । "सिचि वृद्धिः परस्मैपदेषु" इत्यनुवर्तते, "नेटि" इत्यतः इटीति च । तदाह—इडादाविति । और्णावीत् । ऊर्णुधातोर्लुङस्तिपि, "इतश्च" इति तिप इकारलोपे आटि वृद्धौ च्लेः सिचि इचि गते 'और्णु स् त्' इति स्थिते सिचः सस्य इटि तिपस्तकारस्य ईटि "विभाषोर्णोः" इतीटो ङित्वाद् गुणाभावे उवङि "इट ईटि" इति सलोपे दीर्घे च 'और्णुवीत्' इति । ङित्वाभावपक्षे गुणं बाधित्वा "ऊर्णोतेर्विभाषा" इति वा वृद्धावावादेशे 'और्णावीत्' इति । वृद्ध्यभावपक्षे "सार्वधातुकार्धधा-

और्णवीत्, और्णुवीत्। और्णाविष्टाम्, और्णविष्टाम्, और्णुविष्टाम्। और्णुविष्ट, और्णविष्ट। और्णुविष्यत्, और्णविष्यत्। इत्यदादयः।

---

## अथ जुहोत्यादयः।

हु दानादनयोः ॥१॥ जुहोत्यादिभ्यः श्लुः २।४।७५ शपः श्लुः स्यात्। श्लौ ६।१।१० धातोर्द्वे स्तः। जुहोति। जुहुतः। अदभ्यस्तात् ७।१।४ झस्यातस्यात्। "हुश्नुवोः" इति यण्। जुह्वति। भीह्रीभृहुवां श्लुवच्च ३।१।३९ एभ्यो लिटि आम् वा स्यादामि श्लाविव कार्यं च। जुहवाञ्चकार, जुहाव। होता।

---

धुकयोः" इति गुणेऽवादेशे 'और्णवीत्' इति च सिद्धम्। अवशिष्टरूपाणि—और्णाविष्टाम्, और्णुविष्टाम्, और्णविष्टाम्। और्णाविषुः, और्णुविषुः, और्णविषुः। और्णावीः, और्णुवीः, और्णवीः। और्णाविष्टम्, और्णुविष्टम्, और्णविष्टम्। और्णाविष्ट, और्णुविष्ट, और्णविष्ट। और्णाविषम्, और्णुविषम्, और्णविषम्। और्णाविष्व, और्णुविष्व, और्णविष्व। और्णाविष्म, और्णुविष्म, और्णविष्म। इति। और्णुविष्ट। ऊर्णुधातोर्लुङि आत्मनेपदे तप्रत्यये आटि वृद्धौ, च्लेः सिचि, इटि "विभाषोर्णोः" इति ङित्वाद् गुणाभावे उवङि षत्वे ष्टुत्वे च 'और्णुविष्ट' इति रूपम्। ङित्वाभावपक्षे गुणेऽवादेशे 'और्णविष्ट' इति च सिद्धम्। अग्रे—और्णुविषाताम्, और्णविषाताम्, और्णुविषत, और्णविषत। और्णुविष्ठाः, और्णविष्ठाः, और्णुविषाथाम्, और्णविषाथाम्, और्णुविढ्वम्—और्णुविध्वम्, और्णविढ्वम्। और्णविध्वम्। और्णुविषि—और्णविषि। और्णुविष्वहि, और्णविष्वहि। और्णुविष्महि—और्णविष्महि। इति। और्णुविष्यत्। "विभाषोर्णोः" इति ङित्वादुवङ्। ङित्वाभावपक्षे गुणे—और्णविष्यत इति। शेष सुगमम्। एवमात्मनेपदेऽप्यूह्यम्। इत्यदादयः।

जुहोत्यादिभ्य इति। शप इति। "अदिप्रभृतिभ्य" इत्यतस्तदनुवृत्तेरिति भावः। श्लाविति। शेषं पूरयति—धातोर्द्वे स्त इति। "एकाचो द्वे" इत्यतः "लिटि धातोः" इत्यतश्च तदनुवृत्तेरिति भावः। जुहोति। हुधातोर्लटस्तिपि, शपि "जुहोत्यादिभ्यः श्लुः" इति शपः श्लौ, "श्लौ" इति द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इत्यादिहलः शेषे 'हु हु ति' इति जाते "कुहोश्चुः" इति हस्य झत्वे "अभ्यासे चर्च" इति झस्य जत्वे 'जुहु ति' इति भूते "सार्वधातुकार्धधातुकयोः" इति गुणे "जुहोति" इति रूपम्। जुहुतः। तसः "सार्वधातुकमपित्" इति ङित्वान्न गुणः। अदभ्यस्तादिति। अत्र "झोऽन्त" इत्यतो झ इत्यनुवर्तते। जुह्वति। हुधातोर्लटो झौ, शपः श्लौ, द्वित्वेऽभ्यासत्वे पूर्ववदभ्यासकार्ये च कृते, 'जुहु झि' इति स्थिते "उभे अभ्यस्तम्" इत्यभ्यस्तसंज्ञायाम् "अदभ्यस्तात्" इति झेरतादेशे "हुश्नुवोः सार्वधातुके" इति यणि 'जुह्वति' इति रूपम्। अग्रे तु—जुहोषि, जुहुथः, जुहुथ। जुहोमि, जुहुवः, जुहुमः। इति। भीह्रीभृहुवामिति। भी ह्री भृ हु एषां द्वन्द्वात्पञ्चम्यर्थे षष्ठी। "कास्प्रत्ययात्" इत्यत आम् लिटीत्यनु-

होष्यति । जुहोतु, जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि । जुहवानि । अजुहोत् ,
अजुहुताम् । जुसि च ७।३।८३ इगन्ताङ्गस्य गुणः स्यादजादौ जुसि । अजुहवुः ।
जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् । ञिभी भये ॥ २ ॥ बिभेति । भियोऽ-

वर्तते । तदाह—पञ्च इति । श्लुवदिति सप्तम्यन्तात् वतिरित्यभिप्रेत्य आह—आमि
श्लाविव कार्यं चेति । जुहवाञ्चकार । हुधातोर्लिटि "भीह्रीभृहुवां श्लुवच्च" इति पाक्षिके
आमि श्लुवद्भावे च द्वित्वेऽभ्यासकार्ये चुत्वेन झकारे, "अभ्यासे चर्च" इति जश्त्वेन
जकारे गुणेऽवादेशे "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्पर-
कृञोऽनुप्रयोगे लिटस्तिपो णलि द्वित्वे "उरत्" इत्यत्वे रपरे हलादिशेषे "कुहोश्चुः"
इति चुत्वे गुणे रपरे च, 'जुहवाम् च कर् अ' इति स्थिते "अत उपधायाः" इति उप-
धावृद्धौ "मोऽनुस्वारः" इति अनुस्वारे "वा पदान्तस्य" इति वैकल्पिके परसवर्णे 'जुह-
वाञ्चकार' इति रूपं निष्पन्नम् । आमोऽभावपक्षे तु लिटस्तिपो णलि, द्वित्वेऽभ्यासत्वे
परत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे प्राप्ते, "कृताकृतप्रसङ्गी विधिर्नित्यः"
इति नियमेन "अचो ञ्णिति" इति नित्यत्वात् वृद्धौ, अवादेशे च 'जुहाव' इति निष्प-
न्नम् । जुहुवतुः, जुहुवुः, जुहविथ जुहोथ, जुहुवथुः, जुहुव, जुहाव, जुहव, जुहुविव, जुहु-
विम । जुहुधि । हुधातोर्लोटस्सिपो हौ, शपः श्लौ, "श्लौ" इति द्वित्वे चुत्वेन झकारे
"अभ्यासे चर्च" इति चर्त्वेन जकारे "हुझल्भ्यो हेर्धिः" इति हेर्धौ 'जुहुधि' इति
बोध्यम् । जुहवानि । हुधातोर्लोटो मिपि, शपः श्लौ, द्वित्वे अभ्यासकार्ये "कुहोश्चुः"
इति हस्य झत्वे, "अभ्यासे चर्च" इति जश्त्वे सेर्न्यादेशे "आडुत्तमस्य पिच्च" इति
आटि, "हुश्नुवोः" इति यणं बाधित्वा परत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे-
ऽवादेशे च तत्सिद्धिः । अजुहोत् । जुहोतेर्लङि, लङः तिपि शपि, शपः श्लुत्वे "श्लौ"
इति सूत्रेण धातोर्द्वित्वेऽभ्यासकार्ये "कुहोश्चुः" इति हस्य झत्वे, झस्य "अभ्यासे
चर्च" इति जश्त्वेन जकारे "सार्वधातुकार्धधातुकयोः" इति गुणे "इतश्च" इति तिप
इकारलोपे कृते चाटि 'अजुहोत्' इति साधु । तासि—अजुहुताम् । जुसि च । अङ्गस्येत्य-
धिकृतम् । "मिदेर्गुणः" इत्यतः गुण इत्यनुवर्तते । "इको गुणवृद्धी" इति परिभाषया
इक इत्युपस्थितेन अङ्गस्येति विशेषणात्तदन्तविधिः । "क्सस्याचि" इत्यतोऽनुवृत्तेन
अचीत्यनेन जुसीत्यस्य विशेषणात्तदादिविधिस्तदाह—अजादावित्यादिना । अजुहवुः ।
झौ "झेर्जुस्" इति जुसि "जुसि च" इति गुणेऽवादेशे 'अजुहवुः' इति साधु । अजुहोः,
अजुहुतम्, अजुहुत । अजुहवम्, अजुहुव, अजुहुम । जुहुयात् । जुहोतेर्विधिलिङः तिपि,
शपि, शपः श्लुत्वे "श्लौ" इति धातोर्द्वित्वे "कुहोश्चुः" इति हस्य झकारे तस्य
"अभ्यासे चर्च" इति जकारे "यासुट् परस्मैपदेषु" इति यासुडागमे, उटो लोपे, "लिङः
सलोपोऽनन्त्यस्य" इति सलोपे तिप इकारलोपे 'जुहुयात्' इति । हूयात् । आशी-
र्लिङस्तिपि, यासुटि, अनुबन्धलोपे, "स्कोः संयोगाद्योरन्ते च" इति सलोपे "अकृ-

न्यतरस्याम् ६।४।११५ इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः-बिभीतः, बिभ्यति । बिभेषि । बिभयाञ्चकार, बिभाय । भेता । भेष्यति । बिभेतु,

---

त्सार्वधातुकयोर्दीर्घः" इति दीर्घे च हूयादिति रूपम् । अहौषीत् । जुहोतेर्लुङि, अटि, तिपि, च्लौ, च्लेः सिचि इचावितौ तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति ईटि "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ च 'अहौषीत्' इति निष्पन्नम् । अहोष्यत् । जुहोतेर्लृङस्तिपि स्ये गुणे सस्य षत्वे तिप इकारलोपे अटि च 'अहोष्यत्' इति ज्ञेयम् । बिभेति । ञिभी भये इत्यस्माद्धातोः "वर्तमाने लट्" इति लटि, लटस्तिपि, शपि "आदिर्ञिटुडवः" इति ञिकारस्येत्संज्ञायां "तस्य लोपः" इति लोपे "जुहोत्यादिभ्यः श्लुः" इति श्लुत्वे, "श्लौ" इति द्वित्वे 'भी भी ति' इति जाते "पूर्वोऽभ्यासः" इत्यभ्याससंज्ञायां "ह्रस्वः" इत्यभ्यासह्रस्वे "अभ्यासे चर्च" इति भस्य बत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे 'बिभेति' इति। भियोऽन्यतरस्याम् । "इद्दरिद्रस्य" इत्यतः इदिति, "गमहन" इत्यतः क्ङिति इति "ईहल्यघोः" इत्यतः हलीति "अत उत्सार्वधातुके" इत्यतः सार्वधातुके इति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति—इकारो वा स्यादित्यादिना । बिभितः । तसि, शपः श्लुत्वे धातोर्द्वित्वेऽभ्यासस्याचो ह्रस्वत्वे, भस्य बत्वे "भियोऽन्यतरस्याम्" इति ईकारस्य इकारे 'बिभितः' इति । इकाराभावपक्षे तु 'बिभीतः' इति रूपं ज्ञेयम् । बिभ्यति । झौ धातोर्द्वित्वे ह्रस्वत्वे भस्य बत्वे "उभे अभ्यस्तम्" इत्यभ्यस्तसंज्ञायाम् "अदभ्यस्तात्" इति झेरति "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि च कृते 'बिभ्यति' इति रूपम् । बिभेषि । सिपि "सार्वधातुकार्धधातुकयोः" इति गुणे षत्वञ्चेति भावः । बिभिथः, बिभीथः । बिभिथ, बिभीथ । बिभेमि, बिभिवः बिभीवः, बिभिमः बिभीमः । बिभयाञ्चकार । भियो लिटि समागते "भीह्रीभृहुवां श्लुवच्च" इत्यामि, आमः श्लुवद्भावात् "श्लौ" इति द्वित्वे, 'भी भी आम् लिट्' इति स्थिते अभ्यासस्याचो ह्रस्वे, भस्य बत्वे, "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकृञोऽनुप्रयोगे च कृते "लिटिधातोरनभ्यासस्य" इति द्वित्वे "उरत्" इति अदादेशे रपरे, "हलादिः शेषः" इति रलोपे 'बि भी आम् क कृ लिट्' इति जाते "सार्वधातुकार्धधातुकयोः" इति गुणेऽयादेशे च 'बिभयाम् च कृ लिट्' इति स्थिते लिटस्तिपि, तिपो णलि, "कुहोश्चुः" इति कस्य चत्वे, "सार्वधातुकार्धधातुकयोः" इति गुणे रपरे "अत उपधायाः" इति उपधावृद्धौ "मोऽनुस्वारः" इत्यनुस्वारे "वा पदान्तस्य" इति परसवर्णे 'बिभयाञ्चकार' इति साधु । आमोऽभावपक्षे, लिटः तिपि, तिपो णलि धातोर्द्वित्वे, अभ्यासत्वे ह्रस्वत्वे, भस्य बत्वे "अचो ञ्णिति" इति वृद्धौ आयादेशे च 'बिभाय' इति । बिभेतु । भियो लोटि, तिपि, शपि, शपः श्लुत्वे "श्लौ" इति द्वित्वे "ह्रस्वः" इति अभ्यासस्याचो ह्रस्वत्वे "अभ्यासे चर्च" इति भस्य बत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे "एरुः"

विभितात्, विभीतात्। अविभेत्। विभियात्। भीयात्। अभैषीत्। अभेष्यत्। ह्री लज्जायाम् ॥ ३ ॥ जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयाञ्चकार, जिह्राय। ह्रेता। ह्रेष्यति। जिह्रेतु। अजिह्रेत्। जिह्रीयात्। अह्रैषीत्। अह्रेष्यत्। पॄ पालन-

---

इति तिपं इकारस्योत्वे 'बिभेतु' इति। तातङि तु—"भियोऽन्यतरस्याम्" इति विकल्पेन ईकारस्य इकारे 'बिभितात्' इति। पक्षे—'बिभीतात्' इति ज्ञेयम्। तसि—बिभिताम्, बिभीताम्—बिभ्यतु। बिभिहि, बिभीहि, बिभितात्, बिभीतात्, बिभितम्—बिभीतम्, बिभित—बिभीत, बिभयानि, बिभयाव, बिभयाम। अबिभेत्। भीधातोर्लङि अटि तिपि शपि शपः श्लुत्वे "श्लौ" इति द्वित्वे ह्रस्वे भस्य बत्वे तिप इकारलोपे "सार्वधातुकार्ध०" इति गुणे 'अबिभेत्' इति। तसि—अबिभिताम्-अबिभीताम्, अबिभयुः। अबिभेः, अबिभितम्—अबिभीतम्, अबिभित, अबिभीत। अबिभयम्, अबिभिव—अबिभीव, अबिभिम—अबिभीम। अभैषीत्। भीधातोर्लुङि अटि लुङः तिपि, तिप इकारलोपे, च्लौ, च्लेः सिचि, इचावितौ "अस्तिसिचोऽपृक्ते" इति ईटि सस्य षत्वे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ "अभैषीत्" इति रूपम्। तसि—अभैष्टाम्, अभैषुः। अभैषीः, अभैष्टम्, अभैष्ट। अभैषम्, अभैष्व, अभैष्म। जिह्रेति। ह्री लज्जायाम् इत्यस्माद्धातोर्लटः तिपि शपि शपः श्लुत्वे "श्लौ" इति द्वित्वे 'ह्री ह्री ति' इति जाते "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "ह्रस्वः" इति अभ्यासस्याचो ह्रस्वत्वे "कुहोश्चुः" इति हस्य झत्वे "अभ्यासे चर्च" इति झस्य जकारे "सार्वधातुकार्धधातुकयोः" इति गुणे 'जिह्रेति' इति। तसि—जिह्रीतः। झौ "अदभ्यस्तात्" इति झेरति "अचि श्नुधातुभ्रुवाम्" इति इयङि—जिह्रियति। जिह्रेषि, जिह्रीथः, जिह्रीथ। जिह्रेमि, जिह्रीवः, जिह्रीमः। जिह्रयाञ्चकार। ह्रीधातोर्लिटि "भीह्रीभृहुवां श्लुवच्च" इत्यामि श्लुवद्भावाच्च धातोर्द्वित्वे 'ह्री ह्री आम् लिट्' इति जाते अभ्यासत्वे ह्रस्वे "कुहोश्चुः" इति हस्य झत्वे "अभ्यासे चर्च" इति जत्वे "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकृञोऽनुप्रयोगे च 'जि ह्री आम् कृ लिट्' इति भूते, लिटः तिपि, णलि अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति कृञो द्वित्वेऽभ्यासत्वे उरदत्वे हलादिशेषे "कुहोश्चुः" इति कस्य चत्वे "सार्वधातुकार्ध०" इति गुणेऽयादेशे 'जिह्रयाम् च कृ अ' इति जाते, पुनः "सार्वधातुकार्धधातुकयोः" इत्यनेन कृ इत्यस्य गुणे रपरे च "अत उपधायाः" इति वृद्धौ "मोऽनुस्वारः" इति अनुस्वारे "वा पदान्तस्य" इति परसवर्णे ञकारे च जाते 'जिह्रयाञ्चकार' इति। आमभावपक्षे लिटस्तिपि तिपो णलि धातोर्द्वित्वे रलोपे हस्य झत्वे "अचो ञ्णिति" इति वृद्धौ आयादेशे च 'जिह्राय' इति सिद्धम्। जिह्रीयात्। विधिलिङस्तिपि, शपि, शपः श्लुत्वे, धातोर्द्वित्वेऽभ्यासत्वे ह्रस्वत्वे रलोपे हस्य झत्वे झस्य जकारे यासुटि उद्यो लोपे तिप इकारलोपे "लिङः सलोपोऽनन्त्यस्य" इत्यनेन सलोपे 'जिह्रीयात्' इति।

पूरणयोः ॥ ४ ॥ **अर्तिपिपर्त्योश्च** ७।४।७७ अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । पिपर्ति । **उदोष्ठ्यपूर्वस्य** ७।१।१०२ अङ्गावयवौष्ठ्यपूर्वो य ऋत् तदन्तस्याङ्गस्य उत्स्यात् । **हलि च** ८।२।७७ रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात् हलि । पिपूर्तः । पिपुरति । पपार । **शॄदॄप्रां ह्रस्वो वा** ७।४।१२ एषां किति लिटि ह्रस्वो वा स्यात् । पप्रतुः । **ऋच्छत्यॄताम्** ७।४।११ तौदादिकऋच्छेर्ऋधातोः ॠतां च गुणः स्यात् लिटि । पपरतुः । पपरुः । **वृतो वा** ७।२।३८ वृङ्वृञ्भ्यामॄद-

---

जिह्रीयाताम्, जिह्रीयुः । जिह्रीयाः, जिह्रीयातम्, जिह्रीयात । जिह्रीयाम्, जिह्रीयाव, जिह्रीयाम । अह्रैषीत् । ह्रीधातोर्लुङस्तिपि, च्लौ, च्लेः सिचि, इचो लोपे तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति ईटि सस्य षत्वे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ अटि च 'अह्रैषीत्' इति रूपम् । अह्रैष्टाम्, अह्रैषुः । अह्रैषीः, अह्रैष्टम्, अह्रैष्ट । अह्रैषम्, अह्रैष्व, अह्रैष्म । अर्तिपिपर्त्योश्चेति । "अत्र लोपः" इत्यस्मादभ्यासस्येति "भृञामित्" इत्यस्मात् इदिति "निजां त्रयाणां गुणः श्लौ" इत्यतः श्लाविति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति—अभ्यासस्येत्यादिना । पिपर्ति । पॄपालनपूरणयोरित्यस्माद्धातोर्लटस्तिपि, शपि, शपः श्लुत्वे, "श्लौ" इति द्वित्वे 'पॄ पॄ ति' इति स्थिते "अर्तिपिपर्त्योश्च" इत्यभ्यासस्येकारान्तादेशे 'पिपॄ ति' इति जाते "सार्वधातुकार्ध०" इति गुणे 'पिपर्ति' इति साधु । उदोष्ठ्यपूर्वस्येति । "ॠत इद्धातोः" इत्यतः ॠत इत्यनुवर्तते । अङ्गस्येत्यधिकृतमिहानुवृत्तमावर्तते । एकमवयवषष्ठ्यन्तम्, ओष्ठ्यस्य विशेषणम् । अपरं तु ॠता विशेष्यते । तदन्तविधिः । तदाह—अङ्गावयवौष्ठ्येत्यादिना । हलि च । "र्वोरुपधाया दीर्घ इकः" इत्यनुवर्तते । "सिपि धातोः" इत्यतो धातोरिति च । तच्च र्वोरित्यनेन विशेष्यते । तदन्तविधिः । तदाह—रेफवान्तस्येत्यादिना । पिपूर्तः । पॄधातोर्लटस्तसि, श्लौ "श्लौ" इति धातोर्द्वित्वेऽभ्यासकार्ये "अर्तिपिपर्त्योश्च" इत्यभ्यासस्येकारान्तादेशे रपरत्वे हलादिशेषे "उदोष्ठ्यपूर्वस्य" इति उत्वे, रपरे च कृते । "हलि च" इति दीर्घत्वे सस्य रुत्वे विसर्गे च 'पिपूर्तः' इति रूपं भवति । पिपुरति । झौ, धातोर्द्वित्वेऽभ्यासकार्ये "अर्तिपिपर्त्योश्च" इत्यभ्यासस्येकारान्तादेशे "उभे अभ्यस्तम्" इति अभ्याससंज्ञायाम् "अदभ्यस्तात्" इति झेरति "उदोष्ठ्यपूर्वस्य" इति उकारे रपरे च 'पिपुरति' इति सिद्धं भवति । पिपर्षि, पिपूर्थः, पिपूर्थ । पिपर्मि, पिपूर्वः, पिपूर्मः । पपार । पॄधातोर्लिटस्तिपि णलि धातोर्द्वित्वेऽभ्यासत्वे 'पॄ पॄ अ' इति स्थिते "ह्रस्वः" इति अभ्यासस्याचो ह्रस्वे "उरत्" इति रपरे अदादेशे 'पर् पॄ अ' इति जाते "हलादिः शेषः" इति र्लोपे "अचो ञ्णिति" इति वृद्धौ प्राप्तायां "सार्वधातुकार्ध०" इति गुणे "अत उपधायाः" इति वृद्धौ 'पपार' इति रूपं बोध्यम् । शॄदॄप्रां ह्रस्वो वा । शॄ दॄ पॄ एषां द्वन्द्वः । लिटीति । "दयतेर्दिगि लिटि" इत्यतः तदनुवृत्तेरिति भावः । पप्रतुः । पॄधातोर्लिटस्तसि तसोऽतुसि धातोर्द्वित्वेऽभ्यासत्वे, ह्रस्वे अकारे रपरे रलोपे, "शॄ दॄ प्रां ह्रस्वो वा" इति ऋका-

न्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । परिता, परीता । परिष्यति, परीष्यति । पिपर्तु ।

रस्य ह्रस्वे "इको यणचि" इति यणि सस्य रुत्वे विसर्गे च 'पप्रतुः' इति भवति । ऋच्छत्यृताम् । "दयतेर्दिगिलिटि" इत्यतो लिटीति,"ऋतश्च संयोगादेर्गुण" इत्यतो गुण इति चानुवर्तते इति भावः । पक्षे-"ऋच्छत्यृताम्" इति ऋकारस्य गुणे विहिते 'पपरतुः' इति । झौ झेरुसि द्वित्वेऽभ्यासादिकार्ये अभ्यासस्य अकारे रपरे रलोपे च "श्रृदृप्रां ह्रस्वो वा" इति ऋकारस्य ह्रस्वे यणि च 'पप्रुः' इति । ह्रस्वाभावपक्षे गुणे 'पपरुः' इति रूपद्वयम् । सिपि-पपरिथ, पप्रथुः-पपरथुः, पप्र-पपर । पपार-पपर, पप्रिव-पपरिव, पप्रिम-पपरिम । परिता । पृधातोर्लुटस्तिपि तासि तिपो डात्वे "डित्वसामर्थ्यादभस्यापि टेर्लोपः" इति टिलोपे "आर्धधातुकस्येड्वलादेः" इति इटि कृते 'पृ इ ता' इति जाते "सार्वधातुकार्ध०" इति गुणे "वृतो वा" इति विकल्पेनेटो दीर्घे 'परीता' । दीर्घाभावे 'परिता' इति साधु । पिपर्तु । पृधातोर्लोटस्तिपि शपि, शपः श्लुत्वे, "श्लौ" इति धातोर्द्वित्वे "अर्तिपिपर्त्योश्च" इति अभ्यासस्येकारान्तादेशे "सार्वधातुकार्धधातुकयोः" इति गुणे "एरुः" इति तिप इकारस्योत्वे 'पिपर्तु' इति रूपम् । पिपूर्तात्, पिपूर्ताम्, पिपुरतु । पिपूर्हि-पिपूर्तात्, पिपूर्तम्, पिपूर्त । पिपराणि, पिपराव, पिपराम । अपिपः । पृधातोर्लङस्तिपि शपि शपः श्लुत्वे "श्लौ" इति द्वित्वेऽभ्यासत्वे "अर्तिपिपर्त्योश्च" इति अभ्यासस्य इदन्तादेशे तिप इकारलोपे "सार्वधातुकार्ध०" इति गुणे कृते 'अपिपर् त्' इति जाते "हल्ङ्याब्भ्य" इति त्लोपे "खरवसानयोर्विसर्जनीयः" इति विसर्गे अटि 'अपिपः' इति साधु । अपिपूर्ताम् । तसि, तसस्तामि, धातोर्द्वित्वेऽभ्यासस्य इदन्तादेशे 'पिपृताम्' इति जाते "उदोष्ठ्यपूर्वस्य" इति उकारे रपरे च 'पिपुर् ताम्' इति जाते "हलि च" इत्युपधाया इको दीर्घेऽटि च 'अपिपूर्ताम्' इति । झौ—शपि शपः श्लुत्वे "श्लौ" इति धातोर्द्वित्वे "अर्तिपिपर्त्योश्च" इत्यभ्यासस्य इदन्तादेशे "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसि जस्येत्संज्ञायां लोपे च "जुसि च" इति गुणे, सस्य रुत्वे विसर्गेऽटि च 'अपिपरुः' इति रूपं ज्ञेयम् । सिपादौ-अपिपः, अपिपूर्तम्, अपिपूर्त । अपिपरम्, अपिपूर्व, अपिपूर्म । पिपूर्यात् । पृधातोर्विधिलिङस्तिपि, शपि, शपः श्लुत्वे "श्लौ" इति द्वित्वे "अर्तिपिपर्त्योश्च" इत्यभ्यासस्येदन्तादेशे यासुटि उटि गते लिङः सलोपे, तिप इकारलोपे "उदोष्ठ्यपूर्वस्य" इति उकारे रपरे च "हलि च" इत्युपधाया इको दीर्घे 'पिपूर्यात्' इति बोध्यम् । पिपूर्याताम्, पिपूर्युः । पिपूर्याः, पिपूर्यातम्, पिपूर्यात । पिपूर्याम्, पिपूर्याव । पिपूर्याम । पूर्यात् । आशीर्लिङस्तिपि यासुटि उटो लोपे तिप इकारलोपे "स्कोः" इति सलोपे "उदोष्ठ्यपूर्वस्य" इति उकारे रपरे च जाते "हलि च" इत्युपधाया इको दीर्घत्वे 'पूर्यात्' इति । अपारीत् । पृधातोर्लुङस्तिपि च्लौ, च्लेः सिचि, इचो लोपे, "आर्धधातुकस्येड्वलादेः" इति इटि, तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति ईटि "इट ईटि" इति सलोपे "अकः सवर्णे दीर्घः"

अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत् । **सिचि च परस्मैपदेषु ७।२।४०** अत्र इटो न दीर्घः । अपारिष्टाम् । अपरीष्यत् , अपरिष्यत् , । **ओहाक् त्यागे ॥ ५ ॥** जहाति । **जहातेश्च ६।४।११६** इत् वा स्याद्धलादौ क्ङिति सार्वधातुके । जहितः । **ई हल्यघोः ६।४।११३** श्नाभ्यस्तयोरात ईत्स्यात् सार्वधातुके क्ङिति हलि न तु घोः । जहीतः । **श्नाभ्यस्तयोरातः ६।४।११२** अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके । जहति । जहौ । हाता । हास्यति ।

---

इति दीर्घत्वे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ अङ्गस्याडागमे, 'अपारीत्' इति । सिचि च परस्मैपदेषु । अत्रेति । परस्मैपदपरके सिचि वृङ्वृञ्भ्यामॄ ऋदन्ताच्च परस्य इटो दीर्घो नेत्यर्थः । "न लिङि" इत्यतो नेत्यनुवर्तते । अपारिष्टाम् । तसि तसस्तामि "वृतो वा" इति दीर्घत्वे प्राप्ते, "सिचि च परस्मैपदेषु" इति इटो दीर्घत्वाभावे—अपारिष्टाम्, अपारिषुः । अपारीः अपारिष्टम्, अपारिष्ट । अपारिषम्, अपारिष्व, अपारिष्म । अपरिष्यत् । पृधातोर्लृङस्तिपि स्ये इटि तिप इकारलोपे सस्य षत्वे गुणे "वृतो वा" इति दीर्घे 'अपरीष्यत्' इति, दीर्घत्वाभावे 'अपरिष्यत्' इति रूपद्वयं ज्ञेयम् । जहाति । ओहाक् त्यागे इत्यस्माद्धातोः लटस्तिपि शपि शपः श्लुत्वे "श्लौ" इति द्वित्वे "ह्रस्वः" इति अभ्यासस्याचो ह्रस्वे "कुहोश्चुः" इति हस्य झत्वे झस्य जत्वे 'जहाति' इति सिद्धम् । जहातेश्च । "इद्दरिद्रस्य" इत्यत इदिति "भियोऽन्यतरस्याम्" इत्यतोऽन्यतरस्याम् इति "गमहन" इत्यतः क्ङिति, "अत उत्सार्वधातुके" इत्यतः हलीति चानुवर्तते, तदाह—इत्स्याद्वेति । जहितः । तसि शपः श्लौ, द्वित्वे ह्रस्वे हस्य झत्वे, झस्य जत्वे "सार्वधातुकमपित्" इति तसो ङिद्वद्भावे "जहातेश्च" इति हकारोत्तरवर्तिन आकारस्य इकारादेशे 'जहितः' इति । ई हल्यघोः । ई इतिलुप्तप्रथमाकम् । "श्नाभ्यस्तयोरातः" इत्यनुवर्तते । "गमहन" इत्यतः क्ङितीति "अत उत्सार्वधातुके" इत्यतः सार्वधातुके इति चानुवर्तते, तदाह—श्नाभ्यस्तयोरित्यादिना । पक्षे—"ई हल्यघोः" इति आकारस्य ईकारे 'जहीतः' इति सिद्धम् । श्नाभ्यस्तयोरातः । "गमहन" इत्यतः लोपः क्ङितीत्यनुवर्तते "अत । उत्" इत्यतः सार्वधातुके इति, तदाह—अनयोरिति । जहति । झौ धातोर्द्वित्वेऽभ्यासस्याचो ह्रस्वे "कुहोश्चुः" इति हस्य झत्वे "अभ्यासे चर्च" इति अभ्यासझकारस्य जश्त्वे "उभे अभ्यस्तम्" इति अभ्यस्तसंज्ञायाम् "अदभ्यस्तात्" इति झेरति 'ज हा अति' इति दशायां "सार्वधातुकमपित्" इति ङिद्वत्वे "श्नाभ्यस्तयोरातः" इत्याकारलोपे कृते संयोगे 'जहति' इति सिद्धं भवति । जहासि, जहिथः—जहीथः, जहिथ—जहीथ । जहामि । जहिवः—जहीवः, जहिमः—जहीमः । जहौ । हाधातोर्लिट् लकारे, तस्य तिबादेशे तिपः स्थाने णलि जाते 'हा अ' इति दशायां "लिटि धातोरनभ्यासस्य" इति धातोर्द्वित्वेऽभ्यासस्य ह्रस्वे "कुहोश्चुः" इति हस्य झत्वे, झस्य जत्वे 'जहा अ' इति

जहातु, जहितात्, जहीतात् । आ च हौ ६।४।११७ जहातेर्हौ परे आत्स्याच्चादि-
दीतौ । जहाहि, जहिहि, जहीहि । अजहात् । अजहुः । लोपो यि ६।४।११
जहातेरालोपः स्यात् यादौ सार्वधातुके । जह्यात् । "एर्लिङि" । हेयात् । अहासीत् ।
अहास्यत् । माङ् माने शब्दे च ॥ ६ ॥ भृञामित् ७।४।७६ भृञ् माङ् ओहाङ्

स्थिते "आत औ णलः" इति णल औत्वे "वृद्धिरेचि" इति वृद्धौ 'जहौ' इति बोध्यम् ।
अग्रे तु-जहतुः, जहुः । जहिथ-जहाथ, जहथुः, जह । जहौ, जहिव, जहिम । इति ।
जहातु । हाधातोः "लोट् च" इति लोट् लकारे, लस्य तिबादेशे शपि, शपः श्लुत्वे
"श्लौ" इति द्वित्वेऽभ्यासकार्ये "ह्रस्वः" इति अभ्यासस्याचो ह्रस्वत्वे "कुहोश्चुः"
इति हस्य झत्वे "अभ्यासे चर्च" इति झस्य जत्वे, तिप इकारोत्वे कृते 'जहातु' इति
रूपम् । तातङि-"जहातेश्च" इत्याकारस्य इकारे 'जहितात्' इति, पक्षे-"ई हल्यघोः"
इति ईत्वे कृते 'जहीतात्' इति रूपत्रयं सिद्ध्यति । आच हौ । "जहातेश्च" इत्यतस्तद-
नुवृत्तेरिति भावः । जहाहि । हाधातोर्लोटः स्थाने मध्यमपुरुषैकवचने सिबादेशे "सेर्ह्य-
पिच्च" इति सिपः स्थाने हिआदेशे शपि, शपः श्लौ "श्लौ" इति द्वित्वेऽभ्यासत्वे
"ह्रस्वः" इति अभ्यासस्याचो ह्रस्वत्वे "कुहोश्चुः" इति कुत्वेन हस्य झत्वे "अभ्यासे चर्च"
इति झस्य जत्वे "आच हौ" इति आत्वे 'जहाहि' इति । इकारे विहिते तु 'जहिहि' ईत्वे
च 'जहीहि' इति रूपत्रयं बोध्यम् । अग्रे रूपाणीत्थम्-जहितात्-जहीतात् । जहितम्-
जहीतम्, जहित-जहीत । जहानि, जहाव, जहाम । अजहात् । हाधातोर्लङस्तिपि शपि
शपः श्लुत्वे द्वित्वेऽभ्यासकार्ये हकारस्य झत्वे झस्य जत्वे तिपः इकारलोपे अटि च
'अजहात्' इति । अजहिताम्—अजहीताम् । अजहुः । जहातेर्लङो झौ "सिजभ्यस्त-
विदिभ्यश्च" इति झेर्जुसि अनुबन्धलोपे "श्नाभ्यस्तयोरातः" इति आलोपे 'अजहुः'
इति । अजहाः, अजहितम्-अजहीतम्, अजहित—अजहीत । अजहाम्, अजहिव-अज-
हीव, अजहिम-अजहीम । लोपोऽयि । "जहातेश्च" इत्यतो जहातेरिति "श्नाभ्यस्तयो-
रातः" इत्यतः आत इति "अत उत्सार्वधातुके" इत्यतः सार्वधातुके इति चानुवर्तते ।
यि इति सप्तम्यन्तं सार्वधातुकविशेषणम् । तदादिविधिस्तदाह—जहातेरित्यादिना ।
जह्यात् । हाधातोर्विधिलिङस्तिबादेशे शपः श्लुत्वे धातोर्द्वित्वेऽभ्यासकार्ये "इतश्च"
इति तिप इकारलोपे हकारस्य झत्वे झकारस्य जश्त्वेन जकारे यासुटि उटावितौ "लिङः
सलोपोऽनन्त्यस्य" इति सलोपे "लोपो यि" इति हकाराकारलोपे 'जह्यात्' इति रूपं
सिद्धं भवति । हेयात् । आशीर्लिङस्तिपि यासुटि उटावितौ तिप इकारलोपे "स्कोः
संयोगाद्योरन्ते च" इति सलोपे "एर्लिङि" इति हकाराकारस्य एत्वे 'हेयात्' इति रूपं
भवति । अहासीत् । हाधातोर्लुङि अटि लः स्थाने तिपि च्लौ च्लेः सिचि इचोलोपे
तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति इटि "यमरमनमातां सक् च" इति धातोः
सकागमे सिच इटि च "इट ईटि" इति सलोपे सवर्णदीर्घे च उक्तं रूपं सिद्धम् । भृञा-

एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ। मिमीते। मिमाते। मिमते। ममे। माता। मास्यते। मिमीताम्। अमिमीत। मिमीत। मासीष्ट। अमास्त। अमास्यत। ओहाङ् गतौ ॥ ७ ॥ जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। जिही-

---

मित्। भृञामितिबहुवचनात् भृञादीनामिति लभ्यते "अत्र लोपोऽभ्यासस्य" इत्यतः अभ्यासस्येति "णिजां त्रयाणां गुणः श्लौ" इत्यतः त्रयाणां श्लौ इति चानुवर्तते, तथाच— भृञ् माङ् इति। मिमीते। माङ्माने शब्दे च इत्यस्माद्धातोर्लट्लकारे तत्स्थाने तिपि शपः श्लुत्वे "श्लौ" इतिद्वित्वे "भृञामित्" इत्यभ्यासस्य इत्वे "ई हल्यघोः" इति आकारस्य ईत्वे "टित आत्मनेपदानां टेरे" इति। टेरेत्वे च विहिते 'मिमीते' इति साधु। मिमाते। माधातोर्लटि आतामि टेरेत्वे शपः श्लौ "श्लौ" इति द्वित्वे ह्रस्वे "भृञामित्" इति अभ्यासस्य इत्वे "श्नाभ्यस्तयोरातः" इत्यालोपे च उक्तं रूपं सिद्धम्। मिमते। झौ टेरेत्वे शपः श्लौ "श्लौ" इति द्वित्वेऽभ्यासत्वे "ह्रस्वः" इति ह्रस्वत्वे "भृञामित्" इति इत्वे "उभे अभ्यस्तम्" इत्यभ्यस्तसंज्ञायाम् "अदभ्यस्तात्" इति झस्य अति "श्नाभ्यस्तयोरातः" इति आलोपे 'मिमते' इति। मिमीषे, मिमाथे, मिमीध्वे। मिमे, मिमीवहे, मिमीमहे। ममे। माधातोर्लिटस्ते "लिटस्तझयोरेशिरेच्" इति एशि द्वित्वेऽभ्यासकार्ये आलोपे च रूपसिद्धिः। ममाते, ममिरे, ममिषे, ममाथे, ममिध्वे। ममे, ममिवहे, ममिमहे। मिमीताम्। माधातोर्लोटस्ते समागते शपि, शपः श्लुत्वे "श्लौ" इति द्वित्वेऽभ्यासकार्ये "भृञामित्" इति इत्वे "ई हल्यघोः" इति आकारस्य ईत्वे 'मिमी त' इति स्थिते टेरेत्वे "आमेतः" इति एकारस्य स्थाने आमि 'मिमीताम्' इति रूपम्। मिमाताम्, मिमताम्। मिमीष्व, मिमाथाम्, मिमीध्वम्। मिमै, मिमावहै, मिमामहै। अमिमीत। माङ्धातोर्लङि अटि लः स्थाने तादेशे शपः श्लुत्वे "श्लौ" इति द्वित्वेऽभ्यासकार्ये "भृञामित्" इति इकारे "ई हल्यघोः" इति ईत्वे 'अमिमीत' इति जायते। अमिमाताम्, अमिमत। अमिमीथाः, अमिमाथाम् अमिमीध्वम्। अमिमि, अमिमीवहि, अमिमीमहि। अमास्त। माधातोर्लुङि अटि लः स्थाने तादेशे च्लौ च्लेः सिचि इचावितौ 'अमास्त' इति। अमासाताम्, अमासत, अमास्थाः, अमासाथाम्, अमाध्वम्। अमासि, अमास्वहि, अमास्महि। इति। जिहीते। ओहाङ्गतौ अस्मात् धातुतो लटि समागते लः स्थाने ते शपि शपः श्लुत्वे "श्लौ" इति द्वित्वे अभ्याससंज्ञायां "भृञामित्" इत्यभ्यासस्य इकारे "कुहोश्चुः" इति हस्य झत्वे "अभ्यासे चर्च" इति झस्य जत्वे "ई हल्यघोः" इत्याकारस्य ईत्वे टेरेत्वे च कृते 'जिहीते' इति निष्पन्नम्। जिहाते, जिहते। जिहीषे, जिहाथे, जिहीध्वे। जिहे, जिहीवहे, जिहीमहे। जहे। ओहाङ्गतौ अस्मात् लिटि ते समागते "लिटि धातोरनभ्यासस्य" इति धातोर्द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "ह्रस्वः" इत्यभ्यासस्याचो ह्रस्वे कृते "कुहोश्चुः" इति हस्य झत्वे "अभ्यासे चर्च" इति झस्य जत्वे 'जहा त' इति जाते "लिटस्तझयोरेशिरेच्" इति तस्यैशि "आतो लोप

ताम् । अजिहीत । जिहीत । हासीष्ट । अहास्त । अहास्यत । डुभृञ् धारणपोषणयोः ॥ ८ ॥ बिभर्ति । बिभृतः । बिभ्रति । बिभृते । बिभ्राते । बिभ्रते । बिभराञ्चकार । बभार । बभर्थ । बभृव । बिभराञ्चक्रे । बभ्रे । भर्ता । भरिष्यति, भरि-

---

इटि च" इत्याकारलोपे 'जहे' इति रूपम् । जहाते, जहिरे । जहिषे, जहाथे, जहिध्वे जहे, जहिवहे, जहिमहे । जिहीताम् । हाधातोर्लोटस्ते समागते शपि, शपः श्लुत्वे "श्लौ" इति धातोर्द्वित्वेऽभ्यासत्वे "भृञामित्" इति अभ्यासस्य इत्वे "कुहोश्चुः" इति हस्य झत्वे झस्य जत्वे "ई हल्यघोः" इति ईकारे टेरेत्वे "आमेतः" इति लोट एकारस्य आमि च कृते 'जिहीताम्' इति रूपम् । जिहाताम्, जिहताम् । जिहीष्व, जिहाथाम् । जिहीध्वम् । जिहै, जिहावहै, जिहामहै । अजिहीत । ओहाङ्धातोर्लङस्ते शपि, शपः श्लुत्वे "श्लौ" इति धातोर्द्वित्वेऽभ्यासत्वे "ह्रस्वः" इति ह्रस्वे "भृञामित्" इत्यभ्यासस्य इकारे "कुहोश्चुः" इति हस्य झत्वे "अभ्यासे चर्च" इति झस्य जत्वे "ई हल्यघोः" इति ईकारे अटि च 'अजिहीत' इति सिद्ध्यति । अजिहाताम्, अजिहत । अजिहीथाः, अजिहाथाम्, अजिहीध्वम् । अजिहे, अजिहीवहि, अजिहीमहि । जिहीत । ओहाङ्धातोर्विधिलिङि, लिङः तादेशे शपि शपः श्लुत्वे, "श्लौ" इति द्वित्वेऽभ्यासकार्ये हस्य झत्वे झस्य जत्वे "लिङः सीयुट्" इति सीयुटि, उटो लोपे "लोपो व्योर्वलि" इति यलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "श्नाभ्यस्तयोरातः" इति आकारलोपे 'जिहीत' इति रूपं सिद्धं भवति । जिहीयाताम्, जिहीरन् । जिहीथाः, जिहीयाथाम्, जिहीध्वम् । जिहीय, जिहीवहि, जिहीमहि । अहास्त । लुङि, अटि, ते, "च्लि लुङि" इति च्लौ "च्लेःसिच्" इति सिचि इचो लोपे 'अहास्त' इति रूपं ज्ञेयम् । अहासाताम्, अहासत । अहास्थाः, अहासाथाम्, अहाध्वम्, अहासि, अहास्वहि, अहास्महि ॥ बिभर्ति । भृञ्धातुतो लटि, लटः तिपि, शपि, शपः श्लुत्वे, धातोर्द्वित्वेऽभ्यासत्वे 'भृ भृ ति' इति स्थिते अभ्याससंज्ञायाम् "भृञामित्" इति इत्वे रपरत्वे "हलादिः शेषः" इति र्लोपे "अभ्यासे चर्च" इति भस्य बत्वे 'बिभृति' इति जाते, तिपः सार्वधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे 'बिभर्ति' इति रूपम् । एवं 'बिभृतः' इति । बिभ्रति । झौ समागते "श्लौ" इति द्वित्वादिकार्ये च कृते "भृञामित्" इति अभ्यासस्य इत्वे "उभे अभ्यस्तम्" इति अभ्याससञ्ज्ञायाम् "अदभ्यस्तात्" इति झस्याति "इको यणचि" इति यणि 'बिभ्रति' इति । अग्रे त्वेवम्–बिभर्षि, बिभृथः, बिभृथ । बिभर्मि, बिभृवः, बिभृमः । इति बिभराञ्चकार । भृञो लिटि "भीह्रीभृहुवां श्लुवच्च" इति आमि श्लुवद्भावे, तेन द्वित्वे अभ्यासादिकार्ये "भृञामित्" इति इत्वे च कृते, पुनः धातोश्च गुणेऽकारे रपरे च "आमः" इति लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकृञोऽनुप्रयोगे लिटस्तिपि, तिपो णलि द्वित्वादि कार्ये "सार्वधातुकार्ध०" इति गुणेऽकारे रपरे च उपधावृद्धौ "मोऽनु-

ष्यते । बिभर्तु । बिभराणि । बिभृताम् । अबिभः । अबिभृताम् । अबिभरुः । अबिभृत । बिभृयात् । बिभ्रीत । भ्रियात् । भृषीष्ट । अभार्षीत् । अभृत । अभरिष्यत् । अभरिष्यत । डुदाञ् दाने ॥९॥ ददाति । दत्तः । ददति । दत्ते । ददाते ।

---

स्वारः" इति आमो मकारस्य अनुस्वारे "वा पदान्तस्य" इति परसवर्णे चोक्तं रूपं सिद्धम् । आमोऽभावपक्षे तु—धातोर्द्वित्वेऽभ्यासत्वे 'भृ भृ अ' इति स्थिते "उरत्" इति अकारे रपरे "हलादिः शेषः" इति रलोपे "अभ्यासे चर्च" इति भस्य बत्वे परत्वात् "सार्वधातुकार्ध०" इति गुणे "अत उपधायाः" इति उपधाया वृद्धौ जातायां 'बभार' इति रूपम् । आत्मनेपदे—'बिभराञ्चक्रे' 'बभ्रे' इति रूपद्वयं ज्ञेयम् । बिभृताम् । भृधातोर्लोटस्ते शपः श्लुत्वे "श्लौ" इति द्वित्वेऽभ्यासादिकार्ये टेरेत्वे, "आमेतः" इति एकारस्यामि 'बिभृताम्' इति भवति । बिभ्राताम् , बिभ्रताम् । बिभृष्व, बिभ्राथाम् , बिभृध्वम् । बिभरै, बिभरावहै, बिभरामहै । अबिभः । भृधातोर्लिङस्तिपि शपि शपः श्लुत्वे "श्लौ" इति द्वित्वे अभ्यासकार्ये "भृञामित्" इति इकारे भस्य बत्वे "सार्वधातुकार्ध०" इति गुणे रपरत्वे तिप इकारलोपे "हल्ङ्याब्भ्यो०" इति त्लोपे "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गे अटि च 'अबिभः' इति जातम् । सिपि—अबिभः, अबिभृतम् , अबिभृत । अबिभरम् , अबिभृव, अबिभृम । आत्मनेपदे तु अबिभृत । आतामि—अबिभ्राताम् , अबिभ्रत । अबिभृथाः, अबिभ्राथाम् , अबिभृध्वम् । अबिभ्रि, अबिभृवहि, अबिभृमहि । बिभृयात् । विधिलिङस्तिपि शिपि शपः श्लुत्वे "श्लौ" इति द्वित्वेऽभ्यासादिकार्ये "भृञामित्" इति इकारे यासुटि उटावितौ "लिङः सलोपोऽनन्त्यस्य" इति सलोपे तिप इकारलोपे 'बिभृयात्' इति निष्पन्नम् । बिभ्रीत । विधिलिङस्ते शपि शपः श्लुत्वे द्वित्वादिकार्ये सीयुटि उटावितौ "लोपो व्योर्वलि" इति यलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "इको यणचि" इति यणि 'बिभ्रीत' इति रूपम् । आशीर्लिङस्तिपि समागते यासुडागमे "रिङ्शयग्लिङ्क्षु" इति ऋकारस्य रिङादेशे सलोपे तिप इकारलोपे च कृते 'भ्रियात्' । आत्मनेपदे आशीर्लिङस्ते सीयुडागमे उटावितौ "लोपो व्योर्वलि" इति यलोपे "सुट्तिथोः" इति सुटि उटो लोपे द्वयोस्सकारयोः षत्वे तस्य टत्वे "उश्च" इति कित्वाद्गुणाभावे 'भृषीष्ट' । इति साधु । अभार्षीत् । बिभर्तेर्लुङि अटि लः स्थाने तिपि च्लौ च्लेः सिचि इचावितौ तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति ईटि "सिचि वृद्धिः० इति वृद्धौ 'अभार्षीत्' इति । अभार्ष्टाम्, अभार्षुः । अभार्षीः, अभार्ष्टम्, अभार्ष्ट । अभार्षम् । अभार्ष्व अभार्ष्म । अभृत । आत्मनेपदे लुङस्तादेशे च्लौ च्लेः सिचि "ह्रस्वादङ्गात्" इति सिचो लुकि "उश्च" इति कित्वाद् "क्ङिति च" इति गुणनिषेधे 'अभृत' इति । अभृषाताम् , अभृषत । अभृथाः, अभृषाथाम्, अभृढ्वम् । अभृषि, अभृष्वहि । अभृष्महि । ददाति । डुदाञ्दाने इति धातुतो लटस्तिपि शपि शपः श्लुत्वे "श्लौ"इति द्वित्वे अभ्यासादि-

ददते। ददौ। ददे। दाता। दास्यति। दास्यते। ददातु। दाधाघ्वदाप् १।१। २० दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। "घ्वसोः" इत्येत्वम्। देहि। दत्ताम्। अददात्। अदत्त। दद्यात्। ददीत। देयात्। दासीष्ट। अदात्।

---

कार्ये "ह्रस्वः" इति अभ्यासस्याचो ह्रस्वे 'ददाति'। तसि–धातोर्द्वित्वे कृते अभ्यासत्वे ह्रस्वत्वे "उभे अभ्यस्तम्"इति अभ्यस्तसंज्ञायां "श्नाभ्यस्तयोरातः"इत्याकारलोपे "खरि च"इति दस्य तकारे सस्य रुत्वे रेफस्य च विसर्गे 'दत्तः'इति सिद्धम्। झौ–द्वित्वेऽभ्यासत्वेऽभ्यासस्याचो ह्रस्वे "उभे अभ्यस्तम्"इति अभ्यस्तसंज्ञकत्वात् "अदभ्यस्तात्" इति झेरति "श्नाभ्यस्तयोरातः"इत्याकारलोपे च कृते 'ददति'। ददासि, दत्थः, दत्थ। ददामि, दद्वः, दद्मः। दत्ते। आत्मनेपदे लटि तादेशे टेरेत्वे द्वित्वेऽभ्यासादिकार्ये ह्रस्वे "श्नाभ्यस्तयोरातः" इत्याकारलोपे "खरि च" इति दस्य तत्वे 'दत्ते' इति रूपं बोध्यम्। ददाते, ददते। दत्से, ददाथे, दद्ध्वे। ददे, दद्वहे, दद्महे। ददौ। दाधातुतो लिटस्तिपि तिपो णलि "लिटि धातोरनभ्यासस्य" इति धातोर्द्वित्वे "ह्रस्वः" इति ह्रस्वे "आत औ णलः" इति णलः स्थाने औत्वे "वृद्धिरेचि" इति वृद्धौ 'ददौ' इति साधु। ददतुः, ददुः। ददिथ, ददाथ, ददथुः, दद। ददौ, ददिव, ददिम। ददे, ददाते, ददिरे। ददिषे, ददाथे, ददिध्वे। ददे, ददिवहे, ददिमहे। ददातु। लोटस्तिपि शपि शपः श्लौ "श्लौ" इति द्वित्वेऽभ्यासत्वे ह्रस्वे "एरुः" इति तिप इकारस्योत्वे 'ददातु'। दत्तात्, दत्ताम्, ददतु। दाधाघ्वदाप्। देत्यनेन स्वाभाविकाकारान्तयोः 'डुदाञ् दाने' 'दाण् दाने' इत्यनयोः, कृतात्वयोः दो अवखण्डने 'देङ् रक्षणे' इत्यनयोः लाक्षणिकयोश्च, धेत्यनेन स्वाभाविकाकारान्तस्य 'डुधाञ् धारणपोषणयोः' इत्यस्य लाक्षणिकस्य 'धेट् पाने' इत्यस्य च ग्रहणम्। 'गामादाग्रहणेष्वविशेषः' इति परिभाषाबलात्। तत्र दाग्रहणेन धारूपस्यापि ग्रहणाच्च। अत एव "दो दद्घोः" इत्यत्र धेर्निवृत्त्यर्थं दाग्रहणमर्थवत्। दधातेर्हिभावविधानादेव निवृत्तिसिद्धेः, तदाह—दारूपा धारूपाश्चेति। देहि। दाधातोर्लोटः सिपो हौ "दाधाघ्वदाप्"इति घुसंज्ञायां शपः श्लौ द्वित्वेऽभ्यासह्रस्वे "घ्वसोरेद्धावभ्यासलोपश्च" इति एत्वाभ्यासलोपयोरुक्तं रूपं सिध्यति। दत्तम्, दत्त, ददानि, ददाव, ददाम। आत्मनेपदे—दत्ताम्। लोटस्तादेशे टेरेत्वे शपः श्लुत्वे द्वित्वादिकार्ये 'द दा ते' इति स्थिते "श्नाभ्यस्तयोरातः" इत्याकारलोपे "खरि च"इति दस्य तकारे "आमेतः" इत्येकारस्य आमि 'दत्ताम्' इति रूपम्। ददाताम्, ददताम्। दत्स्व, ददाथाम्, दद्ध्वम्। ददै, ददावहै, ददामहै। अददात्। लङि अटि तिपि शपि शपः श्लौ "श्लौ" इति द्वित्वेऽभ्यासत्वे ह्रस्वे तिप इकारलोपे 'अददात्' इति। तसि–अदत्ताम्, अददुः। अददाः, अदत्तम्, अदत्त। अददाम्, अदद्व, अदद्म। आत्मनेपदे–अदत्त, अददाताम्, अददत। अदत्थाः, अददाथाम्, अदद्ध्वम्। अददि, अदद्वहि, अदद्महि। दद्यात्। विधिलिङस्तिपि शपि शपः श्लुत्वे "श्लौ" इति द्वित्वे ऽभ्यासत्वे ह्रस्वे यासुटि

अदाताम्। अदुः। **स्थाघ्वोरिच्च १।२।१७** अनयोरिदन्तादेशः स्यात् स च कित्स्या-दात्मनेपदे। अदित। अदास्यत्। अदास्यत। **डुधाञ् धारणपोषणयोः ॥ १० ॥** दधाति। **दधस्तथोश्च ८।२।३८** द्विरुक्तस्य झषन्तस्य धाधातोर्बशो भष् स्यात्तथोः परयोः स्ध्वोश्च परतः। धत्तः। दधति। दधासि। धत्थः। धत्थ। धत्ते। दधाते। दधते। धत्से। धद्ध्वे। "ध्वसोरेद्धावभ्यासलोपश्च"। धेहि। अदधात्। अधत्त।

---

उदाविता तिप इकारलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "श्नाभ्यस्तयोरातः" इत्याकारलोपे च 'दद्यात्' ।इति रूपम्। आत्मनेपदे-'ददीत' द्वित्वेऽभ्यासत्वे "लिङः सीयुट्" इति सीयुडागमेऽनुबन्धलोपे यलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "श्नाभ्यस्तयोरातः" इति अभ्यस्तसंज्ञकत्वादाकारलोपे 'ददीत' इति। आशीर्लिङि-'देयात्' "एर्लिङि" इति आकारस्य एत्वम्, स्कोरितिसलोपश्चेति विशेषः। आत्मनेपदे-सीयुट्, सुट्, षत्वष्टुत्वे च विशेषः-'दासीष्ट' इति जातम्। अदात्। लुङि अटि तिपि च्लौ च्लेः सिचि "दाधाघ्वदाप्" इति घुसंज्ञायां "गातिस्थाघुपाभूभ्यस्सिचः परस्मैपदेषु" इति सिचो लुकि 'अदात्' इति। स्थाघ्वोरिच्च। "असंयोगाल्लिट् कित्" इत्यतः किदिति "हनः सिच्" इत्यतः सिजिति चानुवर्तते। तदाह—अनयोरित्यादिना। अदित। आत्मनेपदे-लुङस्तादेशे च्लौ च्लेः सिचि "दाधाघ्वदाप्" इति घुसंज्ञकत्वात् "स्थाघ्वोरिच्च" इति इदन्तादेशे सिचः कित्त्वे च "ह्रस्वादङ्गात्" इति सिचः सलोपे विहिते 'अदित' इति निष्पन्नं भवति। अदिषाताम्, अदिषत। अदिथाः, अदिषाथाम्, अदिढ्वम्। अदिषि, अदिष्वहि, अदिष्महि। दधाति। डुधाञ् धारणपोषणयोरिति धातुतो लटस्तिपि शपि शपः श्लौ द्वित्वादिकार्ये ह्रस्वे "अभ्यासे चर्च" इति धकारस्य दकारे 'दधाति' इति। दधस्तथोश्च। धा धातोः कृतद्वित्वस्य दधः इति षष्ठ्यन्तम् "एकाचो बश०" इत्यतो झषन्तस्य बशो भष् इत्यनुवर्तते। तथ् अनयोर्द्वन्द्वात् सप्तमीद्विवचनम्। तकारादकार उच्चारणार्थः। तकारथकारयोरिति लभ्यते, चकारात् स्ध्वोरिति समुच्चीयते। सकारे ध्वशब्दे चेति लभ्यते तदाह—द्विरुक्तस्ये-त्यादिना। धत्तः। धाधातोः तसि शपः श्लुत्वे "श्लौ" इति द्वित्वेऽभ्यासत्वे "ह्रस्वः" इति ह्रस्वे "अभ्यासे चर्च" इति धस्य दत्वे 'दधातस्' इति जाते "दधस्तथोश्च" इति दस्य धत्वे "श्नाभ्यस्तयोरातः" इत्यालोपे "खरि च" इति धस्य तत्वे सस्य रुत्वे विसर्गे च 'धत्तः' इति। धेहि। धाञ्धातोर्लोटः सिपि "सेर्ह्यपिच्च" इति सेर्हित्वे शपि, शपः श्लुत्वे धातोर्द्वित्वे "ह्रस्वः" इति अभ्यासस्याचो ह्रस्वे "ध्वसोरेद्धावभ्यास-लोपश्च" इति एत्वेऽभ्यासलोपे च 'धेहि' इति रूपम्। अदधात्। दधातेर्लङि तिपि शपि शपः श्लुत्वे "श्लौ" इति धातोर्द्वित्वेऽभ्याससंज्ञात्वे "ह्रस्वः" इति ह्रस्वे। "अभ्यासे चर्च" इति धस्य दत्वे तिप इकारलोपे अटि च 'अदधात्' इति। अधत्ताम्, अदधुः। अदधाः, अधत्तम्, अधत्त। अदधम्, अदध्व, अदध्म। आत्मनेपदे—अधत्त, अद-

दध्यात्, दधीत् । धेयात् । धासीष्ट । अधात् । अधित । अधास्यत् । अधास्यत ।
णिजिर् शौचपोषणयोः ॥११॥ (इर इत्संज्ञा वाच्या) । णिजां त्रयाणां गुणः श्लौ ७।४।७५ णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज । निनिजे । नेक्ता । नेक्ष्यति । नेक्ष्यते । नेनेक्तु ।

---

धाताम्, अदधत । अधत्थाः, अदधाथाम्, अधद्ध्वम् । अदधि, अदध्वहि, अदध्महि । धेयात् । धाधातोराशीर्लिङस्तिपि यासुडागमे उटो लोपे तिप इकारलोपे "स्कोः" इति सलोपे "एर्लिङि" इत्याकारस्य एत्वे 'धेयात्' इति । अधात् । दधातेर्लुङि अटि तिपि तिप इलोपे च्लौ, च्लेः सिचि "गातिस्था" इति सिचो लोपे 'अधात्' इति । अधाताम्, अधुः । अधाः, अधातम्, अधात । अधाम्, अधाव, अधाम । अधित । धाञ आत्मनेपदे, लुङस्तादेशे च्लौ च्लेः सिचि इचो लोपे "स्था-घ्वोरिच्च" इति इदन्तादेशे सिचः कित्वे च कित्वात् "क्ङिति च" इति गुणाभावे "ह्रस्वादङ्गात्" इति सलोपे चाटि 'अधित' इति । णिजां त्रयाणां गुणः श्लौ । णिजामिति बहुवचनात् तदादीनां ग्रहणम् "अत्र लोपोऽभ्यासस्य" इत्यतः अभ्यासस्येत्यनुवर्तते, तदाह—णिज्विजित्यादिना ॥ नेनेक्ति । णिजिर्शौचपोषणयोरित्यस्माद् धातोर्लटि समागते "इर् इत्संज्ञा वाच्या" इति इत्संज्ञायां "तस्य लोपः" इति लोपे "णो नः" इति धात्वादेर्णस्य नत्वे लटस्तिपि शपि शपः श्लौ धातोर्द्वित्वेऽभ्यासकार्ये "णिजां त्रयाणां गुणः श्लौ" इत्यभ्यासस्य गुणे "चोः कुः" इति जस्य गत्वे "खरि च" इति गस्य कत्वे "पुगन्तलघूपधस्य च" इति गुणे 'नेनेक्ति' इति । तसि धातोर्द्वित्वे जलोपे "णिजां त्रयाणाम्" इति अभ्यासगुणे तसः कित्वात् "पुगन्त" इति गुणाभावे "चोः कुः" इति जस्य गत्वे "खरि च" इति कत्वे 'नेनिक्तः' इति सिद्धम् । नेनिजति । झिपरतः शपः श्लुत्वे "श्लौ" इति द्वित्वेऽभ्यासकार्ये "उभे अभ्यस्तम्" इति अभ्यस्तसंज्ञायाम् "अदभ्यस्तात्" इति झेरतादेशे "णिजां त्रयाणाम्" इति अभ्यासस्य गुणे झस्य कित्वाद् गुणाभावे 'नेनिजति' इति रूपम् । सिपि—नेनेक्षि, नेनिक्थः, नेनिक्थ । नेनेज्मि, नेनिज्वः, नेनिज्मः । नेनिक्ते, नेनिजाते, नेनिजते । नेनिक्षे, नेनिजाथे, नेनिग्ध्वे । नेनिजे, नेनिज्वहे, नेनिज्महे । निनेज । निज्धातोर्लिटि, लिटः तिपि तिपो णलि "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्यासकार्ये जलोपे 'नि निज् अ' इति स्थिते "पुगन्तलघूपधस्य च" इति गुणे संयोगे च 'निनेज' इति साधु । निनिजतुः, निनिजुः । निनेजिथ, निनिजथुः, निनिज । निनेज, निनिजिव, निनिजिम । निनिजे । आत्मनेपदे तादेशे "लिटस्तझयोरेशिरेच्" इति त इत्यस्य स्थाने एशादेशे धातोर्द्वित्वेऽभ्यासकार्ये 'निनिजे' इति रूपं बोध्यम् । निनिजाते, निनिजिरे । निनिजिषे, निनिजाथे, निनिजिध्वे । निनिजे, निनिजिवहे, निनिजिमहे । नेक्ष्यति । लृटस्तिपि स्ये आर्धधातुकत्वे "पुगन्तलघूपधस्य च" इति गुणे "चोः कुः" इति जस्य गत्वे "खरि च" इति

नेनिग्धि। नाभ्यस्तस्याचि पिति सार्वधातुके ७।३।८७ लघूपधगुणो न स्यात्। नेनिजानि। नेनिक्ताम्। अनेनेक्। अनेनिक्ताम्। अनेनिजुः। अनेनिजम्। अने-

---

गस्य कत्वे कृषसंयोगे चे 'नेक्ष्यति' इति। नेनेक्तु। लोटस्तिपि शपि शपः श्लौ "श्लौ" इति द्वित्वे हलादिशेषे "णिजां त्रयाणां गुणः श्लौ" इत्यभ्यासगुणे "पुगन्तल-घूपधस्य च" इति अनभ्यासेकारस्य गुणे "चोः कुः" इति जकारस्य गत्वे गत्वस्य कत्वे "एरुः" इति तिप इकारस्योत्वे च 'नेनेक्तु' इति। नेनिक्तात्, नेनिक्ताम्, नेनिजतु। नेनेग्धि। लोटः सिपि शपि शपः श्लुत्वे "सेर्ह्यपिच्च" इति सेर्हित्वे धातो-र्द्वित्वे जलोपे "णिजां त्रयाणां गुणः श्लौ" इति अभ्यासगुणे "हुझल्भ्यो हेर्धिः" इति हेर्धिरादेशे "चोः कुः" इति जस्य गत्वे 'नेनेग्धि' इति रूपम्। नेनिक्तात्, नेनिक्तम्, नेनिक्त। नाभ्यस्तस्याचि पिति सार्वधातुके। "मिदेर्गुणः" इत्यतो गुण इति "पुगन्त" इत्यतो लघूपधस्येति चानुवर्तते, इत्यभिप्रेत्य शेषं पूरयति—लघूपधेति। नेनिजानि। मिपि "मेर्निः" इति मेर्नित्वे "आडुत्तमस्य पिच्च" इति आटि द्वित्वेऽभ्यासकार्ये जलोपे "णिजां त्रयाणाम्" इति अभ्यासस्याचो गुणे "पुगन्तलघू०" इति गुणे प्राप्ते "नाभ्य-स्तस्याचि पिति सार्वधातुके" इति गुणाभावे नेनिजानि, नेनिजाव, नेनिजाम। आत्मने-पदे लोटि—नेनिक्ताम्। ते शपः श्लौ "श्लौ" इति द्वित्वेऽभ्यासकार्ये 'नि निज् त' इति दशायां "टित आत्मनेपदानां टेरे" इति एत्वे "चोः कुः" इति जस्य गत्वे "खरि च" इति गस्य कत्वे "णिजां त्रयाणां गुणः श्लौ" इति अभ्यासस्य गुणे "नेनिक्ते" इति स्थिते "आमेतः" इति आमि 'नेनिक्ताम्' इति रूपं ज्ञेयम्। आतामि तु—नेनि-जाताम्, नेनिजताम्। नेनिक्ष्व। थासि—शपः श्लुत्वे धातोर्द्वित्वेऽभ्यासकार्ये "चोः कुः" इति जस्य गत्वे "खरि च" इति कत्वे "णिजां त्रयाणां गुणः श्लौ" इति अभ्या-सगुणे 'नेनिक् थास्' इति दशायां "थासः से" इति थास् इत्यस्य स्थाने से इत्यादेशे "सवाभ्यां वामौ" इति से इत्यन्तर्गतैकारस्य स्थाने व इत्यादेशे "आदेशप्रत्यययोः" इति कवर्गात्परस्य सकारस्य षत्वे कृषयोगे चे 'नेनिक्ष्व' इति रूपं बोध्यम्। नेनिजा-थाम्, नेनिग्ध्वम्। नेनिजै, नेनिजावहै, नेनिजामहै। अनेनेक्। लङि अटि तिपि शपः श्लौ "श्लौ" इति द्वित्वेऽभ्यासकार्ये "णिजां त्रयाणां गुणः श्लौ" इति अभ्यासस्य गुणे 'अ ने निज् ति' इति स्थिते तिप इलोपे "चोः कुः" इति कुत्वेन जस्य गत्वे गस्य "खरि च" इति चर्त्वेन कत्वे "पुगन्तलघूपधस्य च" इति गुणे 'अ ने ने क् त्' इति व्यवस्थिते "हल्ङ्याब्भ्य" इति तलोपे 'अनेनेक्' इति रूपं भवति। तसि—अनेनिक्ताम्, अनेनिजुः। सिपि—अनेनेक्, अनेनिक्तम्, अनेनिक्त। अनेनिजम्, अनेनिज्व, अनेनिज्म॥ अनेनिक्त। आत्मनेपदे तादेशे शपः श्लुत्वे "श्लौ" इति द्वित्वेऽभ्यासकार्ये "चोः कुः" इति कुत्वेन गत्वे तस्य चर्त्वेन कत्वे "णिजां त्रयाणां गुणः श्लौ" इति अभ्यासगुणेऽटि 'अनेनिक्त' इति। आतामि—अनेनिजाताम्, अनेनिजत। थासि—अनेनिक्थाः, अनेनिजाथाम्, अने-

निक्त । नेनिज्यात् । निज्यात् । नेनिजीत । निक्षीष्ट । इरितो वा ३।१।५७ इरितो धातोश्च्लेरङ् वा स्यात् परस्मैपदेषु । अनिजत् । अनैक्षीत् । अनिक्त । अनेक्ष्यत् । अनेक्ष्यत । इति जुहोत्यादयः ।

---

## अथ दिवादयः ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥१॥ दिवा-

---

निग्ध्वम् । अनेनिजि, अनेनिज्वहि, अनेनिज्महि । नेनिज्यात् । विधिलिङस्तिपि शपि शपः श्लुत्वे "श्लौ" इति धातोर्द्वित्वेऽभ्यासकार्ये अभ्यासगुणे यासुटि उटावितौ "लिङः सलोपोऽनन्त्यस्य" इति सलोपे तिप इकारलोपे 'नेनिज्यात्' इति रूपम् । नेनिजीत । आत्मनेपदे विधिलिङस्तादेशे शपि श्लौ द्वित्वेऽभ्यासकार्ये अभ्यासगुणे "लिङः सीयुट्" इति सीयुटि उटावितौ "लोपो व्योर्वलि" इति यलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे 'नेनिजीत' इति रूपं बोध्यम् । आशीर्लिङि परस्मैपदे-'निज्यात्' । आत्मनेपदे-निक्षीष्ट । आशीर्लिङस्ते सीयुडागमे अनुबन्धलोपे "लोपो व्योर्वलि" इति यलोपे "सुट्तिथोः" इति सुटि उटावितौ "चोः कुः" इति जस्य गत्वे "खरि च" इति चर्त्वेन कत्वे विहिते षत्वे ष्टुत्वे च क्षसंयोगे च 'निक्षीष्ट' इति रूपम् । इरितो वा । "धातोरेकाचः" इत्यतो धातोरिति "च्लेः सिच्" इत्यतः च्लेरिति "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यतः अङि इति "पुषादिद्युताद्ि" इत्यतः परस्मैपदेषु इति चानुवर्तते तदाह—इरितो धातोरित्यादिना । अनिजत् । लुङि अटि तिपि च्लौ सति "इरितो वा" इति च्लेरङि तिप इकारलोपे 'अनिजत्' इति । अङभावपक्षे-च्लेः सिचि "अस्तिसिचोऽपृक्ते" इति तिपस्तकारस्य ईटि "वदव्रजहलन्तस्याचः" इति वृद्धौ "चोः कुः" इति कुत्वेन गत्वे "खरि च" इति चर्त्वेन गस्य कत्वे, सिचः सस्य षत्वे क्षसंयोगे षकारे अटि च 'अनैक्षीत्' इति । तसि—अनैक्ताम्, अनैक्षुः । अनैक्षीः, अनैक्तम्, अनैक्त । अनैक्षम्, अनैक्ष्व, अनैक्ष्म । अनिक्त । आत्मनेपदे लुङि अटि लुङस्तादेशे च्लेः सिचि इचो लोपे "झलो झलि" इति सलोपे "चोः कुः" इति जस्य गत्वे "खरि च" इति गस्य कत्वे "अनिक्त" इति सिद्धम् । आत्मनेपदे आतामि—अनिक्षाताम् । अनिक्षत । अनिक्थाः, अनिक्षाथाम्, अनिग्ध्वम् । अनिक्षि । इत्यादि । अनेक्ष्यत् । लृङि अटि तिपि स्ये "चोः कुः" इति जस्य गत्वे "खरि च" इति गस्य कत्वे सस्य षत्वे "पुगन्तलघूपधस्य च" इति गुणे तिप इकारलोपे 'अनेक्ष्यत्' । अनेक्ष्यताम्, अनेक्ष्यन् । अनेक्ष्यः, अनेक्ष्यतम्, अनेक्ष्यत । अनेक्ष्यम्, अनेक्ष्याव, अनेक्ष्याम । आत्मनेपदे—तादेशो विशेषः, 'अनेक्ष्यत' इति रूपम् । इति जुहोत्यादयः ।

अथ श्यन्विकरणधातवो निरूप्यन्ते । दिवु क्रीडेति । उदिदयम् । तेन क्त्वायामिड्विकल्पः । निष्ठायां च नेट् । दिवादिभ्यः श्यन्निति । "कर्तरि शप्" इत्यतः कर्तरीति

**दिव्यः श्यन् ३।१।६९** शपोऽपवादः। "हलि च" इति दीर्घः। दीव्यति। दिदेव। देविता। देविष्यति। दीव्यतु। अदीव्यत्। दीव्येत्। दीव्यात्। अदेवीत्। अदेविष्यत्। एवं षिवु तन्तुसन्ताने ॥ २ ॥ नृती गात्रविक्षेपे ॥ ३ ॥ नृत्यति। ननर्त। नर्तिता ॥ **सेऽसिचि कृतचृतच्छृदतृदनृतः ७।२।५७** एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड् वा स्यात्। नर्तिष्यति, नर्त्स्यति। नृत्यतु। अनृत्यत्। नृत्येत्। नृत्यात्। अनर्तीत्। अनर्तिष्यत्, अनर्त्स्यत्। त्रसी उद्वेगे ॥ ४ ॥

---

"सार्वधातुके यक्" इत्यतः सार्वधातुके इति चानुवर्तते इत्यभिप्रेत्याह—शपोऽपवाद इति। शकारनकारावितौ 'दिव् य ति' इति स्थिते, आह—हलि चेति दीर्घ इति। श्यनः अपित्वेन ङित्वान्न गुण इति भावः। दीव्यतः, दीव्यन्ति इत्यादि सुगमम्॥ दिदेव। दिवु धातोर्लिटस्तिपि तिपो णलि "लिटि धातोरनभ्यासस्य" इति धातोर्द्वित्वेऽभ्यासकार्ये "पुगन्तलघूपधस्य च" इति गुणे 'दिदेव' इति सिद्धम्। अतुसि–दिदिवतुः, दिदिवुः। दिदेविथ, दिदिवथुः, दिदिव। दिदेव, दिदिविव, दिदिविम। दीव्येत्। दिवुधातोर्विधिलिङि तिपि "दिवादिभ्यः श्यन्" इति श्यनि अनुबन्धलोपे "हलि च" इति उपधादीर्घे यासुडागमे उटावितौ "अतो येयः" इति यास इयादेशे "लोपो व्योर्वलि" इति यलोपे, "आद्गुणः" इति गुणे तिप इकारलोपे श्यनः अपित्त्वेन ङित्वात् गुणाभावे दीव्येदिति। अदेवीत्। लुङि अटि तिपि इकारलोपे च्लौ सिजादेशे इचावितौ "आर्धधातुकस्येड्वलादेः" इति इटि "अस्तिसिचोऽपृक्ते" इति ईटि "इट ईटि" इति सलोपे "पुगन्तलघूपधस्य च" इति लघूपधगुणे 'अदेवीत्' इति। तसि तु–अदेविष्टाम्, अदेविषुः। अदेवीः, अदेविष्टम्, अदेविष्ट। अदेविषम्। अदेविष्व, अदेविष्म। नृत्यति। नृतीगात्रविक्षेपे धातोर्लटि तत्र तिपि "दिवादिभ्यः श्यन्" इति श्यनि श्यनः अपित्त्वेन ङित्वान्न गुणः, 'नृत्यति' इति सिद्धम्। नृत्यतः, नृत्यन्ति। नृत्यसि, नृत्यथः, नृत्यथ। नृत्यामि, नृत्यावः, नृत्यामः। ननर्त। नृतीगात्रविक्षेपे इत्यस्माद्धातोर्लिटस्तिपि तिपो णलि धातोर्द्वित्वे तलोपे "उरत्" इति अभ्यासऋकारस्य अदादेशे रपरे "हलादिः शेषः" इति रलोपे "पुगन्तलघूपधस्य च" इति गुणे 'ननर्त' इति। ननृततुः, ननृतुः। ननर्तिथ, ननृतथुः, ननृत। ननर्त, ननृतिव, ननृतिम। नर्तिता। लुटस्तिपि तासि तासेरार्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इति इटि अनुबन्धलोपे "लुटः प्रथमस्य डारौरसः" इति तिपो डादेशेऽनुबन्धलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे "पुगन्तलघूपधस्य च" इति गुणे 'नर्तिता' इति। सेऽसिचि कृतचृतच्छृदतृदनृतः। से असिचि इति छेदः। सप्तमी षष्ठ्यर्थे। कृतचृतच्छृदतृदनृत् एषां समाहारद्वन्द्वात् पञ्चमी। "उदितो वा" इत्यतो वेति 'आर्धधातुकस्येड्वलादेः' चानुवर्तते तदाह—एभ्य इत्यादिना। नर्तिष्यति। लृटि तिपि स्ये इटि "पुगन्तलघूपधस्य च" इति गुणे सस्य पक्षे "सेऽसिचिकृतचृतच्छृदतृदनृतः" इतीड्भावे 'नर्तिष्यति' इति, इडभावपक्षे—

"वा भ्राश" इति श्यन्वा । त्रस्यति, त्रसति । तत्रास ॥ **वा जॄभ्रमुत्रसाम् ६।४। १२४** एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा स्तः ॥ त्रेसतुः-तत्रसतुः । त्रेसिथ-तत्रसिथ । त्रसिता । **शो तनूकरणे ॥ ५ ॥ ओतः श्यनि ७।३।७१** लोपः स्यात् श्यनि । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शशुः । शाता । शास्यति ॥ **विभाषा घ्राधेट्शाच्छासः २।४।७८** एभ्यः सिचो लुग्वा स्यात् परस्मैपदे परे । अशात् । अशाताम् । अशुः ॥ **यमरमनमातां सक्च ७।२।७३**

---

'नर्त्स्यति' इति च रूपद्वयं सिद्धम् । नृतो लङस्तिपि श्यनि तिप इकारलोपे अटि च 'अनृत्यत्' । अनर्तीत् । नृतो लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे "आर्धधातुकस्येड्वलादेः" इति इटि तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इति ईटि "इट ईटि" इति सलोपे "पुगन्तलघूपधस्य च" इति गुणे अटि च 'अनर्तीत्' इति । त्रस्यति । त्रसीउद्वेगे इतिधातुतो लटस्तिपि "वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः" इति वैकल्पिकेन श्यनि 'त्रस्यति' इति । श्यनोऽभावपक्षे शपि त्रसति । तत्रास । त्रसीधातोर्लिटस्तिपि तिपो णलि "लिटि धातोः" इति द्वित्वेऽभ्यासत्वे हलादिशेषे "अत उपधायाः" इति उपधावृद्धौ 'तत्रास' इति रूपम् । वाजॄभ्रमुत्रसाम् । "अत एकहल्मध्ये" इत्यतो लिटि इति "थलि च सेटि" इति चानुवर्तते । "घ्वसोरेद्धौ" इत्यतः एदिति "गमहन" इत्यतः कितीति च । तदाह—एषामिति । त्रेसतुः । तसि-तसोऽतुसि "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्यासत्वे "वा जॄभ्रमुत्रसाम्" इति एत्वेऽभ्यासलोपे च सस्य रुत्वे रस्य विसर्गे च 'त्रेसतुः' इति एत्वाभ्यासलोपाभावपक्षे 'तत्रसतुः' इति रूपद्वयं सिद्धम् । थलि परतः 'तत्रसिथ' 'त्रेसिथ' इति । त्रसिता । लुटि तिपि तासि तासः आर्धधातुकत्वेन "आर्धधातुकस्येड्वलादेः" इति इटि तिपः स्थाने डादेशेऽनुबन्धलोपे डित्वसामर्थ्यादभस्यापि टेः—अस् इत्यस्य लोपे 'त्रसिता' इति । त्रसिष्यति । त्रस्यतु, त्रसतु । विधौ-त्रस्येत्, त्रसेत्, लङि-अत्रस्यत, अत्रसत् । आशीर्लिङि-त्रस्यात् । लुङि-अत्रासीत्, अत्रसीत् । ओतः श्यनि । "घोर्लोपो लेटि वा" इत्यतो लोप इत्यनुवर्तते इत्यभिप्रेत्य शेषं पूरयति—लोपः स्यादिति । श्यति । शो तनूकरणे इत्यस्माद्धातोः "वर्तमाने लट्" इति लटि, लटस्तिपि "दिवादिभ्यः श्यन्" इति श्यनि "ओतः श्यनि" इति शोवर्तिन ओकारलोपे 'श्यति' इति बोध्यम् । शशौ । लिटि तिपि णलि अनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे "ह्रस्वः" इति अभ्यासस्याचो ह्रस्वत्वे 'शशा-अ' इति स्थिते "आत औ णलः" इति णलः औकारे "वृद्धिरेचि" इति वृद्धौ "शशौ" इति । शशतुः, शशुः । शशिथ-शशाथ, शशथुः, शश । शशौ, शशिव, शशिम । शाता । लृटि-शास्यति । लङि-अश्यत् । विधौ-श्येत् । आशीर्लिङि-शेयात् । विभाषा घ्राधेट्शाच्छासः । च्लि लुङीत्यनुवर्तते "णिश्रिद्रुस्रुभ्यः" इत्यतः कर्तरि चङिति च । तदाह—आभ्यामिति । अशात् । लुङि तिपि च्लौ च्लेः सिच् "विभाषा घ्राधेट्शाच्छासः"

एषां सक् स्यात् एभ्यः सिच इट् स्यात् परस्मैपदेषु । इटसकौ । अशासीत् । अशासिष्टाम् । छो छेदने ॥ ६ ॥ छ्यति । षोऽन्तकर्मणि ॥ ७ ॥ स्यति । ससौ ॥ दोऽवखण्डने ॥ ८ ॥ द्यति । ददौ । देयात् । अदात् । व्यध ताडने ॥ ९ ॥

**ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६।१।१६**

एषां सम्प्रसारणं स्यात्किति ङिति च । विध्यति । विव्याध । विविधतुः । विविधुः । विव्यधिथ-विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ॥ पुष

---

इति सिचो लोपे "आदेच उपदेशेऽशिति" इति आत्वेऽटि अनुबन्धलोपे-'अशात्' इति । लुकोऽभावपक्षे-तु आदन्तत्वात् "यमरमनमातां सक्च" इति इट्सकौ, "अस्तिसिचोऽपृक्ते" इति ईटि "इट ईटि" इति सलोपे 'अशासीत्' इति रूपं सिद्धम् । अशासिष्टाम् , अशासिषुः । अशासीः, अशासिष्टम्, अशासिष्ट । अशासिषम् , अशासिष्व, अशासिष्म । पक्षे—अशात् ,अशाताम् , अशुः, अशाः, अशातम् , अशात, अशाम् , अशाव, अशाम । छ्यति । छो धातुतो लटि तिपि श्यनि "ओतः श्यनि" इति ओकारलोपे 'छ्यति' इति रूपम् । चच्छौ । छाता, छास्यति, छ्यतु, अछ्यत् । छ्येत् । छेयात् । लुङि-अच्छासीत् । एवं षोऽन्तकर्मणि, दोऽवखण्डने इति । अदात् । दोऽवखण्डने धातोर्लुङि अटि तिपि च्लौ सिचि "आदेच उपदेशेऽशिति" इत्यात्वे "गातिस्था" इति सिचो लोपे च तत्सिद्धिः । ग्रहिज्यावयिव्यधीत्यादि । चकारेण "वचिस्वपियजादीनां किति" इत्यतः कितीति समुच्चीयते । "ष्यङः सम्प्रसारणम्" इत्यनुवर्तते, तदाह-एषामिति । विध्यति । व्यध ताडने धातोर्लटि तिपि "दिवादिभ्यः श्यन्" इति श्यनि अनुबन्धलोपे 'व्यध् य ति' इति स्थिते श्यनोऽपित्वेन "सार्वधातुकमपित्" इति ङित्वम् , ङित्वात् "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणे 'व् इ अ ध् य ति' इति जाते "सम्प्रसारणाच्च" इति पूर्वरूपे 'विध्यति' इति रूपम् । विध्यतः, विध्यन्ति । विध्यसि, विध्यथः, विध्यथ । विध्यामि, विध्यावः, विध्यामः । विव्याध । व्यध्धातोर्लिटस्तिपि तिपो णलि अनुबन्धलोपे "लिटि धातोः" इति द्वित्वेऽभ्यासत्वे हलादिशेषेऽर्थात् धलोपे 'व्य व्यध् अ' इति स्थिते "लिट्यभ्यासस्योभयेषाम्" इति अभ्यासस्य सम्प्रसारणे 'व् इ अ व्यध् अ' इति जाते "सम्प्रसारणाच्च" इति पूर्वरूपे 'व् इ व्यध् अ' मिलित्वा 'विव्यध् अ' इति स्थिते "अत उपधायाः" इति उपधावृद्धौ 'विव्याध' इति रूपं ज्ञेयम् । विविधतुः । लिटस्तसि तसोऽतुसि कृते "असंयोगाल्लिट् कित्" इति तसः कित्वे "ग्रहिज्या" इति सम्प्रसारणे 'व् इ अ ध् अतुस्' इति भूते "सम्प्रसारणाच्च" इति पूर्वरूपे 'विध् अतुस्' इति दशायाम् "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्यासत्वे हलादिशेषे 'विविध्-अतुस्' इत्यत्र अतुसः कित्वेन गुणाभावे संयोगे 'विविधतुः' इति रूपम् । उसि-'विविधुः' इत्यत्र एवमेव ज्ञेयम् । सिपि—विव्यधिथ । सिपस्थलि "लिटि-धातोः" इति द्वित्वेऽभ्यासत्वेऽभ्यासत्वात् "लिट्यभ्यासस्योभयेषाम्" इति सम्प्रसारणे

पुष्थौ ॥१०॥ पुष्यति। पुपोष ॥ पुपोषिथ। पोष्टा। पोक्ष्यति। पुषादीत्यङ्। अपुषत्।

---

"सम्प्रसारणाच्च" इति पूर्वरूपे 'विव्यध् थ' इति स्थिते "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषेधे "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" इति पुनरिटि प्राप्ते "उपदेशेऽत्वतः" इति अत्वात् निषेधे "ऋतो भारद्वाजस्य" इति वैकल्पिके इटि 'विव्यधिथ' इति। इडभावपक्षे—"झषस्तथोर्धोऽधः" इति थस्य धत्वे "झलां जश् झशि" इति धकारस्य दकारे 'विव्यद्ध' इति रूपद्वयं सिद्धं ज्ञेयम्। विविधथुः, विविध। विव्याध, विव्यध। विविधिव। "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" इति इटि थलोऽभावात् "ऋतो भारद्वाजस्य" इत्यस्य नात्र प्रवृत्तिर्बोध्या। विविधिव। विविधिम। लोटि—विध्यतु, विध्यतात्, विध्यताम्, विध्यन्तु। इति रूपं बोध्यम्। लुटि—व्यद्धा। लुटि तत्स्थाने तिपि तासि, तिपः स्थाने डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे, "झषस्तथोर्धोऽधः" इति तकारस्य धकारे "झलां जश् झशि" इति पूर्वधस्य दकारे 'व्यद्धा' इति। व्यद्धारौ, व्यद्धारः, इत्यादि रूपमवगन्तव्यम्। लृटि—व्यत्स्यति। लृटि तिपि स्यप्रत्यये "खरि च" इति धस्य तकारे कृते 'व्यत्स्यति' इति रूपं ध्येयम्। लङि—अविध्यत्, लङि तिपि श्यनि सम्प्रसारणे पूर्वरूपे अटि च 'अविध्यत्' इति। अविध्यताम्, अविध्यन्। अविध्यः, अविध्यतम्, अविध्यत। अविध्यम्, अविध्याव, अविध्याम। विधौ—विध्येत। विधिलिङस्तिपि इकारलोपे "दिवादिभ्यः श्यन्" इति श्यनि श्यनोऽपित्वेन "सार्वधातुकमपित्" इति ङित्वे, ङित्वात् "ग्रहिज्या" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे 'विध् य त्' इति स्थिते "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमेऽनुबन्धलोपे 'विध्य यास् त्' इति स्थिते "अतो येयः" इति यास् इत्यस्य स्थाने इयादेशे "आद्गुणः" इति गुणे "लोपो व्योर्वलि" इति यलोपे 'विध्येत्' इति रूपं बोध्यम्। विध्येताम्, विध्येयुः। इत्यादि ज्ञेयम्। आशिषि—विध्यात्। आशीर्लिङस्तिपि तिप इलोपे 'विध् त्' इति जाते "यासुट् परस्मैपदेषु" इति यासुटि उदावितौ "किदाशिषि" इति कित्वात् "ग्रहिज्या" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "स्कोः संयोगाद्योरन्ते च" इति संयोगादेः सस्य लोपे 'विध्यात्' इति रूपं मन्तव्यम्। विध्यास्ताम्, विध्यासुः, इत्यादि। लुङि—अव्यात्सीत्। लुङि—अटि तिपि च्लौ च्लेः सिचि तिप इकारलोपे अनिट्त्वादिडभावे "अस्तिसिचोऽपृक्ते" इति अपृक्तसंज्ञकस्य तकारस्य ईटि विहिते "वदव्रजहलन्तस्याचः" इति वृद्धौ, "खरि च" इति धस्य तत्वे 'अव्यात्सीत्' इति। अव्याद्धाम्। "झलो झलि" इति सिचो लोपे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "झलां जश् झशि" इति पूर्वधकारस्य दत्वे 'अव्याद्धाम्' इति रूपं निष्पन्नम्। झौ–'अव्यात्सुः' अत्र झल्परत्वाभावान्न झलन्तलक्षणः सिचो लुक्। अव्यात्सीः, अव्याद्धम्, अव्याद्ध। अव्यात्सम्, अव्यात्स्व, अव्यात्स्म। पुष्यति। पुष् पुष्टौ धातुतो लटि, तत्स्थाने तिपि "दिवादिभ्यः श्यन्" इति

शुष शोषणे ॥११॥ शुष्यति। शुशोष। अशुषत्। णश अदर्शने ॥१२॥ नश्यति। ननाश। नेशतुः॥ रधादिभ्यश्च ७।२।४५ रधू नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात्। नशिंथ। मस्जिनशोर्झलि ७।१।६० नुम्

---

श्यनि श्यनोऽपित्वेन "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावे 'पुष्यति' इति। पुष्यतः, पुष्यन्ति। पुपोष। लिटि तिपि णलि अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्यासकार्ये "पुगन्तलघूपधस्य" इति गुणे 'पुपोष' इति सिद्धं भवति। पुपुषतुः। "असंयोगाल्लिट् कित्" इति कित्वाद्गुणाभाव एव विशेषः। पुपुषतुः, पुपुषुः। पुपोषिथ। थलि द्वित्वेऽभ्यासत्वे "आर्धधातुकस्येड्" इति इटि प्राप्ते "एकाच उपदेशे ऽनुदात्तात्" इति निषेधे "कृसृभृवृस्तु" इति नित्यमिट्। अजन्तत्वाभावात् "ऋतो भारद्वाजस्य" इत्यस्य नात्र प्रसक्तिः। "पुगन्त" इति गुणे 'पुपोषिथ' इति रूपम्। पुपुषथुः, पुपुष। पुपोष। पुपुषिव। "कृसृभृवृस्तु" इत्यादिना इटि 'पुपुषिव' इति रूपम्। एवं 'पुपुषिम' इति। लुटि—पोष्टा। लुटि तिपि तासि "पुगन्त" इति गुणे तिपो डात्वे टेर्लोपे ष्टुत्वे 'पोष्टा' इति। पोष्टारौ, पोष्टारः इत्यादिः। लृटि—पोक्ष्यति। लृटि, तिपि स्ये "पुगन्त" इति गुणे "षढोः कः सि" इति षस्य कत्वे—पोक्ष्यति, पोक्ष्यतः, पोक्ष्यन्ति। लोटि—पुष्यतु, पुष्यतात्, पुष्यताम्, पुष्यन्तु। विधौ—'पुष्येत्' 'दीव्येत्' इतिवत्। पुष्येताम्, पुष्येयुः। आशीर्लिङि—पुष्यात्, दीव्यात् इतिवत्। "किदाशिषि" इति कित्वाद्गुणाभावः। पुष्यात्, पुष्यास्ताम्, पुष्यासुः। लङि—अपुष्यत्, अपुष्यताम्, अपुष्यन्। लुङि—अपुषत्। पुषधातुतो लुङि, अटि तिपि तिप इकारलोपे च्लौ "पुषादिद्युताद्यॢदितः" इति पुषादिगणपाठात् च्लेरङि ङित्वाद्गुणाभावे 'अपुषत्' अपुषताम्, अपुषन्। शुष्यति। लुसानुबन्धकात् शोषणार्थात् शुष्धातुतो लटि लटः तिपि, "दिवादिभ्यः श्यन्" इति श्यनि श्यनोऽपित्वेन "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावे 'शुष्यति'। शुष्यतः। शुष्यन्ति। लिटि—शुशोष। लिटि तिपि णलि अनुबन्धलोपे द्वित्वेऽभ्यासकार्ये "पुगन्त" इति गुणे 'शुशोष' इति साधु। शुशुषतुः, शुशुषुः। शुशोषिथ, शुशुषथुः, शुशुष। शुशोष, शुशुषिव, शुशुषिम। पुष्धातुवत्। शुष्यतु। शुष्येत्। शुष्यात्। शोष्टा। शोक्ष्यति। अशुष्यत्। लुङि।—अशुषत्। पुषादीत्यङ्। नश्यति। सानुबन्धकात् अदर्शनार्थकात् णश् धातुतो लटि लटस्तिपि श्यनि "णो नः" इति णस्य नत्वे 'नश्यति' इति रूपम्। नश्यतः, नश्यन्ति। नश्यसि, नश्यथः, नश्यथ। नश्यामि, नश्यावः, नश्यामः। ननाश। नश्धातोर्लिटस्तिपि णलि "लिटि धातोरनभ्यासस्य" इति धातोर्द्वित्वे ऽभ्यासत्वे "अत उपधायाः" इति वृद्धौ 'ननाश' इति। अतुसि—नेशतुः। लिटि अतुसि धातोर्द्वित्वेऽभ्यासत्वे "अत एकहल्मध्येऽनादेशादेर्लिटि" इति एत्वेऽभ्यासलोपे च 'नेशतुः'। एवमुसि—नेशुः इति। रधादिभ्यश्च। "आर्धधातुकस्येड्वलादेः" इत्यनुवर्तते "स्वर-

स्यात् । ननंष्ठ । नेशिव, नेश्व । नेशिम, नेश्म । नशिता, नंष्टा । नशिष्यति, नंक्ष्यति । नश्यतु । अनश्यत् । नश्येत् । नश्यात् । अनशत् । षूङ् प्राणिप्रसवे ॥१२॥ सूयते । सुषुवे । क्रादिनियमादिट् । सुषुविषे । सुषुविवहे । सुषुविमहे । सोता, सवि-

---

विषुति" इत्यतो वेति चेत्यभिप्रेत्य शेषं पूरयति—वलाद्यार्धधातुकस्येति । मस्जिनशोर्झलि । "इदितो नुम्" इत्यतस्तदनुवृत्तेरिति भावः । नेशिथ । सिपस्थलि धातोर्द्वित्वेऽभ्यासत्वे "रधादिभ्यश्च" इति विकल्पेन इटि 'ननश् इ थ' इति स्थिते "थलि च सेटि" इति एत्वे ऽभ्यासलोपे 'नेशिथ' इडभावपक्षे तु 'ननश् थ' इति स्थिते "मस्जिनशोर्झलि" इति नुमागमे उभो लोपे मित्वात् "मिदचोऽन्त्यात्परः" इति अचः परा नकार स्थितिः 'न न न् श् थ' इति विहिते "व्रश्चभ्रस्जसृजमृजयजराज" इति शकारस्य षकारे "ष्टुना" इति ष्टुत्वेन ठकारे "नश्चापदान्तस्य झलि" इति अपदान्तत्वात् झलपरत्वाच्च अनुस्वारे 'ननंष्ठ' इति रूपं सङ्गमनीयम् । अथुसि—नेशथुः, नेश । ननाश, ननश । नेशिव । नश्धातोर्वसि, वसो वादेशे द्वित्वेऽभ्यासत्वे "अत एकहल्मध्येऽनादेशादेर्लिटि" इति एत्वे ऽभ्यासलोपे च "रधादिभ्यश्च" इति वैकल्पिके इटि 'नेशिव' इति, इडभावपक्षे तु—'नेश्व' इति । एवं नेशिम नेश्म इति । नशिता । लुटि तिपि तासि तास आर्धधातुकत्वे "रधादिभ्यश्च" इति वेटि तिपो डात्वे टेर्लोपे 'नशिता' इति । इडभावपक्षे "मस्जिनशोर्झलि" इति नुमागमे 'नन् श् ता' इति स्थितौ "व्रश्चभ्रस्ज" इति षत्वे ष्टुत्वे "नश्चापदान्तस्य झलि" इति अनुस्वारे 'नंष्टा' इति रूपद्वयं बोध्यम् । नशिष्यति । लृटि तिपि स्ये आर्धधातुकत्वे "रधादिभ्यश्च" इति वेटि षत्वे 'नशिष्यति' इति । इडभावपक्षे—"मस्जिनशोर्झलि" इति नुमि अनुबन्धलोपे "व्रश्चभ्रस्जसृज" इति षत्वे "षढोः कः सि" इति षस्य कत्वे "नश्चापदान्तस्य झलि" इत्यनुस्वारे परसवर्णे ङकारे च कृते 'नंक्ष्यति' इति रूपद्वयं ज्ञेयम् । लोटि—नश्यतु नश्यतात् नश्यताम् , नश्यन्तु इत्यादि । लङि—अनश्यत् । विधौ—नश्येत् , आशिषि लिङि—नश्यात् । अनशत् । पुषादीत्यङ् लुङि बोध्यः । सूयते । षूङ्प्राणिप्रसवे इति धातुतो लटि, लटः तादेशे "दिवादिभ्यः श्यन्" इति श्यनि अनुबन्धलोपे "टित आत्मनेपदानां टेरे" इति टेरेत्वे "धात्वादेः षः सः" इति धात्वादेः षकारस्य सकारे 'सूयते' इति रूपम् । सूयेते, सूयन्ते । सूयसे, सूयेथे, सूयध्वे, सूये, सूयावहे, सूयामहे । लिटि—सुषुवे । लिटि तादेशे धात्वादेः षस्य सत्वे धातोर्द्वित्वेऽभ्यासत्वे "ह्रस्वः" इति अभ्यासाचो ह्रस्वे 'सु सू त' इति स्थिते "लिटस्तझयोरेशिरेच्" इति तस्य स्थाने एशि शलोपे आदेशसकारत्वात् "आदेशप्रत्यययोः" इति षत्वे "अचि श्नुधातुभ्रुवाम्" इति उवङि संयोगे च 'सुषुवे' इति रूपं बोध्यम् । सुषुवाते, सुषुविरे । सुषुविषे । थासि—द्वित्वे ऽभ्यासत्वे ह्रस्वत्वे "थासः से" इति थासः से इत्यादेशे "आर्धधातुकस्येड्" इति इटि प्राप्ते "एकाच्०" इति निषेधे "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" इति इटि "आदेश-

ता । दूङ् परितापे ॥१४॥ दूयते ॥ दीङ् क्षये ॥१५॥ दीयते । दीङो युडचि क्ङिति ६।४।६३ दीङः परस्याजादेः क्ङिति आर्धधातुकस्य युट् स्यात् । (वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ) दिदीये ॥ मीनातिमिनोतिदीङां ल्यपि च ६।१।५० एषामात्वं स्यात् ल्यपि चादशित्येजूनिमित्ते ॥ दाता । दास्यति । (स्था-

---

प्रत्यययोः" इति पत्वे "अचि श्नुधातु०" इति उवङि 'सुषुविषे' इति रूपम् । सुषुवाथे, सुषुविध्वे । सुषुवे, सुषुविवहे, सुषुविमहे । अत्रापि क्रादिनियमादिट् बोध्यः । सोता । लुटि–तिपि तासि "स्वरतिसूतिसूयतिधूञूदितो वा" इति वैकल्पिके इटि "सार्वधातुकार्धधातुकयोः" इति गुणे अवि 'सविता' इति । इडभावपक्षे । "सार्वधातुकार्धधातुकयोः" इति गुणे 'सोता' इति रूपं ध्येयम् । लृटि–सविष्यते, सोष्यते । लोटि–सूयताम् , सूयेताम् , सूयन्ताम् । सूयस्व, सूयेथाम् , सूयध्वम् । सूयै, सूयावहै, सूयामहै । लङि—असूयत । विधौ–सूयेत, आशिषि–सविषीष्ट, सोषीष्ट "स्वरति" इति इड्विकल्पः । लुङि—असविष्ट । लुङि अटि लस्तादेशे च्लौ, च्लेः सिचि, सिच आर्धधातुकत्वे "स्वरति" इति विकल्पेनेटि "सार्वधातु०" इति गुणेऽवादेशे "आदेशप्रत्यययोः" इति षत्वे ष्टुत्वे च 'असविष्ट' इति इडभावपक्षे–असोष्ट' इति रूपं बोध्यम् । असविषाताम् , असविषत । असविष्ठाः, असविषाथाम् , असविध्वम् । असविषि, असविष्वहि, असविष्महि, इति । इडभावपक्षे–असोषाताम् , असोषत । असोष्ठाः, असोषाथाम् , असोढ्वम् । असोषि, असोष्वहि, असोष्महि । लृङि—असविष्यत, असोष्यत । दूयते । लँट तादेशे टेरेत्वे श्यनि श्यनोऽपित्त्वेन "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावे 'दूयते' इति । लिटि—दुदुवे, दुदुवाते, दुदुविरे । दुदुविषे, दुदुवाथे, दुदुविध्वे । दुदुवे, दुदुविवहे, दुदुविमहे । लुटि—नित्यमिट्—दविता । दविष्यते । दूयताम् । अदूयत । दूयेत । दविषीष्ट । लुङि—अदविष्ट, अदविष्यत । दीयते । दीङ् क्षये, तस्माल्लटि तादेशे टेरेत्वे श्यनि 'दीयते' इति साधु । दीङो युडचि क्ङिति । 'आर्धधातुके' इत्यधिकृतम् अचा विशेष्यते । तदादिविधिः । दीङ इति पञ्चमी । सप्तमी षष्ठ्यर्थे तदाह—दीङः परस्येत्यादिना । दिदीये । लिटि तादेशे धातोर्द्वित्वेऽभ्यासत्वे "ह्रस्वः" इति ह्रस्वे 'दिदीत' इति स्थिते "लिटस्तझयोरेशिरेच्" इति तस्थाने एशि "दीङो युडचि क्ङिति" इत्यजादेरार्धधातुकस्य युटि प्राप्ते "एरनेकाचोऽसंयोगपूर्वस्य" इति परत्वाद्यणि प्राप्ते "वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ" इति नित्यत्वात् युटि । टकार इत् । उकार उच्चारणार्थः 'दिदीये' इति सिद्धम् । दिदीयाते, दिदीयिरे । दिदीयिषे दिदीयाथे, दिदीयिध्वे । दिदीये, दिदीयिवहे, दिदीयिमहे । मीनातिमिनोति दीङां ल्यपि च । "आदेच उपदेशेऽशिति" इत्यतः आदित्यनुवर्तते । तदाह—एषामात्वं स्यात् ल्यपीति । लुटि–दाता, दातारौ, दातारः, दातासे, इत्यादि । लृटि–दास्यते । लङि–अदीयत । अदीयेताम्, अदीयन्त । अदीयथाः,अदीयेथाम्, अदीय-

घ्वोरित्त्वे दीङः प्रतिषेधः) । अदास्त ॥ डीङ् विहायसा गतौ ॥१६॥ डीयते । डिड्ये । डयिता । पीङ् पाने ॥१७॥ पीयते । पेता । अपेष्ट । माङ् माने ॥१८॥ मायते । ममे । जनी प्रादुर्भावे ॥१९॥ ज्ञाजनोर्जा ७।३।७९ अनयोर्जादेशः स्यात् शिति परे । जायते । जज्ञे । जनिता । जनिष्यते ॥ दीपजनबुधपूरितायिप्यायि-

---

भ्यः । अदीये, अदीयावहि, अदीयामहि । विधौ—दीयेत । आशिषि—दासीष्ट, । लुङि—अदास्त । लुङि तादेशे च्लौ, च्लेः सिचि, "मीनातिमिनोतिदीङां ल्यपि च" इतीकारस्यात्वे "स्थाघ्वोरिच्च" इति इदादेशे प्राप्ते "स्थाघ्वोरित्वे दीङः प्रतिषेधः" इतीत्वनिषेधे अटि 'अदास्त' इति सिद्धम् । लुङ आताम्-अदासाताम्, अदासत । अदास्थाः, अदासाथाम्, अदाध्वम् । अदासि, अदास्वहि, अदास्महि । लृङि—अदास्यत । डीयते । डीङ् विहायसा गतौ इत्यस्माद्धातोर्लटि, लः स्थाने तादेशे टेरेत्वे श्यनि अनुबन्धलोपे श्यनोऽपित्त्वेन "सार्वधातुकमपित्" इति ङित्वात् "क्ङिति च" इति गुणनिषेधे 'डीयते' इति रूपम् । डिड्ये । लिटि तादेशे द्वित्वेऽभ्यासत्वे एशि "एरनेकाचः" इति यणि डिड्ये, डिड्याते, डिड्यिरे । डिड्यिषे, डिड्याथे, डिड्यिध्वे । डिड्ये, डिड्यिवहे, डिड्यिमहे । लुटि—डयिता, डयितारौ, डयितारः । डयितासे इत्यादि । लृटि—डयिष्यते । लोटि—डीयताम्, लङि—अडीयत । विधौ—डीयेत । आशिषि—डयिषीष्ट । लुङि—अडयिष्ट । पीयते । पानार्थकात् पीङ्धातुतो लटि, ते टेरेत्वे श्यनि श्यनोऽपित्त्वेन "सार्वधातुकमपित्" इति ङित्वात् "क्ङिति च" इति गुणनिषेधे 'पीयते' इति रूपम् । पिप्ये । लिटि ते द्वित्वेऽभ्यासत्वे "लिटस्तझयोरेशिरेच्" इति एशि "एरनेकाच" इति यणि 'पिप्ये' इति रूपं सिद्धं भवति । अनिट्त्वात् लुटि-पेता इति । लृटि-पेष्यते । लोटि—पीयताम् । लङि-अपीयत । विधौ-पीयेत । आशिषि-पेषीष्ट । लुङि अपेष्ट, अपेषाताम्, अपेषत । इत्यादि । लृङि-अपेष्यत । मायते । मानार्थकमाङ्धातोरनुबन्धलोपे लटि तादेशे टेरेत्वे श्यनि मायते इति । लिटि—ममे । माङ्धातोर्लिटि तादेशे द्वित्वेऽभ्यासत्वे "ह्रस्वः" इति ह्रस्वे ममा त इति स्थिते "लिटस्तझयोः" इति तकारस्यैशि "आतो लोप इटि च" इति आकारलोपे ममे इति रूपम् । ममाते, ममिरे, ममिषे, क्रादिनियमादिट् । ममाथे, ममिध्वे । ममे, ममिवहे, ममिमहे । अनयोरपि क्रादिनियमादिट् । लुटि—माता । लृटि—मास्यते । लोटि—मायताम्, मायेताम्, मायन्ताम् । मायस्व, मायेथाम्, मायध्वम् । मायै, मायावहै, मायामहै । लङि—अमायत । विधौ-मायेत । आशिषि-मासीष्ट । लुङि—अमास्त इति अदास्तवत् ज्ञेयम् । लृङि—अमास्यत । ज्ञाजनोर्जा । शितीति । "ष्ठिवुक्लमुचमाम्" इत्यस्तदनुवृत्तेरिति भावः । जायते—प्रादुर्भावार्थकात् लुप्तानुबन्धकात् जन्धातोर्लटि तादेशे टेरेत्वे "दिवादिभ्यः श्यन्" इति श्यनि अनुबन्धलोपे "ज्ञाजनोर्जा" इति जन् इत्यस्य जादेशे, जायते इति रूपम् । जायेते, जायन्ते । जायसे, जायेथे, जायध्वे । जाये, जायावहे, जायामहे । लिटि—जज्ञे ।

भ्योऽन्यतरस्याम् ३।१।६१ एभ्यश्च्लेश्चिण् वा स्यात् एकवचने तशब्दे परे ॥ चिणो लुक् ६।४।१०४ चिणः परस्य तशब्दस्य लुक् स्यात् ॥ जनिवध्योश्च ७।३।३५ अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि, अजनिष्ट ॥ दीपी दीप्तौ ॥२०॥ दीप्यते । दिदीपे । अदीपि, अदीपिष्ट । पद गतौ ॥२०॥

---

जनूधातोर्लिटि तादेशेऽनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्यासकार्ये "हलादिः शेषः" इति नलोपे 'ज जन् त' इति स्थिते "लिटस्तझयोरेशिरेच्" इति तकारस्यैशि "गमहनजनखनघसां लोपः क्ङिति" इति जन्धातोरुपधाया अकारलोपे 'ज ज् न् ए' इति स्थिते "स्तोः श्चुना श्चुः" इति श्चुत्वे जकारञकारयोः संयोगे ज्ञे 'जज्ञे' इति रूपम् । आतामि-जज्ञाते, जज्ञिरे । जज्ञिषे । सेट्त्वात् "आर्धधातुकस्येड् वलादेः" इति इटि 'जज्ञिषे' इति । जज्ञाथे, जज्ञिध्वे । जज्ञे, जज्ञिवहे, जज्ञिमहे । लुटि-जनिता । जनितासे । लृटि-जनिष्यते । लोटि-जायताम् । लङि-अजायत । विधौ-जायेत । आशिषि-जनिषीष्ट । दीपजनेत्यादि । "च्लेः सिच्" इत्यतः च्लेरिति "चिण् ते पदः" इत्यस्मात् चिण् ते इति चानुवर्तते तदाऽऽह—एभ्यश्च्लेरिति । चिणो लुगिति । चिण इति पञ्चमी, तदाह—चिणः परस्येति । जनिवध्योश्चेति । "अत उपधायाः" इत्यतः उपधाया इति "मृजेर्वृद्धिः" इत्यतो वृद्धिरिति "नोदात्तोपदेशस्य" इत्यतो नेति "आतो युक्" इत्यतः चिण्कृतोरिति "अचो ञ्णिति" इत्यतो ञ्णिति इति चानुवर्तते, तदाह—अनयोरिति । अजनि । जनीप्रादुर्भावे धातोर्लुङि तादेशे च्लौ "दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्" इति सूत्रेण च्लेश्चिणि अनुबन्धलोपे "अत उपधायाः" इति वृद्धौ प्राप्तायाम् "जनिवध्योश्च" इति निषेधे "चिण् ते पदः" इति तलोपेऽटि 'अजनि' इति । चिणोऽभावपक्षे तु च्लेस्सिचि, "आर्धधातुकस्येड्वलादेः" इति इटि षत्वे ष्टुत्वे च 'अजनिष्ट' इति रूपम् । आतामि—अजनिषाताम्, अजनिषत । अजनिष्ठाः, अजनिषाथाम्, अजनिढ्वम् । अजनिषि, अजनिष्वहि, अजनिष्महि । चिणोऽभावपक्षे—आतामि—अजनिषाताम्, अजनिषत, इत्यादि पूर्ववत् । अजनिष्यत । दीप्यते । दीपी दीप्तौ धातोर्लटि प्रथमपुरुषैकवचने आत्मनेपदे तादेशे टेरेत्वे श्यनि श्यनोऽपित्वेन "सार्वधातुकमपित्" इति ङित्वात् "क्ङिति च" इति गुणनिषेधे दीप्यते इति । दिदीपे । लिटि तादेशे द्वित्वेऽभ्यासत्वेऽभ्यासाचो ह्रस्वे हलादिशेषे तकारस्यैशि दिदीपे । सेट्त्वात् लुटि—दीपिता । लृटि-दीपिष्यते । लोटि-दीप्यताम् । लङि-अदीप्यत । विधौ-दीप्येत । आशिषि-दीपिषीष्ट । लुङि-अदीपि । "दीपजन॰" इति चिण्विकल्पः । चिणोऽभावपक्षे-अदीपिष्ट । जनधातुवत् रूपाणि बोध्यानि । पद्यते । पद गतौ धातोः लटि तादेशे श्यनि टेरेत्वे पद्यते इति । पेदे । लिटि तादेशे धातोर्द्वित्वेऽभ्यासत्वे हलादिशेषे तकारस्यैशि "अत एक हल्मध्येऽनादेशादेर्लिटि" इति एत्वेऽभ्यासलोपे च पेदे इति रूपम् । पेदाते, पेदिरे । पेदिषे,

पचते । पेदे । पत्ता । पत्सीष्ट ॥ चिण् ते पदः ३।१।६० पदश्च्लेश्चिण स्यात्तशब्दे परे ॥ अपादि । अपत्साताम् । अपत्सत ॥ विद सत्तायाम् ॥२२॥ विद्यते । वेत्ता । अवित्त ॥ बुध अवगमने ॥२३॥ बुध्यते । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि, अबुद्ध । अभुत्साताम् । युध सम्प्रहारे ॥२४॥ युध्यते । युयुधे । योद्धा । अयुद्ध ।

---

पेदाथे, पेदिध्वे । पेदे, पेदिवहे, पेदिमहे । पत्ता । लुटि ते तासि तप्रत्ययस्य स्थाने डात्वे टेर्लोपे "खरि च" इति दस्य तत्वे च 'पत्ता' इति रूपम् । अग्रे—पत्तासे इत्यादि । लृटि—पत्स्यते । लोटि—पचताम् । लङि—अपद्यत । विधौ—पद्येत । आशिषि—पत्सीष्ट । चिण्ते पद इति । पदश्च्लेरिति । "च्लेस्सिच्" इत्यतः च्लेरित्यनुवर्तते, इति आवश्यकमाह—तशब्दे इति । अपादि । लुङि तादेशे च्लौ "चिण्ते पदः" इति श्लेश्चिण् चणावितौ "चिणो लुक्" इति तलोपे "अत उपधायाः" इति वृद्धौ 'अपादि' इति सिद्धम् । अपत्साताम्, अपत्सत । अपत्थाः अपत्साथाम्, अपद्ध्वम् । अपत्सि, अपत्स्वहि, अपत्स्महि, इति । लृङि-अपत्स्यत । विद्यते । विद्धातोर्लटि तादेशे टेरत्वे श्यनि श्यनोऽपित्वेन "सार्वधातुकमपित्" इति ङित्वाद् "क्ङिति च" इति गुणनिषेधे 'विद्यते' इति रूपं निष्पन्नं भवति । लिटि—विविदे । लिटि ते समागते धातोर्द्वित्वेऽभ्यासत्वे हलादिशेषे तकारस्यैशादेशो 'विविदे' इति रूपम्भवति । लुटि—अनिट्त्वात् वेत्ता । वेत्तासे इत्यादि । लृटि—वेत्स्यते । लोटि—विद्यताम् । लङि—अविद्यत । विधौ—विद्येत । आशिषि—वित्सीष्ट । लुङि—अवित्त । "झलो झलि" इति सिचः सलोपः । लृङि-अवेत्स्यत । बुध्यते । विद्यते इतिवत् । लिटि—बुबुधे । बोद्धा । लुटि, तादेशे, तासि तस्य डात्वे टेर्लोपे "झषस्तथोर्धोऽधः" इति तकारस्य धत्वे "झलां जश् झशि" इति जश्त्वेन दकारे "पुगन्तलघूपधस्य च" इति गुणे 'बोद्धा' इति । अग्रे—बोद्धासे इत्यादि । भोत्स्यते । लृटि ते स्ये आर्धधातुकत्वे इडागमाभावे "एकाचो बशो भष्" इति बस्य भत्वे लघूपधगुणे "खरि च" इति चर्त्वे 'भोत्स्यते' इति । लोटि—बुध्यताम् । लङि—अबुध्यत । विधौ—बुध्येत । आशीषि—भुत्सीष्ट । अबोधि । लुङि अटि तादेशे च्लौ च्लेस्तु "दीपजनबुधपूरितायि०" इति चिण्विकल्पे "चिणो लुक्" इति तलोपे "पुगन्तलघूपधस्य" इति लघूपधगुणे 'अबोधि' इति रूपम् । चिणोऽभावपक्षे-अबुद्ध । "झलो झलि" इति सलोपे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "झलां जश् झशि" इति जश्त्वेन दकारे 'अबुद्ध' इति रूपं च सिद्धं भवति । अभुत्साताम् । बुध्धातोर्लुङि आतामि, च्लौ च्लेः सिचि इचावितौ लोपे भष्भावे बुधोधस्य चर्त्वे च 'अभुत्साताम्' इति रूपम् । अभुत्सत । अबुद्धाः । अभुत्साथाम्, अभुद्ध्वम् । अभुत्सि, अभुत्स्वहि, अभुत्स्महि । युध्यते । युधसंप्रहारे धातोर्लटि ते श्यनि श्यनोऽपित्वेन "सार्वधातुकमपित्" इति ङित्वेन "क्ङिति च" इति गुणाभावे 'युध्यते' इति । युयुधे । युध्धातोर्लिटि तादेशे तकारस्यैशि, धातोर्द्वित्वेऽभ्यासत्वे हलादिशेषे 'युयुधे' इति साधु । लुटि-'योद्धा'

सृज विसर्गे ॥२५॥ सृज्यते । ससृजे । ससृजिषे ॥ सृजिदृशोर्झल्यमकिति ६।१।५८॥ अनयोरमागमः स्याज्झलादावकिति । स्रष्टा । स्रक्ष्यते । सृक्षीष्ट । असृष्ट । असृक्षाताम् । मृष तितिक्षायाम् ॥ २६ ॥ मृष्यति, मृष्यते । ममर्ष । ममर्षिथ ।

---

बोद्धावत् । लृटि-योत्स्यते । लोटि-युध्यताम् । लङि-अयुध्यत । विधौ-युध्येत । आशिषि-युत्सीष्ट । अयुद्ध । युध्धातोर्लुङि ते च्लौ, च्लेः सिचि "लिङ्सिचावात्मनेपदेषु" इति कित्वाद्गुणाभावे "झलो झलि" इति सिचः सलोपे "झषस्तथोर्धोऽधः" इति तस्य धत्वे 'अयुद्ध' इति रूपम् । लृङि-अयोत्स्यत । सृज्यते । सृज विसर्गे धातोर्लटि तादेशे टेरेत्वे श्यनि श्यनोऽपित्वेन ङित्वाद्गुणाभावे 'सृज्यते' इति । ससृजे । सृजधातोर्लिटि तादेशे तकारस्यैशादेशे धातोर्द्वित्वेऽभ्यासत्वे "उरत्" इत्यभ्यासऋवर्णस्य अकारे "उरण् रपरः" इति रपरे "हलादिः शेषः" इति रलोपे 'ससृजे' इति रूपम् । ससृजिषे । लिटो मध्यमपुरुषैकवचने थासि "थासः से" इति थासः से इत्यादेशे द्वित्वेऽभ्यासत्वे "उरत्" इति अदादेशे रपरे च कृते, "हलादिः शेषः" इति रलोपे "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषेधे क्रादिनियमाद् इटि, षत्वे च 'ससृजिषे' इति रूपं बोध्यम् । ससृजिध्वे । ससृजे । ससृजिवहे, ससृजिमहे । अत्रापि क्रादिनियमादिट् । सृजिदृशोर्झल्यमकिति । अकिति इति छेदः । नित्यार्थमिदम् । स्रष्टा । सृजधातोर्लुटि तादेशे, तासि तकारस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे "सृजिदृशोर्झल्यमकिति" इति अमि अनुबन्धलोपे मित्वादन्त्यादचः परेऽकारे जाते 'सृ अ ज् ता' इति जाते "इको यणचि" इति ऋकारस्य रेफादेशे "व्रश्चभ्रस्जसृज" इति षत्वे "ष्टुना ष्टुः" इति ष्टुत्वेन टकारे 'स्रष्टा' इति साधु । स्रष्टारौ, स्रष्टारः । स्रष्टासे इत्यादि । लृटि—स्रक्ष्यते । लृटि तादेशे स्ये प्रत्यये 'सृज् स्य त' इति स्थिते टेरेत्वे "सृजिदृशोर्झल्यमकिति" इत्यमि अनुबन्धलोपे "मिदचोऽन्त्यात्परः" इति मित्वेनान्त्यादचः परोऽकारो जातः, तेन 'सृ अ ज्स्यते' इति स्थिते "इको यणचि" इति यणि स्रज्स्यते इति दशायाम् "व्रश्च" इति षत्वे "षढोः कः सि" इति कत्वे "आदेशप्रत्यययोः" इति षत्वे कृष्संयोगे क्षे 'स्रक्ष्यते' इति सिद्धं भवति । लोटि-सृज्यताम् । लङि-असृज्यत । विधौ-सृज्येत । सृक्षीष्ट । सृजधातोराशीर्लिङि तादेशे "लिङः सीयुट्" इति सीयुटि उटावितौ "सुट्तिथोः" इति सुटि उटो लोपे "व्रश्चेति" जस्य षत्वे "षढोः कः सि" इति षस्य कत्वे कारपरकत्वात्स्यस्य "आदेशप्रत्यययोः" इति षत्वे ष्टुत्वे च "लिङ्सिचावात्मनेपदेषु" इति कित्वात् "क्ङिति च" इति गुणप्रतिषेधे 'सृक्षीष्ट' इति सिद्धम् । असृष्ट । सृज्धातोर्लुङि अडागमे तादेशे च्लौ, च्लेः सिजादेशे "लिङ्सिचावात्मनेपदेषु" इति कित्वाद्गुणाभावे "झलो झलि" इति सलोपे "व्रश्चेति" जस्य षत्वे "ष्टुना ष्टुः" इति ष्टुत्वे 'असृष्ट' इति रूपम्बोध्यम् । आतामि—असृक्षाताम् । अत्र "लिङ्सिचावात्मनेपदेषु" इति कित्वादमभावो बोध्यः ।

समृषे । मर्षितासि । मर्षितासे । मर्षिष्यति, मर्षिष्यते । णह बन्धने ॥ २७ ॥
नह्यति । नह्यते । ननाह । ननद्ध, नेहिथ । नेहे । नद्धा । नत्स्यति । अनात्सीत्,
अनद्ध ॥ इति दिवादयः ।

---

असृक्षत । असृष्ठाः । असृक्षाथाम् । असृड्ढ्वम् । असृक्षि, असृक्ष्वहि, असृक्ष्महि ।
लृङि—असक्ष्यत । मृष्यति । मृष् तितिक्षायां धातोर्लटि तिपि श्यनि श्यनोऽपित्त्वेन
ङित्त्वाद् गुणाऽभावे 'मृष्यति' इति । आत्मनेपदे—'मृष्यते' सृज्यते इतिवत् । ममर्ष ।
मृष्धातोर्लिटि तिपि णलि द्वित्वेऽभ्यासत्वे "उरत्" इति रपरेऽकादेशे 'मर्ष् मृष् अ'
इति स्थिते "हलादिः शेषः" इति रषयोर्लोपे "पुगन्तलघूपधस्य च" इति गुणे 'ममर्ष'
इति । ममृषतुः, ममृषुः । ममर्षिथ, ममृषथुः, ममृष । ममर्ष ममृषिव, ममृषिम ।
ममृषे । आत्मनेपदे रूपम् । लुटि—मर्षितासि । मर्षितासे । लृटि—मर्षिष्यति । मर्षिष्यते ।
लोटि—मृष्यतु । मृष्यताम् । लङि—अमृष्यत् । अमृष्यत । विधौ—मृष्येत्, मृष्येत ।
आशिषि—मृष्यात् । मृषीष्ट । लुङि—अमार्षीत्, मृषेर्लुङि अटि तिपि च्लौ सिचि इका-
रचकारयोर्लोपे तिप इकारलोपे आर्धधातुकत्वे "आर्धधातुकस्येड्" इति इटि, ईटि "इट
ईटि" इति सलोपे इट्त्वात् "नेटि" इति हलन्तलक्षणायाः वृद्धेर्निषेधे "पुगन्तलघूप-
धस्य च" इति गुणे 'अमार्षीत्' इति । आत्मनेपदे—अमर्षिष्ट । लृङि—अमर्षिष्यत्,
अमर्षिष्यत । नह्यते । णह बन्धने धातुतो लटि तादेशे "णो नः" इति धात्वादेर्णका-
रस्य नत्वे टेरेत्वे श्यनि 'नह्यते' इति । परस्मैपदे—नह्यति । ननाह । लिटि तिपि णलि
अनुबन्धलोपे द्वित्वे कृतेऽभ्यासत्वे हलादिशेषे "अत उपधायाः" इति वृद्धौ 'ननाह'
इति । अतुसि—नेहतुः । अत्रापि तसि अतुसि द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति
हलोपे 'ननह् अतुस्' इति जाते "अत एकहल्मध्ये" इति एत्वेऽभ्यासलोपे सस्य रुत्वे
विसर्गे च 'नेहतुः' इति । अग्रे—नेहुः । नेहिथ । नह्धातोः सिपि थलि द्वित्वेऽभ्यास-
कार्ये 'ननह् थ' इति स्थितौ भारद्वाजमते इड्विकल्पे 'ननह् इ थ' इति स्थिते "थलि
च सेटि" इति एत्वेऽभ्यासलोपे च 'नेहिथ' इति । इडभावपक्षे "नहो धः" इति हस्य
धकारे "झषस्तथोः" इति थस्यधत्वे "झलां जश् झशि" इति जश्त्वे दकारे 'ननद्ध' इति ।
नेहे । आत्मनेपदे लिटि, लिटस्तादेशे, तस्यैशि द्वित्वेऽभ्यासकार्ये "अत एकहल्मध्ये" इति
एत्वाभ्यासलोपे च तत्सिद्धेः । नद्धा । लुटि तिपि तासि तिपो डात्वे टिलोपे नह् ता इति
स्थितौ "नहो धः" इति हस्य धत्वे "झषस्तथोर्धोऽधः" इति तकारस्य धकारे "झलां
जश् झशि" इति पूर्वधकारस्य दकारे 'नद्धा' इति रूपं भवति । नत्स्यति । लृटि तिपि
स्ये प्रत्यये आर्धधातुकत्वे इडभावे "नहो धः" इति हस्य धत्वे "खरि च" इति धस्य
तत्वे च 'नत्स्यति' इति रूपम् । लोटि—नह्यतु । नह्यताम् । लङि—अनह्यत् । अनह्यत ।
विधौ—नह्येत् । नह्येत । आशिषि—नह्यात् । नत्सीष्ट । अनात्सीत् । लुङि अटि तिपि च्लौ
सिजादेशे "अस्तिसिचोऽपृक्ते" इति ईटि "वदव्रजहलन्तस्याचः" इति हलन्तत्वमा-

## अथ स्वादयः ।

**षुञ् अभिषवे** ॥ १ ॥ **स्वादिभ्यः श्नुः ३।१।७३।** शपोऽपवादः । सुनोति । सुनुतः । "हुश्नुवोः" इति यण् । सुन्वन्ति । सुन्वः, सुनुवः । सुनुते । सुन्वाते । सुन्वते । सुन्वहे, सुनुवहे । सुषाव । सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् ॥ **स्तुसुधूञ्भ्यः परस्मैपदेषु ७।२।७२।** एभ्यः सिच इट् स्यात् परस्मैपदेषु । असावीत् । असोष्ट । **चिञ् चयने** ॥ २ ॥ चिनोति । चिनुते ॥

---

श्रित्य वृद्धौ "नहो धः" इति हस्य धकारे "खरि च" इति धस्य सकारे अनात्सीत् इति रूपम् । आत्मनेपदे—अनद्ध । लृङि-अनत्स्यत् , अनत्स्यत । इति दिवादयः ।

स्वादिभ्यः श्नुरिति । कर्त्रर्थे सार्वधातुके परे स्वादिभ्यः श्नुः स्यादित्यर्थः । सुनोति । षुञ् अभिषवे धातुतो लटि तिपि "स्वादिभ्यः श्नुः" इति श्नौ, शलोपे, "धात्वादेः षः सः" इति धात्वादेः षस्य सकारे "सार्वधातुकार्धधातुकयोः" इति गुणे च 'सुनोति' इति रूपम् । तसि—सुनुतः । तसि श्नौ श्नोऽपित्वेन "सार्वधातुकमपित्" इति ङित्वात् "क्ङिति च" इति गुणनिषेधे सस्य रुत्वे विसर्गे च रूपम् । सुन्वन्ति । झौ श्नौ झेरन्तादेशे कृते "हुश्नुवोः सार्वधातुके" इति यणि 'सुन्वन्ति' इति । सुनोषि । सुनुथः । सुनुथ । सुनोमि । सुन्वः, सुनुवः । अत्र "लोपश्चाऽस्यान्यतरस्याम्" इति उकारलोपविकल्पः । एवम् 'सुन्मः, सुनुमः' इत्यत्रापि बोध्यम् । सुनुते । आत्मनेपदे लटि तादेशे 'सुनुते' इति । आतामि—सुन्वाते । "हुश्नुवोः" इति यण् । सुन्वते । सुनुषे । सुन्वाथे । सुनुध्वे । सुन्वे । सुन्वहे—सुनुवहे । सुन्महे—सुनुमहे । "लोपश्चास्यान्यतरस्याम्" इति उकारलोपविकल्पोऽत्र बोध्यः । सुषाव । षुञ्धातोर्लिटि, तिपि णलि द्वित्वेऽभ्यासत्वे, धात्वादेः षस्य सत्वे "अचो ञ्णिति" इति वृद्धौ आवादेशे 'सुषाव' इति रूपम् । सुषुवतुः, सुषुवुः । सुषुविथ—सुषोथ । सुषुवथुः, सुषुव । सुषाव, सुषव, सुषुविव, सुषुविम । आत्मनेपदे—सुषुवे । लुटि—सोता । लृटि—सोष्यति । लोटि—सुनोतु, सुनुतात् , सुनुताम् , सुन्वन्तु । सुनु । अत्र "उतश्च प्रत्ययादसंयोगपूर्वात्" इति हेर्लुक् । सुनवानि । अत्र लोट आडागमे गुणे अवादेशे, मेर्नौ च रूपम् । आत्मनेपदे—सुनुताम् , सुन्वाताम् , सुन्वताम् । सुनुष्व, सुन्वाथाम् , सुनुध्वम् । सुनवै । लोट आत्मनेपदे इटि श्नौ लोट आडागमे गुणे टेरेत्वे एत ऐ आदेशे च रूपम् । लङि—असुनोत् । आत्मनेपदे—असुनुत । विधौ—सुनुयात् । आत्मनेपदे—सुन्वीत । आशिषि—सूयात् । अत्र "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घः । आत्मनेपदे—सोषीष्ट । स्तुसुधूञ्भ्य इति । "इडत्यर्ति" इत्यत इडित्यनुवर्तते । "अञ्जेः सिचि" इत्यतः सिजित्यनुवृत्तं षष्ठ्या विपरिणम्यते तदाह—एभ्यः सिच इति । असावीत् । लुङि अटि तिपि च्लौ, च्लेः सिचि "स्तुसुधूञ्भ्यः परस्मैपदेषु" इति इटि "अस्तिसिचोऽपृक्ते" इति ईटि, "इट ईटि" इति सलोपे "सिचि वृद्धिः

विभाषा चेः ७।३।५८। अभ्यासात्परस्य कुत्वं वा स्यात्सनि लिटि च ॥ चिकाय, चिचाय । चिक्ये, चिच्ये । अचैषीत् । अचेष्ट । स्तृञ् आच्छादने ॥ ३ ॥ स्तृणाति । स्तृणुते ॥ शर्पूर्वाः खयः ७।४।६१। अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते अन्ये हलो लुप्यन्ते । तस्तार । तस्तरतुः । तस्तरे ॥ "गुणोऽर्ति" इति गुणः । स्तर्यात् ॥

---

परस्मैपदेषु" इति वृद्धौ सवर्णदीर्घे च 'असावीत्' इति रूपम् । आत्मनेपदे—असोष्ट । चिनोति । चिञ् चयने धातोर्लटि तिपि "स्वादिभ्यः श्नुः" इति श्नौ शलोपे श्नोरपित्त्वेन "सार्वधातुकमपित्" इति ङित्वे, ङित्वात् धात्वादेरिकारस्य "सार्वधातुकार्धधातुकयोः" इति प्राप्तस्य गुणस्य अभावे, तिपः पित्त्वेन श्नोरुकारस्य "सार्वधातुकार्धधातुकयोः" इति गुणे च कृते 'चिनोति' इति रूपम् । आत्मनेपदे—चिनुते । विभाषा चेरिति । "चजोः कुघिण्यतोः" इत्यतः कुग्रहणमनुवर्तते । "अभ्यासाच्च" इत्यतः अभ्यासादिति, "सन्लिटोर्जेः" इत्यतः सन्लिटोरिति च । तदाह—अभ्यासादित्यादिना । चिकाय । चिञ् धातोर्लिटि तिपि तिपो णलि धातोर्द्वित्वेऽभ्यासत्वे "विभाषा चेः" इति कुत्वेन चकारस्य कत्वे 'चिकि अ' इति स्थिते "अचो ञ्णिति" इति वृद्धौ, आयादेशे च 'चिकाय' इति साधु । कुत्वाभावे—चिचाय । आत्मनेपदे—चिक्ये, सिच्ये, इति । लुटि—चेता । लुटि तिपि तासि तिपो डात्वे टेर्लोपे "सार्वधातुकार्ध०" इति गुणे 'चेता' इति सिद्धम् । लृटि–चेष्यति, चेष्यते । लोटि–चिनोतु । आत्मनेपदे–चिनुताम् । लङि–अचिनोत् । आत्मनेपदे–अचिनुत । विधौ–चिनुयात् । आत्मनेपदे–चिन्वीत । आशिषि–चीयात् । आत्मनेपदे–चेषीष्ट । लुङि—अचैषीत् । अत्र "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धिः । आत्मनेपदे—अचेष्ट । लृङि–अचेष्यत् । आत्मनेपदे–अचेष्यत । स्तृणोति । स्तृञ् आच्छादने धातोर्लटस्तिपि श्नौ "सार्वधातुकार्धधातुकयोः" इति गुणे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति नस्य णत्वे 'स्तृणोति' इति । आत्मनेपदे—स्तृणुते । शर्पूर्वाः खय इति । अभ्यासस्येति । "अत्र लोपोऽभ्यासस्य" इत्यतस्तदनुवर्तत इति भावः । शर्पूर्वा इत्यत्र शर्पूर्वो येभ्य इत्यतद्गुणसंविज्ञानो बहुव्रीहिः । तेन शर् न शिष्यते । तस्तार । स्तृञ्धातोर्लिटि तिपि णलि अनुबन्धलोपे "लिटि धातोः" इति धातोर्द्वित्वेऽभ्यासत्वे "उरत्" इति अभ्यासऋकारस्य अदादेशे रपरे च "शर्पूर्वाः खयः" इति खयः शेषेऽर्थात् सलोपे "हलादिः शेषः" इति सलोपे 'त स्तृ अ' इति स्थिते "ऋतश्च संयोगादेर्गुणः" इति गुणे रपरे 'त स्तर् अ' इति स्थिते "अत उपधायाः" इति वृद्धौ सत्यां 'तस्तार' इति सिद्धं भवति । तस्तरतुः । तस्तरुः । तस्तर्थ, थलि तु "अचस्तास्वत्थल्यनिटः" इति इण्निषेधः, ऋदन्तत्वाच्च "ऋतो भारद्वाजस्य" इति नेड्, तस्तरथुः, तस्तर । तस्तार, तस्तर, तस्तरिव, तस्तरिम । आत्मनेपदे–तस्तरे । तस्तराते । तस्तरिरे । तस्तरिषे, तस्तराथे, तस्तरिढ्वे, तस्तरिध्वे । तस्तरे, तस्तरिवहे, तस्तरिमहे । क्रादिनियमादिट् एषु बोध्यः । स्तर्ता । स्तरिष्यति, स्तरिष्यते, अत्र "ऋद्धनोः स्ये" इति इट् । लोटि–स्तृणोतु ।

ऋतश्च संयोगादेः ७।२।४३। ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड् वा स्यात्तङि। स्तरिषीष्ट, स्तृषीष्ट। अस्तरिष्ट, अस्तृत। धूञ् कम्पने ॥ ४ ॥ धूनोति। धूनुते। दुधाव। "स्वरति" इति वेट्। दुधविथ, दुधोथ ॥ श्र्युकः किति ७।२।११। श्रिञ एकाच उगन्ताच्च गित्कितोरिण् न स्यात्। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। दुधु-

---

लङि-अस्तृणोत्। आत्मनेपदे-अस्तृणुत। विधौ-स्तृणुयात्। आत्मनेपदे—स्तृण्वीत। आशिषि—स्तर्यात्। आशिषि लिङि, तत्र तिपि इकारलोपे यासुटि 'स्तृयास् त्' इति स्थिते "गुणोर्तिसंयोगाद्योः" इति गुणे "स्कोः संयोगाद्योरन्ते च" इति सलोपे च 'स्तर्यात्' इति सिद्धम्। ऋतश्च संयोगादेरिति। "लिङ्सिचोरात्मने-पदेषु" इत्यनुवर्तते। "इट् सनि वा" इत्यतः इड्वेति, तदाह—ऋदन्तादित्या-दिना। स्तरिषीष्ट। आशिषि लिङि, लिङस्तादेशे सीयुडागमेऽनुबन्धलोपे "सुट् तिथोः" इति सुटि उटावितौ "ऋतश्च संयोगादेः" इति विकल्पेनेटि कृते "गुणोर्तिसं-योगाद्योः" इति गुणे उभयोःसकारयोः षत्वे ष्टुत्वे 'स्तरिषीष्ट' इति। इडभावपक्षे-"उश्च" इति कित्वाद्गुणाभावे 'स्तृषीष्ट' इति। अस्तारीत्। लुङि अटि तिपि च्लौ, च्लेः सिचि "अस्तिसिचोऽपृक्ते" इति ईटि "वदव्रज" इति वृद्धौ तिपः इलोपे 'अस्तारीत्' इति सिद्धम्। इडोऽभावात् "नेटि" इति वृद्धिनिषेधो नाशङ्क्यः। अस्तरिष्ट, अस्तृत। आत्मने-पदे–लुङि अटि तादेशे च्लौ सिचि, अनुबन्धलोपे "सार्वधातुकार्ध०" इति गुणे "ऋतश्च संयोगादेः" इति इटि षत्वे ष्टुत्वे च 'अस्तरिष्ट' इति। इडभावे च्लेः सिचि "उश्च" इति कि-त्वाद्गुणाभावे "ह्रस्वादङ्गात्" इति सिचो लोपे, अटि 'अस्तृत' इति। अस्तरिष्यत, अस्तरिष्यत। धूनोति। धूञ् कम्पने धातोर्लटि तिपि श्नौ श्नुव उकारस्य "सार्वधातु-कार्धधातुकयोः" इति गुणे 'धूनोति' इति। आत्मनेपदे—धूनुते। दुधाव। लिटि तिपि णलि द्वित्वे ऽभ्यासत्वे "ह्रस्वः" इति ह्रस्वत्वे "अभ्यासे चर्च" इति धस्य जश्त्वेन दत्वे 'दु धू अ' इति दशायाम् "अचो ञ्णिति" इति कृताकृतप्रसङ्गी विधिर्नित्यः इति न्यायेन नित्यत्वात् वृद्धौ आवि 'दुधाव' इति। दुधुवतुः, दुधुवुः। दुधविथ। लिटः सिपस्थलि द्वित्वे ऽभ्यासत्वे ह्रस्वे जश्त्वे 'दुधू थ' इति जाते "स्वरतिसूतिसूयतिधूञू-दितो वा" इति इटि "सार्वधातुकार्धधातुकयोः" इति गुणेऽवादेशे 'दुधविथ' इति। इडभावपक्षे 'दुधोथ' इति। दुधुवथुः, दुधुव। दुधाव, दुधव। श्र्युकः कितीति। अत्र "एकाच उपदेशे" इत्यत एकाच् इति "नेड्वशि कृति" इत्यतो नेडित्यनुवर्तते। तदाह—इडनेति। दुधुविव, दुधुविम। अनयोः कित्संज्ञकयोर्द्वयोः वस्मसोः स्थाने वमौ आदेशौ। धातोर्द्वित्वे पूर्ववत् अभ्यासादिकार्ये 'दुधू व' इति 'दुधू म' इति स्थिते, परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्याद् "श्र्युकः किति" इत्यनेन निषेधे प्राप्ते क्रादिनियमाद् नित्यमिटि "अचि श्नुधातुभ्रुवां य्वोः"

विव । दुधुवे । अधावीत् , अधविष्ट, अधोष्ट । अधविष्यत् , अधोष्यत् । अधविष्यताम् , अधोष्यताम् । अधविष्यत, अधोष्यत ॥ इति स्वादयः ।

---

## अथ तुदादयः ॥

तुद व्यथने ॥ १ ॥ तुदादिभ्यः शः ३।१।७७ शपोऽपवादः । तुदति । तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् । अतुत्त। णुद प्रेरणे ॥२॥ नुदति । नुदते । नुनोद । नोत्ता । भ्रस्ज पाके ॥ ३ ॥ "ग्रहिज्या" इति सम्प्रसा-

---

इति उवङि अनुबन्धलोपे 'दुधुविव' 'दुधुविम' इति । आत्मनेपदे—दुधुवे । दुधुविषे । अत्रापि क्रादिनियमान्नित्यमिट् । लुटि–धविता, धोता । धोतासि, धवितासि । आत्मनेपदे—धोता, धविता । धोतासे, धवितासे । लृटि–धोष्यति, धविष्यति । धविष्यते—धोष्यते । लोटि–धूनोतु । आत्मनेपदे–धूनुताम् । लङि–अधूनोत् । आत्मनेपदे लङि–अधूनुत । विधौ–धूनुयात् । आत्मनेपदे–धून्वीत । आशिषि–धूयात् । आत्मनेपदे–धविषीष्ट, धोषीष्ट । अधावीत् । लुङि, लुङःस्थानेतिपि अनुबन्धलोपे, तिपः इकारलोपे 'अधू त्' इति जाते च्लौ, च्लेः सिचि "स्तुसुधूञ्भ्यः परस्मैपदेषु" इति सिचः परत्वान्नित्यमिटि "अस्तिसिचोऽपृक्ते" इति तिपस्तकारस्य ईटि, "इट ईटि" इति सलोपे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ आवि अडागमे 'अधावीत्' इति । आत्मनेपदे लुङि—अधविष्ट, अधोष्ट । अत्र "स्वरति" इति वेट् । लङि–अधविष्यत, अधोष्यत । आत्मनेपदे—अधविष्यत, अधोष्यत । इति स्वादयः ।

तुदादिभ्यः श इति । कर्त्रर्थे सार्वधातुके परे तुदादिभ्यः शः स्यात् स्वार्थे इत्यर्थः । शपोऽपवादः । तुदति । व्यथनार्थात् लुप्तानुबन्धकात् तुदधातुतो लटि, तिपि, तिपः सार्वधातुकत्वे "पुगन्तलघूपधस्य च" इति लघूपधगुणं बाधित्वा नित्यत्वात् "तुदादिभ्यः शः" इति शे कृते तस्य अपित्त्वात् "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावे 'तुदति' इति । तुदतः, तुदन्ति । तुदसि, तुदथः, तुदथ । तुदामि, तुदावः, तुदामः । आत्मनेपदे–तुदते, तुदेते, तुदन्ते । इत्यादि । तुतोद । तुद्धातोर्लिटि तिपि णलि द्वित्वेऽभ्यासादिकार्ये लघूपधगुणे 'तुतोद' इति । तुतुदतुः, तुतुदुः । तुतोदिथ । थलि धातोर्द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति दलोपे "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते "एकाच उपदेशेनुदात्तात्" इति निषेधे क्रादिनियमाद् नित्यमिटि लघूपधगुणे 'तुतोदिथ' इति । तुतुदथुः, तुतुद । तुतोद, तुतुदिव, तुतुदिम । आत्मनेपदे–तुतुदे, तुतुदाते, तुतुदिरे इति । लुटि–तोत्ता । लृटि—तोत्स्यति । तोत्स्यते । लोटि—तुदतु । आत्मनेपदे—तुदताम् । लङि—अतुदत् । आत्मनेपदे–अतुदत । विधौ—तुदेत् । आत्मनेपदे–तुदेत । आशिषि-तुद्यात् । अत्र "किदाशिषि" इति कित्वान्न गुणः । तुत्सीष्ट । अत्र "लिङ्सिचावात्मनेपदेषु" इति कित्वान्न गुणः । अतौत्सीत् । लुङि तिपि च्लेः सिचि इचो लोपे तिप

रणम् । सस्य श्चुत्वेन शः, शस्य जश्त्वेन जः । भृज्जति । भृज्जते ॥ भ्रस्जो रोपधयो रमन्यतरस्याम् ६।४।४७। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः ॥ बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ, बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । "स्कोः"

---

इकारलोपे "अस्तिसिचोऽपृक्ते" इति ईटि "वदव्रज" इति वृद्धौ "खरि च" इति चर्त्वे अडागमे च 'अतौत्सीत्' इति । आत्मनेपदे-अतुत्त । णुदधातुः तुदिवत् । भृज्जति । भ्रस्ज-पाके धातोर्लटि तिपि "तुदादिभ्यः शः" इति शे, अनुबन्धलोपे शस्यापित्वेन "सार्वधातुकमपित्" इति ङित्वात् "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणे पूर्वरूपे 'भृ स् ज् अ' इति स्थिते "स्तोः श्चुना" इति श्चुत्वेन सस्य शत्वे 'भृश् ज् अ ति' इति स्थिते "झलां जश् झशि" इति जश्त्वेन शस्य जत्वे कृते 'भृज्जति' इति रूपम् । भृज्जतः, भृज्जन्ति । भृज्जसि, भृज्जथः, भृज्जथ । भृज्जामि, भृज्जावः, भृज्जामः । आत्मनेपदे-भृज्जते । भ्रस्जो रोपधयोरिति । भ्रस्ज इत्यवयवषष्ठी । रोपधयोः इति स्थान-षष्ठीच उपधा च तयोरिति विग्रहः । रेफादकार उच्चारणार्थः । रेफस्य उपधायाश्च स्थाने इति लभ्यते "आर्धधातुके" इत्यधिकृतत्वात्, तदाह-भ्रस्जे रेफस्येत्यादिना । मित्वादन्त्यादचः पर इति । "मिदचोऽन्त्यात्परः" इति परिभाषयेति भावः । बभर्ज । भ्रस्ज्धातोर्लिटि तिपि, तिपो णलि "लिटि धातोः" इति धातोर्द्वित्वेऽभ्याससंज्ञायां 'भ्रस्ज् भ्रस्ज् अ' इति स्थितौ "हलादिः शेषः" इति हलो लोपे 'भ भ्रस्ज् अ' इति जाते "अभ्यासे चर्च" इति भकारस्य बकारे विहिते 'ब भ्रस्ज् अ' इति स्थिते "भ्रस्जो रोपधयोरमन्यतरस्याम्" इति रेफस्य उपधाभूतसकारस्य च स्थाने रमि प्राप्ते "मिदचोऽन्त्यात्परः" इत्यन्त्यादेशात् भकारान्तर्गताकारात्परस्यैव रमागमे अमावितौ लोपे च स्थानषष्ठीनिर्देशाद् रेफस्योपधाभूतसकारस्य च निवृत्तौ 'बभर्ज' इति रूपम् । रमोऽभावपक्षे तु 'भ्रस्ज् भ्रस्ज् अ' इति स्थिते हलादिशेषे "अभ्यासे चर्च" इति भस्य बत्वे श्चुत्वेन सस्य शत्वे "झलां जश् झशि" इति शस्य जश्त्वेन जत्वे 'बभ्रज्ज' इति रूपम् । बभर्जतुः । अतुसि कृते पूर्ववत् साधनिका बोध्या । बभर्जतुः-बभ्रज्जतुः । बभर्जुः-बभ्रज्जुः । बभर्जिथ । लिटि सिपि थलि धातोर्द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति हलादिशेषे "अभ्यासे चर्च" इति भस्य बत्वे "भ्रस्जो-रोपधयोरमन्यतरस्याम्" इति रमि रोपधयोर्निवृत्तौ "आर्धधातुकस्येड्वलादेः" इति थलि इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति इण्निषेधे सति क्रादिनियमाद् विकल्पेन इटि 'बभर्जिथ' इति रूपम् । इडभावे तु 'बभ्रस्ज् थ' इति स्थिते "भ्रस्जो रोपधयो" इति रमि रोपधयोश्च निवृत्तौ 'बभर् ज् थ' इति जाते "व्रश्चभ्रस्ज" इति जस्य षत्वे "ष्टुना ष्टुः" इति थस्य ठत्वे 'बभर्ष्ठ' इति । रमभावपक्षे तु थलि पूर्ववद् क्रादिनियमादिटि श्चुत्वेन सस्य शत्वे "झलां जश् झशि" इति शस्य जत्वे बभ्रज्जिथ । थलि-

इति सलोपः । "व्रश्च" इति षः । बभ्रष्ठ । बभर्ज्जे । बभृज्ज्जे । भर्ष्टा, भ्रष्टा । भ्रक्ष्यति, भर्क्ष्यति । "क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन" । भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भर्क्षीष्ट, भ्रक्षीष्ट । अभ्राक्षीत्, अभार्क्षीत् । अभर्ष्ट, अभ्रष्ट ॥ कृष विलेखने ॥ ४ ॥ कृषति, कृषते । चकर्ष, चकृषे ॥ अनुदात्तस्य

---

रमभावे इडभावे च "स्कोः संयोगाद्योः" इति सलोपे "व्रश्च" इति जस्य षत्वे "ष्टुना ष्टुः" इति ष्टुत्वेन थस्य ठत्वे 'बभ्रष्ठ' इति रूपम् । आत्मनेपदे तु—बभर्ज्जे, बभ्रज्जे । अत्र साधनिका पूर्ववत् । भर्ष्टा भ्रष्टा । लुटि तिपि तासि तास आर्धधातुकत्वे तिपो डात्वे टेर्लोपे रमागमे रोपधयोर्निवृत्तौ "व्रश्चेति" इति जकारस्य षत्वे 'ष्टुना ष्टुः" इति ष्टुत्वे 'भर्ष्टा' इति । रमोऽभावपक्षे—"स्कोः संयोगाद्योः" इति सलोपे कृते जस्य षत्वे ष्टुत्वे 'भ्रष्टा' इति रूपम् । भर्क्ष्यति । भ्रक्ष्यति । लृटि तिपि स्ये आर्धधातुकत्वे रमि रोपधयोर्निवृत्तौ च "व्रश्च" इति जस्य षत्वे "षढोः कः सि" इति षस्य कत्वे सस्य षत्वे कृष्संयोगे क्षकारे कृते 'भर्क्ष्यति' इति । रमोऽभावपक्षे तु "व्रश्च" इति जकारस्य षकारे "षढोः कः सि" इति षस्य ककारे "स्कोः" इति सलोपे षत्वे कृष्संयोगे क्षे कृते 'भ्रक्ष्यति' इति रूपम् । आत्मनेपदे तु लृटि—भर्क्ष्यते,, भ्रक्ष्यते इति । लोटि—भृज्जतु । आत्मनेपदे—भृज्जताम् । लङि—अभृज्जत् । आत्मनेपदे—अभृज्जत । विधौ—भृज्जेत् । आ०—भृज्जेत, भृज्जेयाताम्, भृज्जेरन्, इत्यादि पूर्ववत् । भृज्ज्यात् । आशीर्लिङि तिपि यासुटि उटावितौ तयोर्लोपे च "इतश्च" इति तिप इकारलोपे, "किदाशिषि" इति यासुटः कित्वात् क्ङिति रमागमं बाधित्वा पूर्वविप्रतिषेधेन पूर्वं कित्वात् "ग्रहिज्या" इति सम्प्रसारणे पूर्वरूपे "स्कोः संयोगाद्योः" इति सलोपे श्चुत्वेन सकारस्य शकारे "झलां जश् झशि" इति शस्य जकारे 'भृज्ज्यात्' इति । आत्मनेपदे—भर्क्षीष्ट । आशिषि आत्मनेपदे तादेशे "लिङः सीयुट्" इति सीउटिउटावितौ रमि, रोपधयोर्निवृत्तौ च "व्रश्च" इति जस्य षत्वे "षढोःकः सि" इति षस्य कत्वे "आदेशप्रत्यययोः" इति सीयुटः सस्य षत्वे "लोपो व्योर्वलि" इति यलोपे 'भर्क् षीत' इति स्थिते "सुट् तिथोः" इति सुटि उटावितौ लोपयोश्च "आदेशप्रत्यययोः" इति सुटः सकारस्य षत्वे ष्टुत्वे च 'भर्क्षीष्ट' इति रूपम् । रमोऽभावपक्षे—भ्रक्षीष्ट । अत्र "स्कोः" इति, संयोगादेः सस्य लोप एव विशेषः । अभार्क्षीत्, अभ्राक्षीत् । लुङि अटि तिपि च्लौ सिचि इचावितौ लोपे च रमि रोपधयोर्निवृत्तौ च "व्रश्च" इति जस्य षत्वे "षढोः कः सि" इति षस्य कत्वे तिप इकारलोपे इटि "वदव्रज" इति वृद्धौ अभार्क्षीत्, इति । रमोऽभावपक्षे तु "स्कोः" इति सलोपे जस्य षत्वे षस्य कत्वे सिचः सस्य षत्वे कृष्संयोगे क्षे "वदव्रज" इति वृद्धौ 'अभ्राक्षीत्' इति । अभर्ष्ट । लुङि अटि तादेशे च्लौ सिचि रमि रोपधयोर्निवृत्तौ च "झलो झलि" इति सिचः सकारस्य लोपे "व्रश्च" इति जस्य षत्वे ष्टुत्वे 'अभर्ष्ट' इति । रमोऽभावे ते च्लौ सिचि "झलो झलि" इति सलोपे जस्य षत्वे ष्टुत्वे "स्कोः" इति धातोरादेः सकारस्य लोपे 'अभ्रष्ट' इति रूपम् ।

**अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** ६।१।५९। उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति। क्रष्टा, कर्ष्टा। कृक्षीष्ट। (स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः) अक्राक्षीत्, अकार्क्षीत्, अकृक्षत्। अकृष्ट। अकृक्षाताम्। अकृक्षत।

लृङि-अकर्क्ष्यत्, अक्रक्ष्यत्, आत्मनेपदे-अकर्क्ष्यत, अक्रक्ष्यत इति। कृषति। कृषविलेखने धातोः लटि तिपि शे शित्वात् सार्वधातुकत्वे अपित्त्वेन "सार्वधातुकमपित्" इति ङित्वात् गुणाभावे 'कृषति' इति रूपम्। आ०- कृषते। चकर्ष। लिटि तिपि णलि द्वित्वेऽभ्यासत्वे "उरत्" इत्यभ्यासऋकारस्य अकारे रपरे च "हलादिः शेषः" इति रेफषकारयोर्लोपे "कुहोश्चुः" इति कस्य चत्वे "पुगन्त" इति लघूपधगुणे 'चकर्ष' इति रूपम्। चकृषतुः, चकृषुः। चकर्षिथ, चकृषथुः, चकृष। चकर्ष, चकृषिव, चकृषिम। आत्मनेपदे लिटि— चकृषे। अनुदात्तस्य चेति। "सृजि दृशः" इत्यतः झल्यमकितीति। "आदेच उपदेशे" इत्यतः उपदेशे इति चानुवर्तते, तदाह—उपदेशे। अनुदात्त इत्यादिना। क्रष्टा, कर्ष्टा। कृषधातोरनुबन्धलोपे लुटि तिपि तासि इडभावे तिपो डात्वे डित्वाट्टेर्लोपे "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इति वैकल्पिकेन अमागमे मित्वादन्त्यादचः परे 'कृ अ ष् त् आ' इति स्थिते "इको यणचि" इति यणि ष्टुत्वे च कृते 'क्रष्टा' इति रूपम्। अमोऽभावपक्षे तु-"पुगन्तलघूपधस्य च" इति गुणे ष्टुत्वे च 'कर्ष्टा' इति रूपम्। लृटि-क्रक्ष्यति, कर्क्ष्यति। आत्मनेपदे-क्रक्ष्यते, कर्क्ष्यते। लोटि-कृषतु। आ०-कृषताम्। लङि-अकृषत्। आ०-अकृषत। विधौ-कृषेत्। आ०-कृषेत। आशिषि—कृष्यात्। कृक्षीष्ट। कृष्धातोः आशीर्लिङि तादेशे "लिङः सीयुट्" इति सीयुटि उटावितौ तयोर्लोपे च "सुट् तिथोः" इति सुडागमेऽनुबन्धलोपे "लिङ्सिचावात्मनेपदेषु" इति कित्वाद्गुणाभावे "लोपो व्योर्वलि" इति यलोपे "षढोः कः सि" इति धातोः षकारस्य कत्वे "आदेशप्रत्यययोः" इति सकारद्वयस्य षत्वे ष्टुत्वे कृष्संयोगे क्षकारे च जाते 'कृक्षीष्ट' इति रूपम्। अक्राक्षीत्। कृष्धातोर्लुङि अटि तिपि अनुबन्धलोपे तिप इकारलोपे च्लेः सिचि प्राप्ते तं प्रबाध्य "स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः" इति वार्तिकेन वैकल्पिके च्लेः सिचि इचावितौ लोपे च "अनुदात्तस्य चर्दु०" इति वैकल्पिकेऽमि 'अकृअम्ष्सत्' इति स्थिते मस्येत्संज्ञायां लोपे च मित्वादन्त्यादचः परे अचप्रत्वात् "इको यणचि" इति यणि 'अक्रष्सत्' इति जाते "षढोः कः सि" इति धातोः षस्य कत्वे "आदेशप्रत्यययोः" इति सिचः सकारस्य षत्वे कृष्संयोगे क्षकारे "अस्तिसिचोऽपृक्ते" इति ईटि अनुबन्धलोपे "वदव्रजहलन्तस्याचः" इति हलन्तत्वमाश्रित्य वृद्धौ 'अक्राक्षीत्' इति रूपम्। अमोऽभावपक्षे तु हलन्तलक्षणा वृद्धौ। अकार्क्षीत् इति। सिचोऽभावपक्षे-"शल इगुपधादनिटः क्सः" इति च्लेः क्सादेशे "लशक्वतद्धिते" इति कस्येत्संज्ञायां लोपे च "षढोः कः सि" इति धातोः षस्य कत्वे "आदेशप्रत्यययोः" इति क्ससः सस्य षत्वे कृष्संयोगे क्षत्वे क्सः कित्वाद्गुणाभावे 'अकृक्षत्' इति रूपम्। अमि सिचि

क्सपक्षे–अकृक्षत। अकृक्षाताम्। अकृक्षन्त। मिल सङ्गमे ॥ ५ ॥ मिलति। मिलते। मिमेल। मेलिता। अमेलीत्। मुच्लृ मोचने ॥ ६ ॥ शे मुचादीनाम् ७।१।५९। मुच् लुप् विद् लिप् सिच् कृत् खिद् पिशां नुम् स्यात् शे परे। मुञ्चति। मुञ्चते। मुमोच। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुचत्। अमुक्त। अमुक्षाताम्। लुप्लृ

---

अक्राष्टाम्। अक्राक्षुः। अक्राक्षीः, अक्राष्टम्, अक्राष्ट। अक्राक्षम्। अक्राक्ष्व। अक्राक्ष्म। अमभावे सिचि अकार्ष्टाम्। अकार्क्षुः। अकार्क्षीः, अकार्ष्टम्, अकार्ष्ट। अकार्क्षम्, अकार्क्ष्व, अकार्क्ष्म। अमभावे सिजभावे क्सादेशे तु तसि अकृक्षताम्, अकृक्षन्। अकृक्षः, अकृक्षतम्, अकृक्षत, अकृक्षम्, अकृक्षाव, अकृक्षाम। अकृष्ट। लुङस्ते च्लौ सिचि "लिङ्सिचावात्मनेपदेषु" इति कित्वाद्गुणाभावे "झलो झलि" इति सलोपे "ष्टुना ष्टुः" इति ष्टुत्वेऽटि 'अकृष्ट' इति रूपम्। अकृक्षाताम्। आतामि "षढोः कः सि" इति षस्य कत्वे सिचः सस्य षत्वेऽटि 'अकृक्षाताम्' इति रूपम्। झादेशे तु "आत्मनेपदेष्वनतः" इति अतादेशे–अकृक्षत। अकृष्ठाः, अकृक्षाथाम्, अकृड्ढ्वम्। अकृक्षि, अकृक्ष्वहि, अकृक्ष्महि। सिजभावे तु क्सादेशे अनुबन्धलोपे 'कृ ष् स त' इति स्थिते "षढोः कः सि" इति धातोः षस्य कत्वे क्ससः सस्य षत्वे संयोगेऽटि 'अकृक्षत' इति। आतामि–अकृक्षाताम्। 'क्सस्याचि, इति अलोपः। झौ–अकृक्षन्त। अकृक्षथाः, अकृक्षाथाम्, अकृक्षध्वम्। अकृक्षि, अकृक्षावहि, अकृक्षामहि। लृङि—अक्रक्ष्यत्, अकर्क्ष्यत्। आ०—अक्रक्ष्यत, अकर्क्ष्यत। मिलति। मिलसङ्गमे धातुतो लटि तिपि शेऽनुबन्धलोपे 'मिलति' इति रूपम्। आ०–मिलते। मिमेल। मिलधातोर्लिटि तिपि णलि अनुबन्धलोपे "लिटि धातोः" इति द्वित्वे अभ्यासकार्ये "पुगन्तलघूपधस्य च" इति गुणे 'मिमेल' इति। मिमिलतुः, मिमिलुः। लुटि—मेलिता। लृटि—मेलिष्यति, मेलिष्यते। लोटि—मिलतु। आ०—मिलताम्। लङि—अमिलत्। आत्मनेपदे–अमिलत। विधौ—मिलेत्। आ०—मिलेत। आशिषि–मिल्यात्। आ०—मेलिषीष्ट। अमेलीत्। लुङि अटि तिपि तिप इकारलोपे च्लौ च्लेः सिचि "पुगन्तलघूपधस्य च" इति गुणे "आर्धधातु०" इति इटि "अस्तिसिचोऽपृक्ते" इति ईटि "इट ईटि" इति सलोपे 'अमेलीत्' इति। आ०—अमेलिष्ट। लृङि—अमेलिष्यत्, अमेलिष्यत। शे मुचादीनामिति। नुम् स्यादिति शेषपूरणमिदम्। "इदितो नुम्" इत्यतस्तदनुवृत्तेरिति भावः। मुञ्चति। मुच्लृमोचने धातुतो लटि तिपि अनुबन्धलोपे "तुदादिभ्यः शः" इति शे अनुबन्धलोपे शित्वादपित्वेन ङित्वात् गुणाभावे, "शे मुचादीनाम्" इति नुमि अनुबन्धलोपे। "नश्चापदान्तस्य" इति अनुस्वारे परसवर्णे च जाते 'मुञ्चति' इति रूपम्। आत्मनेपदे–मुञ्चते। मुमोच। लिटि मुच् मुच् अ इति स्थिते हलादिशेषे "पुगन्त" इति गुणे 'मुमोच' इति। आ०—मुमुचे। लुटि–मोक्तासि। मोक्तासे। लृटि—मोक्ष्यति–मोक्ष्यते। लोटि–मुञ्चतु। आ०—मुञ्चताम्। लङि–अमुञ्चत्। आ०–अमुञ्चत। विधौ—मुञ्चेत्।

छेदने ॥ ७ ॥ लुम्पति । लुम्पते । लोप्ता । अलुपत् । अलुप्त । विदॢ लाभे ॥८॥ विन्दति । विन्दते । विवेद । विविदे । व्याघ्रभूतिमते सेट् । वेदिता । भाष्यमतेऽनिट् । परिवेत्ता । षिच क्षरणे ॥ ९ ॥ सिञ्चति । सिञ्चते ॥ लिपिसिचिह्वश्च ३।१।५३ एभ्यश्च्लेरङ् स्यात् । असिचत् ॥ आत्मनेपदेष्वन्यतरस्याम् ३।१।५४। लिपि-सिचिह्वः परस्य च्लेरङ् वा स्यात् तङि । असिचत । असिक्त । लिप उपदेहे ॥१०॥ उपदेहो वृद्धिः । लिम्पति । लिम्पते । लेप्ता । अलिपत् । अलिपत, अलिप्त ॥ इति उभयपदिनः ॥

---

आ०—मुञ्चेत । आशिषि—मुच्यात् । मुक्षीष्ट । अत्र "लिङ्सिचावात्मनेपदेषु" इति कित्वाद्गुणाभावो बोध्यः । अमुचत् । मुच्धातोर्लुङि अटि तिपि अनुबन्धलोपे च्लौ "पुषादिद्युताद्यॢदितः" इति च्लेरङि ङित्वाद्गुणाभावे 'अमुचत्' इति । अमुक्त । आ०—लुङि अटि तादेशे च्लौ च्लेः सिचि 'अमुच् स् त' इति स्थिते "झलो झलि" इति सलोपे "चोः कुः" इति चस्य कत्वे 'अमुक्त' इति रूपम् । लृङि—अमोक्ष्यत् । आ०—अमोक्ष्यत । लुम्पति । लुप्लृछेदने धातोर्लटि तिपि अनुबन्धलोपे शेऽनुबन्धलोपे "शे मुचादीनाम्" इति नुमि अनुबन्धलोपे "नश्चापदान्तस्य झलि" इति अनुस्वारे परस-वर्णे च लुम्पति । आत्मनेपदे—लुम्पते । लिटि-लुलोप । आ०—लुलुपे । लोप्तासि । लोप्तासे । लोप्स्यति । लोप्स्यते । लोटि-लुम्पतु । लुम्पताम् । लङि-अलुम्पत्, अलु-म्पत । लुम्पेत्-लुम्पेत । आशिषि-लुप्यात् । लुप्सीष्ट । लुङि—अलुपत् । लृदित्वादङ् । आत्मनेपदे—अलुप्त । अलोप्स्यत्—अलोप्स्यत । विन्दति । विन्दते । "शे मुचादीनाम्" इति नुमि शेषं मुचिवत् । विवेद, विविदे । वेत्ता । व्याघ्रभूतिमते सेट्, तदा—वेदिता । वेत्स्यति, वेत्स्यते । विन्दताम् । लङि—अविन्दत् । अविन्दत । विन्देत् । विन्देत ॥ विद्यात् । वित्सीष्ट । लुङि—अविदत् । लृदित्वादङ् । अवित्त । लृङि—अवेत्स्यत् । अवेत्स्यत । सिञ्चति । षिच् क्षरणे धातोः "धात्वादेः षः सः" इति धात्वादेः षस्य सत्वे लटि तिपि "शे मुचादीनाम्" इति नुमि अनुबन्धलोपेऽनुस्वारे परसवर्णे च 'सिञ्चति' इति रूपम् । आत्मनेपदे—सिञ्चते । लिटि—सिषेच-सिषिचे । लुटि—सेक्ता । सेक्ष्यति—सेक्ष्यते । सिञ्चतु । सिञ्चताम् । लङि—असिञ्चत् । असिञ्चत । सिच्यात्-सिक्षीष्ट । लिपिसिचेति । लिपि सिचि ह्वा एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । "च्लेः सिच्" इत्यतः च्लेरित्ति "अस्यतिवक्तिख्यातिभ्यः" इत्यतोऽङिति चानुवर्तते । तदाह—एभ्य इति । असिचत् । लुङि अटि तिपि तिप इकारलोपे च्लौ "लिपिसिचिह्वश्च" इत्यङि अनुबन्धलोपे ङित्वा-द्गुणे 'असिचत्' इति । आत्मनेपदेष्विति । "लिपिसिचिह्वश्च" इत्यनुवर्तते । "च्लेः सिच्" इत्यतः च्लेरिति, "अस्यतिवक्तिख्यातिभ्यः" इत्यतः अङिति चानुवर्तते, तदाह—लिपिसिचीत्यादिना । असिचत । लुङि तादेशे च्लौ "आत्मनेपदेष्वन्यतरस्याम्" इति च्ले-रङि अटि अनुबन्धलोपे ङित्वाद्गुणाभावे 'असिचत' इति रूपम् । अङभावे च्लौ, च्लेः सिचि "झलो झलि" इति सिचः सलोपे "चोः कुः" इति कुत्वेऽटि 'असिक्त' इति ।

कृती छेदने ॥ ११ ॥ कृन्तति । चकर्त । कर्तिता । कर्तिष्यति, कर्त्स्यति । अकर्तीत् । खिद परिघाते ॥ १२ ॥ खिन्दति । चिखेद । खेत्ता ॥ पिश अवयवे ॥ १३ ॥ पिंशति । पेशिता । ओव्रश्चू छेदने ॥ १४ ॥ वृश्चति । वव्रश्च । वव्रश्चिथ,

---

लृङि—अलेप्स्यत्—अलेप्स्यत ॥ लिम्पति । लिपउपदेहे इति धातोर्लटि, तिपि शेऽनुबन्धलोपे "शेमुचादीनाम्" इति नुमि अनुबन्धलोपे "नश्चापदान्तस्य झलि" इति अनुस्वारे परसवर्णे च 'लिम्पति' इति । आत्मनेपदे–लिम्पते । लिलेप । लिटः तिपि णलि द्वित्वेऽभ्यासकार्ये "पुगन्त०" इति गुणे 'लिलेप' इति । आ० लिलिपे । लुटि–लेप्तासि । लेप्तासे । लेप्स्यति–लेप्स्यते । लोटि–लिम्पतु । लिम्पताम् । लङि–अलिम्पत् । अलिम्पत । विधौ–लिम्पेत्–लिम्पेत । आशिषि—लिप्यात् । लिप्सीष्ट । अलिपत् । लुङि अटि तिपि च्लौ "लिपिसिचिह्वश्च" इति च्लेरङि अनुबन्धलोपे तिप इकारलोपे ङित्वाद्गुणाभावे 'अलिपत्' इति रूपम् । आत्मनेपदे तु—'अ लिप् च्लि त्' इति स्थितौ "आत्मनेपदेष्वन्यतरस्याम्" इति वा च्लेरङि अनुबन्धलोपे ङित्वाद् गुणाभावे 'अलिपत' इति रूपम् । अङभावे च्लेः सिचि अनुबन्धलोपे 'अलिप् स त्' इति स्थितौ "झलो झलि" इति सिज्लोपे "लिङ् सिचौ" इति कित्वाद्गुणाभावे 'अलिप्त' इति रूपम् । लृङि–अलेप्स्यत्–अलेप्स्यत । कृन्तति । कृती छेदने इति धातुतो लटि तिपि शेऽनुबन्धलोपे "शे मुचादीनाम्" इति नुमि मित्वादन्त्यादचः परे अनुबन्धलोपेऽनुस्वारे परसवर्णे च 'कृन्तति' इति रूपम् । चकर्त । कृती छेदने धातोर्लिटि तिपि णलि अनुबन्धलोपे द्वित्वेभ्यासकार्ये "कुहोश्चुः" इति कस्य चत्वे "पुगन्त०" इति गुणे "अचो रहाभ्यां द्वे" इति रेफात्परस्य तकारस्य द्वित्वे 'चकर्त्त' इति । सेट्त्वात् लुटि—कर्त्तिता । लृटि—कर्त्तिष्यति । कृत्धातोर्लृटि तिपि स्ये "सेऽसिचिकृतचृतछृदतृदनृतः" इति विकल्पेन इटि पक्षे 'कर्त्तिष्यति' इति । इडभावे—कर्त्स्यति । लोटि–कृन्ततु । लङि–अकृन्तत् । विधौ–कृन्तेत् । आशिषि–कृत्यात् । लुङि—अकर्तीत् । लुङि–अटि तिपि तिप इकारलोपे च्लौ, च्लेः सिचि "आर्धधातुकस्येड्" इति इटि "अस्तिसिचः" इति ईटि "इट ईटि" इति सलोपे "पुगन्त०" इति गुणे "वदव्रज" इति वृद्धौ प्राप्ते "नेटि" इति निषिद्धे "पुगन्तलघूपधस्य च" इति गुणे 'अकर्तीत्' इति रूपम् । अकर्तिष्यत्, अकर्त्स्यत् । खिदति । खिद् परिघातार्थकात् धातोर्लटि तिपि शेऽनुबन्धलोपे अनुस्वारे परसवर्णे च 'खिदन्ति' इति । लिटि—चिखेद । लुटि–खेत्ता । लृटि–खेत्स्यति । लोटि–खिन्दतु । लङि–अखिन्दत् । विधौ–खिन्देत् । आशिषि– खिद्यात् । लुङि–अखेदीत् । लङि–अखेत्स्यत् । पिंशति । लटि तिपि शेऽनुबन्धलोपे "शे मुचादीनाम्" इति नुमि अनुबन्धलोपेऽनुस्वारे 'पिंशति' इति । लिटि–पिपेश । लुटि–पेशितासि । लृटि–पेशिष्यति । लोटि–पिंशतु । लङि–अपिशत् । विधौ–पिंशेत् । आशिषि–पिश्यात् । लुङि–अपेशीत् । वृश्चति । ओव्रश्चूछेदने इति धातोर्लटि तिपि शेऽनुबन्धलोपे शस्या-

वव्रष्ठ । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्, अव्राक्षीत् ।
व्यच व्याजीकरणे ॥ १५ ॥ विचति । विव्याच । विविचतुः । व्यचिता । व्यचि-

---

पित्वेन "सार्वधातुकमपित्" इति ङित्वात् "ग्रहीज्या" इति सम्प्रसारणे पूर्वरूपे च 'वृश्चति' इतिरूपम् । वव्रश्च । ओव्रश्चूधातोरनुबन्धलोपे लिटि तिपि णलि धातोर्द्वित्वे "लिट्यभ्यासस्योभयेषाम्" इति सम्प्रसारणे पूर्वरूपे च 'वृश्च व्रश्च अ' इति स्थिते "उरत्" इति अभ्यासऋवर्णस्य अदादेशे रपरे 'वर्श्च् व्रश्च् अ' इति जाते, "हलादिः शेषः" इति हल्लोपे 'वव्रश्च' इति रूपम् । वव्रश्चतुः, वव्रश्चुः । वव्रश्चिथ । लिटि थलि धातोर्द्वित्वेऽभ्यासकार्ये "लिट्यभ्यासस्योभयेषाम्" इत्यभ्यासस्य सम्प्रसारणे पूर्वरूपे 'वृश्च् व्रश्च् थ' इति जाते "उरत्" इत्यभ्यासऋवर्णस्यादादेशे रपरे च कृते "हलादिः शेषः" इति हलो लोपे "स्वरतिसूतिसूयतिधूञूदितो वा" इति ऊदित्वात् थल इडागमे 'वव्रश्चिथ' इति रूपम् । इडभावपक्षे धातोर्द्वित्वे "लिट्यभ्यासस्योभयेषाम्" इत्यभ्यासस्य सम्प्रसारणे पूर्वरूपे अभ्यासऋवर्णस्य "उरत्" इति अदादेशे रपरत्वे च "हलादिः शेषः" इति हलो लोपे 'व व्रच् थ' इति स्थिते शत्वस्यासिद्धत्वात् "स्कोः संयोगाद्योः" इति सलोपे "व्रश्चभ्रस्ज" इति चकारस्य षत्वे "ष्टुना ष्टुः" इति थस्य ठत्वे 'वव्रष्ठ' इति । वव्रश्चथुः, वव्रश्च । वव्रश्च, वव्रश्चिव, वव्रश्चिम । व्रश्चिता, व्रष्टा । लुटि तिपि तासि तासः "स्वरतिसूति०" इति विकल्पेन इटि, तिपो डात्वे डित्वाट्टेर्लोपे 'व्रश्चिता' इति । इडभावपक्षे शत्वस्यासिद्धत्वात् "स्कोः" इति सलोपे व्रश्चेति षत्वे "ष्टुना ष्टुः" इति ष्टुत्वे 'व्रष्टा' रूपम् । व्रश्चिष्यति । लृटि तिपि स्ये "स्वरतिसूतिसूयति०" इति विकल्पेनेटि षत्वे व्रश्चिष्यति । इडभावे सलोपे षत्वे कत्वे कात्परकत्वात्षत्वे च–व्रक्ष्यति । वृश्चतु । अवृश्चत् । वृश्चेत् । वृश्च्यात् । आशीर्लिङि तिपि यासुटि उटो लोपे तिप इलोपे "ग्रहीज्या०" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे 'वृश्च्यात्' इति । अव्रश्चीत् । लुङि अटि तिपि तिप इकारलोपे च्लौ च्लेः सिचि इचावितौ "स्वरति०" इति विकल्पेनेटि "अस्तिसिचोऽपृक्ते" इति ईटि "इट ईटि" इति सलोपे "वदव्रज" इति वृद्धिस्तु न, "नेटि" इति निषेधात् 'अव्रश्चीत्' इति रूपम् इडभावपक्षे तु "वदव्रज०" इति वृद्धौ "स्कोः" इति सलोपे "व्रश्च" इति षत्वे, षस्य "स्कोः" इति कत्वे कात्परकत्वात् सिचः सस्य षत्वे कषसंयोगेक्षे 'अव्राक्षीत्' इति । विचति । व्यच्धातोर्लिटि तिपि शेऽनुबन्धलोपे शित्वादपित्वेन "सार्वधातुकमपित्" इति ङित्वात् "ग्रहीज्या" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे 'विचति' इति रूपम् । विव्याच । व्यच्धातोर्लिटि तिपि णलि धातोर्द्वित्वेऽभ्यासत्वे "लिट्यभ्यासस्योभयेषाम्" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे 'विव्यच् अ' इति जाते "अत उपधायाः" इति वृद्धौ 'विव्याच' इति रूपम् । विविचतुः । व्यचोऽतुसि "असंयोगाल्लिट्कित्" इति अतुसः कित्वे "ग्रहीज्या०" इति सम्प्रसारणे "सम्प्र-

ष्यति । विच्यात् । अव्याचीत् । अव्यचीत् । 'व्यचेः कुटादित्वमनसि' इति तु नेह प्रवर्तते । अनसीति पर्युदासेन तस्य कृन्मात्रविषयत्वात् । उछि उञ्छे ॥ १६ ॥ उञ्छति । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः ॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु ॥ १७ ॥ ऋच्छति । "ऋच्छत्यृताम्" इति गुणः । द्विहल्ग्रहणस्याऽनेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता । उज्झ उत्सर्गे ॥ १८ ॥ उज्झति । लुभ विमोहने ॥ १९ ॥ लुभति । तीषसहलुभरु-

---

सारणाच्च" इति पूर्वरूपे "लिटि धातोः" इति द्वित्वे अभ्यासत्वे 'वि विच् अतुस्' इति जाते संयोगे च कृते 'विविचतुः' इति रूपम् । विविचुः । विव्यचिथ । विविचथुः । विविच । विव्याच । विव्यच । विविचिव । विविचिम । व्यचिता । व्यचिष्यति । विचतु । अविचत् । विचेत् । आशिषि—विच्यात् । अव्याचीत् । अव्यचीत् । लुङि अटि तिपि च्लौ सिचि इचावितौ तयोर्लोपे च "आर्धधातुकस्येड्" इति इटि तिप इलोपे "अस्तिसिचोऽपृक्ते" इति ईटि "इट ईटि" इति सलोपे "अतो हलादेर्लघोः" इति विकल्पेन वृद्धौ 'अव्याचीत्' इति । वृद्ध्यभावे-'अव्यचीत्' इति । व्यचेः कुटादित्वमिति । "व्यचेः कुटादित्वमनसि" इत्यस्यात्र प्रवृत्तिर्न भवति । पर्युदासेन असुभिन्नासुसदृशस्य कृत्प्रत्ययस्यैव ग्रहणात् । उञ्छति । उछिधातोरनुबन्धलोपे तस्मात् लटि तिपि शेऽनुबन्धलोपे इदित्वात् "इदितो नुम् धातोः" इति नुमि अनुबन्धलोपे मित्वादन्त्यादचः परे नुमोऽनुस्वारे परसवर्णे च कृते 'उञ्छति' इति रूपम् । लिटि–उञ्छाञ्चकार । लुटि–उञ्छिता । लृटि–उञ्छिष्यति । लोटि–उञ्छतु । लङि–औञ्छत् । विधौ–उञ्छेत् । आशिषि—उञ्छ्यात् । लुङि—औञ्छीत् । लङि–औञ्छिष्यत् । ऋच्छति । ऋच्छ् धातोर्लटि तिपि शेऽनुबन्धलोपे 'ऋच्छति' इति रूपम् । आनर्च्छ । ऋच्छधातोर्लिटि तिपि णलि अनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे 'ऋच्छ् ऋच्छ् अ' इति जाते "उरत्" इति अभ्यासऋकारस्य अदादेशे "उरण् रपरः" इति रपरत्वे च जाते "हलादिः शेषः" इति हलो लोपे 'अ ऋच्छ अ' इति स्थिते "अत आदेः" इति अभ्यासस्य आत्वे "तस्मान्नुड्द्विहलः" इति द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुटि अनुबन्धलोपे 'आ न् ऋच्छ अ' इति जाते "ऋच्छत्यृताम्" इति गुणे रपरे 'आन् अर्च्छ अ' इति स्थिते संयोगे च कृते, 'आनर्च्छ' इति रूपम् । अतुसि–आनर्च्छतुः । आनर्च्छुः । आनर्च्छिथ, आनर्च्छथुः, आनर्च्छ । आनर्च्छ, आनर्च्छिव, आनर्च्छिम । लुटि–ऋच्छिता । लृटि–ऋच्छिष्यति । लोटि–ऋच्छतु । लङि–आर्च्छत् । विधौ–ऋच्छेत् । आशिषि–ऋच्छ्यात् । लुङि–आर्च्छीत् । लृङि–आर्च्छिष्यत् । उज्झति । उज्झ उत्सर्गेधातोर्लटि तिपि शेऽनुबन्धलोपे 'उज्झति' इति रूपम् । लिटि–उज्झाञ्चकार । लुटि–उज्झिता । लृटि–उज्झिष्यति । लोटि–उज्झतु । लङि–औज्झत् । विधौ–उज्झेत् । आशिषि–उज्झ्यात् । लुङि–औज्झीत् । लृङि औज्झिष्यत् । लुभति । लुभविमोहनेधातोर्लटि तिपि शेऽनुबन्धलोपे शित्वादपित्वेन च ङित्वान्न-

षरिषः ७।२।४८॥ इच्छत्यादेः परस्य तादेरार्धधातुकस्येड् वा स्यात्। लोभिता, लोब्धा। लोभिष्यति। तृप तृम्फ तृप्तौ ॥ २१ ॥ तृपति। ततर्प। तर्पिता। अतर्पीत्। तृम्फति। (शे तृम्फादीनां नुम्वाच्यः) आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः। ततृम्फ। तृफ्यात्। मृड पृड सुखने ॥ २३ ॥ मृडति। पृडति। शुन गतौ ॥ २४ ॥ शुनति। इष इच्छायाम् ॥२५॥ इच्छति। एषिता, एष्टा। एषिष्यति। इष्यात्। ऐषीत्। कुट कौटिल्ये ॥ २६ ॥ "गाङ्कु-

---

गुणः 'लुभति' इति रूपम्। लिटि–लुलोभ। तीषसहलुभरुषरिषः। "आर्धधातुकस्येड्" इत्यतः इडित्यनुवर्तते। "स्वरतिसूति०" इत्यतो वेति च। तीति सप्तम्युपादानाच्चडादिविधिः। इषसहलुभरुषरिष एषां द्वन्द्वात्पञ्चम्येकवचनम्। तदाह–इच्छत्यादेरिति। लोभिता, लोब्धा। लुभधातोर्लुटि तिपि तासि तस्यार्धधातुकत्वे "तीषसहलुभरुषरिषः" इति इड्विकल्पे "पुगन्त० इति गुणे तिपो डात्वे टिलोपे च 'लोभिता' इति। इडभावे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "झलां जश् झशि" इति भस्य बत्वे "पुगन्त" इति गुणे लोब्धा। लोभिष्यति। लृटि तिपि स्ये आर्धधातुकत्वे इटि "पुगन्त" इति गुणे 'लोभिष्यति' इति रूपम्। लोटि–लुभतु। लङि–अलुभत्। विधौ–लुभेत्। आशिषि–लुभ्यात्। अलोभीत्। अलोभिष्यत्। तृपति। तृप्तृप्तौ इति धातोर्लटि तिपि शेऽनुबन्धलोपे 'तृपति' इति रूपम्। ततर्प। तर्पिता। लृटि–तर्पिष्यति। तृपतु। अतृपत्। तृपेत्। तृप्यात्। लुङि–अतर्पीत्। लृङि–अतर्पिष्यत्। तृम्फति। तृम्फ तृप्तौ धातोर्लटस्तिपि शे शस्यापित्वेन "सार्वधातुकमपित्" इति ङित्वे "अनिदितां हल उपधाया क्ङिति" इति नलोपे "शे तृम्फादीनां नुम् वाच्यः" इति नुमि अनुबन्धलोपेऽनुस्वारे परसवर्णे च 'तृम्फति' इति रूपम्। ततृम्फ। तृम्फिता। तृम्फिष्यति। तृम्फतु। अतृम्फत्। तृम्फेत्। तृफ्यात्। अतृम्फीत्। अतृम्फिष्यत्। मृडति, पृडति। मृडपृडसुखने इति धातुतो लटि तिपि शेऽनुबन्धलोपे 'मृडति' 'पृडति' इति। ममर्ड, पपर्ड। मर्डिता। पर्डिता। लृटि–मर्डिष्यति, पर्डिष्यति। लोटि–मृडतु, पृडतु। लङि–अमृडत्, अपृडत्। विधौ–मृडेत्, पृडेत्। आशिषि–मृड्यात्। पृड्यात्। लुङि अमर्डीत्, अपर्डीत्। शुनति। शुनगतौ इति धातोर्लटि तिपि शेऽनुबन्धलोपे 'शुनति' इति। लिटि–शुशोन। लुटि–शोनिता। लृटि–शोनिष्यति। लोटि–शुनतु, लङि–अशुनत्। विधौ–शुनेत्। आशिषि–शुन्यात्। लुङि–अशोनीत्। लृङि–अशोनिष्यत्। इच्छति। इष इच्छायां धातोर्लटि तिपि शेऽनुबन्धलोपे "इषुगमियमां छः" इति षकारस्य छकारे "छे च" इति तुकि अनुबन्धलोपे "स्तोःश्चुना श्चुः" इति श्चुत्वेन चकारे 'इच्छति' इति रूपम्। लिटि–इयेष। लिटि तिपि णलि द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति हलो लोपे 'इ इष् अ' इति जाते "अभ्यासस्यासवर्णे" इति इयङि 'इयेष' इति रूपम्। एषिता। लुटि तिपि तासि आर्धधातुकत्वे "तीषसहलुभरुषरिषः" इति

यादि" इति ङित्त्वम् । चुकुटिथ । चुकोट । चुकुट । कुटिता । पुट संश्लेषणे ॥२७॥ पुटति । पुटिता । स्फुट विकसने ॥ २८ ॥ स्फुटति । स्फुटिता । स्फुर स्फुल सञ्चलने ॥ २९-३० ॥ स्फुरति । स्फुलति ॥ स्फुरतिस्फुलत्योर्निर्निविभ्यः ८।३।७६। षत्वं वा स्यात् । निःष्फुरति, निःस्फुलति । णू स्तवने ॥ ३१ ॥ परिणूत-गुणोदयः । नुवति । नुनाव । नुविता । टुमस्जो शुद्धौ ॥ ३२ ॥ मज्जति । ममज्ज ।

---

इड्विकल्पे "पुगन्त०" इति गुणे 'एषिता' इति । इडभावे ष्टुत्वे 'एष्टा' इति । लृटि—एषिष्यति । लोटि—इच्छतु । लङि—ऐच्छत् । विधौ—इच्छेत् । आशिषि—इष्यात् । लुङि—ऐषीत् । लृङि—ऐषिष्यत् । कुटति । कुटकौटिल्ये धातोर्लटि तिपि शेऽनुबन्धलोपे शित्वा-दपित्वेन "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावे 'कुटति' इति रूपम् । चुकोट । लिटि तिपि णलि, अनुबन्धलोपे "लिटि धातोः" इति द्वित्वेऽभ्यासत्वे हलादिशेषे "कुहोश्चुः" इति अभ्यासकवर्गस्य चत्वे "पुगन्त०" इति गुणे 'चुकोट' इति रूपम् । चुकुटतुः, चुकुटुः । चुकुटिथ । अत्र "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इति ङित्वाद्गुणा-भावे "आर्धधातुकस्येड्" इति इटि 'चुकुटिथ' इति । चुकुटथुः, चुकुट । चुकोट, चुकुट । लिट उत्तमपुरुषे मिपो णलि अनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे।हलादिशेषे "कुहोश्चुः" इति चत्वे "णल उत्तमो वा" इति विकल्पेन णित्वात् "गाङ्कुटादिभ्य" इति ङित्वाभा-वेन वृद्धौ 'चुकोट' इति । णित्वाभावपक्षे "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इति ङित्वा-द्वृद्ध्यभावे 'चुकुट' इति रूपम् । लुटि—कुटिता । लृटि—कुटिष्यति । लोटि—कुटतु। लङि—अकुटत् । विधौ—कुटेत् । आशिषि—कुट्यात् । लुङि—अकुटीत्, अकुटिष्टाम्, अकुटिषुः । लृङि—अकुटिष्यत् । पुटति । पुटसंश्लेषणे धातोर्लटि तिपि शेऽनुबन्धलोपे "गाङ्कुटादि-भ्योऽञ्णित्" इति ङित्वात् गुणाभावे 'पुटति' इति रूपम् । पुपोट । पुटिता । पुटिष्य-ति । पुटतु । लङि—अपुटत् । विधौ—पुटेत् । आशिषि—पुट्यात् । लुङि—अपुटीत् । लृङि—अपुटिष्यत् । स्फुटति । स्फुटविकसने धातोर्लटि तिपि शेऽनुबन्धलोपे 'स्फुटति' इति । लिटि—पुस्फोट । स्फुटिता । स्फुटिष्यति । स्फुटतु । लङि—अस्फुटत् । विधौ—स्फुटेत् । आशिषि—स्फुट्यात् । लुङि—अस्फुटीत् । लृङि—अस्फुटिष्यत् । स्फुरति । स्फु-लति । स्फुर्स्फुलसञ्चलने धातोर्लटि तिपि शे 'स्फुरति, स्फुलति' इति । स्फुरतिस्फुल-त्योरिति । "मूर्धन्य" इत्यधिकृतम् । "सिवादीनां वा" इत्यतो वेत्यनुवर्तते । तदाह—षत्वं वा स्यादिति । निःष्फुरति, निःस्फुरति । निर्-पूर्वकस्फुट्धातोर्लटि तिपि शे "स्फुरति-स्फुलत्योर्निर्निविभ्यः" इति धातोस्सकारस्य वा षत्वे निःष्फुरति इति, तदभावे तु निःस्फुरति' इति । लिटि—पुस्फार । पुस्फाल । स्फुरिता, स्फुलिता । स्फुरिष्यति, स्फुलिष्यति । स्फुरतु । स्फुलतु । अस्फुरत् । अस्फुलत् । विधौ—स्फुरेत्, स्फुलेत् । स्फुर्यात्, स्फुल्यात् । लुङि—अस्फुरीत्, अस्फुलीत् । अस्फुरिष्यत्, अस्फुलिष्यत् । नुवति । णूस्तवनेधातोर्लटि तिपि शे अनुबन्धलोपे ङित्वाद्गुणाभावे

"मस्जिनशोः" इति नुम् । ( मस्जेरन्त्यात्पूर्वो नुम् वाच्यः ) संयोगादिलोपः । ममङ्क्थ, ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः ।

---

"अचिश्नु०" इति उवङि 'नुवति' इति । नुनाव । णूधातोर्लिटि तिपि णलि अनुबन्धलोपे धातोर्द्वित्वेऽभ्यासकार्ये "कृताकृतप्रसङ्गी विधिर्नित्यः" इति नित्यत्वात् "अचो ञ्णिति" इति वृद्धौ 'नु नौ अ' इति जाते "एचोऽयवायावः" इति आवि 'नुनाव' इति रूपम् । नुनुवतुः नुनुवुः । नुनुविथ, नुनुवथुः, नुनुव । नुनाव, नुनव । नुनुविव, नुनुविम । लुटि-नुविता । लृटि-नुविष्यति । लोटि-नुवतु । अनुवत् । नुवेत् । नूयात् । अनुवीत् । अनुविष्यत् । मज्जति । टुमस्जधातोर्लटि तिपि शेऽनुबन्धलोपे "स्तोः श्चुना श्चुः" इति श्चुत्वेन सस्य शत्वे "झलां जश् झशि" इति शस्य जश्त्वेन जत्वे 'मज्जति इति रूपम् । ममज्ज । मस्ज्धातोर्लिटि तिपि णलि अनुबन्धलोपे 'मस्ज् अ' इति जाते "लिटि धातोः" इति द्वित्वेऽभ्यासत्वे हलादिशेषे 'म मस्ज् अ' इति जाते" "स्तोः श्चुना श्चुः" इति श्चुत्वेन सस्य शत्वे "झलां जश् झशि" इति शस्य जत्वे 'ममज्ज' इति रूपम् । ममज्जतुः, ममज्जुः । ममज्जिथ । लिटः सिपि तस्य थलि धातोर्द्वित्वेऽभ्यासादिकार्ये 'ममस्ज् थ' इति दशायां "स्तोः श्चुना श्चुः" इति श्चुत्वेन सस्य शत्वे "झलां जश् झशि" इति शस्य चत्वे क्र्यादिनियमाद्वैकल्पिक इटि 'ममज्जिथ' इति रूपम् । इडागमाभावपक्षे "मस्जिनशोर्झलि" इति सूत्रेण "मस्जेरन्त्यात्पूर्वो वा नुम् वाच्यः" इति वार्तिकबलादेवान्त्यात्प्राक् नुमि 'म मस् न् ज् थ' इति भूते "स्कोः संयोगाद्योरन्ते च" इति संयोगादेः सकारस्य लोपे 'म मन् ज् थ' इति स्थितौ "चोः कुः" इति जस्य गत्वे "खरि च"इति गस्य कत्वे "नश्चापदान्तस्य झलि"इति अनुस्वारे परसवर्णे च 'ममङ्क्थ' इति रूपम् । मङ्क्ता । मस्ज धातोर्लुटि तिपि तासि अनुबन्धलोपे तिपो डात्वे टेर्लोपे अन्यहल्परे "मस्जिनशोर्झलि" इति सूत्रेण धातोरन्त्यादचपरे नुमि प्राप्ते "मस्जेरन्त्यात्पूर्वो नुम् वाच्यः" इति वार्तिकबलात् अनुबन्धलोपे "स्कोः" इति कलोपे "चोः कुः" इति जस्य गत्वे "खरि च"इति गस्य कत्वेऽनुस्वारे परसवर्णे च कृते 'मङ्क्ता'इति । मङ्क्ष्यति । 'मस्ज्ष्यति'इति स्थिते "स्कोः" इति सलोपे "चोः कुः"इति जस्य गत्वे "खरि च"इति गस्य कत्वे "आदेशप्रत्यययोः" इति षत्वे क्षसंयोगे चेऽनुस्वारे परसवर्णे च 'मङ्क्ष्यति'इति । मज्जतु । अमज्जत् । मज्जेत् । मज्ज्यात् । आशिषि लिङस्तिपि यासुटि अनुबन्धलोपे "स्तोः श्चुना श्चुः"इति श्चुत्वेन सस्य शत्वे "झलां जश् झशि"इति शस्य जत्वे 'मज्ज्यात् "इति रूपम् । अमाङ्क्षीत् । मस्ज्धातोर्लुङि अटि तिपि तिप इकारलोपे च्लेः सिचि इचावितौ तिपोऽपृक्तकारस्य ईटि "मस्जिनशोर्झलि" इति नुमि "मस्जेरन्त्यात्पूर्वो नुम् वाच्यः" इति वार्तिकबलात् सकारात्परे जाते "स्कोः संयोगाद्योः" इति सस्य लोपे "वदव्रजहलन्तस्याचः" इति वृद्धौ "चोः कुः" इति जस्य गत्वे "खरि च" इति गकारस्य कत्वे "नश्चापदान्तस्य

रुजो भङ्गे ॥३३॥ रुजति। रोक्ता। रोक्ष्यति। अरौक्षीत्। भुजो कौटिल्ये ॥३४॥ रुजिवत्। विश प्रवेशने ॥३५॥ विशति। मृश आमर्शने ॥३६॥ आमर्शनं स्पर्शः ॥ "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" ॥ अम्राक्षीत्। अमार्क्षीत्। अमृक्षत्। पद्ल

---

झलि" इत्यनुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णे "आदेशप्रत्यययोः" इति सस्य षत्वे 'अमाङ्क्षीत्' इति रूपम्। अमाङ्क्ताम्। अत्र "झलो झलि" इति सिज्लोपः। अमाङ्क्षुः। अमाङ्क्षीः, अमाङ्क्तम्, अमाङ्क्त। अमाङ्क्षम्, अमाङ्क्ष्व, अमाङ्क्ष्म। लृङि–अमाङ्क्ष्यत्। रुजति। रुजो भङ्गे धातोर्लटि तिपि शेऽनुबन्धलोपे शस्य अपित्वेन "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावे 'रुजति' इति रूपम्। लिटि–'रुरोज'। लिटि तिपि णलि अनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे हलादिशेषे "पुगन्तलघूपधस्य च" इति लघूपधत्वात् गुणे 'रुरोज' इति, एवमग्रेऽपि। रुरुजुः। रुरुजिथ। क्रादिनियमान्नित्यमिट्। रुरुजिव, रुरुजिम। क्रादिनियमान्नित्यमिट्। रोक्ता। रुज्धातोर्लुटि तिपि तासि तिपो डात्वेऽनुबन्धलोपे टेर्लोपे 'रुज् त् आ' इति स्थिते "पुगन्त" इति गुणे "चो कुः" इति जस्य गत्वे "खरि च" इति गस्य कत्वे 'रोक्ता' इति रूपम्। लृटि–रोक्ष्यति। लोटि—रुजतु। लङि—अरुजत्। विधौ–रुजेत्। आशिषि–रुज्यात्। अरौक्षीत्। लुङि अटि तिपि च्लौ सिचि "अस्तिसिचः" इति ईटि "चोः कुः" इति जस्य गत्वे "खरि च" इति गस्य कत्वे तिप इलोपे सकारस्य षत्वे क् ष् संयोगे क्षे "वदव्रज०" इति वृद्धौ विहिते 'अरौक्षीत्' इति रूपम्। लृङि—अरोक्ष्यत्। भुजो कौटिल्ये। रुजिवत्। भुजति। बुभोज। भोक्ता। भोक्ष्यति। भुजतु। अभुजत्। भुजेत्। भुज्यात्। अभौक्षीत्। अभोक्ष्यत्। इति। विशति। विश् प्रवेशने धातोर्लटि तिपि अनुबन्धलोपे शेऽनुबन्धलोपे शस्यापित्वेन "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावः। लिटि–विवेश, विविशतुः, विविशुः। लुटि–वेष्टा। वेक्ष्यति। विशतु। लङि—अविशत्। विधौ–विशेत्। आशिषि–विश्यात्। लुङि–अविक्षत्। लृङि—अवेक्ष्यत्। आमर्शन इति। आमर्शनं स्पर्शः। लटि–मृशति। लिटि–ममर्श। म्रष्टा। मृशधातोर्लुटि तिपि अनुबन्धलोपे तासि तिपो डात्वे टेर्लोपे "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इति विकल्पेन अमि अनुबन्धलोपे मित्वात् "मिदचोऽन्त्यात्परः" इति नियमेन अन्त्यादचः परे जाते 'मृ अ श् त् आ' इति भूते "इको यणचि" इति यणि अनुबन्धलोपे "व्रश्चभ्रस्ज०" इति षत्वे ष्टुत्वे च 'म्रष्टा' इति। अमोऽभावपक्षे "पुगन्तलघूपधस्य च" इति गुणे 'मर्ष्टा' इति रूपम्। लृटि – म्रक्ष्यति, मर्क्ष्यति। मृशतु। लङि–अमृशत्। विधौ–मृशेत्। आशिषि मृश्यात्। लुङि—अम्राक्षीत्। मृशधातोर्लुङि अटि तिपि अनुबन्धलोपे च्लौ "स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः" इति वार्तिकेन विकल्पेन च्लेः सिचि अनुबन्धलोपे "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इति वैकल्पिकेऽमि सलोपे "मृ अ श् स् ति' इति स्थिते तिप इलोपे यणि "व्रश्च०" इति षत्वे "षढोः कः सि"

निशरणगत्यवसादनेषु ॥३७॥ सीदतीत्यादि । शद्लृ शातने ॥३८॥ शदेश्शितः १।३।६०। शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् । कॄ विक्षेपे ॥३९॥ ॠत इद्धातोः ७।१।१००। ॠदन्तस्य धातोरङ्गस्य इत्स्यात् । किरति । चकार । चक-

---

इति षस्य कत्वे सस्य षत्वे "अस्तिसिच" इति ईटि "वदव्रज०" इति वृद्धौ 'अम्राक्षीत्' इति रूपम् । अमोऽभावपक्षे वैकल्पिके च्लेः सिचि कृते हलन्तलक्षणावृद्धौ 'अमार्क्षीत्' इति । सिजभावे च "शल इगुपधात्" इति च्लेः स्थाने क्सादेशेऽनुबन्धलोपे "व्रश्च०" इति षत्वे "षढोः कः सि" इति षस्य कत्वे कात्परकत्वात् सस्य षत्वे कृषसंयोगे क्षे 'अमृक्षत्' इति रूपम् । लृङि - अम्रक्ष्यत् , अमर्क्ष्यत् । सीदति । षद्धातोर्लटि तिपि शे अनुबन्धलोपे "पाघ्राध्मा०" इति सदः सीदादेशे संयोगे च कृते 'सीदति' इति रूपम् । लिटि—ससाद । अत्र तिपि णलि द्वित्वेऽभ्यासादिकार्ये उपधावृद्धौ "ससाद" इति । अतुसि—सेदतुः । "अत एक हल्मध्ये" इति एत्वाभ्यासलोपौ विशेषौ । सेदुः । सेदिथ, ससत्थ । सेदथुः, सेद । ससाद ससद । सेदिव, सेदिम । लुटि—सत्ता । लृटि—सत्स्यति । लोटि-सीदतु । लङि-असीदत् । विधौ-सीदेत् । आशिषि-सद्यात् । लुङि-लृदित्वादङि 'असदत्' इति । लृङि—असत्स्यत् । शदेः शित इति ।। "अनुदात्तङित" इत्यतः आत्मनेपदमित्यनुवर्तते । श् इत् यस्य सः शित् । शप् विवक्षितः । शिति विवक्षिते सतीत्यर्थः । तिङुत्पत्तेः पूर्वं सार्वधातुकाश्रयस्य शपोऽसम्भवात् । तदाह—शिद्भाविन इति । शीयते । शद्लृशातने इति धातोर्लटि "शदेः शितः" इति आत्मनेपदत्वे ते समागते "तुदादिभ्यः शः" इति शेऽनुबन्धलोपे "पाघ्राध्मास्थाम्ना" इति शदः स्थाने शीयादेशे "टित आत्मनेपदानाम्" इति टेरेत्वे 'शीयते' इति । लिटि—शशाद, शेदतुः, शेदुः । लुटि-शत्ता । लृटि—शत्स्यति । लोटि—शीयताम् , शीयेताम् , शीयन्ताम् । लङि-अशीयत । विधौ—शीयेत । आशिषि—शद्यात् । लुङि तु लृदित्वाद् "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इति इत्यङि—'अशदत्' इति । ॠत इद्धातो-रिति । ॠत इति धातोर्विशेषणम् । तदन्तविधिः । अङ्गस्येत्यधिकृतम् । तदाह-ॠदन्त-स्येति । किरति । कॄविक्षेपे धातोर्लटि तिपि शेऽनुबन्धलोपे "ॠत इद्धातोः" इति ॠत इदादेशे "उरण् रपरः" इति रपरे च कृते 'किरति' इति रूपम् । चकार । कॄ धातोर्लिटि तिपि णलि अनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे 'कॄ कॄ अ' इति स्थिते "उरत्" इति ॠकारस्य अदादेशे रपरे च 'कर् कॄ अ' इति जाते "हलादिः शेषः" इति रलोपे "कुहोश्चुः" इति अभ्यासकवर्गस्य चकारे च कृते 'च कॄ अ' इति जाते परत्वात् "ॠच्छ-त्यॄताम्" इति गुणे रपरे "अत उपधायाः" इति वृद्धौ 'चकार' इति रूपम् । अतुसि—द्वित्वेऽभ्यासत्वे 'कॄ कॄ अतुस्' इति स्थिते "उरत्" इति ॠकारस्य अदादेशे रपरे "हलादिः शेषः" इति रलोपे "ॠच्छत्यॄताम्" इति गुणे रपरे 'चकरतुः' इति । एवम्

रतुः । चकरुः । करिता, करीता । कीर्यात् ॥ किरतौ लवने ६।१।१४०। उपात्किरतेः सुट् स्यात् छेदने । उपस्किरति ॥ अडभ्यासव्यवायेऽपि ६।१।१३५। (सुट् कात् पूर्व इति वक्तव्यम्) उपास्किरत् । उपचस्कार । हिंसायां प्रतेश्च ६।१।१४१। उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । उपस्किरति । प्रतिस्किरति । गॄ निगरणे ॥४०॥ अचि विभाषा ८।२।२१। गिरते रेफस्य लत्वं वा स्यादजादौ प्रत्यये । गिरति, गिलति । जगार, जगाल । जगरिथ, जगलिथ । गरिता, गरीता ।

---

चकरुः । थलि—चकरिथ । चकरथुः । चकर । चकार—चकर । चकरिव, चकरिम । करीता, करिता । कृधातोर्लुटि तिपि तासि आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इटि "सार्वधातुकार्ध०" इति गुणे रपरे तिपो डादेशे टिलोपे "वृतो वा" इति दीर्घे 'करीता' इति रूपम् । दीर्घाभावे 'करिता' इति । लृटि—करीष्यति, करिष्यति । लोटि—किरतु । लङि—अकिरत् । विधौ—किरेत् । कीर्यात् । आशीर्लिङि तिपि यासुटि उटावितौ "ऋत इद्धातोः" इति इदादेशे रपरे च 'किर् यास् ति' इति जाते तिप इकारलोपे "स्कोः संयोगाद्योः" इति सलोपे "हलि च" इति दीर्घत्वे कृते 'कीर्यात्' इति रूपम् । अकारीत् । लुङि अटि तिपि तिप इलोपे च्लौ च्लेः सिचि, अनुबन्धलोपे "आर्धधातुकं शेषः" इति सिच आर्धधातुकसंज्ञायाम् "आर्धधातुकस्येट्" इति सिचः सस्य इटि अनुबन्धलोपे "अस्तिसिचोऽपृक्ते" इति तिपस्तकारस्य ईटि "इट ईटि" इति सलोपे "अकः सवर्णे दीर्घः" इति इकारस्य ईकारेण सह दीर्घे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ 'अकारीत्' इति रूपम् । लृङि-अकरीष्यत्, अकरिष्यत् । किरतौ लवने । उपादिति । "उपात् प्रतियत्न" इत्यतस्तदनुवृत्तेरिति भावः । सुडिति । "सुट्कात्पूर्वः" इत्यतस्तदनुवृत्तेरिति भावः । उपस्किरति । 'उप किरति' इति स्थिते "किरतौ लवने" इति सुटि उटावितौ टित्वादाद्यावयवे 'उपस्किरति' इति । "अडभ्यासव्यवायेऽपि" इति वार्तिकम् । "सुट् कात्पूर्वः" इत्यनुवृत्तिलभ्यम् । उपास्किरत् । इत्यत्र 'उप अ किरत्' इति दशायां "अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्" इति वार्तिकेनाड्व्यवधाने सत्यपि ककारात्पूर्वं सुडागमे विहिते 'उपास्किरत्' इति रूपम् । उपचस्कार । 'उप चकार' इति व्यवस्थायाम् "अभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्" इति अभ्याससंज्ञकव्यवधानेऽपि कात्पूर्वमेव सुटि जाते 'उपचस्कार' इति । हिंसायां प्रतेश्चेति । चकारादुपादिति समुच्चीयते, तदाह—उपादिति । उपस्किरति । 'उप किरति' इति स्थितौ "हिंसायां प्रतेश्च" इति सुटि कात्पूर्वं सञ्जाते सति उपस्किरति, प्रतिस्किरति इति । अचि विभाषेति । "ग्रो यङि" इत्यतः ग्रः इत्यनुवर्तते । "कृपो रो लः" इत्यतः रो लः इति, तदाह—गिरतेरिति । गिरति; गिलति । निगरणार्थकगॄधातोर्लटि तिपि शेऽनुबन्धलोपे "ऋत इद्धातोः" इति ऋकारस्य इदादेशे रपरे "अचि विभाषा" इति रेफस्य लत्वे 'गिलति'

गलिता, गलीता । प्रच्छ ज्ञीप्सायाम् ॥४१॥ "ग्रहिज्या" इति सम्प्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । मृङ् प्राणत्यागे ॥४२॥ म्रियतेर्लुङ्लिङोश्च १।३।७१। लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । रिङ् । इयङ् । म्रियते । ममार । मर्ता । मरिष्यति । मृषीष्ट । अमृत ।

---

इति । लकाराभावे 'गिरति' इति । जगार । गृधातोर्लिटि तिपि णलि अनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे "उरत्" इति अभ्यासऋकारस्य अकारे रपरे 'गर् गृ अ' इति स्थिते "हलादिः शेषः" इति रेफस्य लोपे "ऋच्छत्यृताम्" इति ऋवर्णस्य गुणे रपरे 'ग गर् अ' इति जाते "अत उपधायाः" इति वृद्धौ "कुहोश्चुः" इति अभ्यासकवर्गस्य गकारस्य जकारे 'जगार' इति । तत्र "अचि विभाषा" इति लत्वे 'जगाल' इति । लत्वाभावपक्षे 'जगार' इति । जगलतुः, जगरतुः । जगलुः, जगरुः । जगलिथ, जगरिथ । जगलथुः, जगरथुः । जगाल, जगार । जगल, जगर । जगलिव, जगरिव । जगलिम, जगरिम । गरिता, गरीता । अत्र "वृतो वा" इति वा इटो दीर्घः । अत्र "अचि विभाषा" इति लत्वम् । लृटि–गलिष्यति, गरिष्यति । गिलतु, गिरतु । अगिलत्, अगिरत् । विधौ–गिलेत्, गिरेत् । गीर्यात् । लुङि–अगारीत्, अगालीत् । लृङि–अगलिष्यत्, अगरिष्यत्, अगलीष्यत्, अगरीष्यत् । पृच्छति । प्रच्छ्धातोर्लटि तिपि शेऽनुबन्धलोपे शस्यापित्वेन "सार्वधातुकमपित्" इति ङित्वात् "ग्रहिज्या०" इति संप्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे पृच्छति । पप्रच्छ । प्रच्छ्धातोर्लिटि तिपि णलि अनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे "लिट्यभ्यासस्योभयेषाम्" इत्यभ्यासस्य सम्प्रसारणे पूर्वरूपे उरदत्वे रपरे च हलादिशेषे 'पप्रच्छ' इति रूपम् । पप्रच्छतुः, पप्रच्छुः । पप्रच्छिथ, पप्रष्ठ । पप्रच्छथुः, पप्रच्छ । पप्रच्छ, पप्रच्छिव, पप्रच्छिम । प्रष्टा । लुटि तिपि तासि तिपो डात्वे डित्वात् टेर्लोपे "व्रश्चभ्रस्ज०" इति छस्य षत्वे ष्टुत्वे 'प्रष्टा' इति । लृटस्तिपि स्ये "व्रश्च०" इति षत्वे "षढोः कः सि" इति षस्य कत्वे "आदेशप्रत्यययोः" इति षत्वे कृषसंयोगे क्षत्वे 'प्रक्ष्यति' इति रूपम् । अप्राक्षीत् । प्रच्छ्धातोर्लुङि अटि तिपि च्लौ सिचि "व्रश्च०" इति छस्य षत्वे "षढोः कः सि" इति षस्य कत्वे सस्य षत्वे तिप इलोपे "अस्तिसिचोऽपृक्ते" इति ईटि "वदव्रज०" इति वृद्धौ 'अप्राक्षीत्' इति । अप्राष्टाम्, अप्राक्षुः, अप्राक्षीः, अप्राष्टम्, अप्राष्ट । अप्राक्षम्, अप्राक्ष्व, अप्राक्ष्म । म्रियतेर्लुङ्लिङोश्चेति । "अनुदात्तङितः" इत्यतः आत्मनेपदमित्यनुवर्तते । चकारेण "शदेः शितः" इत्यतः शित इत्यनुकृष्यते । प्रकृतिभूतादित्यध्याहार्यम् । तदाह—लुङ्लिङोरित्यादिना । म्रियते । मृङ्प्राणत्यागेधातुतो लटि, लटस्स्थाने "म्रियतेर्लुङ्लिङोश्च" इति ते "तुदादिभ्यः शः" इति शेऽनुबन्धलोपे "रिङ्शयग्लिङ्क्षु" इति रिङादेशे ङलोपे "अचिश्नु०" इति इयङि "टित आत्मनेपदानां टेरे" इति टेरेत्वे 'म्रियते' इति रूपम् । ममार । मृङ्धातोर्लिटि तिपि णलि

पृङ् व्यायामे ॥४३॥ प्रायेणाय व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । जुषी प्रीतिसेवनयोः ॥४४॥ जुषते । जुजुषे । ओविजी भयचलनयो; ॥४५॥ प्रायेणायमुत्पूर्वः । उद्विजते ॥ विज इट् १।२।२ विजेः पर इडादिप्रत्ययो ङिद्वत् स्यात् । उद्विजिता । इति तुदादयः ।

## अथ रुधादयः ।

रुधिर् आवरणे ॥१॥ रुधादिभ्यः श्नम् ३।१।७८। शपोऽपवादः । रुणद्धि ।

---

धातोर्द्वित्वेऽभ्यासत्वे "उरत्" इति अदादेशे रपरे "हलादिः शेषः" इति रलोपे "सार्वधातुकार्धधातुकयोः" इति गुणे रपरे "अत उपधायाः" इति वृद्धौ 'ममार' इति। मम्रतुः। मम्रुः। ममर्थ। मम्रथुः। मम्र। ममार। ममर। मम्रिव। मम्रिम। मरिष्यति। मृङ्धातोर्लृटि तिपि स्ये "सार्वधातु०" इति गुणे रपरे "ऋद्धनोः स्ये" इति इटि षत्वे च 'मरिष्यति' इति। मृषीष्ट। आशिषि लिङस्ते सीयुटि अनुबन्धलोपे "उश्च" इति कित्वाद्गुणाभावे षत्वे ष्टुत्वे च रूपम् । अमृत । मृङ्धातोर्लुङि अटि ते च्लौ सिचि "उश्च" इति कित्वाद्गुणाभावे "ह्रस्वादङ्गात्" इति सिचो लोपे 'अमृत' इति रूपम् । व्याप्रियते । विआङुपसर्गात् पृङ् व्यायामे धातोर्लटि तादेशे शेऽनुबन्धलोपे रिङि इयङि टेरेत्वे च 'व्याप्रियते' इति । व्यापप्रे । लिटि तादेशे तस्य एशादेशे द्वित्वेऽभ्यासत्वे "उरत्" इति अदादेशे रपरे हलादिशेषे यणि च 'व्यापप्रे' इति रूपम् । व्यापरिष्यते । लृटि तादेशे स्ये आर्धधातुकत्वे "ऋद्धनोः स्ये" इति ऋदन्तत्वात् इटि "सार्वधातुकार्ध०" इति गुणे रपरे षत्वे टेरेत्वे च 'व्यापरिष्यते' इति रूपम् । व्यापृत । लुङि अटि तादेशे च्लौ सिचि इचावितौ "उश्च" इति सिचः सकारस्य कित्वात् गुणाभावे "ह्रस्वादङ्गात्" इति सिचः सलोपे 'व्यापृत' इति रूपम् । व्यापृषाताम् । आतामि प्रत्यये, झलपरत्वाभावात् सिचो लोपाभावे सिचः कित्वात् गुणाभावे 'व्यापृषाताम्' इति रूपम् । व्यापृषत । व्यापृथाः। व्यापृषाथाम् । व्यापृड्ढ्वम् । व्यापृषि, व्यापृष्वहि, व्यापृष्महि । जुषते । जुषीप्रीतिसेवनयोर्धातोर्लटि तादेशे शेऽनुबन्धलोपे टेरेत्वे शित्वात् सार्वधातुकत्वेन "सार्वधातुकमपित्" इति ङित्वाद्गुणाभावे 'जुषते' इति रूपम् । जुषधातोर्लिटि तादेशे द्वित्वेऽभ्यासकार्ये तस्य एशादेशे च 'जुजुषे' इति रूपम् । उद्विजते । उद्पूर्वकविजधातोर्लटि तादेशे शेऽनुबन्धलोपे गुणाभावे, टेरेत्वे च 'उद्विजते' इति रूपम् । लिटि—उद्विवेज । विज इट् इति । "गाङ्कुटादिभ्यः" इत्यतः ङिदित्यनुवर्तते । तदाह—विजेः पर इत्यादि । उद्विजिता । लुटि तादेशे तासि इटि तिपो डात्वे तासः डित्वाट्टेर्लोपे "विज इट्" इति इटो ङिद्भावाद् गुणाभावे 'उद्विजिता' इति रूपम् । इति तुदादयः ।

रुधादिभ्यः श्नमिति । कर्त्रर्थे सार्वधातुके परे रुधादिभ्यः श्नम् प्रत्ययः स्यात् स्वार्थे इत्यर्थः । तदाह—शपोऽपवाद इति । रुणद्धि । रुधिर् आवरणे इति धातुतो लटि तिपि

"श्नसोरल्लोपः"। रुन्धः। रुन्धन्ति। रुणत्सि। रुन्धः। रुन्ध। रुणध्मि। रुन्ध्वः। रुन्ध्मः॥ रुन्धे। रुन्धाते। रुन्धते। रुन्त्से। रुन्धाथे। रुन्द्ध्वे। रुन्धे। रुन्ध्वहे। रुन्ध्महे। रुरोध। रुरुधे। रोद्धा। रोत्स्यति। रोत्स्यते। रुणद्धु। रुन्धात्। रुन्धाम्। रुन्धन्तु। रुन्धि। रुणधानि। रुणधाव। रुणधाम। रुन्धाम्। रुन्धाताम्। रुन्धताम्। रुणत्स्व। रुणधै। रुणधावहै। रुणधामहै। अरुणत्, अरुणद्। अरुन्धाम्। अरुन्धन्। अरुणत्, अरुणः। अरुन्ध। अरुन्धाताम्। अरुन्धत। अरुन्धाः। रुन्ध्यात्। रुन्धीत। रुध्यात्। रुत्सीष्ट। अरुधत्, अरौत्सीत्। अरुद्ध। अरुत्साताम्। अरुत्सत। अरोत्स्यत्। अरोत्स्यत॥ भिदिर् विदारणे॥२॥ छिदिर् द्वैधीकरणे

---

"रुधादिभ्यः श्नम्" इति श्नमि अनुबन्धलोपे "मिदचोऽन्त्यात्परः" इति सूत्रबलात् अन्त्याचः परे श्नमि प्रत्यये कृते 'रु न ध् ति' इति जाते "अट्कुप्वाङ्" इति णत्वे "झषस्तथोर्धोऽधः" इति तिपस्तस्य धत्वे "झलां जश् झशि" इति धस्य दत्वे 'रुणद्धि' इति रूपम्। रुन्धः। रुध्धातोर्लटि तसि श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे भूते 'रु न ध् तस्' इत्यत्र "श्नसोरल्लोपः" इति श्नमो नकारान्तर्गताकारस्य लोपे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "झलां जश् झशि" इति धस्य दकारे 'रुन्द्धः' इति रूपम्। रुणत्सि। लटि सिपि श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे "खरि च" इति धस्य तत्वे "अट्कुप्वाङ्" इति णत्वे 'रुणत्सि' इति। रुन्द्धे। रुध्धातोर्लटस्ते, श्नमि, अनुबन्धलोपे मित्वादन्त्यादचः परे "श्नसोरल्लोपः" इति श्नमोऽकारस्य लोपे, तस्य धत्वे रुधो धस्य जश्त्वे टेरत्वे च रूपम्। एवमग्रेऽपि। लिटि—रुरोध। रुध्धातोर्लिटि तिपि णलि धातोर्द्वित्वेऽभ्यासत्वे हलादिशेषे "पुगन्तलघूपधस्य च" इति गुणे 'रुरोध' इति रूपम्। रुरुधतुः, रुरुधुः। रुरोधिथ, रुरुधथुः, रुरुध। रुरोध, रुरुधिव, रुरुधिम। रोद्धा। रुध्धातोर्लुटि तिपि तासि अनुबन्धलोपे तिपो डात्वे, डित्वात्तासष्टेर्लोपे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "झलां जश् झशि" इति धस्य दत्वे "पुगन्त" इति गुणे 'रोद्धा' इति रूपम्। अरुणत्, अरुणद्। रुध्धातोर्लङि, तिपि, तिप इकारलोपे श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे 'अरुनध्त्' इति जाते "अट्कुप्वाङ्" इति णत्वे "हल्ङ्यादिना" तलोपे "झलां जशोऽन्ते" इति धस्य दत्वे "वाऽवसाने" इति दस्य तत्वे अटि 'अरुणत्, अरुणद्' इति। अरुणः। लङि सिपि श्नमि सिपः पकारलोपे "इतश्च" इति सिप इकारलोपे 'अरुनध् स्' इति जाते हल्ङ्यादिना सलोपे "झलां जशोऽन्ते" इति धकारस्य दकारे "दश्च" इति दस्य रुत्वे रस्य विसर्गे णत्वे अडागमे च 'अरुणः' इति रूपम्। अरुधत्। रुध्धातोर्लुङि अटि तिपि च्लौ "इरितो वा" इति च्लेरङि अनुबन्धलोपे 'अरुधत्' इति। अङभावे तु च्लेः सिचि "अस्तिसिचोऽपृक्ते" इति ईटि "खरि च" इति धस्य तत्वे "वदव्रज" इति वृद्धौ 'अरौत्सीत्' इति। अरुद्ध। रुध्धातोर्लुङि अटि आत्मनेपदे तादेशे 'अरुध् त' इति जाते च्लौ सिचि "झलो झलि"

॥३॥ युजिर् योगे ॥४॥ रिचिर् विरेचने ॥५॥ रिणक्ति। रिङ्क्ते। रिरेच। रेक्ता। रेक्ष्यति। अरिणक्। अरिचत्, अरैक्षीत्। अरिक्त। विचिर् पृथग्भावे ॥६॥ विनक्ति। विङ्क्ते॥ क्षुदिर् सम्पेषणे ॥७॥ क्षुणत्ति। क्षुन्ते। क्षोत्ता। अक्षुदत्, अक्षौत्सीत्। अक्षुत्त॥ उच्छृदिर् दीप्तिदेवनयोः॥ ८॥ छृणत्ति। छृन्ते।

---

इति सिचः सकारलोपे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "झलां जश् झशि" इति धस्य दत्वे 'अभेद' इति रूपम्। भिनत्ति। भिदिर्धातोर्लटि तिपि श्नमि अनुबन्धलोपे "खरि च" इति दस्य तत्वे 'भिनत्ति' इति रूपम्। भिन्तः, भिन्दन्ति, एवं छिदिर्धातोरपि बोध्यम्। युनक्ति। युजिर्योगे धातोर्लटि तिपि श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे "चोः कुः" इति जस्य गत्वे "खरि च" इति गस्य कत्वे 'युनक्ति' इति रूपम्। युङ्क्तः, युञ्जन्ति। युनक्षि, युङ्क्थः, युङ्क्थ। युनज्मि, युञ्ज्वः, युञ्ज्मः। युयोज, युयुजे। योक्ता। योक्ष्यति, योक्ष्यते। युनक्तु। युङ्क्ताम्। अयुनक्, अयुनग्। अयुङ्क्ताम्, अयुञ्जन्। अयुनक्, अयुङ्क्तम्, अयुङ्क्त। अयुनजम् अयुञ्ज्व, अयुञ्ज्म। आत्मनेपदे-अयुङ्क्त, अयुञ्जाताम्। लुङि-अयुजत्, अयौक्षीत्। आत्मनेपदे लुङि-अयुक्त इत्यादि। लृङि-अयोक्ष्यत्। अयोक्ष्यत। रिणक्ति। रिचिर् विरेचने धातोर्लटि तिपि श्नमि "चोः कुः" इति चस्य कत्वे णत्वे च 'रिणक्ति' इति। रिङ्क्ते। आत्मनेपदे लटि तादेशे श्नमि श्नलोपे मित्वाद् अन्त्याचः परे, टेरेत्वे "चोः कुः" इति कुत्वे "नश्च"इति अनुस्वारे परसवर्णे च 'रिङ्क्ते' इति। रेक्ता। लुटि तिपि डादेशे तासि "पुगन्त" इति गुणे तासष्टेर्लोपे "चोः कुः" इति चस्य ककारे 'रेक्ता' इति उभयत्र। लृटि-रेक्ष्यति, रेक्ष्यते। लोटि-रिणक्तु। आ०-रिङ्क्ताम्। अरिणक्। लङि अटि तिपि श्नमि अनुबन्धलोपे अन्त्याचः परे जाते "चोः कुः" इति चस्य कत्वे तिप इलोपे हल्ङ्यादिना तलोपे 'अरिणक्' इति। लुङि-'अरिचत्'। अत्र "इरितो वा" इति विकल्पेन च्लेरङादेशः। अङोऽभावपक्षे-च्लेः सिचि अनुबन्धलोपे "अस्तिसिचोऽपृक्ते" इति ईटि "चोः कुः" इति चस्य कत्वे "आदेशप्रत्यययोः" इति सिचः सस्य षत्वे "वदव्रज" इति वृद्धौ क्षसंयोगे च 'अरैक्षीत्' इति रूपम्। आत्मनेपदे-लुङः तादेशे च्लेः सिचि अनुबन्धलोपे "चोः कुः" इति चस्य कत्वे "झलो झलि" इति सलोपे 'अरिक्त' इति रूपम्। विनक्ति। विचिर्पृथग्भावे धातोर्लटि तिपि श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे "चो कुः" इति चस्य कत्वे 'विनक्ति' इति रूपम्। क्षुणत्ति। क्षुदिर् सम्पेषणे धातोर्लटि तिपि श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे "खरि च" इति दस्य तत्वे "अट्कुप्वाङ्" इति णत्वे 'क्षुणत्ति' इति। छृणत्ति। उच्छृदिर् दीप्तिदेवनयोरितिधातोर्लटि तिपि श्नमि "खरि च" इति दस्य तत्वे "अट्कुप्वाङ्" इति णत्वे 'छृणत्ति' इति। चच्छर्द। छृद्धातोर्लिटि तिपि णलि अनुबन्धलोपे, धातोर्द्वित्वेऽभ्यासत्वे "उरत्" इति अभ्यासऋकारस्य अदादेशे रपरे हलादिशेषे "पुगन्त" इति गुणे रपरे "अभ्यासे चर्च"

चच्छर्द । "सेऽसिचि" इति वेट् । चच्छृत्से, चच्छृदिषे । छर्दिता । छर्दिष्यति, छर्त्स्यति । अच्छृदत्, अच्छर्दीत् । अच्छर्दिष्ट । उतृदिर् हिंसानादरयोः ॥९॥ तृणत्ति । तृन्ते । कृती वेष्टने ॥१०॥ कृणत्ति । तृह हिसि हिंसायाम् ॥१२॥ तृणह इम् ७।३।९२। तृहः श्नमि कृते इमागमः स्यात् हलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् ॥ श्नान्नलोपः ६।४।२३। श्नमः परस्य नस्य लोपः

---

इति छस्य चत्वे "छे च" इति तुकि "स्तोः श्चुना" इति श्चुत्वे जस्य चत्वे 'चच्छर्द' इति । चच्छृदिषे । आत्मनेपदे–लिटो मध्यमपुरुषैकवचनविवक्षायां थासि "थासः से" इति थासः सेत्वे धातोर्द्वित्वेऽभ्यासत्वे "उरत्" इति रपरे हलादिशेषे "अभ्यासे चर्च" इति छस्य चत्वे "आर्धधातुकस्येड्वलादेः" इति वेटि सस्य षत्वे तुगागमे श्चुत्वेन तस्य चत्वे 'चच्छृदिषे' इति । छर्दिष्यति, छर्त्स्यति । "सेऽसिचि" इति इड्विकल्पनात् रूपद्वयं बोध्यम् । अच्छृदत् । लुङि अटि तिपि तिप इलोपे, च्लौ "इरितो वा" इति च्लेरङि अनुबन्धलोपे ङित्वाद्गुणाभावे तुकि श्चुत्वे च 'अच्छृदत्' इति । अङोऽभावपक्षे तु च्लेः सिचि इचावितौ सिचः सस्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इटि "अस्तिसिचो" इति ईटि "इट ईटि" इति सलोपे लघूपधगुणे तुकि श्चुत्वे च 'अच्छर्दीत्' इति रूपम् । तृणह इमिति । तृणह इति षष्ठी कृतश्नमः तृहधातोर्निर्देशः "नाभ्यस्तस्य०" इत्यतः पितीति । "उतो वृद्धिः" इत्यतो घृद्धीति चानुवर्तते । फलितमाह—तृहः श्नमि कृत इति । तृणेढि । तृह् हिंसायां धातोर्लटि तिपि श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे "ऋवर्णान्नस्य णत्वं वाच्यम्" इति नस्य णत्वे 'तृण ह् ति' इति दशायां "तृणह इम्" इति इमागमे, मित्वादन्त्यादचः परे 'तृण इ ह् ति' इति स्थिते "आद्गुणः" इति गुणे "हो ढः" हस्य ढत्वे "झषस्तथोर्धोऽधः" इति तिपस्तकारस्य धकारे ष्टुत्वेन धकारस्य ढत्वे, "ढो ढे लोपः" इति पूर्वढस्य लोपे कृते 'तृणेढि' इति रूपम् । तृण्ढः । लिटि तिपि श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे "श्नसोरल्लोपः" इति श्नमो नकारान्तर्गताकारलोपे "हो ढः" इति हस्य ढत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे ष्टुत्वे "ढो ढे लोपः" इति ढलोपे नकारस्य णत्वे च 'तृण्ढः' इति रूपम् । लटि झौ–तृंहन्ति । तृणेक्षि, तृण्ढः, तृण्ढ । तृणेह्मि, तृंह्वः, तृंह्मः । लोटि–तृणेढु, तृण्ढात् , तृण्ढाम् , तृंहन्तु । तृण्ढि, तृण्ढात् तृण्ढम् , तृण्ढ । तृणहानि, तृणहाव, तृणहाम । अतृणेड् । लङि अटि तिपि तिप इलोपे श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे "तृणह इम्" इति इमागमे आद्गुणे णत्वे हस्य ढत्वे हल्ङ्यादिना तलोपे "झलां जशोऽन्ते" इति पदान्तत्वात् ढस्य डत्वे "वाऽवसाने" इति डस्य टत्वे 'अतृणेट्' इति । लङ्स्तसि तु–अतृण्ढाम् , अतृंहन् । अतृणेट् , अतृण्ढम् , अतृण्ढ । अतृणहम् , अतृंह्व, अतृंह्म । विधौ–तृंह्यात् । आशिषि–तृह्यात् । लुङि–'अतर्हीत्' इति । श्नान्नलोप इति । श्नम्प्रत्ययैकदेशस्य श्न इत्यस्य श्नादिति पञ्चमी । नेतिलुप्तषष्ठीकम् ।

स्यात् । हिनस्ति । जिहिंस । हिंसिता ॥ **तिप्यनस्तेः ८।२।७३।** पदान्तस्य सस्य दः स्यात्तिपि नत्वस्तेः । "ससजुषो रुः" इत्यस्यापवादः । अहिनत्, अहिनद् । अहिंस्ताम् । अहिंसन् ॥ **सिपि धातो रुर्वा ८।२।७४।** पदान्तस्य धातोः सस्य रुः स्याद्वा । पक्षे "झलां जशोऽन्ते" इति जश्त्वम् । अहिनः, अहिनत्, अहिनद् ॥

---

तदाह—श्नमः परस्य नस्येति । हिनस्ति । हिंसिहिंसायायां धातोर्लटस्तिपि श्नमि अनुबन्धलोपे "इदितो नुम् धातोः" इति नुमि अनुबन्धलोपे मित्वादन्त्यादचः परे 'हिन न् स् ति' इति स्थिते "श्नान्नलोपः" इति नलोपे 'हिनस्ति' इति साधु । हिंस्तः । हिंसन्ति । हिनस्सि । हिंस्थः । हिंस्थ । हिनस्मि । हिंस्वः । हिंस्मः । लिटि—जिहिंस । हिंसिधातोर्लिटि "इदितो नुम् धातोः" इत्यनेन नुमि अनुबन्धलोपे तिपि, तिपो णलि कृते धातोर्द्वित्वेऽभ्याससंज्ञायां हलो लोपे नस्यानुस्वारे "कुहोश्चुः" इति हस्य झत्वे च कृते "अभ्यासे चर्च" इत्यनेन झस्य जकारे च कृते 'जिहिंस' इति सिद्ध्यति । किति इदित्वान्नलोपो नेति बोध्यम् । जिहिंसतुः । जिहिंसुः । जिहिंसिथ । जिहिंसथुः । जिहिंस । जिहिंस, जिहिंसिव, जिहिंसिम । लुटि-हिंसिता-हिंसिधातोर्लुटस्तिपि तास्प्रत्यये "लुटः प्रथमस्य डारौरसः" इत्यनेन तिपो डात्वे डित्वाट्टिलोपे इटि 'इदितो नुम् धातोः' इत्यनेन नुमि च कृते अनुबन्धलोपे नस्यानुस्वारे च कृते' हिंसिता' इति रूपं सिद्ध्यति । हिंसितारौ हिंसितारः । हिंसितासि, हिंसितास्थः हिंसितास्थ । हिंसितास्मि, हिंसितास्वः, हिंसितास्मः । हिंसिष्यति । हिंसधातोर्लृटि तिपि नुमि, अनुबन्धलोपे स्यप्रत्यये इडागमे षत्वे नस्यानुस्वारे च कृते 'हिंसिष्यति' इति सिद्ध्यति । हिंसिष्यतः, हिंसिष्यन्ति । हिंसिष्यसि, हिंसिष्यथः, हिंसिष्यथ । हिंसिष्यामि, हिंसिष्यावः, हिंसिष्यामः । लोटि–हिनस्तु, हिंस्तात्, हिंस्ताम्, हिंसन्तु । हिन्धि, हिंस्तात्, हिंस्तम्, हिंस्त । हिनसानि, हिनसाव, हिनसाम । तिप्यनस्तेरिति । न अस्तिः, अनस्तिः, तस्येति विग्रहः । पदस्येत्यधिकृतम् । "झलां जशोऽन्ते" इत्यतोऽन्ते इत्यनुवर्तते । "ससजुषो रुः" इत्यतः स इति षष्ठ्यन्तमनुवर्तते । "वसुस्रंसुध्वंस्वनडुहां दः" इत्यतो द इति तदाह—पदान्तस्येत्यादिना । अहिनद् । हिंस्धातोर्लङि तिपि श्नमि च कृते, श्नमः शस्य मस्य च लोपे कृते, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे अनुबन्धलोपे टित्वादाद्यावयवे च 'अहिन–न्–स् ति' इति जाते "श्नान्नलोपः" इति न्लोपे "इतश्च" इति तिप इकारलोपे "हल्ङ्याब्भ्यः" इति त्लोपे "तिप्यनस्तेः" इति सूत्रेण सस्य दत्वे "वाऽवसाने" इति चर्त्वेन दस्य तकारे च कृते 'अहिनत्' इति । पक्षे—'अहिनद्' इति रूपम् । तसि—अहिंस्ताम्, अहिंसन् । सिपि धातोरुर्वेति । "पदस्य" इत्यधिकृतम् । "झलां जशोऽन्ते" इत्यतोऽन्ते इत्यनुवृत्तम् । "ससजुषो रुः" इत्यतः सः इति लुप्तषष्ठीकमनुवर्तते । तदाह—पदान्तस्येति । अहिनः । हिंसिधातोर्लङस्सिपि इदित्वान्नुमि च कृते अनुबन्धलोपे मित्वादन्त्यादचः परे जाते श्नमि, अनुबन्धलोपे

उन्दी क्लेदने ॥१३॥ उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् ।

---

मित्वादन्त्यादचः परे "श्नान्नलोपः" इति श्नसो नस्य लोपे कृते "लुङ्लङ्लृङ्क्ष्वडु-दात्तः" इत्यटि "इतश्च" इति सिप इकारलोपे "हल्ङ्याब्भ्यः" इति सलोपे "सिपि धातोरुर्वा" इति सस्य रुत्वे रस्य विसर्गे च कृते 'अहिनः' इति सिद्धम् । पक्षे-"झलां जशोऽन्ते" इति सस्य दत्वे दस्य चर्त्वेन तकारे 'अहिनत्' इति । चर्त्वा-भावपक्षे—'अहिनद्' इति । अहिंस्तम् , अहिंस्त । अहिनसम् , अहिंस्व, अहिंस्म । विधौ-हिंस्यात् , हिंस्याताम् , हिंस्युः । हिंस्याः, हिंस्यातम् , हिंस्यात । हिंस्याम् , हिंस्याव, हिंस्याम । आशिषि-हिंस्यात् , हिंस्यास्ताम् , हिंस्यासुः । हिंस्याः, हिंस्या-स्तम् , हिंस्यास्त । हिंस्यासम् , हिंस्यास्व, हिंस्यास्म । अहिंसीत् , अहिंसिष्टाम् , अहिंसिषुः । अहिंसीः, अहिंसिष्टम् , अहिंसिष्ट । अहिंसिषम् , अहिंसिष्व, अहिंसिष्म । लृङि-अहिंसिष्यत् , अहिंसिष्यताम् , अहिंसिष्यन् । अहिंसिष्यः, अहिंसिष्यतम् , अहिंसिष्यत । अहिंसिष्यम् , अहिंसिष्याव, अहिंसिष्याम । उनत्ति । उन्दी क्लेदने इत्यस्माद्धातोर्लटस्तिपि शपि प्राप्ते तम्बाधित्वा श्नमि कृते शकारमकारयोर्लोपे मित्वादन्त्यादचः परे "श्नान्नलोपः" इति नलोपे "खरि च" इति दस्य चर्त्वेन तकारे च कृते 'उनत्ति' इति रूपम् । उन्तः । उन्द् इत्यस्माद्धातोर्लटि तसि श्नमि अनुबन्ध-लोपे "श्नान्नलोपः" इति नलोपे "श्नसोरल्लोपः" इत्यनेनाकारलोपे "खरि च" इति चर्त्वेन दस्य तकारे "झरो झरि सवर्णे" इत्यनेन तलोपे च कृते सस्य रुत्वे रेफस्य विसर्गे च कृते 'उन्तः' इति सिद्ध्यति । उन्दन्ति । झौ झेरन्तादेशे 'उन्दन्ति' इति । उनत्सि, उन्त्थः, उन्त्थ । उनद्मि, उन्द्वः, उन्द्मः । इति । उन्दाञ्चकार-उन्द् इत्यस्मा-द्धातोर्लिटि "इजादेश्च गुरुमतोऽनृच्छः" इत्यामि "आमः" इत्यनेन लिटो लुकि "कृञ्चा-नुप्रयुज्यते लिटि" इत्यनेन लिट्परके कृञोऽनुप्रयोगे कृते 'उन्दाम् कृ लिट्' इति जाते लिटस्तिपि तिपो णलि धातोर्द्वित्वे "उरत्" इत्यत्वे रपरे च कृते "हलादिः शेषः" इत्यनेन रलोपे "कुहोश्चुः" इति चुत्वे "अचोऽञ्णिति" इति वृद्धौ रपरे च मस्यानु-स्वारे परसवर्णे च कृते 'उन्दाञ्चकार' इति रूपम् । उन्दाञ्चक्रतुः, उन्दाञ्चक्रुः । उन्दा-ञ्चकर्थ, उन्दाञ्चक्रथुः, उन्दाञ्चक्र । उन्दाञ्चकार, उन्दाञ्चकर, उन्दाञ्चकृव, उन्दाञ्चकृम इति । लुटि-उन्दिता, उन्दितारौ, उन्दितारः, उन्दितासि, उन्दितास्थः, उन्दितास्थ, उन्दितास्मि, उन्दितास्वः, उन्दितास्मः । लृटि-उन्दिष्यति, उन्दिष्यतः, उन्दिष्यन्ति । उन्दिष्यसि, उन्दिष्यथः, उन्दिष्यथ । उन्दिष्यामि, उन्दिष्यावः उन्दिष्यामः । लोटि—उनत्तु, उन्तात् , उन्ताम् , उन्दन्तु । उन्द्धि, उन्तात् , उन्तम् , उन्त । उनदानि, उनदाव, उनदाम । औनत् । उन्द्धातोर्लङि तिपि शपि प्राप्ते तम्बा-धित्वा श्नमि कृते अनुबन्धलोपे मित्वादन्त्यादचः परे 'उनन्द् ति' इति जाते "श्ना-न्नलोपः" इत्यनेन नलोपे च कृते अटि प्राप्ते तम्बाधित्वा अजादित्वात् "आडजा-

औन्दन् । औनः, औनत् । औनदम् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु ॥१४॥
अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ, आनङ्क्थ । अञ्जिता, अङ्क्ता ।

---

दीनाम्" इत्यनेनाटि "आटश्च" इत्यनेन वृद्धौ "खरि च" इति दस्य चर्त्वे "इतश्च" इति तिप इलोपे "झरो झरि सवर्णे" इत्यनेन पूर्वतकारस्य लोपे च कृते 'औनत्' इति रूपम् । औन्ताम् । लङस्तसस्तामि श्नमि "श्नान्नलोपः" इत्यनेन नस्य लोपे "श्नसोरल्लोपः" इति अल्लोपे दस्य चर्त्वेन तकारे "झरो झरि सवर्णे" इत्यनेन पूर्वतकारस्य लोपे वृद्धौ च कृते आडागमे "आटश्च" इति वृद्धौ 'औन्ताम्' इति सिद्ध्यति । औन्दन् । लङो लः स्थाने झौ, झेरन्तादेशे कृते, श्नमि अनुबन्धलोपे सित्वादन्त्यादचः परे "श्नान्नलोपः" इति नलोपे "श्नसोरल्लोपः" इति अल्लोपे "इतश्च" इति अन्तेः इकारस्य लोपे "संयोगान्तस्य लोपः" इत्यनेन तलोपे "आडजादीनाम्" इत्याटि "आटश्च" इति वृद्धौ कृतायाम् 'औन्दन्' इति । औनः । लङो लःस्थाने सिपि श्नमि अनुबन्धलोपे सित्वादन्त्यादचः परे "इतश्च" इति सिप इकारलोपे 'उनन् द् स्' इति जाते "श्नान्नलोपः" इत्यनेन नलोपे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सुलोपे "आडजादीनाम्" इत्याटि "आटश्च" इति वृद्धौ 'औनद्' इति जाते "दश्च" इति दकारस्य रुत्वे रस्य विसर्गे च कृते 'औनः' इति । पक्षे–औनत्, औनद्, इति । औनदम् । लङो लः स्थाने सिपि श्नमि "श्नान्नलोपः" इत्यनेन नलोपे मिपोऽमि कृते 'अन द् अम्' इति जाते "आडजादीनाम्" इत्याडागमे "आटश्च" इत्यनेन वृद्धौ 'औनदम्' इति । औन्द्व, औन्द्म । विधिलिङि—उन्द्यात्, उन्द्याताम्, उन्द्युः । उन्द्याः, उन्द्यातम्, उन्द्यात । उन्द्याम्, उन्द्याव, उन्द्याम । आशीर्लिङि—उद्यात्, उद्यास्ताम्, उद्यासुः । उद्याः, उद्यास्तम्, उद्यास्त । उद्यासम्, उद्यास्व, उद्यास्म । लुङि—औन्दीत्, औन्दिष्टाम्, औन्दिषुः । औन्दीः, औन्दिष्टम्, औन्दिष्ट । औन्दिषम्, औन्दिष्व, औन्दिष्म । लृङि—औन्दिष्यत्, औन्दिष्यताम्, औन्दिष्यन् । औन्दिष्यः, औन्दिष्यतम्, औन्दिष्यत । औन्दिष्यम्, औन्दिष्याव, औन्दिष्याम । अनक्ति । ऊकारेत्संज्ञक 'अञ्ज्' इत्यस्माद्धातोर्लटि तिपि श्नमि कृते अनुबन्धलोपे मित्वादन्त्यादचः परे जाते "श्नान्नलोपः" इति नलोपे "चोः कुः" इति कुत्वेन जस्य गकारे गस्य चर्त्वेन ककारे 'अनक्ति' इति सिद्ध्यति । अङ्क्तः । अञ्ज्धातोर्लटो लस्तसि श्नमि कृते अनुबन्धलोपे मित्वादन्त्यादचः परे "श्नान्नलोपः" इति नलोपे "श्नसोरल्लोपः" इति अल्लोपे 'अ न् ज् तस्' इति जाते, जस्य गत्वे गस्य चर्त्वेन कत्वे नस्यानुस्वारे परसवर्णे च जाते सस्य रुत्वे रस्य विसर्गत्वे कृते 'अङ्क्तः' इति । अञ्जन्ति । लटो लो झौ श्नमि झेरन्तादेशे कृते नलोपाल्लोपयोः, श्नसो नस्य अनुस्वारे परसवर्णे ञकारे च कृते 'अञ्जन्ति' इति । अनक्षि, अङ्क्थः, अङ्क्थ । अनज्मि, अञ्ज्वः, अञ्ज्मः । इति । आनञ्ज । अञ्ज्धातोर्लिटि तिपि तिपो णलि च कृते

अङ्ग्धि । अनजानि । आनक् ॥ अञ्जेः सिचि ७।२।७१ अञ्जेः सिचो नित्यमिट्

धातोर्द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे 'अ अञ्ज् अ' जाते "अत आदेः" इत्यनेन दीर्घे "अकः सवर्णे दीर्घः" इति सवर्णदीर्घे च कृते "तस्मान्नुड् द्विहलः" इत्यनेन नुटि उटावितौ टित्वादञ्जेराद्यावयवे च जाते, कृते च संयोगे 'आनञ्ज' इति सिद्ध्यति । आनञ्जतुः, आनञ्जुः । आनञ्जिथ । अञ्जधातोर्लिटि सिपि सिपः स्थाने थलि च कृते धातोर्द्वित्वे, अभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेनाभ्यासहल्लोपे "अत आदेः" इत्यनेन अभ्यासाकारस्य दीर्घे सवर्णदीर्घे च कृते "तस्मान्नुड् द्विहलः" इत्यनेन नुडागमे अनुबन्धलोपे टित्वादाद्यावयवे 'आनञ्ज् थ' इति जाते "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन विकल्पनेडागमे, नस्यानुस्वारे परसवर्णे च कृते 'आनञ्जिथ' इति । इडभावे तु "चोः कुः" इति जस्य कुत्वेन गकारे "खरि च" इत्यनेन गस्य कत्वे नस्यानुस्वारे परसवर्णे च कृते 'आनङ्क्थ' इति । आनञ्जथुः, आनञ्ज । आनञ्ज, आनञ्जिव, आनञ्जिम । अञ्जिता । अञ्जधातोर्लुटस्तिपि अनुबन्धलोपे "स्यतासी लृलुटोः" इत्यनेन तास् प्रत्यये तिपो डात्वे च कृते डित्वाट्टिलोपे तास आर्धधातुकत्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन वेटि 'अञ्जिता' इति । इडभावे जस्य गत्वे गस्य कत्वे नस्यानुस्वारे परसवर्णे च कृते 'अङ्क्ता' इति । इटि-अञ्जितारौ, अञ्जितारः । अञ्जितासि, अञ्जितास्थः, अञ्जितास्थ । अञ्जितास्मि, अञ्जितास्वः, अञ्जितास्मः । इडभावे-अङ्क्तारौ, अङ्क्तारः । अङ्क्तासि, अङ्क्तास्थः, अङ्क्तास्थ । अङ्क्तास्मि, अङ्क्तास्वः, अङ्क्तास्मः । लृटि-अञ्जिष्यति, अञ्जिष्यतः, अञ्जिष्यन्ति । अञ्जिष्यसि, अञ्जिष्यथः, अञ्जिष्यथ । अञ्जिष्यामि, अञ्जिष्यावः, अञ्जिष्यामः । इडभावे-अङ्क्ष्यति, अङ्क्ष्यतः, अङ्क्ष्यन्ति । अङ्क्ष्यसि, अङ्क्ष्यथः, अङ्क्ष्यथ । अङ्क्ष्यामि, अङ्क्ष्यावः, अङ्क्ष्यामः । लोटि-अनक्तु, अङ्क्तात्, अङ्क्ताम्, अञ्जन्तु इत्यादि । अङ्ग्धि । अञ्जधातोर्लोटि, लः स्थाने मध्यमपुरुषैकवचने सिपि, श्नमि अनुबन्धलोपे मित्वादन्त्याचः परे जाते "श्नान्नलोपः" इति अञ्जेर्नलोपे "श्नसोरल्लोपः" इति श्नमोऽकारलोपे "सेर्ह्यपिच्च" इत्यनेन हिभावे "हुझल्भ्यो हेर्धिः" इत्यनेन धिभावे "चोः कुः" इत्यनेन चस्य गत्वे गस्यानुस्वारे परसवर्णे च कृते 'अङ्ग्धि' इति । अङ्क्तात्, अङ्क्तम्, अङ्क्त । अनजानि । अञ्जधातोर्लोटि लः स्थाने उत्तमपुरुषैकवचने मिपि, श्नमि, अनुबन्धलोपे मित्वादन्त्यादचः परे "श्नान्नलोपः" इति नलोपे च कृते "मेर्निः" इति मिपो मेः स्थाने निभावे "आडुत्तमस्य पिच्च" इत्यादि 'अनजानि' इति । अनजाव, अनजाम । आनक्—अञ्जधातोर्लङि तिपि शपि प्राप्ते तम्बाधित्वा श्नमि ते अनुबन्धलोपे मित्वादन्त्यादचः परे "श्नान्नलोपः" इत्यनेन नलोपे "इतश्च" इति इकारस्य लोपे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन तलोपे "चोः कुः" इत्यनेन जस्य कुत्वेन गकारे "वाऽवसाने" इत्यनेन गस्य कत्वे "आडजादीनाम्" इत्यनेनाडागमे 'आनक्' इति । आङ्क्ताम्, आञ्जन् । आनः, आनक्, आङ्क्तम्,

स्यात्। आञ्जीत्। तञ्चू संकोचने ॥१५॥ तनक्ति। तङ्क्ता-तञ्चिता। ओविजी भय-चलनयोः॥१६॥ विनक्ति। विङ्क्तः। "विज इट्" इति ङित्त्वम्। विविजिथ। विजिता। अविनक्। अविजीत्। शिषॢ विशेषणे ॥१७॥ शिनष्टि। शिंष्टः। शिंषन्ति।

---

आङ्क्त। आनजम्, आञ्ज्व, आञ्ज्म। विधिलिङि—अञ्ज्यात्, अञ्ज्याताम्, अञ्ज्युः। अञ्ज्याः, अञ्ज्यातम्, अञ्ज्यात। अञ्ज्याम्, अञ्ज्याव, अञ्ज्याम। आशीर्लिङि-अज्यात्, अज्यास्ताम्, अज्यासुः। अज्याः, अज्यास्तम्, अज्यास्त। अज्यासम्, अज्यास्व, अज्यास्म। अञ्जेः सिचीति। "इडत्यर्ति" इत्यतः इडित्यनुवर्तते। ऊदित्वादेव सिद्धे नित्यार्थमिदम्। तदाह—अञ्जेरित्यादिना। आञ्जीत्। अञ्जधातोर्लुङि लः स्थाने तिपि "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे इचावितौ तयोर्लोपे च तिप इलोपे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमेऽनुबन्धलोपे "इट ईटि" इति सूत्रेण सिचः सस्य लोपे "आडजादीनाम्" इत्यादि च कृते "आटश्च" इति वृद्धौ 'आञ्जीत्' इति। आञ्जिष्टाम्, आञ्जिषुः। आञ्जीः, आञ्जिष्टम्, आञ्जिष्ट। आञ्जिषम्, आञ्जिष्व, आञ्जिष्म। लृङि—आञ्जिष्यत्, आञ्जिष्यताम्, आञ्जिष्यन्। आञ्जिष्यः, आञ्जिष्यतम्, आञ्जिष्यत। आञ्जिष्यम्, आञ्जिष्याव, आञ्जिष्याम। तनक्ति। सङ्कोचनार्थक-ऊकारेत्संज्ञकतञ्च् इत्यस्माद्धातोर्लटि लः स्थाने तिपि शपि प्राप्ते तम्बाधित्वा श्नमि कृते अनुबन्धलोपे मित्वादन्त्यादचः परे "श्नान्नलोपः" इत्यनेन नलोपे "चोः कुः" इति चस्य कत्वे च कृते 'तनक्ति' इति। अञ्जवद्रूपाणि यथायथमूह्यानि। तञ्चिता। तञ्च् इत्यस्माद्धातोर्लुटस्तिपि तासप्रत्यये "लुटः प्रथमस्य डारौरसः" इत्यनेन तिपो डादेशे डित्वसामर्थ्याट्टिलोपे "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन विकल्पेनेडागमे च कृते 'तञ्चिता' इति। इडभावे चस्य कत्वे नस्यानुस्वारे परसवर्णे च कृते 'तङ्क्ता' इति। विनक्ति। ओकार-ईकारेत्संज्ञकविज् इत्यस्माद्धातोर्लटि तिपि शपि प्राप्ते तम्बाधित्वा श्नमि कृते अनुबन्धलोपे मित्वादन्त्यादचः परे "चोः कुः" इत्यनेन जस्य कुत्वेन गकारे "खरि च" इत्यनेन गस्य कत्वे कृते 'विनक्ति' इति। विङ्क्तः। विज्धातोर्लटि तसादेशे, सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य श्नमि कृते अनुबन्धलोपे मित्वादन्त्याचः परे "श्नसोरल्लोपः" इत्यनेनाकारस्य लोपे "चोः कुः" इति कुत्वेन गकारे "खरि च" इति चर्त्वेन ककारे, सस्य "ससजुषोरुः" इति रुत्वे रस्य विसर्गे च कृते नकारस्यानुस्वारे परसवर्णे च 'विङ्क्तः' इति सिद्ध्यति। विञ्जन्ति। विनक्षि, विङ्क्थः, विङ्क्थ। विनज्मि, विञ्ज्वः, विञ्ज्मः। लिटि—विवेज, विविजतुः, विविजुः। विविजिथ—विज्धातोर्लिटि मध्यमपुरुषैकवचने सिपस्थलि कृते "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इति लोपे "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमे "विज इट्" इत्यनेन इटो ङित्वात् गुणाभावे 'विविजिथ' इति। विजिता। विज्धातोर्लुटि लुटो लस्थाने तिपि तासप्रत्यये तिपो डादेशे डित्वाट्टिलोपे

शिनक्षि। शिशेषशिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। शिण्ढि। शिनषाणि। अशिनट्।

इटि च कृते "विज इट्" इति इटो ङित्वाद्गुणाभावे 'विजिता' इति। अविनक्। विज्-धातोर्लङस्तिपि शपि प्राप्ते तम्प्रबाध्य श्नमि कृते अनुबन्धलोपे मित्वादन्त्याचः परे जाते "इतश्च" इति तिपइकारस्य लोपे, "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति तलोपे कृते जकारस्य "चोः कुः" इति कुत्वेन गकारे "खरि च" इति कत्वे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यटि 'अविनक्' इति। पक्षे 'अविनग्'। इति। अविजीत्। विज्धातोर्लुङस्तिपि "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिजादेशे इचावितौ, सिच आर्धधातुकत्वादिटि तिप इकारस्य लोपे कृते "अस्तिसिचोऽपृक्ते" इति तिपस्तकारस्य ईडागमे "इट ईटि" इति सलोपे च कृते "सिज्लोप एकादेशे सिद्धो वाच्यः" इति सलोपस्य सिद्धत्वात्सवर्णदीर्घे अटि च 'अविजीत्' इति। शिनष्टि। लृकारेत्संज्ञकशिष् इत्यस्माद्धातोर्लटि लटो लस्थाने तिपि शपि प्राप्ते तम्बाधित्वा श्नमि कृते, अनुबन्धलोपे मित्वादन्त्याचः परे तकारस्य ष्टुत्वे च कृते 'शिनष्टि' इति सिद्ध्यति। शिंष्टः। शिष्धातोर्लटि लटो लः स्थाने तसि शपि प्राप्ते तम्प्रबाध्य "रुधादिभ्यः श्नम्" इति श्नमि कृते मित्वात् अन्त्यस्याचः परे जाते "श्नसोरल्लोपः" इत्यल्लोपे, तकारस्य ष्टुत्वे नस्यानुस्वारे सस्य रुत्वे विसर्गे च कृते 'शिंष्टः' इति। शिंषन्ति। शिष्धातोर्लटि झिप्रत्यये, झेरन्तादेशे, शपि प्राप्ते श्नमि कृतेऽनुबन्धलोपे "श्नसोरल्लोपः" इत्यल्लोपे, श्नमो नस्यानुस्वारे, च कृते 'शिंषन्ति' इति। शिनक्षि। शिष्धातोर्लटि, लः स्थाने सिपि, शपि प्राप्ते तम्बाधित्वा श्नमि कृते अनुबन्धलोपे मित्वादन्त्याचः परे "षढोः कः सि" इत्यनेन षस्य कत्वे कात्परकत्वात् सस्य षत्वे कषयोः संयोगे क्षे जाते 'शिनक्षि' इति। शिंष्ठः, शिंष्ठ। शिनष्मि, शिंष्वः. शिंष्मः। शिशेष। शिष्धातोर्लिटि, लिटो लः स्थाने तिपि, तिपो णलि च कृते, धातोर्द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इति लोपे "पुगन्तलघूपधस्य च" इत्यनेन गुणे च कृते 'शिशेष' इति। शिशेषिथ। शिष्धातोर्लिटि, लिटो लः स्थाने सिपि, सिपस्थलि च कृते धातोर्द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यभ्यासहल्लोपे क्रादिनियमादिटि गुणे च कृते 'शिशेषिथ' इति। शेष्टा। शिष्धातोर्लुटि, लुटो लः स्थाने तिपि तास्प्रत्यये तिपो डादेशे डित्वाट्टिलोपे गुणे ष्टुत्वे च कृते 'शेष्टा' इति। शेक्ष्यति। शिष्धातोर्लृटि तिपि "स्यतासी लृलुटोः" इति स्यप्रत्यये "षढोः कः सि" इति षस्य कत्वे कात्परकत्वात् "आदेशप्रत्यययोः" इति सस्य षत्वे गुणे संयोगे च कृते 'शेक्ष्यति' इति। लोटि—शिनष्टु, शिंष्टात्, शिंष्टाम्, शिंषन्तु। शिण्ढि। शिषधातोर्लोटि, लः स्थाने मध्यमपुरुषैकवचने सिपि, शपि प्राप्ते तम्बाधित्वा श्नमि कृतेऽनुबन्धलोपे मित्वादन्त्यादचः परे "सेर्ह्यपिच्च" इति सेर्हिभावे "श्नसोरल्लोपः" इत्यल्लोपे "हुझल्भ्यो हेर्धिः" इति हेर्धिभावे "झलां जश् झशि" इति षस्य डत्वे "ष्टुना ष्टुः" इति धेर्धस्य ढत्वे "झरो

शिंष्यात्। शिष्यात्। अशिषत्। एवं पिषॢ सञ्चूर्णने ॥१८॥ भञ्जो आमर्दने ॥१९॥
श्नान्नलोपः ॥ भनक्ति। बभञ्जिथ-बभङ्क्थ। भङ्क्ता। भङ्ग्धि। अभाङ्क्षीत्।

---

खरि सवर्णे" इति धलोपे नस्यानुस्वारे तस्य परसवर्णे च कृते 'शिण्ढि' इति। शिंष्टात्, शिंष्ट्, शिंष्ट। शिनषाणि। शिष्धातोर्लोटि, लः स्थाने उत्तमपुरुषैकवचने मिपि "मेर्निः" इति मिपो मेः स्थाने निभावे "आडुत्तमस्य पिच्च" इत्यादि श्नमि अनुबन्धलोपे, मित्त्वादन्त्याचः परे नस्य णत्वे 'शिनषाणि' इति। शिनषाव, शिनषाम। अशिनट्। शिष्धातोर्लङि तिपि अनुबन्धलोपे श्नमि अनुबन्धलोपे मित्वाद् अन्त्याचः परे कृते "इतश्च" इति तिप इलोपे "हल्ङ्याब्भ्यो" इति तलोपे "झलां जशोऽन्ते" इति षस्य जश्त्वेन डकारे "वाऽवसाने" इति चर्त्वे, अटि च कृते 'अशिनट्' इति। चर्त्वाभावे-'अशिनड्' इति। शिंष्यात्। शिष्धातोर्विधिलिङि, लिङो लः स्थाने तिपि श्नमि अनुबन्धलोपे च कृते मित्त्वादन्त्याचः परे जाते "यासुट् परस्मैपदेषूदात्तो ङिच्च" इत्यनेन यासुडागमेऽनुबन्धलोपे टित्वात् तिप आद्यावयवे जाते यासुटो ङित्वात् "श्नसोरल्लोपः" इत्यल्लोपे नस्यानुस्वारे "लिङः सलोपोऽनन्त्यस्य" इति सस्य लोपे "इतश्च" इति तिप इकारस्य लोपे 'शिंष्यात्' इति। शिष्यात्। शिष्धातोराशीर्लिङि, लिङो लः स्थाने तिपि "इतश्च" इति तिप इकारलोपे यासुडागमे अनुबन्धलोपे टित्त्वात्तिप आद्यावयवे जाते 'शिष्यास्त्' इति भूते अत्र "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'शिष्यात्' इति। अशिषत्। शिष्धातोर्लुङि लुङो लः स्थाने तिपि "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "च्लि लुङि" इति च्लौ तत्स्थाने "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इत्यङि "इतश्च" इति तिप इकारस्य लोपे कृते 'अशिषत्' इति। एवं रीत्या 'पिषॢ सञ्चूर्णने इति धातोरपि सर्वाणि रूपाणि साधनीयानि। भनक्ति। ओकारेत्संज्ञकभञ्ज्धातोर्लटि, लटो लः स्थाने तिपि शपि प्राप्ते तद्बाधित्वा श्नमि कृतेऽनुबन्धलोपे मित्त्वादन्त्याचः परे जाते "श्नान्नलोपः" इति नलोपे "चोः कुः" इति जस्य गत्वे "खरि च" इति चर्त्वेन गस्य ककारे कृते 'भनक्ति' इति। लिटि – बभञ्ज, बभञ्जतुः, बभञ्जुः। बभञ्जिथ। भञ्जधातोर्लिटि, लिटो लः स्थाने मध्यमपुरुषैकवचने सिपि, सिपः स्थाने थलि, धातोर्द्वित्वे अभ्याससंज्ञायां हल्लोपे इटि प्राप्ते "उपदेशेऽत्वतः" इति निषेधे "ऋतो भारद्वाजस्य" इति वेटि "अभ्यासे चर्च" इति भस्य चर्त्वेन बकारे 'बभञ्जिथ' इति। इडभावे जस्य गत्वे गस्य कत्वे नस्यानुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णे च कृते 'बभङ्क्थ' इति। भङ्क्ता। भञ्ज्धातोर्लुटस्तिपि तास् तास आर्धधातुकत्वादिटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे तिपो डादेशे डित्वाट्टिलोपे जस्य गत्वे गस्य कत्वे नस्यानुस्वारे परसवर्णे च कृते 'भङ्क्ता' इति। लृटि—भङ्क्ष्यति। लोटि—भनक्तु, भङ्क्तात्, भङ्क्ताम्, भञ्जन्तु। भङ्ग्धि। भञ्ज्धातोर्लोटि, लोटो लः स्थाने मध्यमपुरुषैकवचने सिपि "सेर्ह्यपिच्च" इति हिभावे शपि प्राप्ते तद्बाधित्वा

भुज पालनाभ्यवहारयोः ॥२०॥ भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक् ॥ भुजोऽनवने १।३।६६ तङानौ स्तः। ओदनं भुङ्क्ते। अनवने किम्? महीं

---

श्नमि अनुबन्धलोपे मित्त्वादन्त्याचः परे "श्नान्नलोपः" इति नलोपे "श्नसोरल्लोपः" इत्यकारस्य लोपे जस्य गत्वे "हुझल्भ्यो हेर्धिः" इति धिभावे नस्यानुस्वारे परसवर्णे च कृते 'भङ्ग्धि' इति। भङ्क्तात्, भङ्क्तम्, भङ्क्त। भनजानि, भनजाव, भनजाम। अभाङ्क्षीत्—भञ्ज्धातोर्लुङि, लुङो लः स्थाने तिपि अनुबन्धलोपे "इतश्च" इति तिप इकारलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे इचावितौ सिच आर्धधातुकत्वादिटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे "अस्तिसिचोऽपृक्ते" इतीडागमे "चोः कुः" इति कुत्वेन जकारस्य गकारे तस्य चर्त्वेन कत्वे सस्य षत्वे नस्यानुस्वारे परसवर्णे च कृते "वदव्रजहलन्तस्याचः" इत्यनेन वृद्धौ "अभाङ्क्षीत्" इति। अभाङ्क्ताम्, अभाङ्क्षुः। अभाङ्क्षीः, अभाङ्क्तम्, अभाङ्क्त। अभाङ्क्षम्, अभाङ्क्ष्व, अभाङ्क्ष्म। लृङि—अभङ्क्ष्यत् अभङ्क्ष्यताम्, अभङ्क्ष्यन्। अभङ्क्ष्यः, अभङ्क्ष्यतम्, अभङ्क्ष्यत। अभङ्क्ष्यम्, अभङ्क्ष्याव, अभङ्क्ष्याम। इत्यादीनि रूपाणि बोध्यानि। भुनक्ति। भुज्धातोर्लटस्तिपि सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नमि कृते ऽनुबन्धलोपे मित्त्वादन्त्याचः परे "चोः कुः" इति जस्य कुत्वेन गत्वे गस्य "खरि च" इति चर्त्वे 'भुनक्ति' इति। भुङ्क्तः, भुञ्जन्ति। भुनक्षि, भुङ्क्थः, भुङ्क्थ। भुनज्मि, भुञ्ज्वः, भुञ्ज्मः। लिटि–बुभोज, बुभुजतुः, बुभुजुः। बुभोजिथ, बुभुजथुः, बुभुज। बुभोज, बुभुजिव, बुभुजिम। भोक्ता। भुज्धातोर्लुटस्तिपि, तासि तिपो डादेशे डित्त्वाट्टिलोपे तासः आर्धधातुकत्वात् इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति इडभावे "कुहोश्चुः" इति चुत्वे "खरि च" इति चर्त्वे "पुगन्तलघूपधस्य च" इति गुणे 'भोक्ता' इति। भोक्ष्यति। भुज्धातोर्लृटस्तिपि अनुबन्धलोपे "स्यतासी लृलुटोः" इति स्यप्रत्यये "चोः कुः" इति कुत्वे "खरि च" इति चर्त्वे "आदेशप्रत्यययोः" इति षत्वे गुणे च कृते 'भोक्ष्यति' इति। लोटि—भुनक्तु, भुङ्क्तात्, भुङ्क्ताम्, भुञ्जन्तु। भुङ्ग्धि, भुङ्क्तात्, भुङ्क्तम्, भुङ्क्त। भुनजानि, भुनजाव, भुनजाम। अभुनक्। भुज्धातोर्लङस्तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते श्नमि कृते अनुबन्धलोपे अडागमे "इतश्च" इति तिप इलोपे तस्य "हल्ङ्याब्भ्यो०" इति लोपे जस्य कुत्वे चर्त्वे च कृते 'अभुनक्' इति। विधिलिङि-भुञ्ज्यात्, भुञ्ज्याताम्, इत्यादि। आशीर्लिङि-भुज्यात्, भुज्यास्ताम्, इत्यादि। लुङि तु-अभौक्षीत्, अभौक्ताम्, अभौक्षुः। अभौक्षीः, अभौक्तम्, अभौक्त। अभौक्षम्, अभौक्ष्व, अभौक्ष्म। लृङि-अभोक्ष्यत्, अभोक्ष्यताम्, अभोक्ष्यन् इति। भुजोऽनवने। अवनम्-रक्षणम्, ततोऽन्यत्र भुजेरात्मनेपदमित्यर्थः। भुङ्क्ते—भुज्धातोर्लट्लकारे "भुजोऽनवने" इत्यात्मनेपदे तप्रत्यये श्नमि कृतेऽनुबन्धलोपे "श्नसोरल्लोपः" इत्यलोपे

भुनक्ति। ञिइन्धी दीप्तौ ॥२१॥ इन्धे। इन्धाते। इन्धते। इन्त्से। इन्ध्वे। इन्धाञ्चक्रे। इन्धिता। इन्धाम्। इन्धाताम्। इनधै। ऐन्ध। ऐन्धाताम्। ऐन्धाः ॥ विद विचारणे ॥ २२ ॥ विन्ते। वेत्ता ॥ इति रुधादयः।

---

"चोः कुः" इति कुत्वे चर्त्वे च कृते अनुस्वारे परसवर्णे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च 'भुङ्क्ते' इति। इह उपभोगो भुजेरर्थः। धातूनामनेकार्थत्वात्। 'महीं भुनक्ति' इत्यत्रावनार्थकत्वान्न तङ्। इन्धे। इन्ध्धातोर्लटस्तिपि सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नमि कृते अनुबन्धलोपे मित्वादन्त्याचः परे "श्नान्नलोपः" इति नलोपे "श्नसोरल्लोपः" इत्यल्लोपे "झषस्तथोर्धोऽधः" इति तस्य धकारे "झरो झरि सवर्णे" इति प्रथमधस्य लोपे अनुस्वारे परसवर्णे च कृते "टित आत्मनेपदानां टेरे" इत्येत्वे कृते 'इन्धे' इति। इन्धाते। इन्धधातोर्लट्लकारे लः स्थाने आताम्प्रत्यये श्नमि अनुबन्धलोपे मित्वादन्त्याचः परे "श्नसोरल्लोपः" इत्यल्लोपे, नलोपे टेरेत्वे च 'इन्धाते' इति रूपम्। इन्धते—इन्ध्धातोर्लटि लः स्थाने झादेशे "आत्मनेपदेष्वनतः" इति झस्यादादेशे श्नमि अनुबन्धलोपे मित्वादन्त्यादचः परे "श्नसोरल्लोपः" इत्यल्लोपे, "श्नान्नलोपः" इति नलोपे टेरेत्वे च कृते 'इन्धते' इति। इन्त्से। इन्धधातोर्लटस्थासि "थासः से" इति सेभावे श्नमि कृतेऽनुबन्धलोपे मित्वादन्त्याचः परे "श्नसोरल्लोपः" इत्यल्लोपे "श्नान्नलोपः" इति नलोपे "खरि च" इत्यनेन धकारस्य तकारे 'इन्त्से' इति। इन्धाथे। इन्ध्वे। इन्ध्धातोर्लटि लः स्थाने आत्मनेपदे ध्वमि शपि प्राप्ते तम्प्रबाध्य श्नमि कृतेऽनुबन्धलोपे अन्त्याचः परे जाते "श्नान्नलोपः" इति नलोपे "श्नसोरल्लोपः" इत्यल्लोपे च कृते "झरो झरि सवर्णे" इति धलोपे टेरेत्वे च कृते 'इन्ध्वे' इति रूपम्। इन्धाञ्चक्रे। इन्ध्धातोर्लिटि "इजादेश्च गुरुमतोऽनृच्छः" इत्यामि "आमः" इत्यनेन लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन लिट्परककृञनुप्रयोगे लस्थाने ते कृते 'इन्धाम् कृ त' इति जाते "लिटि धातोरनभ्यासस्य" इति द्वित्वे "उरत्" इत्यनेनाभ्यासऋवर्णस्यादादेशे रपरे च कृते "हलादिः शेषः" इत्यभ्यासलोपे "कुहोश्चुः" इति चुत्वे "लिटस्तझयोरेशिरेच्" इत्यनेन तस्य एशादेशे "इको यणचि" इति यणि मस्यानुस्वारे परसवर्णे च कृते "इन्धाञ्चक्रे" इति। इन्धाञ्चक्राते, इन्धाञ्चक्रिरे। इन्धाञ्चकृषे, इन्धाञ्चक्राथे, इन्धाञ्चकृढ्वे। इन्धाञ्चक्रे, इन्धाञ्चकृवहे, इन्धाञ्चकृमहे। इन्धिता। इन्ध्धातोर्लुटि लुटो लः स्थाने आत्मनेपदे तादेशे "स्यतासी लृलुटोः" इति तासप्रत्यये तिपो डादेशे, डित्वाट्टिलोपे कृते, इडागमे 'इन्धिता'। लृटि—इन्धिष्यते, इन्धिष्येते, इन्धिष्यन्ते। इन्धिष्यसे, इन्धिष्येथे, इन्धिष्यध्वे। इन्धिष्ये, इन्धिष्यावहे, इन्धिष्यामहे। इन्धाम्। इन्ध्धातोर्लोटि लः स्थाने तादेशे श्नमि कृतेऽनुबन्धलोपे "मिदचोऽन्त्यात्परः" इति अन्त्याचः परे "श्नान्नलोपः" इति नलोपे "श्नसोरल्लोपः" इत्यल्लोपे "झषस्तथोर्धोऽधः" इति तकारस्य धकारे "टित आत्मनेपदानां

## अथ तनादयः ।

**तनु विस्तारे ॥ १ ॥ तनादिकृञ्भ्य उः ३ । १ । ७९ तनादेः कृञश्च उः प्रत्ययः स्यात् । शपोऽपवादः । तनोति । तनुते । ततान । तेने । तनितासि ।**

---

टेरे" इत्येत्वे "झरो झरि सवर्णे" इति धलोपे "आमेतः" इति टेरेत्वस्यामादेशे च कृते 'इन्धाम्' इति । इन्धाताम् । इन्धधातोर्लोटि लोटो लः स्थाने आतामि, श्नमि कृतेऽनुबन्धलोपे मित्त्वादन्त्यस्याचः परे जाते "श्नसोरल्लोपः" इत्यकारस्य लोपे "श्नान्नलोपः" इत्यनेन नलोपे टेरेत्वे "आमेतः" इति सूत्रेणामि कृते 'इन्धाताम्' इति । इन्धताम् । इन्त्स्व, इन्धाताम्, इन्ध्वम् । इनधै । इन्धधातोर्लोटि इट्प्रत्यये श्नमि कृतेऽनुबन्धलोपे "श्नसोरल्लोपः" इत्यल्लोपे "श्नान्नलोपः" इति नलोपे "आडुत्तमस्य पिच्च" इत्याडागमे टेरेत्वे "एत ऐ" इति ऐकारादेशे "आटश्च" इति वृद्धौ 'इनधै' इति । इनधावहै, इनधामहै, इति । ऐन्ध । इन्धधातोर्लङि, लस्ते आदेशे श्नमि कृतेऽनुबन्धलोपे अन्त्याचः परे "श्नसोरल्लोपः" इत्यल्लोपे "श्नान्नलोपः" इति नलोपे "झषस्तथोर्धोऽधः" इति तकारस्य धकारे "झरो झरि सवर्णे" इति पूर्वधकारस्य लोपे "आडजादीनाम्" इत्याटि "आटश्च" इति वृद्धौ 'ऐन्ध' इति । आतामि—ऐन्धाताम् । झिप्रत्यये, झस्यादादेशे, 'ऐन्धत' इति । ऐन्धाः । इन्धधातोर्लङि, लः स्थाने मध्यमपुरुषैकवचने थासि, शपि प्राप्ते तम्बाधित्वा श्नमि कृतेऽनुबन्धलोपे अल्लोपनलोपयोः "झषस्तथोर्धोऽधः" इति थस्य धकारे "झरो झरि" इति पूर्वधकारस्य लोपे सस्य रुत्वे रस्य विसर्गे च कृते "आडजादीनाम्" इत्याडागमे "आटश्च" इति वृद्धौ "ऐन्धाः" इति । विन्ते । विद्धातोर्लटि लः स्थाने तादेशे, श्नमि अनुबन्धलोपे अन्त्याचः परे "श्नसोरल्लोपः" इत्यल्लोपे "खरि च" इति चर्त्वे "झरो झरि सवर्णे" इति पूर्वतकारस्य लोपे टेरेत्वे च कृते 'विन्ते' इति । विन्दाते, विन्दते । विन्त्से, विन्दाथे, विन्ध्वे । विन्दे, विन्द्वहे, विन्द्महे । वेत्ता । विद्धातोर्लुटि तासि, लस्तिपि, तिपो डादेशे डित्त्वाट्टिलोपे, इडभावे, "खरि च" इति दस्य चर्त्वे "पुगन्तलघूपधस्य च" इत्यनेन गुणे कृते 'वेत्ता' इति । वेत्तारौ, वेत्तारः । वेत्तासे, वेत्तासाथे, वेत्ताध्वे । वेत्ताहे, वेत्तास्वहे, वेत्तास्महे । लृटि—वेत्स्यति । लोटि—विन्ताम् । लङि—अविन्त । लिङि—विन्दीत । आशिषि = वित्सीष्ट । लुङि—अवित्त । लृङि—अवेत्स्यत । इति रुधादिप्रकरणम् ।

तनादिकृञ्भ्य उः । तनादेः कृञश्च उप्रत्ययः स्यादिति सूत्रार्थः । शपोऽपवाद इति । अनेन शब्विषय एवास्य प्रवृत्तिरिति सूचितम् । "सार्वधातुके यक्" इत्यतः सार्वधातुक इति "कर्त्तरि शप्" इत्यतः कर्त्तरीति चानुवृत्तेरिति भावः । तनोति । तनृ इत्यस्माद्धातोर्लटि तिपि शपि प्राप्ते तम्बाधित्वा "तनादिकृञ्भ्य उः" इत्युप्रत्यये "सार्वधातुकार्धधातुकयोः" इति गुणे च कृते "तनोति" इति । तनुते । तनू इत्यस्माद्धातोरात्मनेपदे लटस्ते प्रत्यये "कर्त्तरि शप्" इति शप्प्राप्ते तम्बाधित्वा "तनादिकृञ्भ्य उः"

तनितासे । तनिष्यति । तनिष्यते । तनोतु । तनुताम् । अतनोत् । अतनुत । तनुयात् । तन्वीत । तन्यात् । तनिषीष्ट । अतनीत्–अतानीत् ॥ तनादिभ्य-

इति उविकरणे, प्रत्ययस्य तस्य सार्वधातुकत्वात् "सार्वधातुकमपित्" इति ङित्त्वाद्गुणाभावे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'तनुते' इति । तन्वाते, तन्वते । तनुषे, तन्वाथे, तनुध्वे । तन्वे, तनुवहे–तन्वहे, तनुमहे–तन्महे, इति । ततान । तन् इत्यस्माद्धातोर्लिटि, लिटो लः स्थाने तिपि, तिपो णलि च कृते "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायां लोपे च कृते "अत उपधायाः" इत्यनेन वृद्धौ 'ततान' इति । तेनतुः, तेनुः । तेनिथ, तेनथुः, तेन । ततान, ततन, तेनिव, तेनिम । तेने । तन् धातोर्लिटि तत्स्थाने आत्मनेपदे तप्रत्यये, तस्य "लिटस्तझयोरेशिरेच्" इति एशादेशे द्वित्वेऽभ्याससंज्ञायां लोपे च कृते "अत एकहल्मध्येऽनादेशादेर्लिटि" इति एत्वाभ्यासलोपे च कृते 'तेने' इति । तेनाते, तेनिरे । तेनिषे, तेनाथे, तेनिध्वे । तेने, तेनिवहे, तेनिमहे । लुटि–तनिता, तनितारौ, तनितारः । तनितासि । तन्धातोर्लुट्लकारे मध्यमपुरुषैकवचने परस्मैपदे सिपि तासि विकरणे, तास आर्धधातुकत्वात् इडागमे "तासस्त्योर्लोपः" इति सलोपे 'तनितासि' इति । तनितास्थः । तनितास्थ । तनितास्मि, तनितास्वः, तनितास्मः । तनितासे । तन्धातोर्लुट्लकारे लः स्थाने आत्मनेपदे थासि, "थासः से" इत्यनेन थासः से आदेशे, तासि प्रत्यये तास इडागमे, "तासस्त्योर्लोपः" इति सलोपे कृते 'तनितासे' इति । तनितासाथे, तनिताध्वे । तनिताहे, तनितास्वहे, तनितास्महे । तनिष्यति । तन् धातोर्लृटि, लृटो लः स्थाने तिपि, अनुबन्धलोपे स्यप्रत्यये इटि च कृते षत्वे 'तनिष्यति' इति । तनिष्यतः, तनिष्यन्ति, इत्यादि । तनिष्यते । तन् धातोर्लृटि आत्मनेपदे तप्रत्यये "स्यतासी लृलुटोः" इति स्यप्रत्यये इटि च कृते, षत्वे टेरेत्वे च 'तनिष्यते' इति । तनोतु । तन्धातोर्लोटि, लोटो लः स्थाने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा "तनादिकृञ्भ्य उः" इत्युप्रत्यये "सार्वधातुकार्धधातुकयोः" इति गुणे "एरुः" इत्यनेन तिप इकारस्य उकारे 'तनोतु' इति । तनुतात्, तनुताम्, तन्वन्तु । तनु–तनुतात्, तनुतम्, तनुत । तनवानि, तनवाव, तनवाम । तनुताम् । तन् इत्यस्माद्धातोर्लोटि, लोटो लः स्थाने आत्मनेपदे तप्रत्यये "तनादिकृञ्भ्य उः" इति उप्रत्यये, टेरेत्वे "आमेतः" इत्यनेन एकारस्यामि 'तनुताम्' इति । तन्वाताम्, तन्वताम् । तनुष्व, तन्वाथाम्, तनुध्वम् । तनवै, तनवावहै, तनवामहै । अतनोत् । तन्धातोर्लङि, लङो लः स्थाने तिपि अनुबन्धलोपे, शपं प्रबाध्य उप्रत्यये, अडागमे, गुणे च कृते, "इतश्च" इति तिप इकारलोपे 'अतनोत्' इति । अतनुताम्, अतन्वन् । अतनोः, अतनुतम्, अतनुत । अतनवम्, अतन्व–अतनुव, अतन्म–अतनुम । अतनुत । तन्धातोर्लङि लङो लः स्थाने तआदेशे शपम्बाधित्वा "तनादिकृञ्भ्य उः" इत्युविकरणे अडागमे च कृते 'अतनुत'

स्तथासोः २।४।७९ तनादेः सिचो वा लुक् स्यात् तथासोः । अतत-अतनिष्ट । अतथाः-अतनिष्ठाः । अतनिष्यत् । अतनिष्यत । षणु दाने ॥ २ ॥ सनोति ।

---

इति । तनुयात् । तन्धातोर्विधिलिङि, लिङो लः स्थाने तिपि, अनुबन्धलोपे "तनादिकृञ्भ्यः उः" इत्युप्रत्यये "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमे, उटावितौ, "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "इतश्च" इति तिप इकारलोपे 'तनुयात्' इति । तन्वीत । तन्धातोर्विधिलिङिः लः स्थाने तआदेशे, "तनादिकृञ्भ्य उः" इति उविकरणे "लिङः सीयुट्" इति सीयुडागमे, उटावितौ "लोपो व्योर्वलि" इति यलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे च कृते "इको यणचि" इति यणि 'तन्वीत' इति । तन्यात् । तन् धातोराशीर्लिङि तिपि यासुडागमे, उटावितौ, तिप इकारस्येत्संज्ञायां लोपे च कृते "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'तन्यात्' इति । तन्यास्ताम् , तन्यासुः, इत्यादि । तनिषीष्ट । तन्धातोराशीर्लिङि, आत्मनेपदे तादेशे सीयुडागमे, उटावितौ "सुट् तिथोः" इति सुटि, अनुबन्धलोपे "आर्धधातुकस्येड्वलादेः" इतीडागमे सकारस्य षत्वे ष्टुत्वे च 'तनिषीष्ट' इति । तनिषीयास्ताम् , तनिषीरन् । तनिषीष्ठाः, तनिषीयास्थाम् , तनिषीध्वम् । तनिषीय, तनिषीवहि, तनिषीमहि । अतानीत् । तन्धातोर्लुङि लुङो लः स्थाने तिपि अनुबन्धलोपे अडागमे च कृते "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिजादेशे, इचावितौ, इटि कृते, तिप इकारस्य लोपे "अस्तिसिचोऽपृक्ते" इतीडागमे च कृते "इट ईटि" इति सलोपे, सवर्णदीर्घे "अतो हलादेर्लघोः" इति विकल्पेन वृद्धौ च 'अतानीत्' इति । वृद्ध्यभावे—'अतनीत्' इति । अतनिष्टाम् , अतनिषुः । अतनीः, अतनिष्टम् , अतनिष्ट । अतनिषम् , अतनिष्व, अतनिष्म । वृद्धिपक्षे—'अतानिष्टाम्' इत्यादि । तनादिभ्यस्तथासोरिति । "गातिस्था०" इत्यतः सिच इति "ण्यक्षत्रियार्ष०" इत्यतो लुगिति "विभाषा घ्राधेट्०" इत्यतो विभाषेति चानुवर्तते । तदाह—तनादेरित्यादिना । अतत । तन्धातोर्लुङि, लः स्थाने आत्मनेपदे तादेशे अडागमे अनुबन्धलोपे "च्लि लुङि" इति च्लौ, च्लेः सिजादेशे, इचावितौ "तनादिभ्यस्तथासोः" इति सिचो लुकि, "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकनकारस्य लोपे 'अतत' इति । सिचो लोपाभावे–इटि, सस्य षत्वे ष्टुत्वे च 'अतनिष्ट' इति । अतनिषाताम् , अतनिषत । अतथाः । तन्धातोर्लुङि थासि "च्लि लुङि" इति च्लौ, च्लेः सिजादेशे, इचावितौ, "तनादिभ्यस्तथासोः" इति सिचो लोपे अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इति नलोपे अटि च तत् सिद्धम् । सिचो लोपाभावे–सिचः सः इटि कृते पत्वे ष्टुत्वे च जाते 'अतनिष्ठाः' इति । अतनिषाथाम् , अतनिध्वम् । अतनिषि, अतनिष्वहि, अतनिष्महि । अतनिष्यत् । तन्धातोर्लृङि, लृङो लः स्थाने तिपि, अनुबन्धलोपे अडागमे, स्यप्रत्यये, इटि च कृते,

सनुते । ये विभाषा ६।४।४३ जनसनखनामात्वं वा यादौ क्ङिति । सायात्-सन्यात् । असानीत्-असनीत् ॥ जनसनखनां सञ्झलोः ६।४।४२ एषामाकारोऽन्तादेशः स्यात् सनि झलादौ क्ङिति । असात्-असनिष्ट । असाथाः-असनिष्ठाः ।

---

सस्य षत्वे 'अतनिष्यत्' इति । अतनिष्यत । तन्धातोर्लृङि आत्मनेपदे तप्रत्यये अडागमे स्यप्रत्यये इटि षत्वे च कृते 'अतनिष्यत' इति । सनोति । उकारेत्सञ्ज्ञक 'षण्' धातोर्लटि तिपि "तनादिकृञ्भ्य उः" इत्युविकरणे "धात्वादेः षः सः" इति सत्वे "निमित्तापाये नैमित्तिकस्याप्यपायः" इति परिभाषया णस्य नत्वे गुणे च कृते 'सनोति' इति । सनुते । षण्धातोर्लटि आत्मनेपदे तप्रत्यये उत्वे सत्वे णस्य नत्वे टेरेत्वे च कृते 'सनुते' इति । तनुधातुवदस्य रूपाणि बोध्यानि । ये विभाषेति । "जनसनखनां सञ्झलोः" इत्यतः जनसनखनामित्यनुवर्तते । "अनुदात्तोपदेश०" इत्यतः क्ङितीति । ये इति तद्विशेषणम् । अकार उच्चारणार्थः । तदादिविधिः । "विड्वनोरनुनासिकस्यात्" इत्यतः आदित्यनुवर्तते । तदाह—जनसनखनामित्यादिना ॥ सायात् । षण्धातोराशीर्लिङि, लिङो लः स्थाने तिपि तिपो यासुडागमे अनुबन्धलोपे धातोः सत्वे णस्य नत्वे च कृते "स्कोः संयोगाद्योरन्ते च" इति सलोपे "अलोऽन्त्यस्य" इति सूत्रसहकारेण "ये विभाषा" इति नस्यात्वे सवर्णदीर्घे च कृते 'सायात' इति । आत्वाभावे 'सन्यात' इति । असानीत् । षण्धातोर्लुङस्तिपि अनुबन्धलोपे अडागमे च कृते "धात्वादेः षः सः" इति षकारस्य सकारे णस्य नत्वे च जाते, च्लौ, च्लेः सिजादेशे इचावितौ तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इतीटि "इट ईटि" इति सलोपे सवर्णदीर्घे च "अतो हलादेर्लघोः" इति विकल्पेन वृद्धौ 'असानीत्' इति । वृद्ध्यभावे 'असनीत्' इति । जनसनखनां सञ्झलोरिति । "विड्वनोः" इत्यतः आदित्यनुवर्तते । तदाह—एषामाकारोऽन्तादेश इत् । सञ्झलोः इत्यनयोः द्वन्द्वात् सप्तमीद्विवचनम् । सनि झलि चेति लभ्यते । "अनुदात्तोपदेश०" इत्यतः झलि क्ङितीत्यनुवर्तते । तत्र झलीत्यनुवृत्तेन सन् विशेष्यते । तदादिविधिः । झलादौ सनीति लभ्यते । तत्र क्ङितीत्यनुवृत्तं तु एतत्सूत्रस्थझला विशेष्यते । तदादिविधिः । झलादौ क्ङितीति लभ्यते । तदाह—झलादौ सनीत्यादिनेति । असात । षण्धातोर्लुङो लः स्थाने आत्मनेपदे तादेशे अडागमे अनुबन्धलोपे धातोः षकारस्य सत्वे सस्य नत्वे च कृते च्लौ, च्लेः सिजादेशे "तनादिभ्यस्तथासोः" इति सिचो लोपे "जनसनखनां सञ्झलोः" इत्यात्वे सवर्णदीर्घे च 'असात' इति । असनिष्ट । षण्धातोर्लुङि लः स्थाने ते कृते धातुस्थषस्य सत्वे णस्य नत्वे च कृते अडागमे च्लौ, च्लेः सिजादेशे इचावितौ सिच आर्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इतीडागमे सस्य षत्वे च कृते 'असनिष्ट' इति । असाथाः । षण्धातोर्लुङि लुङो लः स्थाने आत्मनेपदे थासि षस्य सत्वे णस्य नत्वे च कृते च्लौ, च्लेः सिचि इचावितौ "तनादिभ्यस्तथासोः" इति सिचो लोपे

क्षणु हिंसायाम् ॥ ३ ॥ क्षणोति । क्षणुते । "ह्म्यन्त" इति न वृद्धिः ॥ अक्षणीत् । अक्षत-अक्षणिष्ट । अक्षथाः-अक्षणिष्ठाः । क्षिणु च ॥४॥ उप्रत्यये लघूपधगुणः, केषांचिन्मते न ॥ क्षिणोति-क्षेणोति । क्षेणिता । अक्षेणीत् । अक्षित-अक्षेणिष्ट ।

---

"जनसनखनां सञ्झलोः" इति नस्यात्वे दीर्घे च कृते थासः सस्य रुत्वे, रेफस्य विसर्गे च कृते 'असाथाः' इति । सिचो लोपाभावे सिचः स इटि सस्य षत्वे ष्टुत्वे च कृते 'असनिष्ठाः' इति । क्षणोति । क्षणुधातोर्लटि लटो लः स्थाने तिपि, तिपः "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां शपि प्राप्ते तं प्रबाध्य उप्रत्यये "सार्वधातुकार्धधातुकयोः" इति गुणे 'क्षणोति' इति । क्षणुते । लटो लः स्थाने आत्मनेपदे तप्रत्यये उत्वे टेरेत्वे च कृते 'क्षणुते' इति । लिटि-चक्षाण, चक्षणे । लुटि-क्षणितासि, क्षणितासे । लृटि-क्षणिष्यति, क्षणिष्यते । लोटि-क्षणोतु, क्षणुताम् । लङि-अक्षणोत्, अक्षणुत । लिङि-क्षणुयात्, क्षण्वीत । आशिषि-क्षण्यात्, क्षणिषीष्ट । अक्षणीत् । क्षणुधातोर्लुङि, लुङो लः स्थाने तिपि अनुबन्धलोपे "इतश्च" इति तिप इकारलोपे च्लौ, च्लेः सिजादेशे इचावितौ, सिचः सकारस्य "आर्धधातुकस्येड्वलादेः" इतीडागमे च कृते "अस्तिसिचोऽपृक्ते" इतीटि "इट ईटि" इति सिचो लोपे, वृद्धौ प्राप्तायां "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इति निषेधे 'अक्षणीत्' इति । अक्षणिष्टाम्, अक्षणिषुः । अक्षणीः, अक्षणिष्टम्, अक्षणिष्ट । अक्षणिषम्, अक्षणिष्व, अक्षणिष्म । अक्षत । क्षणुधातोर्लुङि आत्मनेपदे तप्रत्यये, च्लौ, च्लेः सिचि, इचावितौ, "तनादिभ्यस्तथासोः" इति सिचो लुकि, अनुनासिकणलोपे च कृते अडागमे-'अक्षत' इति । सिचो लोपाभावे इटि सस्य षत्वे ष्टुत्वे अडागमे च कृते 'अक्षणिष्ट' इति । अक्षणिषाताम् । अक्षणिषत । अक्षथाः—क्षणुधातोर्लुङि, लुङो लः स्थाने थासि, च्लौ, च्लेः सिजादेशे, इचावितौ "तनादिभ्यस्तथासोः" इति सिचो लुकि अनुनासिकणलोपे च कृते अङ्गस्य अडागमे 'अक्षथाः' इति । सिचोलोपाभावे इटि सस्य षत्वे ष्टुत्वे च कृते अडागमे 'अक्षणिष्ठाः' इति । अक्षणिषाथाम्, अक्षणिध्वम् । अक्षणिषि, अक्षणिष्वहि, अक्षणिष्महि । क्षिणोति । उकारेत्सञ्ज्ञकक्षिणुधातोर्लटि, लिटो लः स्थाने तिपि, उप्रत्यये "संज्ञापूर्वको विधिरनित्यः" इति पक्षे गुणाभावे 'क्षिणोति' इति । "संज्ञापूर्वको विधिरनित्यः" इति पक्षाभावे उप्रत्यये परे लघूपधगुणे कृते 'क्षेणोति' इति । क्षेणिता । क्षिणुधातोर्लुटस्तिपि तासूप्रत्यये तिपो डादेशे डित्वाट्टिलोपे इटि गुणे च कृते 'क्षेणिता' इति । क्षेणितासि, क्षेणितासे । क्षेणिष्यति, क्षेणिष्यते । क्षिणोतु-क्षेणोतु । क्षिणुताम् । अक्षिणोत्-अक्षेणोत् । अक्षिणुत । क्षिणुयात्, क्षिण्वीत । क्षीयात्, क्षेणिषीष्ट । अक्षेणीत् । क्षिणुधातोर्लुङि, लुङो लः स्थाने तिपि, अडागमे अनुबन्धलोपे "इतश्च" इति तिप इकारस्य लोपे, च्लौ, च्लेः सिजादेशे इचावितौ "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमे "अस्तिसिचोऽपृक्ते" इतीडागमे च कृते "इट ईटि" इति । सिचः सस्य लोपे "पुगन्तलघूपधस्य

तृणु अदने ॥ ५ ॥ तृणोति-तर्णोति । तृणुते-तर्णुते ॥ डुकृञ् करणे ॥ ६ ॥ करोति ॥ अत उत्सार्वधातुके ६।४।११० उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । कुरुतः ॥ न भकुर्छुराम् ८।२।७९ भस्य कुर्छुरोश्चोपधाया न दीर्घः । कुर्वन्ति ॥ नित्यं करोतेः ६।४।१०८ करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यात् म्वोः परयोः । कुर्वः । कुर्मः । कुरुते । चकार । चक्रे । कर्ता ।

---

च" इति गुणे सवर्णदीर्घे च कृते 'अक्षेणीत्' इति । अक्षित क्षिणुधातोर्लुङि, लुङो लः स्थाने आत्मनेपदे तप्रत्यये च्लौ च्लेः सिजादेशे इचावित "तनादिभ्यस्तथासोः" इति सिचो लुकि अनुनासिकणलोपे अडागमे च कृते 'अक्षित' इति । सिचो लोपाभावे सिचः सस्य इटि षत्वे ष्टुत्वे गुणे अडागमे च कृते 'अक्षेपिष्ट' इति सिद्ध्यति । तृणोति । तृणुधातोर्लटस्तिपि अनुबन्धलोपे उप्रत्यये गुणे च कृते 'तृणोति' इति । संज्ञापूर्वकविधेरनित्यत्वात्पक्षे-"सार्वधातुकार्धधातुकयोः" इति गुणे "तर्णोति' । तृणुते । तृणुधातोर्लट्लकारे, लः स्थाने आत्मनेपदे तप्रत्यये "तनादिकृञ्भ्य उः" इत्युप्रत्यये संज्ञापूर्वकविधेरनित्यत्वात् गुणाभावे टेरेत्वे च कृते 'तृणुते' इति । पक्षे-उप्रत्यये लघूपधगुणे च कृते 'तर्णुते' इति । करोति । कृधातोर्लटस्तिपि सार्वधातुकत्वे, शपम्बाधित्वा "तनादिकृञ्भ्य उः" इत्युप्रत्यये उकारस्यार्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे रपरे उकारस्यापि गुणे कृते 'करोति' इति । अत उत् । उप्रत्ययान्तस्येति । "उतश्च प्रत्ययात्" इत्यतस्तदनुवृत्तेरिति भावः । कुरुतः । कृधातोर्लटि, लटो लः स्थाने तस् प्रत्यये "तनादिकृञ्भ्य उः" इत्युविकरणे ऋकारस्य गुणे रपरे च कृते 'करुतस्' इति जाते "अत उत्सार्वधातुके" इत्यनेन कृञोऽकारस्योत्वे च कृते । 'कुरुतः' इति सिद्ध्यति । नभकुर्छुराम् । "र्वोरुपधायाः इत्यतः उपधाया इति दीर्घ इति चानुवर्तते । तदाह—भस्येत्यादिना । कुर्वन्ति । कृधातोर्लट्लकारे झिप्रत्यये "झोऽन्तः" इत्यनेन झेरन्तादेशे "कर्तरि शप्" इति शपं बाधित्वा उकारप्रत्यये गुणे रपरे "अत उत्सार्वधातुके" इत्यनेनाऽकारस्य उत्वे "इको यणचि" इत्यनेन यणि च कृते "हलि च" इत्यनेन रेफान्तस्योपधाया दीर्घत्वे प्राप्ते "न भकुर्छुराम्" इति दीर्घत्वनिषेधे 'कुर्वन्ति' इति रूपम् । करोषि, कुरुथः, कुरुथ । करोमि । नित्यं करोतेरिति । "उतश्च प्रत्ययात्" इत्यनुवर्तते, "लोपश्चास्यान्यतरस्याम्" इत्यतो लोप इति, म्वोरिति च । तदाह—करोतेरिति । कुर्वः । कृधातोर्लटि, लटो लः स्थाने वसादेशे "तनादिकृञ्भ्य उः" इत्युविकरणे तस्य आर्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इति ऋकारस्य गुणे रपरे च कृते "अत उत्सार्वधातुके" इत्यनेनाऽकारस्य उकारे "लोपश्चास्यान्यतरस्याम्" इत्यनेन उकारस्य लोपविकल्पे प्राप्ते "नित्यं करोतेः" इत्यनेन नित्यलोपे कृते सस्य रुत्वे रेफस्य विसर्गे च कृते 'कुर्वः' इति सिद्ध्यति । एवं-'कुर्मः' इति । कुरुते । कृधातोर्लटि लटो लः स्थाने आत्मनेपदे तादेशे "तनादिकृञ्भ्य उः" इत्युप्रत्यये गुणे रपरे च

करिष्यति । करिष्यते । करोतु । कुरुताम् । अकरोत् । अकुरुत ॥ ये च ६।४।

कृते अकारस्योत्वे टेरेत्वे च कृते 'कुरुते' इति सिद्धयति । कुर्वाते, कुर्वते । कुरुषे, कुर्वाथे, कुरुध्वे । कुर्वे, कुर्वहे, कुर्महे । चकार । कृधातोर्लिटि, लःस्थाने तिपि तिपो णलि च कृते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् उरदत्वे रपरे च कृते "हलादिः शेषः" इत्यनेन रलोपे "कुहोश्चुः" इति चुत्वे "अचो ञ्णिति" इत्यनेन वृद्धौ 'चकार' इति सिद्धयति । चक्रतुः, चक्रुः । चकर्थ, चक्रथुः, चक्र । चकार--चकर, चकृव, चकृम । चक्रे । कृधातोर्लिटि, लः स्थाने आत्मनेपदे तादेशे धातोर्द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते रस्य "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यभ्यासस्य चुत्वे "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशे "इको यणचि" इत्यनेन यणि च कृते 'चक्रे' इति सिद्धयति । चक्राते, चक्रिरे । चकृषे, चक्राथे, चकृढ्वे । चक्रे, चकृवहे, चकृमहे । कर्त्ता । कृधातोर्लुटि, लःस्थाने तिपि "स्यतासी लृलुटोः" इत्यनेन तासप्रत्यये, तिपो डादेशे । डित्वाट्टिलोपे गुणे च कृते 'कर्त्ता' इति सिद्धयति । कर्त्तारौ, कर्त्तारः । कर्त्तासि, कर्तास्थः, कर्तास्थ । कर्तास्मि, कर्तास्वः, कर्तास्मः । आत्मनेपदे तु-कर्त्ता, कर्तारौ, कर्तारः । कर्तासे, कर्तासाथे, कर्ताध्वे । कर्ताहे, कर्तास्वहे, कर्तास्महे । करिष्यति । कृधातोर्लृटि, लृटो लः स्थाने तिपि पकारस्येत्संज्ञायां लोपे च कृते "स्यतासी लृलुटोः" इत्यनेन स्यप्रत्यये "ऋद्धनोः स्ये" इतीटि गुणे सस्य षत्वे च कृते 'करिष्यति' इति सिद्धयति । करिष्यतः, करिष्यन्ति । करिष्यसि, करिष्यथः, करिष्यथ । करिष्यामि, करिष्यावः, करिष्यामः । करिष्यते । कृधातोर्लृटि, लृटो लः स्थाने आत्मनेपदे तादेशे "स्यतासि" इत्यनेन स्यप्रत्यये इटि च कृते गुणे रपरे सस्य षत्वे च कृते 'करिष्यते' इति । करिष्येते, करिष्यन्ते । करिष्यसे, करिष्येथे, करिष्यध्वे । करिष्ये, करिष्यावहे, करिष्यामहे । करोतु । कृधातोर्लोटि, लोटो लः स्थाने तिपि, सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा "तनादिकृञ्भ्य उः" इत्युप्रत्यये "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे "एरुः" इत्यनेन इकारस्य उत्वे 'करोतु' इति । कुरुताम्, कुर्वन्तु । कुरु--कुरुतात्, कुरुतम्, कुरुत । करवाणि, करवाव, करवाम । कुरुताम् । कृधातोर्लोटि लः स्थाने आत्मनेपदे तादेशे "तनादिकृञ्भ्य उः" इत्युप्रत्यये गुणे रपरे टेरेत्वे च कृते 'करु ते' इति जाते "अत उत्सार्वधातुके" इत्यकारस्य उत्वे "आमेतः" इति टेरेत्वस्यामि च कृते 'कुरुताम्' इति सिद्धयति । कुर्वाताम्, कुर्वताम् । कुरुष्व, कुर्वाथाम्, कुरुध्वम् । करवै, करवावहै, करवामहै । अकरोत् । कृधातोर्लङि, लङो लः स्थाने तिपि शपम्बाधित्वा "तनादिकृञ्भ्य उः" इत्युप्रत्यये "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे रपरे पुनः उकारस्यापि गुणे च कृते तिप इलोपे 'अकरोत्' इति सिद्धयति । अकुरुताम्, अकुर्वन् । अकरोः, अकुरुतम्, अकुरुत । अकरवम्, अकुर्व, अकुर्म । अकुरुत । कृधातोर्लङि, लङो लः स्थाने आत्मनेपदे तादेशे "तनादिकृञ्भ्य उः" इत्युप्रत्यये गुणे रपरे च

२०९ कृञ उलोपः स्यात् यादौ प्रत्यये परे। कुर्यात्। कुर्वीत। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत। अकरिष्यत्। अकरिष्यत। सम्परिभ्यां करोतौ भूषणे

कृते "अत उत्सार्वधातुके" इत्यकारस्य उकारे अडागमे च कृते 'अकुरुत' इति। अकुर्वाताम्, अकुर्वत। अकुरुथाः, अकुर्वाथाम्, अकुरुध्वम्। अकुर्वि, अकुर्वहि, अकुर्महि। ये चेति। "लोपश्चास्यान्यतरस्याम्" इत्यतो लोप इति, अस्येति चानुवर्तते। अस्येत्यनेन पूर्वसूत्रे उत इत्युपात्तः परामृश्यते। "नित्यं करोतेः" इत्यतः करोतेरित्यनुवर्तते। अङ्गाक्षिप्तः प्रत्ययो यकारेण विशेष्यते। तदादिविधिः। तदाह—कृञ उलोप इति। कुर्यात्। कृधातोर्विधिलिङि, लिङो लः स्थाने तिपि अनुबन्धलोपे, "तनादिकृञ्भ्य उः" इति उविकरणे तस्य आर्धधातुकत्वात् गुणे रपरे च कृते 'कर उ ति' इति जाते "अत उत्सार्वधातुके" इति ककारोत्तरवर्तिन अकारस्य उकारे यासुडागमे उटावितौ "लिङः सलोपोऽनन्त्यस्य" इति सलोपे 'कुरु या त्' इति जाते "ये च" इत्यनेन उकारस्य लोपे च कृते 'कुर्यात्' इति। कुर्याताम्, कुर्युः। कुर्याः, कुर्यातम्, कुर्यात। कुर्याम्, कुर्याव, कुर्याम। कुर्वीत। कृधातोर्विधिलिङि, लिङो लः स्थाने आत्मनेपदे तादेशे शपं बाधित्वा उकारे विकरणे गुणे रपरे च कृते 'कर् उ त' इति जाते "अत उत्सार्वधातुके" इति ककाराकारस्य उत्वे च कृते "लिङः सीयुट्" इति सीयुडागमे अनुबन्धलोपे "लोपो व्योर्वलि" इति यलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "इको यणचि" इति यणि च कृते 'कुर्वीत' इति। कुर्वीयाताम्, कुर्वीरन्। कुर्वीथाः, कुर्वीयाथाम्, कुर्वीध्वम्। कुर्वीय, कुर्वीवहि, कुर्वीमहि। क्रियात। कृधातोराशीर्लिङि, लिङो लः स्थाने तिपि अनुबन्धलोपे तिपस्ते यासुडागमे उटावितौ "इतश्च" इति तिप इकारस्य लोपे कृते "स्कोः संयोगाद्योरन्ते च" इति सलोपे "रिङ्शयग्लिङ्क्षु" इत्यनेन ऋतो रिङादेशे कृते 'क्रियात्' इति। क्रियास्ताम्, क्रियासुः। क्रियाः, क्रियास्तम्, क्रियास्त। क्रियासम्, क्रियास्व, क्रियास्म। कृषीष्ट। कृधातोराशीर्लिङि, लिङो लः स्थाने आत्मनेपदे तादेशे "लिङः सीयुट्" इत्यनेन सीयुडागमे उटावितौ, यलोपे कृते "सुट् तिथोः" इत्यनेन सुटि उटो लोपे उभयोः सकारयोरिण्परकत्वात् षत्वे कृते, कृते च ष्टुत्वे, गुणे प्राप्ते "उश्च" इत्यनेन लिङः कित्वात् "क्ङिति च" इति तन्निषेधे 'कृषीष्ट' इति सिद्ध्यति। कृषीयास्ताम्, कृषीरन्। कृषीष्ठाः, कृषीयास्थाम्, कृषीढ्वम्। कृषीय, कृषीवहि, कृषीमहि। अकार्षीत्। कृधातोर्लुङि लुङो लः स्थाने तिपि "हलन्त्यम्" इति तिपः पकारस्येत्संज्ञायां लोपे च कृते "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिजादेशे इचावितौ, सिचः सस्य आर्धधातुकत्वादिटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे "इतश्च" इति तिपस्तेरिकारस्य लोपे "अस्तिसिचोऽपृक्ते" इतीडागमे, "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ सस्य षत्वे च कृते, अङ्गस्य अडागमे अनुबन्धलोपे टित्वादङ्गस्याद्यावयवे

६।१।१३७ समवाये च ६।१।१३८ सम्परिपूर्वस्य करोतेः सुट् स्यात् भूषणे सङ्घाते चार्थे । संस्करोति अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । सम्पूर्वस्य क्वचिदभूषणेऽपि सुट् । "संस्कृतं भक्षाः" इति ज्ञापकात् ॥ उपात्प्रति-यत्नवैकृतवाक्याध्याहारेषु च ६।१।१३९ उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो-गुणाधानम् । विकृतमेव वैकृतं-विकारः । वाक्याध्याहारः--आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । उपस्कृता ब्राह्मणाः । एधोदकस्योपस्कुरुते । उपस्कृतं भुङ्क्ते । उपस्कृतं ब्रूते । वनु याचने ॥ ७ ॥ वनुते । वनने ।

---

जाते 'अकार्षीत्' इति सिद्धयति । अकार्ष्टाम्, अकार्षुः । अकार्षीः, अकार्ष्टम्, अकार्ष्ट । अकार्षम्, अकार्ष्व, अकार्ष्म । इत्यवशिष्टरूपाणि । अकृत । कृधातोर्लुङि लः स्थाने आत्मनेपदे तादेशे अङ्गस्य अडागमे च कृते च्लौ, च्लेः सिजादेशे च कृते इचावितौ "उश्च" इति सिचः कित्वाद्गुणाभावे "ह्रस्वादङ्गात्" इति सलोपे च कृते 'अकृत' इति सिद्धयति । अकृषाताम्, अकृषत । अकृथाः, अकृषाथाम्, अकृढ्वम् । अकृषि, अकृष्वहि, अकृष्महि । अकरिष्यत् । कृधातोर्लृङि लृङो लः स्थाने तिपि अनुबन्धलोपे अडागमे कृते स्यप्रत्यये "ऋद्धनोः स्ये" इति इटि च कृते, गुणे सस्य षत्वे "इतश्च" इति तिपस्तेरिकारस्य लोपे 'अकरिष्यत्' इति । अकरिष्यताम्, अकरिष्यन् । अकरिष्यः, अकरिष्यतम्, अकरिष्यत । अकरिष्यम्, अकरिष्याव, अकरिष्याम । अकरिष्यत । कृधातोर्लृङि, लः स्थाने तादेशे अङ्गस्य अडागमे कृते "स्यतासी लृलुटोः" इति स्यप्रत्यये तस्यार्धधातुकत्वात् "आर्धधातुकस्येड् वलादेः" इतीडागमे प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे सति "ऋद्धनोः स्ये" इतीडागमे सस्य षत्वे गुणे रपरे च कृते 'अकरिष्यत' इति सिद्धयति । अकरिष्येताम्, अकरिष्यन्त । अकरिष्यथाः, अकरिष्येथाम्, अकरिष्यध्वम् । अकरिष्ये, अकरिष्यावहि, अकरिष्यामहि । सम्परिभ्यामिति । अत्र सूत्रे एवं "समवाये च" इत्यत्र च "सुट्कात्पूर्वः" इत्यतः "नित्यं करोतेः" इत्यतश्च तदनुवृत्तेरिति भावः । संस्करोति । इत्यत्र सम्पूर्वस्य कृधातोः "सम्परिभ्यां करोतौ भूषणे" इति सुटि, उटावितौ टित्वादा ।वयवे च जाते 'संस्करोति' इति सिद्धयति । संस्कुरुतः, संस्कुर्वन्ति । इत्यादि । उपस्कृता कन्येति । उपेत्युपसर्गपूर्वकात् कृधातोः क्तप्रत्ययेऽनुबन्धलोपे स्त्रीत्वविवक्षायां टापि ततः प्रकृतसूत्रेण सुटि च कृते उटावितौ 'उपस्कृता कन्या' इति 'अलङ्कृता' इति हि तस्यार्थः । एवं सर्वत्र सुटि कृते ज्ञेयम् । 'उपस्कृता ब्राह्मणाः' सङ्घीभूता इत्यर्थः । 'एधो दकस्योपस्कुरुते' गुणमाधत्ते । 'उपस्कृतं भुङ्क्ते' विकृतमित्यर्थः । 'उपस्कृतं ब्रूते' वाक्याध्याहारेण ब्रूते इत्यर्थः । वनुते । वनु याचने इति धातोर्लटि लः स्थाने आत्मनेपदे तादेशे शपम्बाधित्वा "तनादिकृञ्भ्य उः" इति उविकरणे कृते "टित आत्मनेपदानां टेरे" इति टेरेत्वे 'वनुते' इति सिद्धयति । वन्वाते, वन्वते । वनुषे, वन्वाथे, वनुध्वे ।

मनु अवबोधने ॥ ८ ॥ मनुते । मेने । मनिता । मनिष्यते । मनुताम् । अमनुत । मन्वीत–मनिषीष्ट । अमनिष्ट–अमत । अमनिष्यत ॥ इति तनादयः ।

---

वन्वे, वनुवहे–वन्वहे, वनुमहे–वन्महे । ववने । उकारेत्संज्ञकवन्धातोर्लिटि, लः स्थाने तादेशे "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशे "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्येत्वे, अभ्यासलोपे च प्राप्ते "न शसददवादिगुणानाम्" इत्यनेन निषिद्धे 'ववने' इति रूपं सिद्ध्यति । ववनाते, ववनिरे । ववनिषे, ववनाथे, ववनिध्वे । ववने, ववनिवहे, ववनिमहे । एवम्–वनिता । वनिष्यते । वनुताम् । अवनुत । वन्वीत, वनिषीष्ट, अवत, अवनिष्ट । अवनिष्यत् । अवनिष्यत । इति । मनुते । उकारेत्संज्ञक मन्धातोर्लटि लः स्थाने आत्मनेपदे तादेशे "तनादिकृञ्भ्य उः" इत्युप्रत्यये टेरेत्वे च कृते 'मनुते' इति रूपम् । मन्वाते, मन्वते । मनुषे, मन्वाथे, मनुध्वे । मन्वे, मनुवहे–मन्वहे, मनुमहे–मन्महे । मेने । मन्धातोर्लिटि लः स्थाने ते, धातोर्द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्याससंज्ञायां अभ्यासकार्ये च कृते तप्रत्ययस्यैशादेशे 'म मन् ए' इति जाते "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्यनेन एत्वेऽभ्यासलोपे च कृते 'मेने' इति सिद्ध्यति । मेनाते, मेनिरे । मेनिषे, मेनाथे, मेनिध्वे । मेने, मेनिवहे, मेनिमहे । मनिता—मन्धातोर्लुटि लुटो लः स्थाने ते, "स्यतासी लृलुटोः" इत्यनेन तासप्रत्यये तस्य डादेशे डित्वाट्टिलोपे च कृते, तास आर्धधातुकत्वात् इडागमे 'मनिता' इति सिद्ध्यति । मनितारौ, मनितारः, इत्यादि । मनिष्यते—मन्धातोर्लृटि तादेशे "स्यतासी लृलुटोः" इत्यनेन स्यप्रत्यये इडागमे च कृते सकारस्य षत्वे टेरेत्वे च कृते 'मनिष्यते' इति रूपं सिद्ध्यति । मनिष्येते, मनिष्यन्ते, इत्यादि । मनुताम् । मन्धातोर्लोटि लः स्थाने तादेशे, तस्मिन्परे उकारविकरणे च कृते "टित आत्मनेपदानां टेरे" इति टेरेत्वे "आमेतः" इत्यनेन एकारस्यामि च कृते 'मनुताम्' इति सिद्ध्यति । मन्वाताम्, मन्वताम् । मनुष्व, मन्वाथाम्, मनुध्वम् । मनवै, मनवावहै, मनवामहै । अमनुत । मन्धातोर्लङि लङो लः स्थाने तादेशे शपि प्राप्ते तम्बाधित्वा "तनादिकृञ्भ्य उः" इत्युकारविकरणे कृते अडागमे च कृते 'अमनुत' इति सिद्ध्यति । अमन्वाताम्, अमन्वत । अमनुथाः, अमन्वाथाम्, अमनुध्वम् । अमन्वि, अमनुवहि–अमन्वहि, अमनुमहि–अमन्महि । मन्वीत । मन्धातोर्विधिलिङि लिङो लः स्थाने तादेशे "तनादिकृञ्भ्य उः" इत्युविकरणे "लिङः सीयुट्" इति सीयुटि उटावितौ "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "लोपो व्योर्वलि" इति यलोपे च कृते 'मन् उ ई त' इति जाते "इको यणचि" इति यणि च कृते 'मन्वीत' इति सिद्ध्यति । मन्वीयाताम्, मन्वीरन् । मन्वीथाः, मन्वीयाथाम्, मन्वीध्वम् । मन्वीय, मन्वीवहि, मन्वीमहि । मनिषीष्ट । मन्धातोराशीर्लिङि, लिङो लः स्थाने तादेशे तस्य सीयुटि च कृते उटावितौ, सियुट इडागमे "सुट्

## अथ क्र्यादयः।

डुक्रीञ् द्रव्यविनमये ॥ १ ॥ क्र्यादिभ्यः श्ना ३।१।८१ शपोऽपवादः ॥ क्रीणाति । "ई हल्यघोः" । क्रीणीतः । "श्नाभ्यस्तयोरातः" । क्रीणन्ति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते ।

---

तिथोः" इति सुडागमे च कृतेऽनुबन्धलोपे टित्वात्तस्याद्यावयवे च जाते 'मन् इ सी स् त' इति जाते द्वयोः सकारयोः षत्वे ष्टुत्वे च कृते 'मनिषीष्ट' इति रूपं सिद्ध्यति । मनिषीयास्ताम्, मनिषीरन् । मनिषीष्ठाः, मनिषीयास्थाम्, मनिषीध्वम् । मनिषीय, मनिषीवहि, मनिषीमहि । लुङि परस्मैपदे अमानीत्-अमनीत्, इति । अमनिष्ट । मन्धातोर्लुङि लुङो लः स्थाने तादेशे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिजादेशे इचावित्वे सिचः सकारस्य आर्धधातुकत्वात् इडागमे षत्वे ष्टुत्वे अडागमे च कृते, 'अमनिष्ट' इति सिद्ध्यति । पक्षे "तनादिभ्यस्तथासोः" इति सिचः सकारस्य लोपे "अनुदात्तोपदेश"इत्यादिना नलोपे कृते 'अमत' इति सिद्ध्यति । अमनिषाताम्, अमनिषत । अमथाः-अमनिष्ठाः । अमनिषाथाम्, अमनिढ्वम् । अमनिषि, अमनिष्वहि, अमनिष्महि । लृङि परस्मैपदे-'अमनिष्यत्' इति । अमनिष्यत । मन्धातोर्लृङि, लृङो लः स्थाने तादेशे "स्यतासी लृलुटोः" इति स्यप्रत्यये तस्यार्धधातुकत्वात् इडागमे च कृते, सकारस्य षत्वे अडागमे च जाते 'अमनिष्यत' इति सिद्ध्यति । अमनिष्येताम्, अमनिष्यन्त अमनिष्यथाः, अमनिष्येथाम्, अमनिष्यध्वम् । अमनिष्ये, अमनिष्यावहे, अमनिष्यामहे । इति तनादयः ।

क्र्यादिभ्यः श्नेति । कर्त्रर्थे सार्वधातुके परे क्र्यादिभ्यः श्नाप्रत्ययः स्यात् स्वार्थे । क्रीणाति । डकार-उकार-ञकारेत्संज्ञकक्रीधातोर्लटि, लटो लः स्थाने तिपि, शपि प्राप्ते तम्बाधित्वा "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये अनुबन्धलोपे शित्वात्सार्वधातुकत्वे क्रीधातुगतस्य ईकारस्य "सार्वधातुकार्धधातुकयोः" इति गुणे प्राप्ते किन्तु श्नाप्रत्ययस्य अपित्सार्वधातुकत्वेन "सार्वधातुकमपित्" इति ङित्वात् "क्ङिति च" इति निषेधे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति नकारस्य णत्वे च कृते 'क्रीणाति' इति सिद्ध्यति । क्रीणीतः । क्रीधातोर्लटि, लटो लः स्थाने तसि, श्नाप्रत्ययेऽनुबन्धलोपे "ई हल्यघोः" इति श्नागताकारस्य ईकारे नस्य णत्वे च कृते-'क्रीणीतः' इति । क्रीणन्ति । क्री धातोर्लटि, लटो लः स्थाने झि आदेशे, श्नाविकरणे च कृते शलोपे झेरन्तादेशे "श्नाभ्यस्तयोरातः" इत्याकारलोपे नस्य णत्वे च 'क्रीणन्ति' इति सिद्ध्यति । सिपि-'क्रीणासि' इति रूपम् । थसि-श्नाप्रत्ययेऽनुबन्धलोपे "ई हल्यघोः" इतीकारे सस्य रुत्वे रेफस्य विसर्गे च कृते 'क्रीणीथः' इति रूपं सिद्ध्यति । एवम्-थप्रत्यये 'क्रीणीथ' इति । क्रीणामि । क्रीधातोर्लटि, लटो लः स्थाने मिपि अनुबन्धलोपे श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते श्नोर्ङित्वाद्गुणाभावे नस्य णत्वे च 'क्रीणामि' इति

क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रेथ–चिक्रयिथ । चिक्रिये । क्रेता । क्रेष्यति । क्रेष्यते ।

---

सिद्धयति । लटो लः स्थाने वसि श्नाप्रत्यये कृतेऽनुबन्धलोपे नकारस्य णत्वे च कृते "ई हल्यघोः" इतीत्वे सस्य रुत्वे विसर्गे च 'क्रीणीवः' इति । मसि—'क्रीणीमः' इति रूपं सिद्धयति । क्रीणीते । क्रीधातोर्लटि, लटो लः स्थाने आत्मनेपदे तादेशे शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते "ई हल्यघोः" इतीकारे टेरेत्वे नस्य णत्वे च कृते 'क्रीणीते' इति सिद्धयति । क्रीणाते—क्रीधातोर्लटि, लटो लः स्थाने आतामि श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते नस्य णत्वे टेरेत्वे "श्नाभ्यस्तयोरातः" इत्याकारस्य लोपे संयोगे च कृते 'क्रीणाते' इति सिद्धयति । क्रीणते । क्रीधातोर्लटि, झप्रत्यये "क्र्यादिभ्यः श्ना" इति श्नाप्रत्ययेऽनुबन्धलोपे नस्य णत्वे "आत्मनेपदेष्वनतः" इति झस्यादादेशे "श्नाभ्यस्तयोरातः" इत्याकारस्य लोपे टेरेत्वे च कृते 'क्रीणते' इति सिद्धयति । लटि थासि श्नाप्रत्यये अनुबन्धलोपे नस्य णत्वे "थासः से" इति 'से' आदेशे "ई हल्यघोः" इतीत्वे सस्य षत्वे च 'क्रीणीषे इति' । लटि लः स्थाने आथामि श्नाप्रत्ययेऽनुबन्धलोपे नस्य णत्वे "श्नाभ्यस्तयोरातः" इत्याकारस्य लोपे टेरेत्वे च कृते 'क्रीणाथे' इति । क्रीणीध्वे । क्रीधातोर्लटि ध्वमि–श्नाप्रत्ययेऽनुबन्धलोपे नस्य णत्वे "ई हल्यघोः" इतीत्वे टेरेत्वे च कृते 'क्रीणीध्वे' इति । क्रीणे । इटि–श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते नस्य णत्वे "श्नाभ्यस्तयोरातः" इत्याकारस्य लोपे टेरेत्वे च कृते 'क्रीणे' इति । क्रीणीवहे । क्रीधातोर्लटि वहिप्रत्यये शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च कृते नस्य णत्वे 'ना' इत्यस्य "ईहल्यघोः" इतीकारे टेरेत्वे च कृते 'क्रीणीवहे' इति । एवम्–महिङ्प्रत्यये सति 'क्रीणीमहे' इति बोध्यम् । चिक्राय । क्रीधातोर्लिटि लिटो लः स्थाने तिपि, तिपः स्थाने "परस्मैपदानाम्०" इति णलि कृते अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे अभ्याससंज्ञायां "ह्रस्वः" इत्यनेन ह्रस्वे च कृते "हलादिः शेषः" इति लोपे, चुत्वे वृद्धौ "एचोऽयवायावः" इत्यायादेशे च 'चिक्राय' इति सिद्धयति । चिक्रियतुः । क्रीधातोर्लिटस्तसि तसोऽतुसि, धातोर्द्वित्वे कृतेऽभ्याससंज्ञायां रलोपे कस्य चुत्वे 'चिक्री अतुस्' इति जाते "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" इतीयङादेशे सस्य रुत्वे रेफस्य विसर्गे च कृते 'चिक्रियतुः' इति रूपम् । चिक्रियुः । क्रीधातोर्लिटो झौ, झेः स्थाने उसि, धातोर्द्वित्वे, अभ्याससंज्ञायां "हलादिः शेषः" इति रलोपे च कृते "ह्रस्वः" इति ह्रस्वे, ककारस्य चुत्वे 'चिक्री उस्' इति जाते इयङादेशे च कृते सस्य रुत्वे रेफस्य विसर्गे च कृते 'चिक्रियुः' इति । चिक्रेथ । क्रीधातोर्लिटि, सिपि थलि च कृते द्वित्वेऽभ्याससंज्ञायां लोपे ह्रस्वे च कृते, चुत्वे च जाते, क्रादिनियमाद्विकल्पेन इडभावे गुणे च कृते 'चिक्रेथ' इति । इडागमपक्षे—'चिक्री थ' इत्यवस्थायां थल इटि गुणे अयि च कृते

क्रीणातु-क्रीणीतात् । क्रीणीताम् । अक्रीणात् । अक्रीणीत । क्रीणीयात् । क्रीणीत ।

'चिक्रयिथ' इति । चिक्रियथुः, चिक्रिय । चिक्राय-चिक्रिय, चिक्रियिव, चिक्रियिम । चिक्रिये । क्रीधातोर्लिटि लिटो लः स्थाने आत्मनेपदे तादेशे "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इत्यादिहलः शेषे "ह्रस्वः" इति ह्रस्वे "कुहोश्चुः" इति चुत्वे तप्रत्ययस्यैशादेशे च कृते "अचि श्नुधातु" इति इयङि 'चिक्रिये' इति सिद्ध्यति । चिक्रियाते, चिक्रियिरे । चिक्रियिषे, चिक्रियाथे, चिक्रियिध्वे । चिक्रिये, चिक्रियिवहे, चिक्रियिमहे । क्रेता । क्रीधातोर्लुटि लुटो लः स्थाने तिपि तासप्रत्यये तासः आर्धधातुकत्वादिटि प्राप्ते "एकाच" इति निषिद्धे तिपो डादेशे डित्वाट्टिलोपे "सार्वधातुकार्धधातुकयोः" इति गुणे 'क्रेता' इति । क्रेष्यति । क्रीधातोर्लृटि, लृटो लः स्थाने तिपि स्यप्रत्यये गुणे षत्वे च कृते "क्रेष्यति" इति । आत्मनेपदे तप्रत्यये स्ये टेरेत्वे षत्वे च कृते 'क्रेष्यते' इति । क्रीणातु । क्रीधातोर्लोटि, लोटो लः स्थाने तिपि, तिपः सार्वधातुकत्वात्प्राप्तं शपं बाधित्वा श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते नस्य णत्वे "एरुः" इति तिप इकारस्य उत्वे च कृते 'क्रीणातु' इति रूपम् । पक्षे-"तुह्योस्तातङाशिष्यन्यतरस्याम्" इति तातङि "ई हल्यघोः" इतीकारे 'क्रीणीतात्' इति सिद्ध्यति । क्रीणीताम्, क्रीणन्तु । क्रीणीहि-क्रीणीतात्, क्रीणीतम्, क्रीणीत । क्रीणानि, क्रीणाव, क्रीणाम । क्रीणीताम् । क्रीधातोर्लोटि लोटो लः स्थाने आत्मनेपदे तप्रत्यये शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये कृतेऽनुबन्धलोपे तस्य सार्वधातुकत्वे "ई हल्यघोः" इति श्नः आकारस्य ईकारे टेरेत्वे नस्य णत्वे च कृते "आमेतः" इत्येकारस्यामि च कृते 'क्रीणीताम्' इति सिद्ध्यति । क्रीणाताम्, क्रीणताम् । क्रीणीष्व, क्रीणाथाम्, क्रीणीध्वम् । क्रीणै, क्रीणावहै, क्रीणामहै । अक्रीणात् । क्रीधातोर्लङि लङो लः स्थाने तिपि अनुबन्धलोपे श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे नस्य णत्वे च जाते तिप इलोपे च 'अक्रीणात्' इति । अक्रीणीताम्, अक्रीणन् । अक्रीणाः, अक्रीणीतम्, अक्रीणीत । अक्रीणाम्, अक्रीणीव, अक्रीणीम । अक्रीणीत । क्रीधातोर्लङि लङो लः स्थाने आत्मनेपदे तप्रत्यये तस्य कर्त्रर्थकसार्वधातुकत्वात् श्नाप्रत्यये कृते शकारस्येत्संज्ञायां लोपे च कृते "ई हल्यघोः" इतीत्वे नस्य णत्वे च कृते अडागमे 'अक्रीणीत' इति । अक्रीणाताम्, अक्रीणत । अक्रीणीथाः, अक्रीणाथाम्, अक्रीणीध्वम् । अक्रीणि, अक्रीणीवहि, अक्रीणीमहि । क्रीणीयात् । क्रीधातोर्विधिलिङि, लिङो लः स्थाने तिपि अनुबन्धलोपे श्नाप्रत्ययेऽनुबन्धलोपे यासुडागमे उटावितौ "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "ई हल्यघोः" इति श्न आकारस्य ईत्वे तिप इलोपे च 'क्रीणीयात्' इति । क्रीणीत । विधिलिङि तप्रत्यये तस्य सार्वधातुकत्वात् शपस्बाधित्वा श्नाप्रत्यये, लिङस्तस्य सीयुडागमे उटावितौ "लोपो व्योर्वलि" इति यलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "ई हल्यघोः" इतीत्वे णत्वे च कृते

क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । अक्रेष्यत् । अक्रेष्यत । प्रीञ् तर्पणे कान्तौ च ॥ २ ॥ प्रीणाति । प्रीणीते । श्रीञ् पाके ॥ ३ ॥ श्रीणाति । श्रीणीते । मीञ् हिंसायाम् ॥ ४ ॥ हिनुमीना ८।४।१५ उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः

---

'क्रीणीत' इति रूपम् । क्रीणीयाताम्, क्रीणीरन् । क्रीणीथाः, क्रीणीयाथाम्, क्रीणीध्वम् । क्रीणीय, क्रीणीवहि, क्रीणीमहि । क्रीयात् । क्रीधातोराशीर्लिङि लिङो लः स्थाने तिपि अनुबन्धलोपे यासुटि उटावितौ "पर्जन्यवल्लक्षणप्रवृत्तिः" इति न्यायेन दीर्घस्यैव "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे, तिप इलोपे "स्कोः" इति सलोपे च 'क्रीयात्' इति रूपम् । क्रेषीष्ट । आशीर्लिङि, लिङो लः स्थाने तप्रत्यये सीयुटि उटावितौ सुटि च कृते उटावितौ द्वयोः सकारयोः षत्वे ष्टुत्वे गुणे च कृते 'क्रेषीष्ट' इति रूपम् । अक्रैषीत् । क्रीधातोर्लुङि लुङो लः स्थाने तिपि, अनुबन्धलोपे अडागमे च कृते, च्लौ, च्लेः सिचि इचावितौ सस्य षत्वे "इतश्च" इति तिप इलोपे "अस्तिसिचोऽपृक्ते" इति तिपस्तकारस्येडागमे च कृते "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ 'अक्रैषीत्' इति सिद्ध्यति । अक्रैष्टाम्, अक्रैषुः । अक्रैषीः, अक्रैष्टम्, अक्रैष्ट । अक्रैषम्, अक्रैष्व, अक्रैष्म । अक्रेष्ट । क्रीधातोर्लुङि, लुङो लः स्थाने आत्मनेपदे तप्रत्यये; च्लौ च्लेः सिचि च कृते इचावितौ गुणे सस्य षत्वे ष्टुत्वे अडागमे च कृते 'अक्रेष्ट' इति रूपम् । अक्रेषाताम्, अक्रेषत । अक्रेष्ठाः, अक्रेषाथाम्, अक्रेढ्वम् । अक्रेषि, अक्रेष्वहि, अक्रेष्महि । अक्रेष्यत् । क्रीधातोर्लृङि लृङो लः स्थाने तिपि अनुबन्धलोपे अडागमे च कृते स्यप्रत्यये तस्य षत्वे अङ्गस्य गुणे तिप इलोपे च विहिते 'अक्रेष्यत्' इति रूपम् । आत्मनेपदे-'अक्रेष्यत' इति । प्रीणाति । ञकारेत्संज्ञकप्रीधातोर्लटि, लटो लः स्थाने तिपि शपि प्राप्ते तम्बाधित्वा "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च कृते शित्वात्सार्वधातुकत्वात् "सार्वधातुकमपित्" इति ङित्वात् 'प्री' इत्यस्य गुणाभावे नस्य णत्वे च 'प्रीणाति' इति रूपं सिद्ध्यति । प्रीणीते । प्रीधातोर्लटि लटो लः स्थाने तप्रत्यये श्नाप्रत्यये च कृते शस्येत्संज्ञकत्वे लोपे च कृते "ई हल्यघोः" इतीत्वे नस्य णत्वे टेरेत्वे च कृते 'प्रीणीते' इति सिद्ध्यति । लिटि-पिप्राय, पिप्रिये । लुटि-प्रेता, लृटि-प्रेष्यते । लोटि-प्रीणातु, प्रीणीतात् । आत्मनेपदे-प्रीणीताम् । लङि-अप्रीणात्, अप्रीणीत । विधिलिङि-प्रीणीयात्, प्रीणीत । आशीर्लिङि-प्रीयात्, प्रेषीष्ट । लुङि-अप्रैषीत्, अप्रेष्ट । लृङि-अप्रेष्यत्, अप्रेष्यत । इत्यादीनि रूपाणि । साधनिका तु स्वयमूह्या । श्रीणाति । ञकारेत्संज्ञकश्रीधातोर्लटि, लटो लः स्थाने तिपि, अनुबन्धलोपे श्नाप्रत्ययेऽनुबन्धलोपे नस्य णत्वे 'श्रीणाति' इति । आत्मनेपदे तु-"ई हल्यघोः" इतीत्वे टेरेत्वे च कृते—'श्रीणीते' इति । हिनुमीनेति । हिनुमीना अनयोर्द्वन्द्वात् षष्ठीद्विवचनस्य आर्षो लुक् । "रषाभ्यां नो णः समानपदे" इत्यनुवर्तते । "उपसर्गादसमासेऽपि णोपदेशस्य" इत्यत उपसर्गादिति च तदाह—उप-

स्यात् ! प्रमीणाति । प्रमीणीते । "मीनाति" इत्यात्वम् । ममौ । मिम्यतुः । ममिथ-ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् ।

---

सर्गस्थादिति । प्रमीणाति—प्रोपसर्गपूर्वकात् ञकारेत्सञ्ज्ञकमीधातोर्लटि लटो लः स्थाने तिपि, अनुबन्धलोपे श्नाप्रत्यये शस्येत्सञ्ज्ञायां लोपे च कृते "हिनुमीना" इति नस्य णत्वे 'प्रमीणाति' इति सिद्ध्यति । प्रमीणीते । प्रोपसर्गात् मीधातोर्लटि, लः स्थाने आत्मनेपदे तप्रत्यये श्नाप्रत्यये च कृते अनुबन्धलोपे टेरेत्वे नस्य णत्वे च कृते "ई हल्यघोः" इतीत्वे 'प्रमीणीते' इति सिद्ध्यति । ममौ— मीधातोर्लिटि लिटो लः स्थाने तिपि, तिपो णलादेशे च कृते "मीनातिमिनोतिदीङां ल्यपि च" इति मीधातोरात्वे तस्य द्वित्वेऽभ्याससञ्ज्ञायां अभ्यासकार्ये ह्रस्वे च कृते 'म मा अ' इति जाते "आत औ णलः" इति णलोऽकारस्य औकारे "वृद्धिरेचि" इति वृद्धौ "ममौ" इति रूपम् । मिम्यतुः । मीधातोर्लिटि, लिटो लः स्थाने तसि, तसोऽतुसि च कृते "असंयोगाल्लिट् कित्" इति कित्वाद्गुणाभावात् एज्निमित्तत्वाभावेन "मीनातिमिनोतिदीङां ल्यपि च" इत्यादेरप्राप्त्या "लिटि धातोरनभ्यासस्य" इत्यनेन मी इत्यस्य द्वित्वे कृते,अभ्याससञ्ज्ञायाम् अभ्यासकार्ये "ह्रस्वः" इति ह्रस्वे "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि सस्य रुत्वे रेफस्य विसर्गे च कृते 'मिम्यतुः' इति सिद्ध्यति । मिम्युः । लिटो लः स्थाने झौ, झेरुसि च कृते शेषं पूर्ववत् । ममिथ । मीधातोर्लिटि, लिटो लः स्थाने सिपि, सिपः स्थाने "परस्मैपदानां णल०" इत्यादिना थलि च कृते "मीनातिमिनोति०" इत्यादिना मीधातोः आत्वे "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससञ्ज्ञायां "हलादिः शेषः" इति आदिहलःशेषे ह्रस्वे च कृते क्रादिनियमाद् विकल्पेनेटि च कृते "आतो लोप इटि च" इत्याकारस्य लोपे 'ममिथ' इति । इडभावे तु 'ममाथ' इति। मिम्ये । मीधातोर्लिटि, लिटो लः स्थाने आत्मनेपदे तप्रत्यये एज्निमित्तत्वाभावेन आत्वाऽप्राप्ते धातोर्द्वित्वेऽभ्याससञ्ज्ञायां अभ्यासकार्ये ह्रस्वे च कृते तकारस्यैशादेशे "इको यणचि" इति यणि 'मिम्ये' इति सिद्ध्यति । माता । मीधातोर्लुटि, लुटो लः स्थाने तिपि, अनुबन्धलोपे "मीनातिमिनोतिदीङां ल्यपि च" इत्यात्वे तासप्रत्यये तिपो डादेशे डित्वाट्टिलोपे 'माता' इति सिद्ध्यति । मास्यति । मीधातोर्लृटि लृटो लः स्थाने तिपि, अनुबन्धलोपे स्यप्रत्यये "मीनातिमिनोतिदीङां ल्यपि च" इति आत्वे च कृते 'मास्यति' इति । लृटोः लः स्थाने आत्मनेपदे ते स्ये, टेरेत्वे च कृते 'मास्यते' इति । लोटि—मीनातु, मीनीताम् । लङि—अमीनात् , अमीनीत । विधिलिङि—मीनीयात् , मीनीत । मीयात । मीधातोराशीर्लिङि, लिङो लः स्थाने तिपि, अनुबन्धलोपे यासुटि उटावितौ, तयोर्लोपे, इलोपे च कृते 'मीयात्' इति । मासीष्ट । मीधातोराशीर्लिङि, लिङो लः स्थाने तप्रत्यये "लिङः सीयुट्" इति सीयुडागमे सुटि च कृतेऽनुबन्धलोपे "मीनातिमिनोति" इत्यात्वे सुटस्सस्य षत्वे ष्टुत्वे च कृते 'मासीष्ट' इति

अमास्त। षिञ् बन्धने ॥ ५ ॥ सिनाति। सिनीते। सिषाय। सिष्ये। सेता। स्कुञ् आप्लवने ॥ ६ ॥ स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ३।१।८२ चात् श्ना। स्कुनोति–स्कुनाति। स्कुनुते–स्कुनीते। चुस्काव। चुस्कुवे।

---

रूपम्। अमासीत्। मीधातोर्लुङि, लुङो लः स्थाने तिपि, अनुबन्धलोपे, च्लौ, च्लेः सिचि च कृते इचावितौ "मीनातिमिनोतिदीङां ल्यपि च" इत्यात्वे "यमरमनमातां सक् च" इति सकागमे सिचः सस्य इडागमे तिप इलोपे च 'मा स् इ स् त्' इति जाते "अस्तिसिचोऽपृक्ते" इति ईटि च कृते "इट ईटि" इति सलोपे अडागमे कृते "अमासीत्" इति रूपम्। अमासिष्टाम्। मीधातोर्लुङि, लुङो लः स्थाने तसि, तसः तामि च कृते, च्लौ, च्लेः सिचि, इचावितौ "मीनाति" इत्यादिना आत्वे "यमरमनमातां सक् च" इति सकि इडागमे च कृते अको लोपे सस्य षत्वे ष्टुत्वे च कृते, कृते च अडागमे 'अमासिष्टाम्' इति। अमासिषुः। अमासीः, अमासिष्टम्, अमासिष्ट। अमासिषम्, अमासिष्व, अमासिष्म। अमास्त। मीधातोर्लुङि, लः स्थाने आत्मनेपदे तादेशे, च्लौ, च्लेः सिचि, इचावितौ "मीनातिमिनोतिदीङां ल्यपि च" इत्यात्वे कृते अडागमे 'अमास्त' इति। लृङि—अमास्यत्, अमास्यत। सिनाति। ञकारेत्सञ्ज्ञकषिधातोः "धात्वादेः षः सः" इति सत्वे तस्माल्लटि, तिपि, अनुबन्धलोपे श्नाप्रत्यये शस्येत्सञ्ज्ञायां लोपे च कृते 'सिनाति' इति। सिनीते। आत्मनेपदे तु लटः स्थाने तादेशे श्नाप्रत्यये कृते "ई हल्यघोः" इतीत्वे टेरेत्वे च कृते 'सिनीते' इति। सिनाते, सिनते। सिनीषे, सिनाथे, सिनीध्वे। सिने, सिनीवहे, सिनीमहे। सिषाय। षिधातोर्लिटि, लस्तिपि, तिपो णलि च कृते षस्य सत्वे धातोर्द्वित्वे अभ्यासत्वे अभ्यासकार्ये "अचो ञ्णिति" इति वृद्धौ आयादेशे षत्वे च कृते 'सिषाय' इति रूपम्। सिष्ये। षिधातोर्लिटस्ते षस्य सत्वे धातोर्द्वित्वे अभ्यासत्वे अभ्यासकार्ये, तकारस्यैशादेशे सस्य षत्वे च कृते 'सि षि ए' इति जाते तत्र "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि 'सिष्ये' इति। सेता। षिधातोर्लुटि, तिपि, धातोः षस्य सत्वे तासूप्रत्यये तिपो डादेशे डित्वाट्टिलोपे "सार्वधातुकार्धधातुकयोः" इति गुणे 'सेता' इति। लङि—असिनात्, असिनीत। लुङि—असैषीत्, असेष्ट। लृङि—असेष्यत्, असेष्यत। इत्यादि बोध्यम्। स्तन्भुस्तुन्भुस्कन्भिवति। एभ्यः श्नुप्रत्ययः स्यात्, चात् श्नाप्रत्ययोऽपीति सूत्रार्थः। अत्र सूत्रे "क्र्यादिभ्यः श्ना" इत्यस्मात् 'श्ना' इत्यनुवर्तते इति भावः। स्कुनोति। ञकारेत्सञ्ज्ञकस्कुधातोर्लटि लटो लः स्थाने तिपि, "स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च" इति श्नुप्रत्यये, शस्येत्सञ्ज्ञायां लोपे च कृते, तिपः सार्वधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे 'स्कुनोति' इति रूपम्। पक्षे–"क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये 'स्कुनाति' इति। स्कुनुते। स्कुधातोर्लटि, लटो लः स्थाने आत्मनेपदे तप्रत्यये तस्य कर्त्रर्थसार्वधातुकत्वात्तस्मिन् परे श्नुप्रत्यये च कृते अनुबन्ध-

स्कोता । अस्कौषीत् । अस्कोष्ट । स्तन्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्थाः परस्मैपदिनः । हलः श्नः शानज्झौ ३।१।८३ हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान ॥ जस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३।१। ५८ च्लेरङ् वा स्यात् । स्तन्भेः ८।३।६७ स्तन्भेः सौत्रस्य सस्य षः स्यात् । व्यष्टभत् । अस्तम्भीत् । युञ् बन्धने ॥७॥ युनाति । युनीते । योता । क्नूञ् शब्दे

---

लोपे ङित्वाद् गुणाभावे टेरेत्वे च 'स्कुनुते' इति । श्नाप्रत्यये तु "ई हल्यघोः" इतीत्वे 'स्कुनीते' इति । चुस्काव । स्कुधातोर्लिटि, लिटो लः स्थाने तिपि, तिपो णलि च कृते धातोर्द्वित्वे अभ्यासत्वे "शर्पूर्वाः खयः" इत्यभ्यासस्य सस्य लोपे "कुहोश्चुः" इति चुत्वे "अचो ञ्णिति" इति वृद्धौ आवादेशे च कृते 'चुस्काव' इति रूपम् । चुस्कुवे । स्कुधातोर्लिटो लः स्थाने आत्मनेपदे तप्रत्यये, धातोर्द्वित्वेऽभ्याससञ्ज्ञायाम् "शर्पूर्वाः खयः" इति सकारस्य लोपे "कुहोश्चुः" इति चुत्वे "लिटस्तझयोरेशिरेच्" इति तकारस्य एशादेशे च कृते "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" इत्युवङादेशेऽनुबन्धलोपे मिलित्वा 'चुस्कुवे' इति रूपम् । स्कोता । स्कुधातोर्लुटि, लुटो लः स्थाने तिपि, तासूप्रत्यये तिपो डादेशे डित्वाट्टिलोपे, गुणे च कृते 'स्कोता' इति । लङि—अस्कुनोत्, अस्कुनात् । अस्कुनुत-अस्कुनीत । विधिलिङि—स्कुनुयात्-स्कुनीयात् । स्कुन्वीत-स्कुनीत । आशीर्लिङि—स्कूयात, स्कोषीष्ट । अस्कौषीत् । स्कुधातोर्लुङि, लुङो लः स्थाने तिपि, अनुबन्धलोपे, अडागमे च कृते, "च्लि लुङि" इति च्लौ, च्लेः सिचि च कृते, इचावितौ तिप इलोपे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे सस्य षत्वे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ 'अस्कौषीत्' इति । अस्कोष्ट । आत्मनेपदे तु स्कुधातोर्लुङि, लुङो लः स्थाने तप्रत्यये, अडागमे च कृते च्लौ, च्लेः सिचि च कृते इचावितौ गुणे सस्य षत्वे ष्टुत्वे च विहिते 'अस्कोष्ट' इति । हलः श्नः इति । स्तभान । स्तन्भुधातोर्लोटि, लः स्थाने मध्यमपुरुषैकवचने सिपि, श्नाप्रत्यये "अनिदितां हल उपधायाः क्ङिति" इति नलोपे "सेर्ह्यपिच्च" इति लोटः सेर्हिभावे "हलः श्नः शानज्झौ" इति शानजादेशेऽनुबन्धलोपे "अतो हेः" इति हेर्लुकि च कृते 'स्तम्भान' इति रूपम् । जृस्तन्भु । "च्लेः सिच्" इत्यतः च्लेरिति, "अस्यतिवक्तिख्यातिभ्यो अङ्" इत्यतः अङिति, "इरितो वा" इत्यतो वेति चानुवर्तते तदाह—पञ्चभ्यश्च्लेरङ् वेति । जृष् वयोहानौ, स्तन्भुः सौत्रो धातुः, म्रुचुम्लुचुगत्यर्थौ, ग्रुचु, ग्लुचु स्तेयकरणे, ग्लुञ्चु—गतौ, इत्येतेभ्य इत्यर्थः । स्तन्भेरिति । नकारोपधनिर्देशस्य प्रयोजनमाह—सौत्रस्येति । "स्तन्भुस्तुम्भु" इति सूत्रनिर्दिष्टस्य नोपधस्येत्यर्थः । स हि प्रतिपदोक्तः । ष्टभि इत्यस्य तु धातोरिदित्वान्नुमि लाक्षणिकत्वान्न ग्रहणम् । तेन 'विस्तभते' इत्यादौ न षत्वम् । "उदस्थास्तम्भोः" इति सूत्रे तु मोपधग्रहणादुभयोरपि ग्रहणम् । मकारस्योभयत्रापि लाक्षणिकत्वात् । व्यष्टभत् । विपूर्वकात्

॥ ८ ॥ क्नूनाति । क्नूनीते । क्नविता ॥ द्रूञ् हिंसायाम् ॥ ९ ॥ द्रूणाति । द्रूणीते । दॄञ् विदारणे ॥ १० ॥ दृणाति । दृणीते । पूञ् पवने ॥ ११ ॥ प्वादीनां ह्रस्वः ७।३।८०। पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ॠ गॄ ज्या री ली व्ली प्लीनां चतुर्विंशतेः शिति ह्रस्वः स्यात् । पुनाति । पुनीते । पविता ।

---

स्तन्भुधातोर्लुङि, लः स्थाने तिपि, अनुबन्धलोपे अडागमे च कृते, च्लौ, च्लेः सिचि प्राप्ते तम्बाधित्वा "जृस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च" इति च्लेरङि कृते, "अनिदिताम्" इति नलोपे "स्तन्भेः" इति सस्य षत्वे ष्टुत्वे च कृते यणि तिप इलोपे 'व्यष्टभत्' इति । अङोऽभावे-च्लेः सिचि, इचावितौ इडागमे कृते "अस्तिसिचोऽपृक्ते" इतीडागमे च कृते "इट ईटि" इति सलोपे कृते अडागमे च 'अस्तम्भीत्' इति सिद्ध्यति । युनाति । ञकारेत्संज्ञक-युधातोर्लटि, लटो लः स्थाने तिपि, अनुबन्धलोपे, श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते 'युनाति' इति । आत्मनेपदे तु लः स्थाने तप्रत्यये, श्नाप्रत्यये च कृते, "ई हल्यघोः" इत्याकारस्येत्वे टेरेत्वे च कृते 'युनीते' इति सिद्ध्यति । लिटि-युयाव, युयुवे । योता । युधातोर्लुटि, लः स्थाने तिपि, तास्प्रत्यये, तिपो डादेशे, डित्वाट्टिलोपे, गुणे च विहिते 'योता' इति सिद्ध्यति । क्नूनाति । शब्दार्थकञकारेत्संज्ञकक्नू इत्यस्माद्धातोर्लटि, लः स्थाने तिपि, इकारपकारयोरित्संज्ञायां लोपे च कृते सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च कृते 'क्नूनाति' इति सिद्ध्यति । क्नूनीते । क्नूधातोरात्मनेपदे लटस्तप्रत्यये, श्नाप्रत्यये च कृते, शस्येत्संज्ञायां लोपे च कृते "ई हल्यघोः" इतीत्वे टेरेत्वे च 'क्नूनीते' इति सिद्ध्यति । क्नविता । क्नूधातोर्लुटस्तिपि, अनुबन्धलोपे, "स्यतासी लृलुटोः" इति तास्प्रत्यये, तास आर्धधातुकत्वादिडागमे तिपो डादेशे, डित्वाट्टिलोपे, "सार्वधातुकार्धधातुकयोः" इति गुणे, अवादेशे 'क्नविता' इति । क्नविष्यति, क्नविष्यते । क्नूनातु—क्नूनीताम् । अक्नूनात्-अक्नूनीत । क्नूनीयात्, क्नूनीत । क्नूयात् । क्नविषीष्ट । अक्नावीत्-अक्नाविष्ट । अक्नविष्यत् । अक्नविष्यत । द्रूणाति । ञकारेत्संज्ञकद्रूइत्यस्माद्धातोर्लटि, तिपि, अनुबन्धलोपे, सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये, शस्य इत्संज्ञकत्वे लोपे च कृते, नस्य णत्वे च विहिते 'द्रूणाति' इति सिद्ध्यति । द्रूणीते । द्रूधातोर्लटि, तत्स्थाने आत्मनेपदे तप्रत्यये, "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च कृते "ई हल्यघोः" इतीत्वे नस्य णत्वे च कृते, टेरेत्वे 'द्रूणीते' इति सिद्ध्यति । दुद्राव । दुद्रुवे । द्रवितासि-द्रवितासे । द्रविष्यति-द्रविष्यते । द्रूणातु-द्रूणीताम् । अद्रूणात्-अद्रूणीत । द्रूणीयात्-द्रूणीत । द्रूयात्-द्रविषीष्ट । अद्रावीत्-अद्रविष्ट । अद्रविष्यत्-अद्रविष्यत । प्वादीनां ह्रस्व इति । "ष्ठिवुक्लमुचमाम्" इत्यतः शितीत्यनुवर्तते इत्यभिप्रेत्य शेषं पूरयति—

लूञ् छेदने ॥ १२ ॥ लुनाति । लुनीते । स्तृञ् आच्छादने ॥ १३ ॥ स्तृणाति । स्तृणीते । "शर्पूर्वाः खयः" । तस्तार । तस्तरतुः । तस्तरे । स्तरिता-स्तरीता ।

---

शिति परे इति । पुनाति । पवनार्थकञकारेत्संज्ञक पू इत्यस्माद्धातोर्लटि, तिपि, सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते, "प्वादीनां ह्रस्वः" इति ह्रस्वे 'पुनाति' इति सिध्यति । पुनीते । पूधातोर्लटि, तस्य स्थाने आत्मनेपदे तप्रत्यये, "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते "प्वादीनां ह्रस्वः" इति ह्रस्वे च कृते "ई हल्यघोः" इतीत्वे टेरेत्वे च 'पुनीते' इति सिध्यति । पविता । पू इत्यस्माद्धातोर्लुटि, तिपि, अनुबन्धलोपे "स्यतासी ललुटोः" इति तास्प्रत्यये, तिपो डादेशे डित्वाट्टिलोपे, तासः आर्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इतीडागमे गुणेऽवादेशे च कृते 'पविता' इति सिद्धयति । पविष्यति, पविष्यते । पुनातु-पुनीताम् । अपुनात्, अपुनीत । पुनीयात्-पुनीत । पूयात्-पविषीष्ट । अपावीत् । अपविष्ट । अपविष्यत्-अपविष्यत । लुनाति । ञकारेत्संज्ञक लू इत्यस्माद्धातोर्लटि, लः स्थाने तिपि, अनुबन्धलोपे, सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च कृते "प्वादीनां ह्रस्वः" इति ह्रस्वे 'लुनाति' इति सिद्धयति । लुनीते । लूधातोर्लटि, लः स्थाने आत्मनेपदे तप्रत्यये सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नाप्रत्ययेऽनुबन्धलोपे, "ई हल्यघोः" इतीत्वे "प्वादीनां ह्रस्वः" इति ह्रस्वादेशे टेरेत्वे च 'लुनीते' इति सिद्धयति । लिटि-लुलाव, लुलुवे । लुटि लविता, लृटि-लविष्यति, लविष्यते । लुनातु-लुनीताम् । अलुनात्-अलुनीत । लुनीयात्-लूयात्—लविषीष्ट । अलावीत्-अलविष्ट । अलविष्यत्-अलविष्यत । स्तृणाति । आच्छादनार्थक-ञकारेत्संज्ञक 'स्तॄ' इत्यस्माद्धातोर्लटि, लः स्थाने तिपि, सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा "क्र्यादिभ्यः श्ना" इति श्नाप्रत्ययेऽनुबन्धलोपे, नस्य णत्वे "प्वादीनां ह्रस्वः" इति ह्रस्वे च विहिते 'स्तृणाति' इति सिद्धयति । स्तृणीते । 'स्तॄ' इत्यस्माद्धातोर्लटि लः स्थाने आत्मनेपदे तप्रत्यये, सार्वधातुकसंज्ञायां शपि प्राप्ते श्नाप्रत्यये कृतेऽनुबन्धलोपे "ई हल्यघोः" इतीकारादेशे नस्य णत्वे "प्वादीनां ह्रस्वः" इति ह्रस्वे टेरेत्वे च जाते 'स्तृणीते' इति सिद्धयति । तस्तार । 'स्तॄ' इत्यस्माद्धातोर्लिटि, लः स्थाने तिपि, णलि च कृते "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायाम् "शर्पूर्वाः खयः" इत्यभ्यासलोपे "अचो ञ्णिति" इति वृद्धौ 'तस्तार' इति सिद्धयति । तस्तरतुः । 'स्तॄ' इत्यस्माद्धातोर्लिटि, लः स्थाने तसप्रत्यये, "परस्मैपदानाम्" इत्यादिना अतुसि द्वित्वेऽभ्याससंज्ञायां लोपे च कृते "ऋच्छत्यृताम्" इति गुणे सस्य रुत्वे उकारस्येत्संज्ञायां लोपे च कृते, रेफस्य विसर्गे कृते "तस्तरतुः" इति सिद्धयति । तस्तरे । 'स्तॄ' इत्यस्माद्धातोर्लिटि, लः स्थाने आत्मनेपदे तप्रत्यये "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायाम् "शर्पूर्वाः

स्तृणीयात् । स्तृणीत । स्तीर्यात् ॥ लिङ्सिचोरात्मनेपदेषु ७।२।४२ वृङ्वृञ्भ्या-मृदन्ताच्च परयोर्लिङ् सिचोरिड् वा स्यात्तङि ॥ न लिङि ७।२।३९ वृत इटो लिङि न दीर्घः । स्तरिषीष्ट । "उश्च" इति कित्त्वम् । स्तीर्षीष्ट । "सिचि च परस्मैपदेषु" । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः । अस्तरीष्ट-अस्तरिष्ट—अस्तीर्ष्ट । कृञ्

---

खयः" इत्यभ्याससंज्ञकस्य 'स्' इत्यस्य लोपे "लिटस्तझयोरेशिरेच्" इति तकारस्यै-शादेशे "ऋच्छत्यॄताम्" इति गुणे च कृते 'तस्तरे' इति सिद्ध्यति । स्तरीता । 'स्तॄ' इत्यस्माद्धातोर्लुटस्तिपि, अनुबन्धलोपे तासप्रत्यये तिपो डादेशे, डित्वाट्टिलोपे इटि च कृते "सार्वधातुकार्धधातुकयोः" इति गुणे "वृतो वा" इत्यनेन इटो विकल्पेन दीर्घे 'स्तरीता' इति । दीर्घाभावे तु-'स्तरिता' इति च सिद्ध्यति । स्तृणीयात् । 'स्तॄ' इत्य-स्माद्धातोर्विधिलिङि, लः स्थाने तिपि, अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये, श्नस्येत्संज्ञायां लोपे च कृते, "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमे उटावितौ, "लिङः सलोपोऽनन्त्यस्य" इति सस्य लोपे "ई हल्यघोः" इतीत्वे नस्य णत्वे "प्वादीनां ह्रस्वः" इति ह्रस्वे च कृते 'स्तृणीयात्' इति सिद्ध्यति । स्तृणीत । 'स्तॄ' इत्यस्माद्धातोर्विधिलिङि, लिङो लः स्थाने आत्मनेपदे तप्रत्यये, "क्र्यादिभ्यः श्ना" इति श्नाप्रत्ययेऽनुबन्धलोपे, "लिङः सीयुट्" इति सीयुडागमे, उटावितौ "लोपो व्योर्वलि" इति यस्य लोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे च कृते "श्नाभ्यस्तयोरातः" इत्याकारस्य लोपे ह्रस्वे च विहिते 'स्तृणीत' इति सिद्ध्यति । स्तीर्यात् । 'स्तॄ' इत्यस्माद्धातोराशीर्लिङि, लः स्थाने तिपि, अनुबन्धलोपे यासुडागमे, उटावितौ तिप इलोपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे "ॠत इद्धातोः" इतीत्वे "हलि च" इति दीर्घे च 'स्तीर्यात्' इति । लिङ्सिचोः । "इट् सनि वा" इत्यतः इड्वा इत्यनुवर्तते । तदाह—वृङ्वृञ्भ्यामित्यादिना । न लिङि । "वृतो वा" इत्यतो वृत इत्यनु-वर्तते । लिङीति षष्ठ्यर्थे सप्तमी "आर्धधातुकस्येड्" इत्यतः इडित्यनुवृत्तं षष्ठ्या विप-रिणम्यते । "ग्रहो लिटि" इत्यतो दीर्घ इत्यनुवर्तते । तदाह-वृत इति । वृङ्वृञ्भ्या-मृकारान्ताच्चेत्यर्थः । स्तीर्षीष्ट । 'स्तॄ' इत्यस्माद्धातोराशीर्लिङि, लः स्थाने आत्मनेपदे तप्रत्यये सीयुडागमे उटावितौ "लोपो व्योर्वलि" इति यलोपे "सुट् तिथोः" इति सुडागमे उटावितौ "लिङ्सिचोरात्मनेपदेषु" इति विकल्पेनेडागमे गुणे "वृतो वा" इति वा दीर्घे प्राप्ते "न लिङि" इति निषेधे द्वयोः सकारयोः षत्वे ष्टुत्वे च विहिते 'स्तरिषीष्ट' इति । इडभावे-"ॠत इद्धातोः" इतीत्वे "हलि च" इति दीर्घे च कृते "उश्च" इति कित्वाद्गुणाभावे 'स्तीर्षीष्ट' इति च सिद्ध्यति । अस्तारीत् । 'स्तॄ' इत्य-स्माद्धातोर्लुङि लःस्थाने तिपि, अनुबन्धलोपे अडागमे च कृते, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिजादेशे इचावितौ, तयोर्लोपे च "आर्धधातुकस्येड्वलादेः" इतीडागमे तिप इलोपे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे च कृते "इट ईटि" इति

हिंसायाम् ॥ १४ ॥ कृणाति । कृणीते । चकार । चकरे । वृङ्ग् वरणे ॥ १५ ॥ वृणाति । वृणीते । ववार । ववरे । वरिता-वरीता । "उदोष्ठ्य" इत्युत्वम् । वूर्यात् ।

---

सलोपे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ 'अस्तारीत्' इति सिद्ध्यति। अस्तारिष्टाम् । 'स्तॄ' इत्यस्माद्धातोर्लुङि लुङो लः स्थाने तस्प्रत्यये तसस्तामादेशे, अडागमे च्लेः सिचि च कृते इचावितौ तयोर्लोपे सिचः सस्य इडागमे, "वृतो वा" इति दीर्घे प्राप्ते "सिचि च परस्मैपदेषु" इति निषिद्धे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ षत्वे ष्टुत्वे च विहिते 'अस्तारिष्टाम्' इति सिद्धयति । अस्तारिषुः । 'स्तॄ' इत्यस्माद्धातोर्लुङि लुङो लः स्थाने झिप्रत्यये, "सिजभ्यस्तविदिभ्यश्च" इति झेः स्थाने जुसि कृते, "चुटू" इति जकारस्येत्संज्ञायां लोपे च कृते अडागमे, च्लौ, च्लेः सिचि कृते इचावितौ तयोर्लोपे च सस्य इडागमे च विहिते, वृद्धौ सकारस्य षत्वे सस्य रुत्वे, रेफस्य विसर्गे च जाते 'अस्तारिषुः' इति । अस्तारीः, अस्तारिष्टम्, अस्तारिष्ट । अस्तारिषम्, अस्तारिष्व, अस्तारिष्म । अस्तरिष्ट । 'स्तॄ' इत्यस्माद्धातोर्लुङि, लः स्थाने आत्मनेपदे तप्रत्यये "च्लि लुङि" इति च्लौ, च्लेः सिचि च कृते, इचावितौ "लिङ्सिचोरात्मनेपदेषु" इति विकल्पेन इडागमे गुणे अडागमे च कृते "वृतो वा" इति विकल्पेन इटो दीर्घे 'अस्तरीष्ट' इति । दीर्घाभावे 'अस्तरिष्ट' इति । इडभावे तु "ऋत इद्धातोः" इतीत्वे "हलि च" इति दीर्घे 'अस्तीर्ष्ट' इति सिद्धयति । कृणाति । 'कॄ' इत्यस्माद्धातोर्लटि, लटो लः स्थाने तिपि, अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते, तम्बाधित्वा श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते नस्य णत्वे "प्वादीनां ह्रस्वः" इति ह्रस्वे 'कृणाति' इति । कृणीते । कॄधातोर्लटि, लःस्थाने आत्मनेपदे तप्रत्यये "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते नस्य णत्वे "ई हल्यघोः" इतीत्वे ह्रस्वे च कृते टेरेत्वे 'कृणीते' इति सिद्धयति । चकार । 'कॄ' इत्यस्माद्धातोर्लिटस्तिपि, तिपो णलि च कृते, "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते "हलादिः शेषः" इति लोपे "कुहोश्चुः" इत्यनेन चुत्वे "अचो ञ्णिति" इति वृद्धौ 'चकार' इति । चकरतुः, चकरुः । चकरिथ, चकरथुः, चकर । चकार-चकर, चकरिव, चकरिम । चकरे । 'कॄ' धातोर्लिटि, लः स्थाने आत्मनेपदे तप्रत्यये, द्वित्वेऽभ्याससंज्ञायां "उरत्" इत्यत्वे रपरे "हलादिः शेषः" इति लोपे "कुहोश्चुः" इति चुत्वे "लिटस्तझयोरेशिरेच्" इति तकारस्यैश् आदेशे "ऋच्छत्यॄताम्" इति गुणे 'चकरे' इति सिद्धयति । चकराते, चकरिरे । चकरिषे, चकराथे, चकरिध्वे । चकरे, चकरिवहे, चकरिमहे । करिता, करीता । करिष्यति, करीष्यति । करिष्यते, करीष्यते । कृणातु । कृणीताम् । अकृणात्-अकृणीत । कृणीयात्-कृणीत । कीर्यात् । करिषीष्ट । अकारीत्-अकरिष्ट, अकरीष्ट । अकरिष्यत् अकरीष्यत् । अकरिष्यत-अकरीष्यत । वृणाति । वृइत्यस्माद्धातोर्लटि, लः स्थाने तिपि अनुबन्धलोपे, सार्व-

वरिषीष्ट-वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट-अवरीष्ट-अवृर्ष्ट । धूञ् कम्पने

धातुकसंज्ञायां शपि प्राप्ते तस्याधित्वा श्नाप्रत्यये, शकारस्येत्संज्ञायां लोपे च कृते नस्य णत्वे "प्वादीनां ह्रस्वः" इति ह्रस्वे च जाते 'वृणाति' इति सिद्ध्यति । वृणीते । 'वृ' धातोर्लटि, लः स्थाने आत्मनेपदे तप्रत्यये सार्वधातुकसंज्ञायां शपि प्राप्ते, तस्बाधित्वा श्नाप्रत्ययेऽनुबन्धलोपे नस्य णत्वे "प्वादीनां ह्रस्वः" इति ह्रस्वे, "ई हल्यघोः" इत्यनेन ईकारादेशे टेरेत्वे च कृते, 'वृणीते' इति सिद्ध्यति । ववार । 'वृ' धातोर्लिटि, लः स्थाने तिपि, तिपो णलि च कृते, धातोर्द्वित्वेऽभ्याससंज्ञायाम्, "उरत्" इत्यत्वे, रपरे च कृते, "हलादिः शेषः" इति लोपे "अचो ञ्णिति" इति वृद्धौ च कृतायां 'ववार' इति सिद्ध्यति । ववरे । 'वृ' धातोर्लिटस्ते, "लिटि धातोरनभ्यासस्य" इति द्वित्वे, अभ्याससंज्ञायाम् "उरत्" इत्यत्वे, रपरे च कृते, लोपे, तकारस्यैशादेशे "ऋच्छत्यृताम्" इति गुणे 'ववरे' इति सिद्ध्यति । वरीता । 'वृ' धातोर्लुटि लः स्थाने तिपि, तासप्रत्यये, तिपो डादेशे, डित्वाट्टिलोपे, "आर्धधातुकस्येड्वलादेः" इतीडागमे "सार्वधातुकार्धधातुकयोः" इति गुणे "वृतो वा" इति विकल्पेन दीर्घे 'वरीता' इति । दीर्घाभावे-'वरिता' इति । वरिष्यति-वरीष्यति, वरिष्यते, वरीष्यते । वृणातु-वृणीताम् । अवृणात्-अवृणीत । वृणीयात्-वृणीत । वूर्यात् । वृधातोराशीर्लिङि, तिपि, अनुबन्धलोपे "यासुट्परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमे, उटावितौ "स्कोः संयोगाद्योरन्ते च" इति स्लोपे यासुटः कित्वाद्गुणाभावे "उदोष्ठ्यपूर्वस्य" इत्युत्वे "हलि च" इति दीर्घे च विहिते, 'वूर्यात्' इति सिद्ध्यति । वरिषीष्ट । 'वृ' इत्यस्माद्धातोराशीर्लिङि, ञित्वाद् कर्तृगामिनि क्रियाफले सति आत्मनेपदे तप्रत्यये, "लिङः सीयुट्" इति सीयुडागमे, उटावितौ "लोपो व्योर्वलि" इति यलोपे "सुट् तिथोः"इति सुटि च कृते, उटावितौ तयोर्लोपे च"लिङ्सिचोरात्मनेपदेषु" इति विकल्पेनेडागमे,"वृतो वा" इति इटो दीर्घे प्राप्ते "न लिङि" इति निषिद्धे "ऋच्छत्यृताम्" इति गुणे द्वयोः सकारयोः षत्वे, ष्टुत्वे च विहिते 'वरिषीष्ट' इति सिद्ध्यति । इडभावे तु-"उदोष्ठ्यपूर्वस्य" इत्युत्वे "हलि च" इति दीर्घे उभयोः सकारयोः षत्वे च 'वूर्षीष्ट' इति रूपम् । वूर्षीयास्ताम्, इत्यादि । अवारीत् । 'वृ' इत्यस्माद्धातोर्लुङि, लः स्थाने तिपि, इकारपकारयोरित्संज्ञायां लोपे च कृतेऽडागमे "च्लि लुङि" इति च्लौ, च्लेः सिजादेशे च कृते इचावितौ तयोर्लोपे च सिचः सकारस्य आर्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमे तिप इलोपे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे च कृते "इट ईटि" इति स्लोपे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ सवर्णदीर्घे च कृते 'अवारीत्' इति सिद्ध्यति । अवारिष्टाम् । 'वृ' इत्यस्माद्धातोर्लुङि लः स्थाने तस्प्रत्यये, अडागमे च्लौ, च्लेः सिजादेशे इचावितौ इडागमे, "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ "तस्थस्थमिपां तान्तन्तामः" इति तसः स्थाने तामादेशे सस्य षत्वे ष्टुत्वे च

॥ १६ ॥ धुनाति । धुनीते । धोता-धविता । अधावीत् । अधविष्ट-अधोष्ट । ग्रह उपादाने ॥ १७ ॥ गृह्णाति । गृह्णीते । जग्राह । जगृहे । ग्रहोऽलिटि दीर्घः ७।२।

'अवारिष्टाम्' इति । अवरिष्ट । 'वृ' इत्यस्माद्धातोर्लुङि, लः स्थाने आत्मनेपदे तप्रत्यये, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे, च्लौ, च्लेः सिजादेशे "लिङ्सिचोरात्मनेपदेषु" इति विकल्पेनेडागमे "सार्वधातुकार्धधातुकयोः" इति गुणे "वृतो वा" इति विकल्पेन इटो दीर्घे सस्य षत्वे ष्टुत्वे च 'अवरिष्ट' इति । दीर्घाभावे-'अवरीष्ट' इति । इडभावे-तु पूर्ववदित्थं प्रसाध्य 'अ वृस् त' इति स्थिते "उश्च" इति कित्वाद्गुणाभावे "उदोष्ठ्यपूर्वस्य" इत्युत्वे रपरे "हलि च" इति दीर्घे सस्य षत्वे ष्टुत्वे च विहिते 'अवूर्ष्ट' इति सिद्ध्यति । लृङि-अवरिष्यत्-अवरीष्यत् । अवरिष्यत-अवरीष्यत । धुनाति । ऊकारेत्संज्ञकं 'धू' इत्यस्माद्धातोर्लटि लः स्थाने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां, शपि प्राप्ते तम्बाधित्वा "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च, कृते "प्वादीनां ह्रस्वः" इति ह्रस्वे 'धुनाति' इति सिद्ध्यति । धुनीतः, धुन्वन्ति । धुनासि, धुनीथः, धुनीथ । धुनामि, धुनीवः, धुनीमः । धुनीते । 'धू' इत्यस्माद्धातोर्लटि, लटो लः स्थाने आत्मनेपदे तप्रत्यये सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये, शकारस्येत्संज्ञायां लोपे च कृते "ई हल्यघोः" इतीकारे "प्वादीनां ह्रस्वः" इति ह्रस्वे टेरेत्वे च विहिते 'धुनीते' इति सिद्ध्यति । धुनाते, धुनते । धुनीषे, धुनाथे, धुनीध्वे । धुने, धुनीवहे, धुनीमहे । धविता-'धू' इत्यस्माद्धातोर्लुटि, लुटो लः स्थाने तिपि, तास्प्रत्यये तिपो डादेशे डित्वाट्टिलोपे, "स्वरतिसूतिसूयतिधूञूदितो वा" इति विकल्पेनेडागमे "सार्वधातुकार्धधातुकयोः" इति गुणे अवादेशे च विहिते, 'धविता' इति । इडभावे-'धोता' इति च सिद्ध्यति । धविष्यति-धोष्यति, धविष्यते-धोष्यते । धुनातु-धुनीताम् । धुनीयात्-धुनीत । धूयात्-धविषीष्ट, धूयात्-धोषीष्ट । अधावीत् । 'धू' इत्यस्माद्धातोर्लुङि, लः स्थाने तिपि, अनुबन्धलोपे, अडागमे, "च्लि लुङि" इति च्लौ, च्लेः सिचि कृते, इचावितौ "स्तुसुधूञ्भ्यः परस्मैपदेषु" इति विकल्पेनेडागमे तिप इलोपे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे च कृते "इट ईटि" सलोपे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ अवादेशे च कृते 'अधावीत्' इति सिद्ध्यति । अधाविष्टाम्, अधाविषुः । अधावीः, अधाविष्टम्, अधाविष्ट । अधाविषम्, अधाविष्व, अधाविष्म । अधविष्ट । 'धू' इत्यस्माद्धातोर्लुङि, आत्मनेपदे तप्रत्यये अडागमे "च्लि लुङि" इति च्लौ, च्लेः सिजादेशे इचावितौ तयोर्लोपे च "स्वरतिसूति" इति विकल्पेनेडागमे गुणे अवादेशे सस्य षत्वे ष्टुत्वे च कृते 'अधविष्ट' इति सिद्ध्यति । इडभावे तु—अधोष्ट इति । गृह्णाति । उपादानार्थक 'ग्रह' इत्यस्माद्धातोर्लटि, लटो लः स्थाने तिपि, अनुबन्धलोपे, सार्वधातुकसंज्ञायां, शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च जाते, शित्वात्तस्य सार्वधातुकसंज्ञायां "सार्वधातु-

३७ एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यात्, न तु लिटि। ग्रहीता। गृह्णातु। "हलः श्नः शानज्झौ" इति श्नः शानजादेशः। गृहाण। गृह्णात्। ग्रहीषीष्ट। "ह्मयन्त"

---

क्ष्मपित्" इति ङित्वात् "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इत्यनेन सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे नस्य णत्वे च कृते 'गृह्णाति' इति रूपं सिद्धयति। गृह्णीतः, गृह्णन्ति। गृह्णासि, गृह्णीथः, गृह्णीथ। गृह्णासि, गृह्णीवः, गृह्णीमः। गृह्णीते। ग्रहधातोर्लटि, लः स्थाने आत्मनेपदे तप्रत्यये, श्नाप्रत्यये च कृते, अनुबन्धलोपे सार्वधातुकसंज्ञायां ङित्संज्ञायाञ्च सत्याम् सम्प्रसारणे, पूर्वरूपे च जाते, "ई हल्यघोः" इतीकारादेशे नस्य णत्वे टेरेत्वे च कृते, 'गृह्णीते' इति सिद्धयति। गृह्णाते, गृह्णते। गृह्णीषे, गृह्णाथे, गृह्णीध्वे। गृह्णे, गृह्णीवहे, गृह्णीमहे। जग्राह। 'ग्रह' इत्यस्माद्धातोर्लिटि, लिटो लः स्थाने तिपि, तिपो णलि च कृते "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यभ्यासलोपे "कुहोश्चुः" इति अभ्यासस्य चुत्वे, "अत उपधायाः" इत्यनेन वृद्धौ च कृतायां 'जग्राह' इति रूपं सिद्धयति। जगृहतुः, जगृहुः। जग्रहिथ। जगृहथुः। जगृह। जग्राह–जग्रह, जगृहिव, जगृहिम। जगृहे। 'ग्रह' धातोर्लिटि, आत्मनेपदे तप्रत्यये, "असंयोगाल्लिट् कित्" इति कित्वे "ग्रहिज्या" इत्यादिना सम्प्रसारणे पूर्वरूपे च कृते तप्रत्ययस्यैशादेशे कृते "लिटि धातोरन०" इति द्वित्वेऽभ्याससंज्ञायाम् उरदत्वे रपरे च "हलादिः शेषः" इति लोपे "कुहोश्चुः" इति चुत्वे 'जगृहे' इति रूपं सिद्धयति। जगृहाते, जगृहिरे। जगृहिषे, जगृहाथे, जगृहिध्वे। जगृहे, जगृहिवहे, जगृहिमहे। इति। ग्रहोऽलिटि दीर्घ इति। ग्रह इति दिग्योगे पञ्चमी। "आर्धधातुकस्येड्वलादेः" इत्यतः इडित्यनुवृत्तं षष्ठ्यन्तं विपरिणस्यते। "एकाच उपदेशेऽनुदात्तात्" इत्यतः एकाच इति च तदाह—एकाच इत्यादि। ग्रहीता। ग्रहधातोर्लुटि, लः स्थाने तिपि, तास्प्रत्यये, तिपो डादेशे, डित्वाट्टिलोपे "आर्धधातुकस्येड्वलादेः" इतीडागमे "ग्रहोऽलिटि दीर्घः" इति इटो दीर्घे 'ग्रहीता' इति सिद्धयति। ग्रहीतारौ, ग्रहीतारः। ग्रहीतासि, ग्रहीतास्थः, ग्रहीतास्थ। ग्रहीतास्मि, ग्रहीतास्वः, ग्रहीतास्मः। इति। आत्मनेपदे–ग्रहीतासे, ग्रहीतासाथे, ग्रहीताध्वे। ग्रहीताहे, ग्रहीतास्वहे। ग्रहीतास्महे। ग्रहीष्यति–ग्रहीष्यते। गृह्णातु। 'ग्रह' धातोर्लोटि, लः स्थाने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च कृते "एरुः" इत्यनेन इकारस्य उकारे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति नस्य णत्वे "ग्रहिज्या" इत्यादिना सम्प्रसारणे पूर्वरूपे च 'गृह्णातु' इति। गृह्णीतात्, गृह्णीताम्, गृह्णन्तु। गृहाण। ग्रहधातोर्लोटि, मध्यमपुरुषैकवचने सिपि, अनुबन्धलोपे "सेर्ह्यपिच्च" इति ह्यादेशे "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये अनुबन्धलोपे शित्वात्सार्वधातुकत्वे ङित्वे सम्प्रसारणे च कृते "हलः श्नः शानज्झौ" इति शानजादेशे शस्येत्संज्ञायां लोपे च जाते नस्य णत्वे "अतो हेः" इति हेर्लुकि च कृते

इति न वृद्धिः। अग्रहीत्। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम्। कुष निष्कर्षे

---

'गृहाण' इति सिद्ध्यति। गृह्णीतात्, गृह्णीतम्, गृह्णीत। गृह्णानि, गृह्णाव, गृह्णाम। गृह्णीताम्। 'ग्रह' धातोर्लोटि, आत्मनेपदे तप्रत्यये "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये ऽनुबन्धलोपे, सम्प्रसारणे "ई हल्यघोः" इत्यनेकारस्येत्वे टेरेत्वे च कृते, "आमेतः" इत्यापि 'गृह्णीताम्' इति। गृह्णाताम्, गृह्णताम्, गृह्णीष्व, गृह्णाथाम्, गृह्णीध्वम्। गृह्णै, गृह्णावहै, गृह्णामहै। लङि—अगृह्णात्, अगृह्णीत। विधिलिङि—गृह्णीयात्, गृह्णीत। गृह्यात्। ग्रहधातोराशीर्लिङि, तिपि, अनुबन्धलोपे "यासुट्परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमेऽनुबन्धलोपे "किदाशिषि" इति यासुटः कित्वे "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'गृह्यात्'इति सिद्ध्यति। गृह्यास्ताम्, गृह्यासुः। गृह्याः, गृह्यास्तम्, गृह्यास्त। गृह्यासम्, गृह्यास्व, गृह्यास्म इति। ग्रहीषीष्ट। ग्रहधातोराशीर्लिङि, आत्मनेपदे तप्रत्यये, "लिङः सीयुट्" इति सीयुडागमे उटावितौ तयोर्लोपे च "लोपो व्योर्वलि"इत्यनेन यलोपे कृते "सुट्तिथोः" इति तकारस्य सुडागमे अनुबन्धलोपे "आर्धधातुकस्येड्वलादेः" इतीडागमे "ग्रहोऽलिटि दीर्घः" इति दीर्घे द्वयोः सकारयोः षत्वे,ष्टुत्वे च कृते 'ग्रहीषीष्ट' इति सिद्ध्यति। ग्रहीषीयास्ताम्, ग्रहीषीरन्। ग्रहीषीष्ठाः, ग्रहीषीयास्थाम्, ग्रहीषीध्वम्। ग्रहीषीय, ग्रहीषीवहि, ग्रहीषीमहि। अग्रहीत्। ग्रहधातोर्लुङि लः स्थाने तिपि, अनुबन्धलोपे अडागमे च कृते, "च्लि लुङि" इति च्लौ, च्लेः सिजादेशे, इचावितौ तयोर्लोपे च कृते "आर्धधातुकस्येड्वलादेः" इतीडागमे तिपः इकारस्य लोपे तस्यापृक्तसंज्ञायाम् "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे च कृते "इट ईटि" इति सलोपे सिज्लोपस्य सिद्धत्वात्सवर्णदीर्घे "वदव्रजहलन्तस्याचः" इति प्राप्तायाः वृद्धेः "नेटि" इत्यनेन निषेधे "अतो हलादेर्लघोः" इति वृद्धौ प्राप्तायाम् "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इत्यनेन निषिद्धे 'अग्रहीत्' इति सिद्ध्यति। अग्रहीष्टाम्। ग्रहधातोर्लुङि, लः स्थाने तस्प्रत्यये, अङ्गस्य अडागमे "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिजादेशे इचावितौ तयोर्लोपे च कृते "तस्थस्थमिपां तान्तन्तामः" इति तसस्तामादेशे सिचः सस्यार्धधातुकत्वात् इडागमे च कृते "ग्रहोऽलिटि दीर्घः" इति इटो दीर्घे सस्य षत्वे ष्टुत्वे वृद्ध्यभावे च 'अग्रहीष्टाम्' इति सिद्ध्यति। अग्रहीषुः। अग्रहीः, अग्रहीष्टम्, अग्रहीष्ट। अग्रहीषम्, अग्रहीष्व, अग्रहीष्म। इति। अग्रहीष्ट। ग्रहधातोर्लुङि लुङो लः स्थाने आत्मनेपदे तप्रत्यये, अडागमे "च्लि लुङि" इति च्लौ, च्लेः सिजादेशे इचावितौ तयोर्लोपे च सिचः सस्य इडागमे च कृते "ग्रहोऽलिटि दीर्घः" इति दीर्घादेशे सस्य षत्वे ष्टुत्वे च "अग्रहीष्ट" इति सिद्ध्यति। अग्रहीषाताम्। ग्रहधातोर्लुङि लुङो लः स्थाने आत्मनेपदे आतामि, अडागमे, "च्लि लुङि" इति च्लौ, च्लेः

॥ १८ ॥ कुष्णाति । चुकोष । कोषिता । अश भोजने ॥ १९ ॥ अश्नाति । आश । अशिता । अशिष्यति । अश्नातु । अशान । मुष स्तेये ॥ २० ॥ मुष्णाति । मुषाण ।

---

लिङादेशे, इचादिलौ तयोर्लोपे च लिचः सस्य इडागमे च कृते, "ग्रहोऽलिटिदी र्घः" इति इटो दीर्घे सस्य षत्वे च जाते 'अग्रहीषाताम्' इति सिद्ध्यति । अग्रहीषत । अग्रहीष्ठाः, अग्रहीषाथास्, अग्रहीढ्वम् । अग्रहीषि, अग्रहीष्वहि, अग्रहीष्महि । इति । लृङि-अग्रहीष्यत्, अग्रहीष्यत । कुष्णाति । कुष् इत्यस्माद्धातोर्लटि, लः स्थाने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च कृते "रषाभ्यां नो णः समानपदे" इति णत्वे 'कुष्णाति' इति रूपं सिद्धयति । चुकोष । कुष्धातोर्लिटि, लः स्थाने तिपि, तिपो णलि च कृते अनुबन्धलोपे धातोर्द्वित्वेऽभ्याससंज्ञायां, लोपे च कृते "कुहोश्चुः" इति चुत्वे "पुगन्तलघूपधस्य च" इति गुणे 'चुकोष' इति रूपं सिद्धयति । कोषिता । कुष्धातोर्लुटि, लः स्थाने तिपि, तास् प्रत्यये, तिपो डादेशे डित्वाट्टिलोपे इटि च कृते, लघूपधगुणे 'कोषिता' इति रूपं सिद्धयति । लृटि-कोषिष्यति । लोटि-कुष्णातु । लङि-अकुष्णात् । विधिलिङि-कुष्णीयात् । आशिषि-कुष्यात् । लुङि-अकोषीत् । लृङि-अकोषिष्यत् । अश्नाति । अश्धातोर्लटि, लः स्थाने तिपि, अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये, शकारस्येत्संज्ञायां लोपे च कृते 'अश्नाति' इति रूपं सिद्धयति । आश । अश्धातोर्लिटि, लिटो लः स्थाने तिपि, तिपो णलि च कृते, अनुबन्धलोपे, धातोर्द्वित्वेऽभ्याससंज्ञायां लोपे च कृते "अत आदेः" इति अभ्यासाकारस्य दीर्घे "अकः सवर्णे दीर्घः" इति दीर्घादेशे 'आश' इति साधु । आशतुः आशुः । आशिथ, आशथुः, आश । आश, आशिव, आशिम । अशिता । अश्धातोर्लुटि, लुटो लः स्थाने तिपि, तास् प्रत्यये च कृते तिपो डादेशे डित्वाट्टिलोपे तास आर्धधातुकत्वात् इटि च विहिते 'अशिता' इति रूपं सिद्धयति । अशिष्यति । अश्धातोर्लृटि, लृटो लः स्थाने तिपि, अनुबन्धलोपे स्यप्रत्यये च कृते, तस्य आर्धधातुकसंज्ञायाम् इडागमे, षत्वे 'अशिष्यति' इति रूपं सिद्धयति । अश्नातु । अश्धातोर्लोटि, लोटो लः स्थाने तिपि, अनुबन्धलोपे, सार्वधातुकसंज्ञायां शपि प्राप्ते, तम्बाधित्वा श्नाप्रत्यये, शकारस्येत्संज्ञायां लोपे च कृते, तिप इकारस्य "एरुः" इत्युत्वे 'अश्नातु' इति रूपं सिद्धयति । अश्नीतात्, अश्नीताम्, अश्नन्तु । अशान । 'अश्' धातोर्लोटि लोटो लः स्थाने मध्यमपुरुषैकवचने सिप्प्रत्यये "सेर्ह्यपिच्च" इत्यनेन ह्यादेशे श्नाप्रत्यये शस्येत्संज्ञायां लोपे च कृते "हलः श्नः शानज्झौ" इति शानजादेशे अनुबन्धलोपे "अतो हेः" इति हेर्लुकि च कृते 'अशान' इति रूपं सिद्धयति । अश्नीतात्, अश्नीतम्, अश्नीत । अश्नानि, अश्नाव, अश्नाम । लङि-आश्नत् । विधिलिङि-अश्नीयात् । आशिषि-अश्यात् । लुङि-आशीत् । लृङि-आशिष्यत् । मुष्णाति—स्तेयार्थक 'मुष्' इत्यस्माद्धातोर्लटि, तिपि,

ज्ञाऽवबोधने ॥ २१ ॥ जज्ञौ । वृङ् सम्भक्तौ ॥ २२ ॥ वृणीते । ववृषे । ववृढ्वे ।
वरिता-वरीता । अवरिष्ट-अवरीष्ट-अवृत ॥ इति क्र्यादयः ।

---

सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च कृते नस्य णत्वे 'मुष्णाति' इति रूपं सिद्ध्यति । मुष्णीतः, मुष्णन्ति । मुष्णासि, मुष्णीथः, मुष्णीथ । मुष्णामि, मुष्णीवः, मुष्णीमः । लिटि-मुमोष । लुटि-मोषिता । लृटि-मोषिष्यति । लोटि-मुष्णातु । मुष्णीतात्, मुष्णीताम्, मुष्णन्तु । मुषाण । 'मुष्' इत्यस्माद्धातोर्लोटि, मध्यमपुरुषैकवचने सिपि, सार्वधातुकसंज्ञायां शपि प्राप्ते तम्बाधित्वा श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च विहिते, "सेर्ह्यपिच्च" इति ह्यादेशे "हलः श्नः शानज्झौ" इति शानजादेशे अनुबन्धलोपे "अतो हेः" इति हेर्लुकि नस्य णत्वे च कृते 'मुषाण' इति रूपं सिद्ध्यति । मुष्णीतात्, मुष्णीतम्, मुष्णीत । मुष्णानि, मुष्णाव, मुष्णाम । लङि-अमुष्णात् । लिङि-मुष्णीयात् । आशिषि-मुष्यात् । लुङि-अमोषीत् । लृङि-अमोषिष्यत् इति । ज्ञा अवबोधने इत्यस्माद्धातोर्लटि, तिपि, श्नाप्रत्यये "ज्ञाजनोर्जा" इति जादेशे 'जानाति' इति रूपम् । जज्ञौ । 'ज्ञा' इत्यस्माद्धातोर्लिटि, लिटो लः स्थाने तिपि, तिपो णलि च कृते अनुबन्धलोपे धातोर्द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यभ्यासलोपे "ह्रस्वः" इति ह्रस्वे, "आत औ णलः" इत्यनेन णल औकारादेशे वृद्धौ 'जज्ञौ' इति सिद्ध्यति । जज्ञतुः । जज्ञुः । जज्ञिथ-जज्ञाथ, जज्ञथुः, जज्ञ । जज्ञौ, जज्ञिव, जज्ञिम । इति रूपाणि । लुटि-ज्ञाता । लृटि-ज्ञास्यति । लोटि-'जानातु' इत्यादि । लङि-अजानात् । विधिलिङि-जानीयात् । आशिषि-ज्ञायात्, ज्ञेयात् । लुङि-अज्ञासीत्, अज्ञासिष्टाम्, अज्ञासिषुः । अज्ञासीः, अज्ञासिष्टम्, अज्ञासिष्ट । अज्ञासिषम्, अज्ञासिष्व, अज्ञासिष्म । इति । अत्र "यमरमनमातां सक्च" इति सकागमो विशेषः । शेषं पूर्ववत् । लृङि-अज्ञास्यत् । इति । वृणीते । ङकारेत्संज्ञक 'वृ' इत्यस्माद्धातोर्लटि, लटो लः स्थाने आत्मनेपदे तप्रत्यये, सार्वधातुकसंज्ञायां, शपि प्राप्ते, तम्बाधित्वा श्नाप्रत्यये, शस्येत्संज्ञायां लोपे च कृते "ई हल्यघोः" इत्यनेनाकारस्य ईत्वे कृते, नस्य णत्वे टेरेत्वे च कृते 'वृणीते' इति रूपं सिद्ध्यति । लिटि-वव्रे, वव्राते, वव्रिरे । ववृषे । 'वृ' इत्यस्माद्धातोर्लिटि, लिटो लः स्थाने आत्मनेपदे थासप्रत्यये, "थासः से" इत्यनेन से आदेशे, "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते 'हलादिः शेषः" इत्यभ्यासलोपे सस्य षत्वे इटि प्राप्ते "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" इति निषेधे 'ववृषे' इति रूपं सिद्ध्यति । वव्राथे । ववृढ्वे—'वृ' इत्यस्माद्धातोर्लिटि, लिटो लः स्थाने मध्यमपुरुषबहुवचनविवक्षायां ध्वमि धातोर्द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते अभ्यासलोपे क्रादिनियमादिडभावे "इणः षीध्वं लुङ्लिटां धोऽङ्गात्" इत्यनेन धस्य ढत्वे टेरेत्वे च विहिते 'ववृढ्वे' इति सिद्ध्यति । वव्रे, ववृवहे, ववृमहे ।

## अथ चुरादयः ।

चुर स्तेये ॥ १ ॥ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३।१।२५ एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थे इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । "पुगन्त" इति गुणः । "सनाद्यन्ता" इति धातुत्वम् । तिप् शवादि, गुणायादेशौ । चोरयति ।

---

इति रूपाणि । वरीता । 'वृ' इत्यस्माद्धातोर्लुटि, लुटो लः स्थाने तिपि, तासृप्रत्यये, तिपो डादेशे, डित्वाट्टिलोपे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे "आर्धधातुकस्येड्वलादेः" इतीडागमे "वृतो वा" इत्यनेन इटो दीर्घे 'वरीता' इति सिद्ध्यति । दीर्घाभावे–'वरिता' इति । लृटि–अवरिष्यत–अवरीष्यत । लोटि–वृणीताम् । लङि–अवृणीत । लिङि–वृणीत । आशिषि–वरिषीष्ट, वृर्षीष्ट । अवरीष्ट । 'वृ' इत्यस्माद्धातोर्लुङि, लुङो लः स्थाने आत्मनेपदे तप्रत्यये, अडागमे "च्लि लुङि" इति च्लौ, च्लेः सिजादेशे, इचाविता तयोर्लोपे च कृते "लिङ्सिचोरात्मनेपदेषु" इति विकल्पेनेडागमे "सार्वधातुकार्धधातुकयोः" इति गुणे सस्य षत्वे च कृते "वृतो वा" इत्यनेन इटो दीर्घे च कृते 'अवरीष्ट' इति रूपं सिद्ध्यति । दीर्घाभावे—'अवरिष्ट' इति । इडभावे "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति च्लेः सिजादेशे इचावितौ तयोर्लोपे च कृते "उश्च" इत्यनेन सिचः कित्वे कित्वाद्गुणाभावे "ह्रस्वादङ्गात्" इत्यनेन सलोपे च कृते अडागमे 'अवृत' इति रूपं सिद्ध्यति । लृङि–अवरिष्यत–अवरीष्यत इति । इति क्र्यादयः ।

चुरस्तेय इति । रेफादकार उच्चारणार्थः, न त्वित्संज्ञकः, प्रयोजनाभावात् । सत्यापेति । सत्याप पाश रूप वीणा तूल श्लोक सेना लोमन् त्वच वर्मन् वर्ण चूर्ण चुरादि एषां द्वन्द्वात्पञ्चमी । तदाह—एभ्यो णिच् स्यादिति । कस्मिन्नर्थे इत्याकाङ्क्षायामाह—चूर्णान्तेभ्य इति । सत्यादिभ्यः चूर्णान्तेभ्यो द्वादशभ्यः करोत्याचष्टे इत्याद्यर्थे "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति वक्ष्यमाणवार्तिकेनैव सिद्धे पुनरेषां सत्यादीनां ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्त्विति । अर्थान्तरस्यानिर्देशादिति भावः । अत्र "धातोरेकाचः" इत्यतो धातोरित्यनुवर्तते । चुरादिभ्यो धातुभ्यो णिजिति फलितम्, एवञ्च णिच आर्धधातुकत्वं सिध्यति । अन्यथा धातोरितिविहितत्वाभावादार्धधातुकत्वं न स्यादिति बोध्यम् । तदाह—पुगन्तेति गुण इति । चोरयति । चुरधातोः "वर्तमाने लट्" इति लटि प्राप्ते तं बाधित्वा "सत्यापपाशरूपवीणा०" इति चुरादित्वात् स्वार्थे णिचि, णचयोरित्संज्ञायां लोपे च 'चुर् इ' इत्यत्र णिच इकारस्य "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "पुगन्तलघूपधस्य च" इति चुर उपधाया गुणे 'चोरि' इति जाते "सनाद्यन्ता धातवः" इति धातुसञ्ज्ञायाम् धातुत्वाल्लटि अनुबन्धलोपे लः स्थाने तिपि पकारस्येत्संज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायाम् "कर्तरि

णिचश्च १।३।७४ णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले। चोरयते। चोरयामास। चोरयिता। चोर्यात्। चोरयिषीष्ट। "णिश्रि" इति चङ्। "णौ चङ्" इति ह्रस्वः। "चङि" इति द्वित्वम्। "हलादिः शेषः"। "दीर्घो लघोः" इत्यभ्यासस्य दीर्घः। अचूचुरत्। अचूचुरत। कथ वाक्यप्रबन्धे ॥ २ ॥ अल्लोपः। अचः

---

शप्" इति शपि शपयोरित्संज्ञायां लोपे च शित्वात्सार्वधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे 'चोरे अ ति' जाते "एचोऽयवायावः" इत्ययादेशे सिद्धिस्वा 'चोरयति' इति रूपम्। अग्रे-चोरयतः, चोरयन्ति। चोरयसि, चोरयथः, चोरयथ। चोरयामि, चोरयावः, चोरयामः। णिचश्चेति। "अनुदात्तङितः" इत्यत आत्मनेपदमिति "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति चानुवर्तते। अत्ययग्रहणपरिभाषया णिजन्तादिति लभ्यते। तदाह-णिजन्तादित्यादिना। चोरयते। चुर्धातोः पूर्ववत् स्वार्थे णिचि धातुसंज्ञायाम् "वर्तमाने लट्" इति लटि लः स्थाने कर्तृगामिनि क्रियाफले सति "णिचश्च" इत्यात्मनेपदे ते जाते शपि अनुबन्धलोपे गुणे अयादेशे टेरेत्वे च रूपम्। अग्रे-चोरयेते, चोरयन्ते। चोरयसे, चोरयेथे, चोरयध्वे। चोरये, चोरयावहे, चोरयामहे। इति। चोरयामास। चुर्धातोः स्वार्थे णिचि, धातुसंज्ञायाम् "परोक्षे लिट्" इति लिटि "कास्यनेकाच आम्वक्तव्यः" इत्यामि तस्य आर्धधातुकत्वे लघ्वरे चोरिधातोर्गुणे अयादेशे च कृते "आमः" इति लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परासोऽनुप्रयोगे कृते 'चोरयाम् अस् लिट्' इति जाते लिटो लः स्थाने तिपि तिपो णलि द्वित्वे अभ्यासत्वे अभ्यासकार्ये संयोगे च कृते तत्सिद्धिः। एवमन्यत्र। चोरयामासतुः, चोरयामासुः। चोरयामासिथ, चोरयामासथुः,चोरयामास। चोरयामास, चोरयामासिव, चोरयामासिम। एवम्, चोरयाम्बभूव। तथा-चोरयाञ्चकार—चोरयाञ्चक्रे। लुटि—चोरयिता। अत्र तास इडागमः प्रकृतेर्गुणोऽयादेशश्च विशेषः,शेषं पूर्ववत्। चोरयिष्यति-चोरयिष्यते। चोरयतु-चोरयताम्। अचोरयत्-अचोरयत। चोरयेत्-चोरयेत। आशीर्लिङि परस्मैपदे आह-चोर्यात्। चुर्धातोः णिचि अनुबन्धलोपे प्रकृतेर्गुणे धातुसंज्ञायाम् आशिष्यर्थे लिङि, लः स्थाने तिपि अनुबन्धलोपे "लिङाशिषि" इत्यार्धधातुकत्वे यासुटि तस्यापि यदागमन्यायेनार्धधातुकत्वात् "णेरनिटि" इति णिलोपे 'चोर् यास् त्' इति जाते तत्र सकारस्य "स्कोः संयोगाद्योरन्ते च' इति लोपे कृते 'चोर्यात्' इति रूपम्। चोर्यास्ताम्, चोर्यासुः। चोर्याः, चोर्यास्तम्, चोर्यास्त। चोर्यासम्, चोर्यास्व, चोर्यास्म। चोरयिषीष्ट। चोरीति पूर्ववत्प्रसाध्य तस्य धातुत्वात् आशिषि लिङ आत्मनेपदे ते आर्धधातुकत्वे सीयुटि उटि गते टित्वादाद्यावयवे 'चोरि सी त' इति भूते तस्य सुडागमे सियुट इडागमे प्रकृतेर्गुणे अयादेशे सियुटस्सस्य षत्वे तस्य ष्टुत्वे च रूपम्। चोरयिषीयास्ताम्, चोरयिषीरन्। चोरयिषीष्ठाः, चोरयिषीयास्थाम्, चोरयिषीध्वम्। चोरयिषीय, चोरयिषीवहि, चोरयिषीमहि। अचूचुरत्।

परस्मिन्पूर्वविधौ १।१।५७ अल्विध्यर्थमिदम् । परनिमित्तोऽजादेशः स्थानिवत्स्यात्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्त्वान्नोपधावृद्धिः । कथयति । अग्लोपित्वादीर्घसन्वद्भावौ न । अचकथत् । गण सङ्ख्याने

---

चोरीति पूर्ववत्प्रसाध्य तस्य धातुत्वात् लुङस्तिपि अनुबन्धलोपे "इतश्च" इति तिप इकारलोपे तस्य सार्वधातुकत्वे शपं बाधित्वा "च्लि लुङि" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति च्लेः चङि अनुबन्धलोपे "णेरनिटि" इति णिलोपे स्थानिवद्भावेन "णौ चङ्युपधाया ह्रस्वः" इति चोर उपधाया ह्रस्वे "चुर् अ त्" इति जाते "चङि" इति द्वित्वे अभ्याससंज्ञायाम् अभ्यासकार्ये च कृते "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावे "दीर्घो लघोः" इत्यभ्यासोकारस्य दीर्घे अङ्गस्य अडागमे च 'अचूचुरत्' इति रूपम् । अचूचुरताम्, अचूचुरन् । अचूचुरः, अचूचुरतम्, अचूचुरत । अचूचुरम्, अचूचुराव, अचूचुराम । अचूचुरत । चोरीति पूर्ववत्प्रसाध्य लुङस्ते तस्य सार्वधातुकसंज्ञायाम् प्राप्तं शपम्बाधित्वा "च्लि लुङि" इति च्लौ तस्य स्थाने "णिश्रिद्रु—" इति चङि अनुबन्धलोपे "णेरनिटि" इति णिलोपे "चङि" इति द्वित्वे, अभ्याससंज्ञायाम् अभ्यासकार्ये च जाते 'चु चुर्अ त' इति भूते "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावे "दीर्घो लघोः" इति अभ्यासस्य दीर्घे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अडागमे 'अचूचुरत' इति रूपम् । अचूचुरेताम्, अचूचुरन्त । अचूचुरथाः, अचूचुरेथाम्, अचूचुरध्वम् । अचूचुरे, अचूचुरावहि, अचूचुरामहि । इति । लृङि—अचोरयिष्यत्-अचोरयिष्यत । अल्लोप इति । "अतो लोपः" इत्यनेनेति भावः । अचः परस्मिन्निति । "स्थानिवदादेशोऽनल्विधौ" इत्यस्मात् 'स्थानिवदादेशः' इत्यनुवर्तते । अच इत्येतदादेश इत्यनेनान्वेति, अच आदेश इति । परस्मिन्निति सति सप्तमी । ततश्च परनिमित्तक इति लभ्यते । तच्चादेशविशेषणम् । तदाह—परनिमित्तोऽजादेश इत्यादिना । कथयति । कथ इत्यकारान्तादस्माण्णिचि अनुबन्धलोपे णिच "आर्धधातुकं शेषः" इत्यार्धधातुकत्वात् "अतो लोपः" इति यकारोत्तरवर्तिन अकारस्य लोपे कृते णिच्निमित्तिकायाम् "अत उपधायाः" इति वृद्धौ प्राप्तायाम् "अचः परस्मिन् पूर्वविधौ" इति अल्लोपस्य स्थानिवत्वात् तदभावे जाते "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम् लटि, लः स्थाने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे शित्वात्सार्वधातुकसंज्ञायां गुणे अयादेशे च कृते 'कथयति' इति रूपम् । लिटि—कथयामास । कथयाञ्चकार । कथयाम्बभूव । लुटि—कथयिता । लृटि—कथयिष्यति । लङि—अकथयत् । लिङि—कथयेत् । आशिषि—कथ्यात् । अचकथत् । कथ इत्यकारान्तधातोर्णिचि अल्लोपे तस्य स्थानिवद्भावात् वृद्ध्यभावे धातुत्वाल्लुङस्तिप इलोपे अटि च्लेः स्थाने "णिश्रिद्रुस्रुभ्यः" इति चङि द्वित्वे अभ्यासत्वे अभ्यासकार्ये चुत्वे च कृते 'अ च कथ् अ त्' इति भूते अत्र थकारोत्तरवर्तिन अकारस्य णिजि-

॥ ३ ॥ गणयति । **ई च गणः ७।४।९७** गणयतेरभ्यासस्य ईत्स्याच्चङ्परे णौ चादत् । अजीगणत्-अजगणत् । इति चुरादयः ।

---

## अथ ण्यन्तप्रक्रिया ।

**स्वतन्त्रः कर्ता १।४।५४** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । **तत्प्रयोजको हेतुश्च १।४।५५** कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् । **हेतुमति च ३।१।२६** प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेर-

---

मित्वेन लोपित्वात् "सन्वल्लघुनि०" इति सन्वद्भावाभावेन "सन्यतः" इतीत्वस्य "दीर्घो लघोः" इति दीर्घस्य चाप्राप्तौ 'अचकथत्' इति रूपम् । गणयति । गणधातोर्णिचि अल्लोपे स्थानिवत्त्वाद् वृद्ध्यभावे धातुत्वाल्लटो लः स्थाने तिपि शपि अनुबन्धलोपे गुणे अयादेशे च तत्सिद्धिः । तसादौ—गणयतः, गणयन्ति । इत्यादि । लिटि—गणयामास । गणयाम्बभूव । गणयाञ्चकार । इत्यादि । लुटि—गणयिता । लृटि-गणयिष्यति । लोटि-गणयतु । लङि-अगणयत् । लिङि-गणयेत् । आशिषि-गण्यात् । ई च गण इति । "सन्वल्लघुनि" इत्यतः चङ्परे इति, "अत्र लोपः" इत्यतोऽभ्यासस्येति चानुवर्तते । तदाह—गणयतेरभ्यासस्येति । "अत्स्मृदृत्वर०" इति पूर्वसूत्रात् 'अद्' ग्रहणं चकारादनुकृष्यते । तदाह—चाददिति । अजीगणत्, अजगणत् । गणधातोर्णिचि अल्लोपे तस्य स्थानिवत्त्वात् वृद्ध्यभावे लुङस्तिप इकारलोपेऽटि च्लेश्चङि द्वित्वे अभ्यासत्वे हलादिः शेषे चुत्वे अग्लोपित्वाद्दीर्घसन्वद्भावयोरभावे 'ई च गणः' इति ईत्वे 'अजीगणत्' इति रूपम् । पक्षे 'अजगणत्' इति । अजीगणताम्—अजगणताम् ; अजीगणन्—अजगणन् । अजीगणाः-अजगणाः । अजीगणतम्-अजगणतम् । अजीगणत-अजगणत । अजीगणम्—अजगणम् । अजीगणाव-अजगणाव । अजीगणाम—अजगणाम । इति । लृङि-अगणयिष्यत् । इति चुरादयः ।

स्वतन्त्रः कर्तेति । कारकाधिकारात् क्रियाजनने स्वातन्त्र्यमिह विवक्षितमित्याह—क्रियायामिति । 'स्वातन्त्र्यमिह प्राधान्यम्' इति भाष्ये स्पष्टम् । ननु 'स्थाली पचति' इत्यादौ कथं स्थाल्यादीनां कर्तृत्वम् , स्वातन्त्र्याभावादित्यत आह—विवक्षितोऽर्थ इति । "विवक्षातः कारकाणि भवन्ति" इति भाष्यादिति भावः । स्वातन्त्र्यञ्च धात्वर्थव्यापाराश्रयत्वम् । अथ "हेतुमति च" इति णिज्विधिं वक्ष्यन् हेतुसंज्ञामाह—तत्प्रयोजको हेतुश्चेति । "स्वतन्त्रः कर्ता" इति पूर्वसूत्रोपात्तः कर्ता तच्छब्देन परामृश्यते । तस्य-कर्तुः, प्रयोजकः-प्रवर्तयिता तत्प्रयोजकः । तदाह—कर्तुः प्रयोजकेत्यादिना । हेतुमति चेति । "सत्यापपाश" इत्यतो णिजित्यनुवर्तते । 'हेतुः—प्रयोजकः' आधारतया अस्यास्तीति हेतुमान् प्रयोजकनिष्ठः प्रेषणादिव्यापारः तस्मिन् वाच्ये णिच् स्यादित्यर्थः । "धातोरेकाचो हलादेः" इत्यतो धातोरित्यनुवर्तते तदाह—प्रयो-

यति भावयति । ओः पुयण्ज्यपरे ७।४।८० सनि परे यदङ्गं तदवयवाभ्यासोकारस्य इत्स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । ष्ठा गतिनिवृत्तौ । अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ७।३।३६ स्थापयति । तिष्ठतेरित्

---

जकव्यापार इति । भवन्तमिति । देवदत्तो यज्वा भवति । तं प्रेरयति याजक इत्याद्यर्थे भूधात्वर्थस्य भवनस्य मुख्यकर्ता यज्वा तस्य यज्वभवने प्रवर्तयिता याजकादिः प्रयोजकः, तन्निष्ठायां प्रेरणायां भूधातोः "हेतुमति च" इति णिचि वृद्धौ, आवादेशे च भावि इति णिजन्तम् । तस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम् "वर्तमाने लट्" इति लटि, तिपि शपि गुणे अयादेशे च 'भावयति' इति । भवन्तं प्रेरयतीति । फलितोऽर्थः । भावयतः, भावयन्ति । भावयसि, भावयथः, भावयथ । भावयामि, भावयावः, भावयामः । एवमात्मनेपदे-भावयते । लिटि-भावयामास, भावयाम्बभूव, भावयाञ्चकार, भावयाञ्चक्रे, इत्यादि । लुटि—भावयिता, लृटि—भावयिष्यति, भावयिष्यते । लोटि—भावयतु—भावयताम् । लङि—अभावयत् , अभावयत । विधौ—भावयेत् , भावयेत । आशिषि—भाव्यात् , भावयिषीष्ट । ओः पुयणीति । उ इत्यस्य ओः इति षष्ठी । पुयण्जि इति च्छेदः । पुश्च यण् च ज् च् इति समाहारद्वन्द्वात्सप्तमी । अः परो यस्मादिति बहुव्रीहिः । "सन्यतः" इत्यस्मात्सनीत्यनुवर्तते । "अङ्गस्य" इत्यधिकृतम् । "अत्र लोपोऽभ्यासस्य" इत्यस्मादभ्यासस्येति "भृञामित्" इत्यस्मादिदिति चानुवर्तते । तदाह—सनि परे इत्यादिना । अबीभवत् । भू इत्यस्मात् "हेतुमति च" इति णिचि "णिच्यच आदेशो न स्याद् द्वित्वे कर्तव्ये" इति निषेधात् पूर्वं वृद्ध्यभावे "सनाद्यन्ता" इति धातुत्वाल्लुङस्तिप इकारलोपे अटि च्लौ "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति च्लेश्चङि अनुबन्धलोपे "णेरनिटि" इति णिलोपे 'अ भू अ त्' इति स्थिते 'द्वित्वे कार्ये णौ अच आदेशस्य निषेधाद्' वृद्ध्यावादेशाभ्यां प्रागेव भू इत्यस्य "चङि" इत्यनेन द्वित्वे अभ्यासत्वे "ह्रस्वः" इति ह्रस्वे "अभ्यासे चर्च" इति चर्त्वेन भस्य बत्वे 'अ बु भू अ त्' इति जाते प्रत्ययलक्षणत्वात् वृद्धौ आवादेशे "णौ चङ्युपधाया ह्रस्वः" इति उपधाह्रस्वे 'अ बु भव् अ त्' इति भूते "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावे "ओः पुयण्ज्यपरे" इत्यभ्यासोकारस्य इत्वे "दीर्घो लघोः" इति दीर्घे च 'अबीभवत्' इति रूपम् । कर्तृगामिनि क्रियाफले 'अबीभवत' इत्यात्मनेपदविशेषः, शेषं पूर्ववत् । लृङि—अभावयिष्यत् , अभावयिष्यत । अर्तिह्रीति । अर्ति ह्री व्ली री क्नूयी क्ष्मायी आत् एषां द्वन्द्वात् षष्ठी । पुक् णौ इति च्छेदः । तदाह—एषां पुक् स्याण्णौ । स्थापयति । ष्ठा गतिनिवृत्तौ इत्यत्र "धात्वादेः षः सः" इति षस्य सत्वे "निमित्तापाये नैमित्तिकस्याप्यपायः" इति निमित्तस्य षत्वस्य, अपाये-नाशे, नैमित्तिकस्यापि—ष्टुत्वस्यापि, अपायः—नाशः । ष्टुत्वनिवृत्तौ च स्था इत्यस्माण्णिचि अनुबन्धलोपे "अर्तिह्रीव्लीरीक्नू-

७।४।५ उपधाया इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्। घट चेष्टायाम्। मितां ह्रस्वः ६।४।९२ घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः स्यात् णौ। घटयति। ज्ञप ज्ञाने ज्ञापने च। ज्ञपयति। अजिज्ञपत्। इति ण्यन्तप्रक्रिया।

## अथ सन्नन्तप्रक्रिया।

धातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७ इषिकर्मण इषिणैक-

---

यीदमाख्यातां पुङ् णौ" इति पुगागमे 'स्थापि' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वाल्लटस्तिपि शपि अनुबन्धलोपे उभयत्र सार्वधातुकसंज्ञायां स्थापेरिकारस्य गुणेऽयादेशे च 'स्थापयति' इति रूपम्। आत्मनेपदे—स्थापयते। लिटि—स्थापयामास। स्थापयिता। स्थापयिष्यति, स्थापयिष्यते। स्थापयतु—स्थापयताम्। अस्थापयत्—अस्थापयत। स्थापयेत्—स्थापयेत। स्थाप्यात्—स्थापयिषीष्ट। तिष्ठतेरिदिति। "णौ चङ्युपधाया ह्रस्वः" इत्यनुवर्तते। तदाह—उपधाया इति। अतिष्ठिपत्। स्थाधातोर्णिचि ण्यन्तत्वात् "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति चङि अनुबन्धलोपे 'णिच्यच आदेशो न स्यात्, द्वित्वे कार्ये' इति निषेधात् इत्वापेक्षया पूर्वं "चङि" इति द्वित्वे अभ्यासत्वे "शर्पूर्वाः खयः" इति सलोपेऽभ्यासह्रस्वे चर्त्वे "णौ चङ्युपधाया ह्रस्वः" इति उपधाया ह्रस्वे "णेरनिटि" इति णिलोपे "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति इत्वे षत्वे ष्टुत्वे "तिष्ठतेरित्" इति इत्वे च 'अतिष्ठिपत्' इति रूपम्। अत्र केचित् 'ओणृ अपनयने, इत्यत्र 'ऋदित्करणाल्लिङ्गात्' उपधाकार्यं द्वित्वात्प्रबलम्" इति कल्पनया पूर्वं "तिष्ठतेरित्" इति इत्वं ततो द्वित्वमिति न समीचीनमिति प्रामाणिकाः। तत्र प्रमाणमन्यत्र स्पष्टम्। मितां ह्रस्व इति। "ऊदुपधाया गोहः" इत्यत उपधाया इति। "दोषो णौ" इत्यस्माद् 'णौ' इति चानुवर्तते तदाह—ह्रस्व इति। के ते मित्संज्ञका इत्यत आह—घटादीनां ज्ञपादीनां चेति। घटयति। घट इत्यस्माण्णिचि "अत उपधाया" इति उपधावृद्धौ घटादेर्मित्त्वात् "मितां ह्रस्वः" इति ह्रस्वे धातुत्वाल्लटस्तिपि शपि गुणेऽयादेशे च तत्सिद्धिः। ज्ञपयति। ज्ञप धातोश्चुरादित्वाण्णिचि अनुबन्धलोपे "अत उपधायाः" इति वृद्धौ "ज्ञप मिच्च" इति मित्वात् "मितां ह्रस्वः" इति उपधाया ह्रस्वत्वे "सनाद्यन्ता" इति धातुत्वाल्लटस्तिपि शपि अनुबन्धलोपे उभयत्र सार्वधातुकसंज्ञायां गुणे अयादेशे च तत्सिद्धिः। अजिज्ञपत्। ज्ञप्इत्यस्माण्णिचि उपधावृद्धौ ह्रस्वे 'ज्ञपि' इति जाते धातुत्वाल्लुङस्तिप इकारलोपेऽटि च्लेश्चङि "णेरनिटि" इति णिलोपे "चङि" इति द्वित्वेऽभ्यासकार्ये "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावे "सन्यतः" इति अभ्यासस्याकारस्येत्वे लघुत्वाभावात् "दीर्घो लघोः" इति दीर्घाभावे 'अजिज्ञपत्' इति रूपम्। इति ण्यन्तप्रक्रिया।

धातोः कर्मण इति। "गुप्तिज्किद्भ्यः" इत्यतः सन्नित्यनुवर्तते। इच्छायाः श्रुतत्वात्तां

कर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्। पठ व्यक्तायां वाचि। सन्यङोः ६।१।९ सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। "सन्यतः"। पठितुमिच्छति पिपठिषति। कर्मणः किम्? गमनेनेच्छति। समानकर्तृकात्किम्? शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणाद्वाक्यमपि। "लुङ्सनोर्घस्लृ"॥ सः स्यार्धधातुके ७।४।४९ सस्य तः स्यात्सादावार्धधातुके। अत्तुमिच्छति जिघत्सति। "एकाच" इति नेट्। अज्झनगमां सनि ६।४।१६ अजन्तानां हन्तेरजादेशगमेश्च

---

त्यैव कर्मत्वं विवक्षितम्। तथा समानकर्तृकत्वमपि इच्छानिरूपितमेव विवक्षितम्। कर्मेति स्ववाचकशब्दद्वारा धातौ सामानाधिकरण्येनान्वेति। तथा च इच्छासमानकर्तृकत्वे सति इच्छाकर्मीभूतो यो व्यापारः तद्वाचकाद्धातोरिच्छायां सन् वा स्यादिति फलति। तदाह—इषि कर्मण इत्यादि। इषिणा एककर्तृकात् इषिकर्मीभूतव्यापारवाचकाद्धातोरित्यर्थः। सन्यङोरिति। अवयवषष्ठ्येषा। प्रत्ययत्वात्तदन्तग्रहणम्। "एकाचो द्वे प्रथमस्य" इति "अजादेर्द्वितीयस्य" इति चाधिकृतम्। तदाह—सन्नन्तस्येत्यादिना। सनि यङि च परे इति तु न व्याख्येयम्। तथा सति प्रतिपूर्वादिणः सनि अटधातोर्यङि च प्रतीषिषति, अटाट्यते इत्यत्र प्रत्ययसहितस्य द्वित्वानापत्तेः। अभ्यासस्य इत्वविधिं स्मारयति—सन्यत इति। पठितुमिच्छतीति। भावस्तुमुनर्थः। "अव्ययकृतो भावे" इत्युक्तेः। पिपठिषति। पठ् इत्यस्मात् "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सन्प्रत्यये अनुबन्धलोपे 'पठ् स' इति जाते "आर्धधातुकं शेषः" इति आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे टलोपे टित्वादाद्यावयवे "सन्यङोः" इति द्वित्वे 'पठ् पठ् इ स' इति जाते "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इति ठलोपे "सन्यतः" इतीत्वे "आदेशप्रत्यययोः" इति षत्वे "सनाद्यन्ता धातवः" इति धातुत्वाल्लटस्तिपि शपि अनुबन्धलोपे 'पिपठिष अ ति' इति जाते "अतो गुणे" इति पररूपे 'पिपठिषति' इति रूपम्। सः स्यार्धधातुक इति। सः इति षष्ठ्यन्तम्। सि इति सप्तम्यन्तम्, आर्धधातुकविशेषणम्। तदादिविधिः। "अच उपसर्गात्तः" इत्यतः तः इत्यनुवर्तते। अकार उच्चारणार्थः तदाह—सस्य तः स्यादिति। आदेशे अकारस्य उच्चारणार्थत्वात्तकारः स्यादित्यर्थः। जिघत्सति। अद् इत्यस्माद्धातोः "धातोः कर्मणः" इति सन्प्रत्यये "लुङ्सनोर्घस्लृ" इत्यदो घस्लादेशेऽनुबन्धलोपे 'घस् स' इति भूते अत्र सनस्सस्य "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायाम् "आर्धधातुकस्येड्वलादेः" इतीडागमे प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषिद्धे "सन्यङोः" इति द्वित्वे अभ्यासत्वे अभ्यासकार्ये च कृते 'जघस् स' इति जाते अभ्याससकारस्य "सः स्यार्धधातुके" इति तकारे "जिघत्स" इति भूते "सनाद्यन्ता" इति धातुत्वाल्लटस्तिपि शपि अनुबन्धलोपे "अतो गुणे" इति पररूपे च

दीर्घः स्यात् झलादौ सनि । इको झल् १।२।९ इगन्ताज्झलादिः सन् कित् स्यात् । "ऋत इद्धातोः" कर्तुमिच्छति चिकीर्षति । सनिग्रहगुहोश्च ७।२।१२। ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात् । बुभूषति । इति सन्नन्ताः ।

---

## अथ यङन्तप्रक्रिया ।

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२ पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात् । गुणो यङ्लुकोः ७।४।८२ अभ्यासस्य

---

कृते 'जिघत्सति' इति रूपम् । अज्झनगमां सनीति । अच् , हन् , गम्, एषां द्वन्द्वः । "नोपधायाः" इत्यतः उपधाया इत्यनुवृत्तं हनगमोरन्वेति । न त्वजन्ते, असम्भवात् । "अङ्गस्य" इत्यधिकृतम् । अचस्तद्विशेषणत्वात्तदन्तविधिः, गमधातुरिह अजादेश एव विवक्षित इति प्रकृतभाष्ये स्पष्टम् । "ढ्लोपे पूर्वस्य" इत्यतो दीर्घ इत्यनुवर्तते । तदाह—अजन्तानामित्यादिना । इको झलिति । इगन्तादिति । सना आक्षिप्तधातुविशेषणत्वात्तदन्तविधिरिति भावः । सन् किदिति । "रुदविदमुषग्रहि" इत्यतः 'सन्' इति, "असंयोगाल्लिट् कित्" इत्यतश्च 'कित्' इत्यनुवर्तत इति भावः । इत्वं स्मारयति—ऋत इद्धातोरिति । चिकीर्षतीति । कृधातोः "धातोः कर्मणः" इत्यादिना सनि अनुबन्धलोपे आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति इडागमे प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इतीण्निषेधे "अज्झनगमां सनि" इति दीर्घे "इको झल्" इति कित्वाद् गुणाभावे "ऋत इद्धातोः" इति इत्वे रपरे 'किर् स' इति भूते द्वित्वेऽभ्यासकार्ये "हलि च" इति दीर्घे षत्वे च कृते 'चिकीर्ष' इति जाते "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि तिपि शपि अनुबन्धलोपे "अतो गुणे" इति पररूपे च कृते 'चिकीर्षति' इति सिद्धम् । सनि ग्रहगुहोश्चेति । चकारात् "श्र्युकः किति" इत्यतः उक इत्यनुकृष्यते, न तु श्रयति, तस्य "सनीवन्तर्ध" इति विकल्पस्य वक्ष्यमाणत्वात् । "नेड्वशिकृति" इत्यतो नेडिति चानुवर्तते । तदाह—ग्रहेरित्यादिना । बुभूषति । भूधातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति इडागमे प्राप्ते "सनि ग्रहगुहोश्च" इत्यनेन निषिद्धे "सार्वधातुकार्धधातुकयोः" इति गुणे प्राप्ते "इको झल्" इति कित्वेन "क्ङिति च" इत्यनेन निषिद्धे "सन्यङोः" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "हलादिः शेषः" इत्यादिहलः शेषे "ह्रस्वः" इति ह्रस्वे "अभ्यासे चर्च" इति अभ्यासभकारस्य बत्वे "आदेशप्रत्यययोः" इति सनः सस्य षत्वे 'बुभूष' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वाल्लटस्तिपि शपि अनुबन्धलोपे "अतो गुणे" इति पररूपे 'बुभूषति' इति रूपम् । इति सन्नन्तप्रक्रिया ।

धातोरेकाचो हलादेरिति । द्योत्ये इति । वाच्यत्वे तु प्रत्ययवाच्यस्य प्रधानतया सन्नन्ते

गुणः स्यात् यङि यङ्लुकि च परतः। ङिदन्तत्वादात्मनेपदम्। पुनः पुनरतिशयेन वा भवति बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट॥ नित्यं कौटिल्ये गतौ ३।१।२३ गत्यर्थात्कौटिल्य एव यङ् स्यात्, न तु क्रियासमभिहारे॥ दीर्घोऽकितः ७।४।८३ अकितोऽभ्यासस्य दीर्घः स्यात् यङ्यङ्लुकोः। कुटिलं व्रजति वाव्रज्यते॥ यस्य

---

इच्छया इव तस्य विशेष्यत्व स्यादिति भावः। गुणो यङ्लुकोरिति। यङ् च लुक् च इति द्वन्द्वात् सप्तमी। लुगिह यङ एव विवक्षितः उपस्थितत्वात्। "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येत्यनुवर्तते। तदाह—अभ्यासस्येति। इक्परिभाषया इगन्तस्येति लभ्यते। बोभूयते। भूधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङ्प्रत्यये ङकारेत्संज्ञायां लोपे च "सन्यङोः" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासंज्ञायां "हलादिः शेषः" इत्यादिहलःशिष्टे ह्रस्वे "अभ्यासे चर्च" इति भस्य बत्वे "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणे 'बोभूय' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वात् "वर्तमाने लट्" इति लटि, यङो ङित्वात् "अनुदात्तङित आत्मनेपदम्" इति लटो लः स्थाने तङि "तिङ्शित्सार्वधातुकम्" इति तस्य सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि अनुबन्धलोपे "अतो गुणे" इति पररूपे "टित आत्मनेपदानां टेरे" इति तस्य टेरेत्वे 'बोभूयते' इति रूपम्। बोभूयेते, बोभूयन्ते। बोभूयसे, बोभूयेथे, बोभूयध्वे। बोभूये, बोभूयावहे, बोभूयामहे। बोभूयाञ्चक्रे। भूधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि "सन्यङोः" इति द्वित्वे अभ्यासत्वे अभ्यासकार्ये च जाते "गुणो यङ्लुकोः" इति अभ्यासस्य गुणे 'बोभूय' इति जाते "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम् "परोक्षे लिट्" इति लिटि "कास्यनेकाच आम्वक्तव्यः" इति आमि, "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकृञोऽनुप्रयोगे 'बोभूयाम् कृ लिट्' इति जाते लिटो लः स्थाने ते "लिटस्तझयोरेशिरेच्" इति तस्य एशि आदेशे "लिटि धातोः" इति कृञो द्वित्वे अभ्यासत्वे अभ्यासकार्ये 'बोभूयाम् चकृ ए' इति भूते यणि कृते आमो मस्य अनुस्वारे परसवर्णे च कृते 'बोभूयाञ्चक्रे' इति रूपम्। लुटि—बोभूयिता। लृटि—बोभूयिष्यते। लोटि—बोभूयताम्। लङि—अबोभूयत। लिङि—बोभूयेत। आशिषि—बोभूयिषीष्ट। अबोभूयिष्ट। भूइत्यस्माद् धातोः यङि द्वित्वेऽभ्यासगुणे जश्त्वे 'बोभूय' इत्यस्य धातुत्वाल्लुङो लः स्थाने तप्रत्ययेऽटि च्लेः सिचि इचावितौ तयोर्लोपे च कृते स् इत्यस्य आर्धधातुकत्वे इटि "अतो लोपः" इति यङोऽकारस्य लोपे षत्वे ष्टुत्वे च 'अबोभूयिष्ट' इति रूपम्। आताम्प्रभृतिषु—अबोभूयिषाताम्, अबोभूयिषत। अबोभूयिष्ठाः, अबोभूयिषाथाम्, अबोभूयिध्वम्। अबोभूयिषि, अबोभूयिष्वहि, अबोभूयिष्महि। नित्यं कौटिल्य इति। नित्यशब्दः एवार्थे। कौटिल्ये इत्यस्योपरि द्रष्टव्यः। "धातोरेकाचः" इत्यतो यङित्यनुवर्तते। तदाह—गत्यर्थात्कौटिल्य एवेति। दीर्घोऽकित इति।

**हलः ६।४।४६।** यस्येति सङ्घातग्रहणम् । हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके । "आदेः परस्य" । "अतो लोपः" । बाभ्रजाञ्चक्रे । बाभ्रजिता ॥ **रीगृदुपधस्य च ७।४।९०।** ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः । वरीवृ-

---

अभ्यासस्येति । "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येत्यनुवर्तते इति भावः । यङि यङ्लुकि चेति । "गुणो यङ्लुकोः" इत्यतस्तदनुवृत्तेरिति भावः । बाभ्रज्यते । भ्रजधातोः "नित्यं कौटिल्ये गतौ" इति यङि द्वित्वेऽभ्यासत्वे अभ्यासकार्ये च कृते 'ब भ्रज् य' इति जाते "दीर्घोऽकितः" इति दीर्घे "सनाद्यन्ता" इति धातुत्वाल्लटस्ते शपि, "अतो गुणे" इति पररूपे टेरेत्वे च 'बाभ्रज्यते' इति । बाभ्रज्येते, बाभ्रज्यन्ते । बाभ्रज्यसे, बाभ्रज्येथे, बाभ्रज्यध्वे । बाभ्रज्ये, बाभ्रज्यावहे, बाभ्रज्यामहे । यस्य हल इति । यकारादकारस्य उच्चारणार्थत्वभ्रमं वारयति—संघातग्रहणमिति । यकाराकार-समुदायस्येत्यर्थः । हलः इति पञ्चमी । "आर्धधातुके" इत्यधिकृतम् । "अतो लोपः" इत्यस्माल्लोप इत्यनुवर्तते । तदाह—हलः परस्येति । ननु "अलोऽन्त्यस्य" इति यकारादकारस्य लोपः स्यादित्यत आह—आदेः परस्येति । "अलोऽन्त्यस्य" इत्यस्यायमपवाद इति भावः । अतो लोप इति । यकाराकारसंघाते यकारस्य लोपे सति परिशिष्टस्याकारस्य "अतो लोपः" इति भावः । बाभ्रजाञ्चक्रे । भ्रज्धातोर्यङि द्वित्वेऽभ्यासत्वे अभ्यासकार्ये "दीर्घोऽकितः" इत्यभ्यासदीर्घे च कृते 'बाभ्रज्य' इति जाते धातुत्वाल्लिटि अनेकाच्त्वादाम्प्रत्यये "आदेः परस्य" इति सूत्रबलात् "यस्य हलः" इति यलोपे "अतो लोपः" इत्यल्लोपे "आमः" इति लिटो लुकि 'बाभ्रजाम्' इति भूते "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकृञोऽनुप्रयोगे तप्रत्यये तस्य एशि द्वित्वेऽभ्यासत्वे अभ्यासकार्ये च कृते, कृते चानुस्वारे परसवर्णे 'बाभ्रजाञ्चक्रे' इति सिद्धम् । बाभ्रजिता । भ्रज्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि द्वित्वेऽभ्यासकार्ये "दीर्घोऽकितः" इति अभ्यासाकारस्य दीर्घे धातुत्वाल्लुटि तासि, लुटो लस्य तादेशे तस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे तास इटि च कृते "आदेः परस्य" इति सूत्रबलाद् "यस्य हलः" इति यलोपे "अतो लोपः" इत्यल्लोपे 'बाभ्रजिता' इति रूपम् । लृटि—बाभ्रजिष्यते । लोटि—बाभ्रज्यताम् । लङि—अबाभ्रज्यत । लिङि—बाभ्रज्येत । आशिषि—बाभ्रजिषीष्ट । लुङि—अबाभ्रजिष्ट । लृङि—अबाभ्रजिष्यत । रीगृदुपधस्येति । अभ्यासस्येति । "अत्र लोपः" इत्यतस्तदनुवृत्तेरिति भावः । यङ्लुकोरिति । "गुणो यङ्लुकोः" इत्यतो 'यङ्लुकोः' इत्यनुवर्तत इति भावः । वरीवृत्यते । वृत्धातोर्यङि द्वित्वे अभ्याससंज्ञायाम् "उरत्" इत्यभ्यासस्य अत्वे "उरण् रपरः" इति रपरे "हलादिः शेषः" इत्यादिहलोऽवशिष्टे "रीगृदुपधस्य च" इति अभ्यासस्य रीगागमे 'वरीवृत्य' इत्यस्य "सनाद्यन्ता धातवः" इति धातुत्वाल्लटस्ते शपि अनुबन्धलोपे "अतो गुणे" इति पररूपे टेरेत्वे च कृते 'वरीवृत्यते' इति रूपम् ।

त्यते । वरीवृताञ्चक्रे । वरीवृतिता ॥ क्षुभ्नादिषु च ८।४।३९। एषु णत्वं न स्यात् । नरीनृत्यते । जरीगृह्यते । इति यङन्तप्रक्रिया ।

---

पुनः पुनः वर्तते इति हि तस्यार्थः । वरीवृताञ्चक्रे । वृत्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि, अनुबन्धलोपे "सन्यङोः" इति द्वित्वे "पूर्वोऽभ्यासः" इति अभ्याससंज्ञायाम् "उरत्" इति अभ्यासस्य अकारे "उरण् रपरः" इति रपरे "हलादिः शेषः" इत्यादिहलः शेषे 'व वृत् य' इति जाते "रीगृदुपधस्य च" इति अभ्यासस्य रीगागमे अनुबन्धलोपे, 'वरीवृत्य' इति जाते "सनाद्यन्ता धातवः" धातुसंज्ञायां "परोक्षे लिट्" इति लिटि, "कास्यनेकाच आम् वक्तव्यः" इति आमि, "यस्य हलः" इति यलोपे "अतो लोपः" इति अकारस्य लोपे 'वरीवृताम् लिट्' इति जाते "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परके कृञि अनुप्रयुक्ते, लिटो लः स्थाने ते, तस्य एशि कृते द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये च कृते, यणि, आमो मस्यानुस्वारे परसवर्णे च कृते 'वरीवृताञ्चक्रे' इति रूपम् । वरीवृताञ्चक्राते, वरीवृताञ्चक्रिरे । वरीवृताञ्चकृषे, वरीवृताञ्चक्राथे, वरीवृताञ्चकृढ्वे । वरीवृताञ्चक्रे, वरीवृताञ्चकृवहे, वरीवृताञ्चकृमहे । वरीवृतिता । वृत्धातोर्यङि, द्वित्वेऽभ्यासत्वे अभ्यासकार्ये च जाते, "रीगृदुपधस्य च" इति धातोरभ्यासस्य रीगागमे 'वरीवृत्य' इति जाते "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम् लुटि, लुटो लः स्थाने तिपि, तासि तिपो डादेशे, "यस्य हलः" इति यमात्रस्य लोपे "अतो लोपः" इत्यकारस्य लोपे, 'वरीवृत् तास् डा' इति जाते डकारे गते डित्वाट्टिलोपे, तास इडागमे, 'वरीवृतिता' इति रूपम् । वरीवृतितारौ, वरीवृतितारः । वरीवृतितासे, वरीवृतितासाथे । वरीवृतिताध्वे । वरीवृतिताहे, वरीवृतितास्वहे, वरीवृतितास्महे । लृटि—वरीवृतिष्यते । लोटि—वरीवृत्यताम् । लङि—अवरीवृत्यत । लिङि—वरीवृत्येत । आशिषि—वरीवृतिषीष्ट । लुङि—अवरीवृतिष्ट । लृङि—अवरीवृतिष्यत । इति । क्षुभ्नादिष्विति । "रषाभ्यां नो णः" इत्यतो ण इति "न भाभूपूकमि" इत्यतो नेति चानुवर्तते । तदाह—णत्वं नेति । नरीनृत्यते । नृत्धातोर्यङि, द्वित्वेऽभ्यासकार्ये, रीगागमे धातुत्वाल्लटस्तादेशे शपि, अनुबन्धलोपे, पररूपे टेरेत्वे 'नरीनृत्यते' इति स्थितौ "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे प्राप्ते "क्षुभ्नादिषु च" इति णत्वनिषेधे सति 'नरीनृत्यते' इति रूपम् । लिटि—नरीनृताञ्चक्रे । लुटि—नरीनृतिता । लृटि-नरीनृतिष्यते । लोटि-नरीनृत्यताम् । लङि-अनरीनृत्यत । विधौ-नरीनृत्येत । आशिषि—नरीनृतिषीष्ट । लुङि-अनरीनृतिष्ट । लृङि—अनरीनृतिष्यत । इति । जरीगृह्यते । ग्रह्धातोर्यङि ङित्वात्सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे 'गृह् य' इति जाते "सन्यङोः" इति द्वित्वेऽभ्यासत्वे, अभ्यासकार्ये, "रीगृदुपधस्य च" इत्यभ्यासस्य रीगागमे, धातुत्वाल्लटस्ते प्रत्यये, शपि, अनुबन्धलोपे, "अतो गुणे" इति पररूपे टेरेत्वे च कृते 'जरीगृह्यते' इति रूपम् । जरीगृ-

## अथ यङ्लुगन्तप्रक्रिया ।

**यङोऽचि च २।४।७४।** यङोऽचि प्रत्यये लुक् स्याच्चकारात्तं विनापि क्वचित् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वमभ्यासकार्यम् । धातुत्वाल्लडादयः । "शेषात्कर्तरि" इति परस्मैपदम् । 'चर्करीतं च' इत्यदादौ पाठाच्छपो लुक् ॥ **यङो वा ७।३।९४।** यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात् । "भूसुवोः" इति गुणनिषेधो यङ्लुकि भाषायां न । "बोभूतुतेतिक्ते" इति छन्दसि निपातनात् । बोभवीति–बोभोति । बोभूतः । "अदभ्य-

---

ह्यते, जरीगृह्यन्ते । जरीगृह्यसे, जरीगृह्येथे, जरीगृह्यध्वे । जरीगृह्ये, जरीगृह्यावहे, जरीगृह्यामहे । लिटि–जरीगृहाञ्चक्रे । लुटि–जरीगृहिता । लृटि–जरीगृहिष्यते । लोटि–जरीगृह्यताम् । लङि–अजरीगृह्यत । लिङि–जरीगृह्येत । आशिषि–जरीगृहिषीष्ट । लुङि–अजरीगृहिष्ट । लृङि–अजरीगृहिष्यत । इति यङन्तप्रक्रिया ।

यङोऽचि चेति । अचि इति प्रत्ययग्रहणम्, न तु प्रत्याहारः, यङा साहचर्यात् । "ण्यक्षत्रियार्ष" इत्यतो लुगित्यनुवर्तते । तदाह—यङोऽचि प्रत्यये इति । चकारात्तं विनापीति । अच्प्रत्ययाभावेऽपीत्यर्थः । तत इति । यङो लुगनन्तरमित्यर्थः। "न लुमता" इत्यनेन हि लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं निषिध्यते । द्वित्वादिकं तु यङन्तस्य कार्यम्, नतु यङ्निमित्तकम्, यङि परतस्तद्विध्यभावादिति भावः । द्वित्वमिति । "सन्यङोः" इत्यनेनेति भावः । अभ्यासकार्यमिति । गुणादीति भावः । धातुत्वादिति । यङो लुकि सत्यपि प्रत्ययलक्षणमाश्रित्य यङन्तत्वात् "सनाद्यन्ता धातवः" इति धातुत्वम् । चर्करीतमिति । यङ्लुगन्तमदादौ बोध्यमिति व्याख्यातं प्राक् । अतो यङ्लुगन्ताच्छपो लुगित्यर्थः । यङो वेति । "उतो वृद्धिः" इत्यतो हलीति "नाभ्यस्तस्याचि" इत्यतः पिति सार्वधातुके इति, "ब्रुव ईट्" इत्यत ईडिति चानुवर्तते । तदाह—यङ्लुगन्तादित्यादिना । "भूसुवोस्तिङि" इति गुणनिषेधमाशङ्क्य आह—भूसुवोरिति । निपातनादिति । "कृपेः छन्दसि" इत्यतः छन्दसीत्यनुवृत्तौ "दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्ते" इत्यादिसूत्रे भूधातोर्यङ्लुगन्तस्य गुणाभावो निपात्यते । "भूसुवोः" इत्येव तत्र गुणनिषेधे सिद्धे गुणाभावनिपातनं नियमार्थम्—यङ्लुकि छन्दस्येवायं "भूसुवोः" इति गुणनिषेधो, नान्यत्र इति । अतो लोकेऽपि यङ्लुगस्तीति विज्ञायते । बोभवीति । भूधातोर्यङि, "यङोऽचि च" इति द्वित्वापेक्षया आदौ यङो लुकि, ततः प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वे, "गुणो यङ्लुकोः" इति अभ्यासस्य गुणे, जश्त्वे, "सनाद्यन्ता धातवः" इति धातुत्वाल्लटस्तिपि, "कर्तरि शप्" इति शपि, "चर्करीतं च" इति यङ्लुगन्तस्य अदादौ पाठाददादित्वात् "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, 'बो भू ति' इति स्थिते "यङोऽचि च" इति पाक्षिक ईडागमे, 'बोभूतुतेतिक्ते' इति छन्दसि निपा-

स्तात्"। बोभुवति। बोभवाञ्चकार—बोभवामास। बोभविता। बोभविष्यति। बोभ-

---

वनात् "भूसुवोस्तिङि" इति गुणनिषेधस्य यङ्लुकि भाषायामप्रवृत्त्या गुणेऽवादेशे च 'बोभवीति' इति रूपम्। इडभावे 'बोभोति' इति रूपम्। बोभूतः। भूधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि, "यङोऽचि च" इति यङ्लुकि, "प्रत्ययलोपे प्रत्ययलक्षणम्" इति प्रत्ययलक्षणत्वे "सन्यङोः" इति धातोर्द्वित्वे अभ्याससंज्ञायां "ह्रस्वः" इति अभ्यासस्याचो ह्रस्वत्वे "अभ्यासे चर्च"इति अभ्यासभकारस्य बत्वे"गुणो यङ्लुकोः"इति अभ्यासस्याचो गुणे, 'बोभू' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वाल्लटि, लटः स्थाने प्रथमपुरुषद्विवचने तसि, "कर्तरि शप्" इति शपि,यङ्लुगन्तस्य अदादौ पाठात् "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, तसः सस्य रुत्वे विसर्गे च 'बोभूतः' इति रूपम्। बोभुवति। भूधातोः "धातोरेकाच०" इति यङि, "यङोऽचि च" इति यङो लुकि, प्रत्ययलक्षणेन यङन्तत्वात् "सन्यङोः" इति द्वित्वे, अभ्याससंज्ञायां "हलादिः शेषः" इति आदिहलः शेषे, "ह्रस्वः" इति ह्रस्वे "अभ्यासे चर्च" इति अभ्यासभकारस्य बत्वे, "गुणो यङ्लुकोः" इति अभ्यासस्य गुणे 'बोभू'इति जाते, प्रत्ययलक्षणेन यङन्तत्वात् "सनाद्यन्ता धातवः" इति धातुत्वाल्लटि, तत्स्थाने प्रथमपुरुषबहुवचने झौ, "कर्तरि शप्" इति शपि "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, "उभे अभ्यस्तम्" इति अभ्यस्तत्वात् "अदभ्यस्तात्" इति झेः स्थाने अदादेशे 'बोभू अ ति' इति जाते "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इति उवङि, मिलित्वा 'बोभुवति' इति रूपम्। अग्रे बोभवीषि—बोभोषि, बोभूथः, बोभूथ। बोभवीमि—बोभोमि, बोभूवः, बोभूमः। इति रूपाणि। साधनिका पूर्ववत्। बोभवाञ्चकार। भूधातुतो "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि,"यङोऽचि च"इति यङो लोपे प्रत्ययलक्षणेन यङन्तत्वात्"सन्यङोः" इति द्वित्वे अभ्यासत्वे अभ्यासकार्ये "गुणो यङ्लुकोः" इति अभ्यासस्याचो गुणे, 'बोभू' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वात् "परोक्षे लिट्" इति लिटि, "कास्यनेकाच आम्वक्तव्यः" इति आमि, तस्य "आर्धधातुकं शेषः" इति आर्धधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति 'बोभू' इत्यस्य गुणे अवादेशे च कृते, "आमः" इति लिटो लुकि,"कृञ्चानुप्रयुज्यते लिटि"इति लिट्परकस्य कृञोऽनुप्रयोगे 'बोभवाम् कृ लिट्'इति स्थिते लिटः स्थाने तिपि,तिपः स्थाने "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः"इति णलि, अनुबन्धलोपे,"लिटि धातोरनभ्यासस्य"इति 'कृ' इत्यस्य द्वित्वे अभ्यासत्वे"उरत्"इति उः स्थानेऽत्वे रपरत्वे"हलादिः शेषः" इति आदिहलः शेषे"कुहोश्चुः" इति अभ्यासककस्य चत्वे 'बोभवाम् चकृ अ' इति जाते, "अचो ञ्णिति" इति 'कृ' इत्यस्य वृद्धौ रपरे मस्य अनुस्वारे परसवर्णे च कृते 'बोभवाञ्चकार' इति। अग्रे—बोभवाञ्चक्रतुः, बोभवाञ्चक्रुः। बोभवाञ्चकर्थ, बोभवाञ्चक्रथुः, बोभवाञ्चक्र। बोभवाञ्चकार—बोभवाञ्चकर, बोभवाञ्चकृव। बोभवाञ्-

वीतु-बोभोतु-बोभूतात् । बोभूताम् । बोभुवतु । बोभूहि । बोभवानि । अबोभवीत्-

कम । इति । साधनिका बोभवाञ्चकारवत् ज्ञेया । बोभवामास । 'बोभू' इति यङ्-लुगन्तं प्रसाध्य ततो लिटि, आमि, लिटो लुकि लिट्परेऽसि अस्तुवरे उक्तरूपस्य सिद्धिः । बोभविता । भूधातोर्यङि, यङो लुकि, द्वित्वे अभ्यासत्वे, अभ्यासकार्ये च कृते, "गुणो यङ्लुकोः" इति अभ्यासस्य गुणे 'बोभू' इति जाते, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लुटि, तत्स्थाने तिपि, तिपो डात्वे, तासि, तासः आर्धधातुकत्वाद् इडागमे, गुणेऽवादेशे च 'बोभविता' इति रूपम् । बोभवितारौ, बोभवितारः । बोभवितासि, बोभवितास्थः, बोभवितास्थ । बोभवितास्मि, बोभवितास्वः, बोभवितास्मः । इति । बोभविष्यति । 'बोभू' इति पूर्ववत् यङ्लुगन्तं प्रसाध्य धातुसंज्ञायां लृटि, लृः स्थाने प्रथमपुरुषैकवचने तिपि, "स्यतासी लृलुटोः" इति स्ये, "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति इडागमे "सार्वधातुकार्धधातुकयोः" इति गुणे, "एचोऽयवायावः" इत्यवादेशे "आदेशप्रत्यययोः" इति षत्वे 'बोभविष्यति' इति । बोभविष्यतः, बोभविष्यन्ति । बोभविष्यसि, बोभविष्यथः, बोभविष्यथ । बोभविष्यामि, बोभविष्यावः, बोभविष्यामः । इति । बोभवीतु । भूधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि, "यङोऽचि च" इति यङो लुकि, प्रत्ययलक्षणेन यङन्तत्वात् "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् अभ्यासकार्ये च कृते, "गुणो यङ्लुकोः" इति अभ्यासस्य गुणे 'बोभू' इति जाते "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लोटः प्रथमपुरुषैकवचने तिपि, शपि, 'यङ्लुगन्तस्य अदादौ पाठात्' "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, "यङो वा" इति तिपः ईडागमे गुणे अवादेशे च कृते, "एरुः" इति तिप इकारस्योत्वे च कृते 'बोभवीतु' इति रूपम् । ईडभावे "सार्वधातुकार्धधातुकयोः" इति गुणे 'बोभोतु' इति रूपम् । तातङि—बोभूतात् । बोभूताम् । भूधातोः यङ्लुगन्तं प्रसाध्य लोटि, तसि, तसः स्थाने "तस्थस्थमिपां तान्तन्तामः" इति तामादेशे च कृते शेषं पूर्ववत् । बोभुवतु । यङ्लुगन्तं पूर्ववत्प्रसाध्य लोटः स्थाने झौ कृते "अदभ्यस्तात्" इति झेरदादेशे "एरुः" इति उत्वे "अचि श्नुधातु" इति उवङि च कृते 'बोभुवतु' इति रूपम् । बोभूहि । भूधातोर्यङि, यङ्लुकि, द्वित्वेऽभ्यासत्वे, अभ्यासकार्ये च कृते, "गुणो यङ्लुकोः" इति अभ्यासस्याचो गुणे 'बोभू' इति जाते प्रत्ययलक्षणेन यङन्तत्वात् "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "लोट् च" इति लोटि, लोटस्सिपि, शपि, "अदिप्रभृतिभ्यः शपः" इति शपो लुकि "सेर्ह्यपिच्च" इति सेर्हौ कृते 'बोभूहि' इति रूपम्, एवं 'बोभूतात्, बोभूतम्, बोभूत । बोभवानि । लोट उत्तमपुरुषैकवचने मिपि समागते—'बोभूमि' इति भूते "मेर्निः" इति "मेर्नित्वे" "आडुत्तमस्य पिच्च" इति आटि, 'सार्वधातुकार्धधातुकयोः" इति गुणे, "एचोऽयवायावः" इत्यावादेशे

अवोभोत्। अवोभूताम्। अवोभवुः। वोभूयात्। वोभूयाताम्। वोभूयुः। वोभूयात्।

---

'वोभवानि' इति रूपम्। वोभवाव, वोभवाम, इत्यत्राप्येवं बोध्यम्। अवोभवीत्। भूधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि, "यङोऽचि च" इति यङो लुकि, "सन्यङोः" इति द्वित्वे अभ्यासत्वे, "हलादिः शेषः" इत्यादिहलः शेषे "ह्रस्वः" इत्यभ्यासस्य ह्रस्वत्वे, "अभ्यासे चर्च" इति भस्य बत्वे, "गुणो यङ्लुकोः" इति अभ्यासस्याचो गुणे 'वोभू' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वे "अनद्यतने लङ्" इति लङि, लङस्तिपि, शपि "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, "यङो वा" इति वेटि, "सार्वधातुकार्धधातुकयोः" इति गुणे, एचोऽयवायावः" इति अवादेशे "इतश्च" इति तिप इकारस्य लोपे, अङ्गस्याडागमे च कृते "अवोभवीत्' इति सिद्धम्। इडागमाभावे—अवोभोत् इति। अवोभूताम्। 'वोभू' इति यङ्लुगन्तात् लङस्तसि, तसस्तामि, शपो लुकि अटि च 'अवोभूताम्' इति। अवोभवुः। 'वोभू' इति यङ्लुगन्तात् लङः प्रथमपुरुषबहुवचने झौ, शपि शपो लुकि, "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसि, अटि, "जुसि च" इति भकारोत्तरवर्त्युकारस्य गुणे अवादेशे रुत्वे विसर्गे च 'अवोभवुः' इति रूपम्। लङो मध्यमपुरुषे—अवोभवीः—अवोभोः, अवोभूतम्, अवोभूत। लङ उत्तमपुरुषे—अवोभवम्, अवोभूव, अवोभूम। वोभूयात्। भूधातोर्यङि, यङो लुकि, प्रत्ययलक्षणेन यङन्तत्वात् "सन्यङोः" इति द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये च कृते भस्य वत्वे "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणे 'वोभू' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वात् "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" इति लिङि, तत्स्थाने तिपि, शपि, शपो लुकि, यासुटि, उटि गते, "लिङः सलोपोऽनन्त्यस्य" इति सलोपे, "इतश्च" इति तिप इकारस्य लोपे, 'वोभूयात्' इति रूपम्। वोभूयाताम्। यङ्लुगन्तं 'वोभू' इति प्रसाध्य धातुसंज्ञायां विधौ लिङि, लिङस्तसि, तसस्तामि, शपि, शपो लुकि, यासुटि, उटि गते, सलोपे च तत्सिद्धिः। वोभूयुः। 'वोभू' इति यङ्लुगन्तम्प्रसाध्य "सनाद्यन्ता धातवः" इति धातुत्वात् विधौ लिङि तत्स्थाने झौ, "झेर्जुस्" इति झेः स्थाने जुसि, जस्येत्संज्ञायां लोपे च, शपि शपो लुकि, यासुटि, उटि गते, "लिङः सलोपोऽनन्त्यस्य" इति सलोपे, 'बोभू या उस्' इति जाते, "उस्यपदान्तात्" इति पररूपत्वे, सस्य रुत्वे, रेफस्य विसर्गत्वे च 'बोभूयुः' इति रूपम्। मध्यमपुरुषे—वोभूयाः, बोभूयातम्, बभूयात। उत्तमपुरुषे—वोभूयाम्, बोभूयाव, बोभूयाम। इति। वोभूयात्। भूधातोः "धातोरेकाचोहलादेः क्रियासमभिहारे यङ्" इति यङि, "यङोऽचि च" इति यङो लुकि, स्थानिवद्भावेन यङन्तत्वमानीय "सन्यङोः" इति द्वित्वे, अभ्यासत्वे अभ्यासकार्ये भस्य बत्वे "गुणो यङ्लुकोः" इति अभ्यासस्य गुणे 'वोभू' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वात् "आशिषि लिङ्लोटौ" इति आशिषि लिङि,

बोभूयास्ताम् । बोभूयासुः । "गातिस्था" इति सिचो लुक् । "यङो वा" इतीट्पक्षे गुणं बाधित्वा नित्यत्वाद् वुक् । अबोभूवीत्-अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् ॥ इति यङ्लुगन्ताः ।

---

लिङः स्थाने तिपि, अनुबन्धलोपे "लिङाशिषि" इति तिप आर्धधातुकत्वे, तेन गुणाभावे, "किदाशिषि" इति यासुटि, उटि गते "इतश्च" इति तिप इकारस्य लोपे 'बोभूयास्त्' इति भूते "स्कोः संयोगाद्योरन्ते च" इति सलोपे 'बोभूयात्' इति रूपम् । बोभूयास्ताम् । 'बोभू' इति यङ्लुगन्तम्प्रसाध्य आशिषि लिङि, तत्स्थाने तसि, तसस्तामि यासुटि, उटि गते, 'बोभूयास्ताम्' इति रूपम् । बोभूयासुः । 'बोभू' इति यङ्लुगन्तम्प्रसाध्य आशिषि लिङो झौ, "झेर्जुस्" इति जुसि, अनुबन्धलोपे, यासुटि, उटि गते, संयोगे सस्य रुत्वे रेफस्य विसर्गे च 'बोभूयासुः' इति रूपम् । मध्यमपुरुषे-बोभूयाः, बोभूयास्तम्, बोभूयास्त । बोभूयासम्, बोभूयास्व, बोभूयास्म । इति रूपाणि । अबोभूवीत् । भूधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि, "यङोऽचि च" इति यङो लुकि, प्रत्ययलक्षणेन यङन्तत्वात् "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् 'हलादिः शेषः' इत्यादिहलः शिष्टे, "ह्रस्वः" इत्यभ्यासस्याचो ह्रस्वे "अभ्यासे चर्च" इति अभ्यासभकारस्य बत्वे, "गुणो यङ्लुकोः" इति अभ्यासस्य गुणे 'बोभू' इति जाते, "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम् "लुङ्" इति लुङि, लुङः स्थाने प्रथमपुरुषैकवचनविवक्षायां तिपि, अनुबन्धलोपे, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते, 'बोभू स् ति' इति भूते, "इतश्च" इति तिपः इकारस्य लोपे, "तिङ् शित्सार्वधातुकम्" इति तिपस्तकारस्य सार्वधातुकसंज्ञायाम् "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचः सो लोपे, "यङो वा" इति तिपस्तकारस्य ईडागमे, "सार्वधातुकार्धधातुकयोः" इति गुणे प्राप्ते नित्यत्वात् तम्बाधित्वा "भुवो वुग्लुङ्लिटोः" इति वुगागमे 'बोभूवीत्' इति जाते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यङ्गस्य अडागमे 'अबोभूवीत्' इति रूपम् । अबोभोत् । "यङो वा" इति ईडागमाभावपक्षे लुङ्सम्बन्ध्यचपरत्वाभावेन वुगभावे "सार्वधातुकार्धधातुकयोः" इति गुणे 'अबोभोत्' इति रूपम् । अबोभूताम् । 'बोभू' इति यङ्लुगन्तम्प्रसाध्य धातुसंज्ञायां लुङस्तसि, तसस्तामि, च्लौ, च्लेःसिचि, "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लोपे, अटि च कृते तत्सिद्धिः । अबोभूवुः । 'बोभू' इति यङ्लुगन्ताद्धातोर्लुङो झौ, "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसि, अनुबन्धलोपे, "भुवो वुग्लुङ्लिटोः" इति वुगागमे, अनुबन्धलोपे कित्वादन्त्यावयवे जाते, अडागमे च कृते सस्य रुत्वे विसर्गे च तत्सिद्धिः । मध्यमपुरुषे—अबोभूवीः-अबोभोः, अबोभूतम्, अबोभूत । अबोभूवम्, अबोभूव, अबोभूम । इति रूपाणि । अबोभविष्यत् । 'बोभू' इति पूर्ववत्प्रसाध्य लृङस्तिपि, स्ये इटि गुणे अवादेशे, स्यस्य षत्वे तिप इकारस्य लोपे, अङ्गस्याडागमे च तत्सिद्धिः । अबोभविष्यत्, अबो-

## अथ नामधातवः ।

सुप आत्मनः क्यच् ३।१।८। इषिकर्मण एषितुः सम्बन्धिनः सुवन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् ॥ सुपो धातुप्रातिपदिकयोः २।४।७१। एतयोरवयवस्य सुपो लुक् स्यात् ॥ क्यचि च ७।४।३३। अवर्णस्य ईत्स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति ॥ नः क्ये १।४।१५। क्यचि क्यङि च नान्तमेव पदं स्यात् नान्यत् । नलोपः । राजीयति । नान्तमेवेति किम् ? वाच्यति । "हलि च" । गीर्य-

---

भविष्यताम्, अवोभविष्यन् । अवोभविष्यः, अवोभविष्यतम्, अवोभविष्यत । अवोभविष्यम्, अवोभविष्याव, अवोभविष्याम । इति रूपाणि । इति यङ्लुगन्तप्रक्रिया ।

सुप आत्मन इति। प्रत्ययग्रहणपरिभाषया सुवन्तादिति लभ्यते । "धातोः कर्मणः" इति सूत्रात्कर्मणः इच्छायां वा इत्यनुवर्तते। कर्मण इति पञ्चमी। कर्मकारकादिति लभ्यते। सन्निधानादिच्छां प्रत्येव कर्मत्वं विवक्षितम्। आत्मन्—शब्दः स्वपर्यायः। तादर्थ्यस्य शेषत्वविवक्षायां षष्ठी । स्वार्थात्कर्मण इति लभ्यते, स्वश्च इच्छायां सन्निधापितत्वादेषितैव विवक्षितः। तथाच स्वस्मै यदिष्यते कर्मकारकं तदनुवृत्तेस्सुवन्तादिच्छायां क्यज्वा स्यादिति फलति। तदिदमभिप्रेत्य आह—इषि कर्मण एषितुः सम्बन्धिन इत्यादिना। सुपो धात्विति। धातुप्रातिपदिकयोरित्यवयवषष्ठीत्याह—एतयोरवयवस्येति। लुक् स्यादिति। "ण्यक्षत्रियार्षञितो यूनि लुक्" इत्यतस्तदनुवृत्तेरिति भावः। क्यचि चेति। "अस्य च्वौ" इत्यतोऽस्येत्यनुवर्तते। "ई घ्राध्मोः" इत्यत ईग्रहणञ्चेति मत्वा शेषं पूरयति—अवर्णस्येति। पुत्रीयति। आत्मनः पुत्रमिच्छतीत्यर्थे द्वितीयान्तपुत्रशब्दात् "सुप आत्मनः क्यच्" इति क्यचि ['पुत्र अम् क्यच्' इति स्थिते "सनाद्यन्ता धातवः" इति सूत्रेण समुदायस्य धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति अमो लुकि, 'पुत्र क्यच्' इत्यत्र "लशक्वतद्धिते" इति ककारस्येत्संज्ञायां "हलन्त्यम्" इति चस्येत्संज्ञायां "तस्य लोपः" इति उभयोः कचयोर्लोपे, "क्यचि च" इत्यनेन 'पुत्र' इत्यत्र अकारस्य ईत्वे 'पुत्रीय' इति जाते तस्मात् "वर्तमाने लट्" इति लटि, लटस्तिपि, शपि अनुबन्धलोपे, "अतो गुणे" इति पररूपत्वे च 'पुत्रीयति' इति रूपम्। एवं सर्वत्र। लिटि—'पुत्रीयाञ्चकार' इत्यादि। लुटि—पुत्रीयिता। लृटि—पुत्रीयिष्यति। लोटि—पुत्रीयतु। लङि—अपुत्रीयत्। लिङि—पुत्रीयेत्। आशिषि—पुत्रीय्यात्। लुङि—अपुत्रीयीत्। लृङि—अपुत्रीयिष्यत्। इत्यादि। नः क्ये इति। नकारादकार उच्चारणार्थः। "सुप्तिङन्तम्" इत्यतः सुवन्तं पदमित्यनुवर्तते। सुवन्तं नकारेण विशेष्यते। तदन्तविधिः। नकारान्तं सुवन्तं पदसंज्ञं स्यादिति लभ्यते। सुवन्तत्वादेव पदत्वे सिद्धे नियमार्थमिदम्। क्यग्रहणेन क्यच्क्यङोर्ग्रहणम्। न तु क्यषः, "लोहितडाज्भ्यः क्यष्वचनम्"

ति । पूर्यति । 'धातोरित्येव' नेह-दिवमिच्छति दिव्यति ॥ क्यस्य विभाषा ६।४।५०। हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके । "आदेः परस्य" । "अतो

---

इति हलन्तात्क्यपोऽभावात् । तदाह-क्यचि क्यङि चेत्यादिना । राजीयति । आत्मनः राजानमिच्छति इत्यर्थे "सुप आत्मनः क्यच्" इति 'राजन् अम्' इति सुबन्तात् क्यचि, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति अमो लुकि, कचयोरित्संज्ञायां लोपे च जाते "नः क्ये" इति नियमेन अत्र पदत्वात् "न लोपः प्रातिपदिकान्तस्य" इति नलोपे 'राज य' इति भूते "क्यचि च" इति जकारोत्तरवर्तिनः अकारस्य ईत्वे 'राजीय' इति सम्पन्ने धातुत्वाल्लटस्तिपि, शपि, अनुबन्धलोपे, "अतो गुणे" इति पररूपत्वे 'राजीयति' इति रूपम् । राजीयाञ्चकार । राजीयिता । राजीयिष्यति । राजीयतु । अराजीयत् । राजीयेत् । राजीय्यात् । अराजीयीत् । अराजीयिष्यत् । इति लिट्प्रभृति प्रतिलकारमेकमेकं रूपं बोध्यम् । नान्तमेवेति किमिति । अन्तर्वर्तिनीं विभक्तिमादायैव पदत्वात् नलोपे सिद्धे "नः क्ये" इति सूत्रस्य 'सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवति" इति नियामकत्वात् नान्तस्यैव पदत्वम् , अन्यत्र पदत्वाभावः । तेन आत्मनो वाचमिच्छतीत्यर्थे "सुप आत्मनः क्यच्" इति क्यचि, अनुबन्धलोपे 'वाच्यति' इत्यत्र अन्तर्वर्तिनीं विभक्तिमादाय पदत्वाभावात् "चोः कुः" इति कुत्वाभावः, "वचिस्वपि" इति सम्प्रसारणन्तु न । "धातोः कार्यमुच्यमानं धातुविहितप्रत्यये एव" इति नियमात् । गीर्यति । पूर्यति । आत्मनो गिरमिच्छति, 'आत्मनः पुरमिच्छति' इत्यत्र च "सुप आत्मनः क्यच्" इति क्यचि, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति अमो लुकि, 'गिर् य' 'पुर् य' इति जाते, "हलि च" इति उपधाया इको दीर्घत्वे 'गीर्य' 'पूर्य' इति जाते धातुत्वाल्लटस्तिपि, शपि, अनुबन्धलोपे, "अतो गुणे" इति पररूपत्वे 'गीर्यति' 'पूर्यति' इति रूपे स्तः । दिव्यति । दिवमिच्छति इत्यर्थे 'दिव् अम्' इति सुबन्तात् "सुप आत्मनः क्यच्" इति क्यचि, "सनाद्यन्ता धातवः" इति धातुत्वात् "सुपो धातुप्रातिपदिकयोः" इति अमो लुकि, कचयोर्लोपे 'दिव्य' इति भूते, तस्माल्लटस्तिपि, शपि, अनुबन्धलोपे, "अतो गुणे" इति पररूपे च कृते तत्सिद्धिः । अत्र "हलि च" इति दीर्घो न, धातुत्वाभावात् । दिव्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति भावः । क्यस्य विभाषेति । "यस्य हलः" इत्यतो हल इति पञ्चम्यन्तमनुवर्तते । "आर्धधातुके" इत्यधिकृतम् । तदाह—हलः परयोरित्यादिना । अन्तलोपमाशङ्क्याह—आदेः परस्येति । लटि—'समिध्यति' इति रूपम् । लिटि—"समिधाञ्चकार, समिध्याञ्चकार" इति । समिधिता । समिधमात्मानमिच्छति इत्यर्थे क्यचि, धातुसंज्ञायाम् अमो लुकि, कचयोर्लोपे, "नः क्ये" इति नियमेन पदत्वाभावान्न जश्त्वम् । तस्मात् समिध्य इति धातोर्लुटि, लुटस्तिपि, तिपो डात्वे, तासौ, टिलोपे तास आर्धधातुकत्वादिटि 'समिध् य इ त् आ' इति जाते "क्यस्य

लोपः" । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता-समिध्यिता ॥ **काम्यच्च ३।१।९।** उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यिता ॥ **उपमानादाचारे ३।१।१०** उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात् । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् । ( **सर्वप्रातिपदिकेभ्यः क्विवा**

---

विभाषा" इति यलोपे प्राप्ते, "अलोऽन्त्यस्य" इति परिभाषां प्रबाध्य "आदेः परस्य" इत्यनेन यमात्रस्य लोपे, "अतो लोपः" इत्यनेन अकारस्य च लोपे 'समिधिता' इति रूपम् । क्यचो लोपाभावे 'समिध्यिता' इति रूपम् । लृटि—समिधिष्यति, समिध्यिष्यति । लोटि—समिध्यतु । लङि—असमिध्यत् । लिङि—समिध्येत् । आशिषि समिध्यात्-समिध्य्यात् । लुङि-असमिधीत्-असमिध्यीत् । लृङि-असमिधिष्यत्-असमिध्यिष्यत्, इति । काम्यच्चेति । "सुप आत्मनः क्यच्" इत्युत्तरमिदं सूत्रम् । तदाह—उक्तविषये इति । पुत्रकाम्यति । आत्मनः पुत्रमिच्छतीत्यर्थे पुत्र अम् इति सुबन्तात् काम्यच् प्रत्यये "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "सुपो धातु प्रातिपदिकयोः" इति अमो लुकि, 'पुत्रकाम्य' इत्यस्माद् धातोर्लटस्तिपि, शपि, अनुबन्धलोपे, "अतो गुणे" इति पररूपत्वे 'पुत्रकाम्यति' इति रूपम् । लिटि—पुत्रकाम्याञ्चकार इति । पुत्रकाम्यिता । आत्मनः पुत्रमिपिता इत्यर्थे पुत्रम् इति सुबन्तात् काम्यचि, "सनाद्यन्ता धातवः" इति धातुत्वादमो लुकि, तस्मात् लुटि, लुटस्तिपो डात्वे अनुबन्धलोपे, तासि, तासः आर्धधातुकत्वाद् इटि "अतो लोपः" इति काम्यचोऽकारस्य लोपे, 'पुत्रकाम्यिता' इति रूपम् । लृटि—पुत्रकाम्यिष्यति । लोटि—पुत्रकाम्यतु । लङि—अपुत्रकाम्यत् । लिङि—पुत्रकाम्येत् । आशिषि—पुत्रकाम्यात् । लुङि—अपुत्रकाम्यीत् । लृङि—अपुत्रकाम्यिष्यत् । उपमानादाचारे इति । "सुप आत्मनः क्यच्" इत्यतः सुप इत्यनुवर्तते । "धातोः कर्मणः समानकर्तृकात्" इत्यतः कर्मण इति तदाह—उपमानात्कर्मण इत्यादिना । पुत्रीयति छात्रमिति । पुत्रमिवाचरति इत्यर्थे 'पुत्र अम्' इति उपमानवाचककर्मणः "उपमानादाचारे" इति क्यचि, कस्य चस्य च लोपे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यमो लुकि, "क्यचि च" इति अस्य ईत्वे 'पुत्रीय' इति भूते, तस्माल्लटस्तिपि, शपि अनुबन्धलोपे "अतो गुणे" इति पररूपत्वे च कृते 'पुत्रीयति' इति सिद्धम् । विष्णूयति द्विजमिति । विष्णुमिवाचरति इत्यर्थे 'विष्णु अम्' इति उपमानवाचकात्कर्मणः "उपमानादाचारे" इति क्यचि, अनुबन्धलोपे, धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति अमो लुकि, 'विष्णु य' इति जाते "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे 'विष्णूय' इति भूते, तस्माल्लटस्तिपि, शपि, अनुबन्धलोपे, "अतो गुणे" इति पररूपत्वे च कृते "विष्णूयति" इति रूपम् । लिडादौ—विष्णूयाञ्चकार । विष्णूयिता, विष्णूयिष्यति, विष्णूयतु, अविष्णूयत्, विष्णूयेत् । विष्णूय्यात्, अविष्णूयीत् । अविष्णूयिष्यत् । सर्वप्रातिपदिकेभ्य

वक्तव्यः ) "अतो गुणे" । कृष्ण इव आचरति कृष्णति । स्व इवाचरति स्वति । सस्वौ ॥ अनुनासिकस्य क्विझलोः क्ङिति ६।४।१५। अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति । राजेव राजानति ।

---

इति । आचारे इति शेषः । कृष्णति । कृष्ण इव आचरति इत्यर्थे कृष्ण इति प्रातिपदिकात् "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति क्विपि, "लशक्वतद्धिते" इति कस्येत्संज्ञायां "हलन्त्यम्" इति पस्येत्संज्ञायाम् "उपदेशेऽजनुनासिक इत्" इतीकारस्येत्संज्ञायां कृतायां "तस्य लोपः" इति लोपे वस्य "वेरपृक्तस्य" इतिलोपे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटस्तिपि, शपि, अनुबन्धलोपे "अतो गुणे" इति पररूपत्वे च कृते 'कृष्णति' इति रूपम् । लिटि—कृष्णाञ्चकार । लुटि—कृष्णिता । लृटि—कृष्णिष्यति । लोटि—कृष्णतु । लङि—अकृष्णत् । लिङि—कृष्णेत् । आशिषि—कृष्ण्यात् । लुङि—अकृष्णीत् । लृङि—अकृष्णिष्यत् । इति । स्वति । एवमेव स्वशब्दात् उपमानवाचकात् आचरतीत्यर्थे क्विपि, क्विपः सर्वस्य अपहारे धातुसंज्ञायां लटस्तिपि, शपि, अनुबन्धलोपे पररूपे च तत्सिद्धिः । सस्वौ । स्वशब्दात् "सर्वप्रातिपदिकेभ्यः" इति क्विपि, तस्यापहारे धातुसंज्ञायां लिटि, लिटस्तिपि, तिपो णलि, अनुबन्धलोपे द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये 'स स्व अ' इति जाते, "अचो ञ्णिति" इति वृद्धौ, 'स स्वा अ' इत्यत्र "आत औ णलः" इति णलोऽकारस्यौत्वे "वृद्धिरेचि" इति वृद्धौ 'सस्वौ' इति रूपम् । सस्वौ, सस्वतुः, सस्वुः । सस्विथ, सस्वथुः, सस्व । सस्वौ, सस्विव, सस्विम । इति । लुडादौ—स्विता, स्विष्यति । इत्यादि । अनुनासिकस्य क्विझलोरिति । "अङ्गस्य" इत्यधिकृतमनुनासिकेन विशेष्यते । तदन्तविधिः । "नोपधायाः" इत्यतः उपधाया इति, "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यतो दीर्घ इति चानुवर्तते । तदाह—अनुनासिकान्तस्येत्यादिना । इदामति । इदमिवाचरति इत्यर्थे इदमिति प्रातिपदिकात् "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति क्विपि, तस्य सर्वापहारे प्रत्ययलक्षणेन क्विबन्तत्वात् "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम् "अनुनासिकस्य क्विझलोः क्ङिति" इति उपधायाः दीर्घत्वे 'इदाम्' इति भूते तस्माल्लटस्तिपि, शपि, अनुबन्धलोपे मिलित्वा 'इदामति' इति रूपम् । इदामतः, इदामन्ति । इत्यादि । इदामाञ्चकार, इदामिता, इदामिष्यति, इदामतु, ऐदामीत् । इदामेत् । इदाम्यात् । ऐदामीत् । ऐदामिष्यत् । इति । राजानति । 'राजेवाचरति' इत्यर्थे राजन् इति प्रातिपदिकात् "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति क्विपि, क्विपो लुकि, प्रत्ययलक्षणेन क्विबन्तत्वात् "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम् "अनुनासिकस्य क्विझलोः क्ङिति" इति उपधाया दीर्घत्वे 'राजान्' इति जाते तस्माल्लटस्तिपि, शपि, अनुबन्धलोपे मिलित्वा 'राजानति' इति रूपम् । राजानाञ्चकार । राजानिता । राजानिष्यति । राजानतु । अराजानत् । राजानेत् । राजा-

पन्था इव पथीनति ॥ कष्टाय क्रमणे ३।१।१४। चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः ॥ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ३।१।१७। एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । 'तत्करोति तदाचष्टे' इति णिच् ( प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ) प्रातिपदिकाद्धात्वर्थे णिच् स्यात् । इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । इत्यल्लोपः । घटं करोत्याचष्टे घटयति ॥ इति नामधातवः ।

---

स्यात् । अराजानीत् । अराजानिष्यत् । इति । पथीनति । पन्था इव आचरति इत्यस्मिन्नर्थे पथिन् शब्दात् उक्तवार्तिकेण क्विपि, क्विपो लोपे, "अनुनासिकस्य क्विझलोः क्ङिति" इत्युपधाया दीर्घत्वे, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटस्तिपि, शपि, अनुबन्धलोपे, संयुक्ते च कृते 'पथीनति' इति रूपम् । कष्टाय क्रमणे । क्रमणशब्दं विवृणोति—उत्साहे इति । कष्टायते । 'कष्ट ङे' इति चतुर्थ्यन्तात् क्रमते इत्यस्मिन्नर्थे "कष्टाय क्रमणे" इत्यनेन क्यङि, अनुबन्धलोपे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति ङेर्लुकि, "अकृत्सार्वधातुकयोर्दीर्घः" इति अजन्ताङ्गस्य दीर्घत्वे 'कष्टाय' इति जाते, ङित्वात् तस्माल्लटस्ते, शपि, अनुबन्धलोपे "अतो गुणे" इति पररूपत्वे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च तत्सिद्धिः । शब्दवैरकलहेति । करणं क्रिया । तदाह-करोत्यर्थे इति । तत् करोतीति णिचोऽपवादः । शब्दायते । 'शब्दअम्' इति द्वितीयान्तात् करोतीत्यर्थे क्यङि, अनुबन्धलोपे, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति अमो लुकि, "अकृत्सार्वधातुकयोर्दीर्घः" इति अजन्ताङ्गस्य दीर्घत्वे 'शब्दाय' इति जाते, तस्मात् लटि, धातोर्ङित्वात् लटो लस्थाने ते शपि, अनुबन्धलोपे. "अतो गुणे" इति पररूपत्वे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते रूपम् । तत्करोति तदाचष्टे । इदं चुरादिगणसूत्रम् । प्रातिपदिकादित्यनुवर्तते । तत्करोति तदाचष्टे इति चार्थे प्रातिपदिकाण्णिच् स्यादित्यर्थः । आचारक्विब्वत् प्रातिपदिकादेवेदम् । प्रातिपदिकाच्चेति । इष्ठवच्चेति । इष्ठवदिति सप्तम्यन्ताद्वतिः । तदाह—इष्ठे यथेति । पुंवद्भावेति । अतिशयेन पट्वी 'पटिष्ठ' इत्यत्र "भस्याढे" इति पुंवत्वम् । म्रदिष्ठ—इत्यत्र "र ऋतो हलादेर्लघोः" इति रभावः । अतिशयेन साधुः साधिष्ठः इत्यत्र टिलोपः । अतिशयेन स्रग्वी स्रजिष्ठः इत्यत्र "विन्मतोर्लुक्" इति विनो लुक् । अतिशयेन गोमान् गविष्ठः इत्यत्र मतुपो लुक् । अतिशयेन स्थूलः स्थविष्ठः इत्यादौ "स्थूलदूरयुव" इत्यादिना यणादिलोपः पूर्वस्य च गुणः । अतिशयेन प्रियः प्रेष्ठः इत्यादौ "प्रियस्थिर" इत्यादिना प्रादेशः । अतिशयेन स्रग्वी स्रजिष्ठः इत्यत्र भत्वान्न कुत्वम् । एते इष्ठे इव णावपि परतः स्युरित्यर्थः । इत्यल्लोप इति । इष्ठवद्भावाट्टिलोप इत्यर्थः । घटयति । घटं करोति घटमाचष्टे वा इत्यस्मिन्नर्थे "तत्करोति

## अथ कण्ड्वादयः ।

कण्ड्वादिभ्यो यक् ३।१।२७। एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे । कण्डूञ् गात्रविघर्षणे ॥ १ ॥ कण्डूयति । कण्डूयते, इत्यादि ॥ इति कण्ड्वादयः ।

---

## अथात्मनेपदप्रक्रिया ।

कर्तरि कर्मव्यतिहारे १।३।१४। क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् ।

---

तदाचष्टे" इति वार्तिकाण्णिचि, णस्य चस्य च लोपे, 'घट इ' इति जाते, इष्ठवद्भावाद् भसंज्ञायां "यस्येति च" इत्यकारलोपे, 'घटि' इति जाते, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "वर्तमाने लट्" इति लटि, अकारटकारयोरित्संज्ञायां लोपे च कृते लः स्थाने प्रथमपुरुषैकवचनविवक्षायां तिपि, अनुबन्धलोपे, "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां शपि, शपयोरित्संज्ञायां लोपे च कृते मिलित्वा 'घटयति' इति रूपम् । लिटि—घटयाञ्चकार । लुडादौ-घटयिता । घटयिष्यति । घटयतु । अघटयत् । घटयेत् । घट्यात् । अजघटत् । अघटयिष्यत् इति । इति नामधातवः ।

कण्ड्वादिभ्यो यक् । धातुभ्य इति । "धातोरेकाचो हलादेः" इत्यतस्तदनुवृत्तेरिति भावः । नित्यमिति । वाग्रहणं तु निवृत्तमिति भावः । अन्यथा 'कण्डूवति' इत्याद्यपि स्यादिति भावः । द्विधा हि कण्ड्वादयः, धातवः, प्रातिपदिकानि च-धातुप्रकरणाद्धातुः, गस्य चासञ्जनादपि । आह चायमिमं दीर्घं, मन्ये धातुर्विभाषितः ॥ इति भाष्यादिति भावः । गात्रविघर्षणम् । गात्रखर्जनमिति यावत् । कण्डूयति । अनुबन्धविनिर्मुक्तात् गात्रविघर्षणार्थककण्डूञ्धातोः "कण्ड्वादिभ्यो यक्" इति स्वार्थे यकि, "हलन्त्यम्" इति कस्येत्संज्ञायां "तस्य लोपः" इति लोपे, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "वर्तमाने लट्" इति लटि, लटस्तिपि, शपि, अनुबन्धलोपे, 'कण्डूय अ ति' इति जाते, "अतो गुणे" इति पररूपत्वे च विहिते 'कण्डूयति' इति रूपम् । कण्डूयते । कण्डूधातोः 'कण्ड्वादिभ्यो यक्" इति यकि,सनाद्यन्ता धातवः" इति धातुत्वाल्लटस्ते, शपि अनुबन्धलोपे, "अतो गुणे" इति पररूपत्वे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'कण्डूयते' इति रूपम् । लिटि—कण्डूयाञ्चकार-कण्डूयाञ्चक्रे । लुटि-कण्डूयितासि-कण्डूयितासे । लृटि—कण्डूयिष्यति, कण्डूयिष्यते । लोटि—कण्डूयतु—कण्डूयताम् । अकण्डूयत्—अकण्डूयत । कण्डूयेत्-कण्डूयेत । कण्डूय्यात्—कण्डूयिषीष्ट । अकण्डूयीत्-अकण्डूयिष्ट । अकण्डूयिष्यत्-अकण्डूयिष्यत इति । इति कण्ड्वादयः ।

कर्तरि कर्मेति । कर्मव्यतिहार इत्यत्र कर्मशब्दः क्रियापरः, व्यतिहारशब्दो विनिमयपर इत्युक्तं भवति । व्यतिलुनीते । वि अति इति उपसर्गद्वयपूर्वकलूञ्धातोः "वर्तमाने लट्" इति लटि, अनुबन्धलोपे, लटो लः स्थाने "कर्तरि कर्मव्यतिहारे" इति कर्मव्यतिहारे द्योत्ये कर्तरि आत्मनेपदे प्राप्ते, तत्र प्रथमपुरुषैकवचनविवक्षायां ते कृते,

व्यतिलुनीते, अन्यस्य योग्यं लवनमन्यः करोतीत्यर्थः ॥ **न गतिहिंसार्थेभ्यः १।३।१५।** व्यतिगच्छन्ति। व्यतिघ्नन्ति ॥ **नेर्विशः १।३।१७।** निविशते। **परिव्यवेभ्यः क्रियः १।३।१८।** परिक्रीणीते। विक्रीणीते। अवक्रीणीते ॥ **विपराभ्यां जेः १।३।१९।** विजयते। पराजयते ॥ **समवप्रविभ्यः स्थः १।३।२२।** सन्तिष्ठते। अवतिष्ठते। वितिष्ठते ॥ प्रतिष्ठते। **अपह्नवे ज्ञः १।३।४४।** शतमपजानीते। अपलपतीत्यर्थः ॥ **अकर्मकाच्च १।३।४५।** सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तत इत्यर्थः ॥ **उदश्चरः सकर्मकात् १।३।५३।** धर्ममुच्चरते। उल्लङ्घ्य गच्छतीत्यर्थः ॥ **समस्तृ-**

---

"क्र्यादिभ्यः श्ना" इति श्नाप्रत्यये अनुबन्धलोपे, उभयत्र सार्वधातुकसंज्ञायां "प्वादीनां ह्रस्वः" इति लूञो ह्रस्वत्वे, "ई हल्यघोः" इति श्नाआकारस्य ईत्वे, "टित आत्मनेपदानां टेरे" इति टेरेत्वे 'वि अति' इत्यत्र यणि च कृते 'व्यतिलुनीते' इति रूपम्। अन्यस्येति। शूद्रादियोग्यं सस्यादिलवनं ब्राह्मणः करोतीत्यर्थः। न गतिहिंसार्थेभ्य इति। कर्मव्यतिहारे द्योत्ये गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यो न आत्मनेपदमित्यर्थः। व्यतिगच्छन्ति। व्यतिघ्नन्ति। अत्र "कर्तरि कर्मव्यतिहारे" इत्यात्मनेपदत्वे प्राप्ते "न गतिहिंसार्थेभ्यः" इति निवार्यते। नेर्विशः। निपूर्वाद्विशः आत्मनेपदं स्यादित्यर्थः। निविशते। निपूर्वात् विश्धातोर्लटः स्थाने "नेर्विशः" इति ते, शपि, अनुबन्धलोपे च तत्सिद्धिः। परिव्यवेभ्य इति। परि वि अव एभ्यः परस्मात् क्रीञ्धातोरात्मनेपदमित्यर्थः। ञित्वादात्मनेपदसिद्धेः अकर्त्रभिप्रायार्थमिदम्। परिक्रीणीते इत्यादि। परिपूर्वकक्रीञ्धातोः "वर्तमाने लट्" इति लटः स्थाने "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति कर्त्रभिप्राये क्रियाफले आत्मनेपदे प्राप्ते तद्बाधित्वा "परिव्यवेभ्यः क्रियः" इत्यात्मनेपदे ते "क्र्यादिभ्यः श्ना" इति श्ना, अनुबन्धलोपे, "ई हल्यघोः" इति ईत्वे णत्वे टेरेत्वे च तत्सिद्धिः। एवं वि अवएतदुपसर्गाभ्यां परस्य क्रीञ्धातोरपि बोध्यम्। विपराभ्यां जेरिति। वि परा आभ्यां परस्मात् जिधातोरात्मनेपदमित्यर्थः। विजयते। विपूर्वकजिधातोर्लटः स्थाने "विपराभ्यां जेः" इति ते, शपि, गुणे, अयादेशे टेरेत्वे च तत्सिद्धिः। विजयते–उत्कृष्टो भवतीत्यर्थः। पराजयते। निकृष्टो भवतीत्यर्थः। समवप्रविभ्यः स्थ इति। स्थः इति पञ्चमी। सम् अव प्र वि एभ्यः परस्मात् स्थाधातोरात्मनेपदमित्यर्थः। सन्तिष्ठते। समाप्तं भवतीत्यर्थः। अवतिष्ठते। अत्र सर्वत्र स्थाधातोर्लटः स्थाने "समवप्रविभ्यः स्थः" इत्यात्मनेपदे, शपि, "पाघ्राध्मास्थाम्नादाण्०" इत्यादिना तिष्ठ आदेशः। अपह्नवे ज्ञः। अपह्नवः—अपलापः। तद्वृत्तेर्ज्ञाधातोरात्मनेपदमित्यर्थः। अपजानीते। अपोपसर्गपूर्वकज्ञाधातोर्लटः स्थाने "अपह्नवेज्ञः" इत्यात्मनेपदत्वे "क्र्यादिभ्यः श्ना" इति श्ना, "ई हल्यघोः" इति श्नाकारस्य ईत्वे च तत्सिद्धिः। अकर्मकाच्च। ज्ञः आत्मनेपदमिति शेषः। सर्पिषो जानीते इति। अत्र ज्ञाधातुः प्रवृत्तौ वर्तते।

तीयायुक्तात् १।३।५४। रथेन सञ्चरते। **दाणश्च सा चेच्चतुर्थ्यर्थे १।३।५५।** सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्, तृतीया चेच्चतुर्थ्यर्थे। दास्या संयच्छते कामी ॥ **पूर्ववत्सनः १।३।६२।** सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। एदिधिषते। **हलन्ताच्च १।२।१०।** इक्समीपाद्धलः परो झलादिः सन् कित् स्यात्। निविविक्षते ॥ **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः १।३।३२।** गन्धनं सूचनम्। उत्कुरुते। सूचयतीत्यर्थः। अवक्षेपणं भर्त्सनम्। श्येनो वर्तिकामुत्कुरुते, भर्त्सयतीत्यर्थः। हरिमुपकुरुते।

---

"ज्ञो ऽविदर्थस्य करणे" इति तृतीयार्थे षष्ठी। तदाह—सर्पिषोपायेन प्रवर्तते इति। उदश्चरः सकर्मकात्। उत्पूर्वाच्चरधातोः सकर्मकादात्मनेपदमित्यर्थः। धर्ममुच्चरते। उत्पूर्वकात् चर्धातोर्लटः स्थाने "उदश्चरः सकर्मकात्" इति आत्मनेपदे टेरेत्वे च तत्सिद्धिः। समस्तृतीयेति। सकर्मकादिति निवृत्तम्। सम्पूर्वात् तृतीयान्तसमभिव्याहृताच्चरधातोरात्मनेपदमित्यर्थः। रथेन सञ्चरते। अत्र सम्पूर्वकचरधातुर्वर्तते, रथेन इति तृतीयान्तेन च युक्तः, तस्माद् "समस्तृतीयायुक्तात्" इत्यनेनात्मनेपदम्। दाणश्च सा। "समस्तृतीयायुक्तात्" इत्यनुवर्तते। तदाह—संपूर्वादिति। दास्या संयच्छते कामी। "अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया" इति वार्तिकेन दास्या इत्यत्र चतुर्थ्यर्थे तृतीया, ततश्च दास्या इति तृतीयान्तयुक्तात्सम्पूर्वाद्दाण्धातोर्लटि तत्स्थाने प्रथमपुरुषैकवचनविवक्षायां "दाणश्च सा चेच्चतुर्थ्यर्थे" इत्यात्मनेपदत्वात्तप्रत्यये शपि अनुबन्धलोपे "पाघ्राध्मा" इत्यादिना दाणो यच्छादेशे "अतो गुणे" इति पररूपत्वे टेरेत्वे च कृते तत्सिद्धिः। पूर्ववत्सन इति। एदिधिषते। एध्धातोः सनि इटि, 'एधिस' इति जाते तत्र "सन्यङोः" इत्यनेन "अजादेर्द्वितीयस्य" इति 'धि' इत्यस्य द्वित्वे अभ्यासत्वे, अभ्यासकार्ये षत्वे, जश्त्वे, "सनाद्यन्ता धातवः" इति धातुत्वाल्लटि, लटो लः स्थाने "पूर्ववत्सनः" इत्यात्मनेपदे ते, शपि, अनुबन्धलोपे, पररूपत्वे, टेरेत्वे च तत्सिद्धिः। हलन्ताच्चेति। "इको झल्" इति पूर्वसूत्रमनुवर्तते "रुदविदमुष" इत्यतः सन्निति, "असंयोगाल्लिट्कित्" इत्यतः किदिति च। हलिति लुप्तपञ्चमीकं पदम्। अन्तःशब्दः समीपवाची। तदाह—इक्समीपादित्यादि। निविविक्षते। निपूर्वाद्विश्धातोः सनि "हलन्ताच्च" इति सनः कित्वाद्गुणाभावे द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये, "व्रश्च०" इति शस्य षत्वे, षस्य कत्वे, सस्य षत्वे, "सनाद्यन्ता धातवः" इति धातुत्वाल्लटि, लटः स्थाने "पूर्ववत्सनः" इत्यात्मनेपदत्वात् ते, शपि, अनुबन्धलोपे, "अतो गुणे" इति पररूपत्वे, टेरेत्वे च तत्सिद्धिः। गन्धनावक्षेपण। आत्मनेपदम्, अकर्त्रभिप्रायेऽपीति शेषः। सूचयतीति। परदोषमाविष्करोतीत्यर्थः। श्येनो वर्तिकामुत्कुरुते इति। "गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृ :" इत्यनेन 'श्येनो वर्तिकामुत्कुरुते' इत्यतः

सेवत इत्यर्थः । परदारान्प्रकुरुते, तेषु सहसा प्रवर्तते । एधोदकस्योपस्कुरुते, गुणमाधत्ते । कथाः प्रकुरुते, प्रकथयतीत्यर्थः । शतं प्रकुरुते, धर्मार्थं विनियुङ्क्ते । एषु किम् ? कटं करोति । भुजोऽनवने १।३।६६ । ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति ॥ इत्यात्मनेपदप्रक्रिया ।

---

## अथ परस्मैपदप्रक्रिया ।

अनुपराभ्यां कृञः १।३।७९ । कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति ॥ अभिप्रत्यतिभ्यः क्षिपः १।३।८० । क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति ॥ प्राद्वहः १।३।८१ । प्रवहति ॥ परेर्मृषः १।३।८२ । परिमृषति ॥ व्याङ्परिभ्यो रमः १।३।८३ । रमु क्रीडायाम् । विरमति ॥ उपाच्च १।३।८४ । यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥ इति पदव्यवस्था ॥

---

प्रारभ्य शतं प्रकुरुते' इत्यन्तः प्रयोगा आत्मनेपदिनो भवन्ति । कटं करोति । अत्र गन्धनादिभिन्नत्वात् नात्मनेपदमिति भावः । भुजोऽनवने । अवनं रक्षणम् । ततोऽन्यत्र भुजेरात्मनेपदमित्यर्थः । ओदनं भुङ्क्ते । भुज्धातोर्लटः स्थाने "भुजोऽनवने" इति आत्मनेपदत्वात् ते, सार्वधातुकसंज्ञायां "रुधादिभ्यः श्नम्" इति श्नमि, अनुबन्धलोपे, मित्वादन्त्यादचः परे "श्नसोरल्लोपः" इति श्नमोऽकारस्य लोपे, जस्य कुत्वेन गत्वे गस्य चर्त्वेन कत्वे, अनुस्वारे, परसवर्णे टेरेत्वे च तत्सिद्धिः । महीं भुनक्तीति । रक्षतीत्यर्थः । इत्यात्मनेपदप्रक्रिया ।

अनुपराभ्यां कृञः । गन्धनादाविति । गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु इत्यर्थः । अनुकरोति । पराकरोति । अत्र "गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" इति आत्मनेपदे प्राप्ते, "अनुपराभ्यां कृञः" इत्यपवादभूतेनानेन परस्मैपदम् । अभिप्रत्यतिभ्य इति । अभि प्रति अति इत्येवं पूर्वात् क्षिपः परस्मैपदं स्यादित्यर्थः । अभिक्षिपति । क्षिप प्रेरणे स्वरितेत् । ततः कर्त्रभिप्राये क्रियाफले विवक्षायामात्मनेपदे प्राप्ते "अभिप्रत्यतिभ्यः क्षिपः" इत्यनेन परस्मैपदं विधीयते । प्राद्वह इति । प्रपूर्वाद्वहतेः परस्मैपदम्भवतीत्यर्थः । प्रवहति । वहप्रापणे स्वरितेत् । तत्र कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते "प्राद्वहः" इत्यनेन परस्मैपदमिति भावः । परेर्मृष इति । परिपूर्वाद् मृषतेः परस्मैपदम्भवति । परिमृषति । मृषतितिक्षायां स्वरितेत् । ततस्तथैवात्मनेपदे प्राप्ते "परेर्मृषः" इति परस्मैपदं विधीयते । व्याङ्परिभ्यो रम इति । वि आङ् परि इत्येवं पूर्वाद्रमतेः परस्मैपदम्भवति । विरमति । अत्र "अनुदात्तङित आत्मनेपदम्" इत्यात्मनेपदे प्राप्ते, "व्याङ्परिभ्यो रमः" इति परस्मै-

## अथ भावकर्मप्रक्रिया ।

**भावकर्मणोः १।३।१३।** लस्यात्मनेपदम् । **सार्वधातुके यक् ३।१।६७।** भावकर्मवाचिनि धातोर्यक् स्यात् सार्वधातुके । भावः क्रिया । सा च भावार्थकलकारेणानूद्यते । 'युष्मदस्मद्भ्यां सामानाधिकरण्याभावात् प्रथमः पुरुषः । तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि, किन्त्वेकवचनमेवोत्सर्गतः । त्वया मया अन्यैश्च भूयते । बभूवे ॥ **स्यसिच्सीयुट्तासिषु भावकर्मणोरुप-**

---

पदमिति बोध्यम् । आरमति, परिरमति । इति । उपाच्चेति । रम इत्येव । उपपूर्वाद्रमतेः परस्मैपदं भवति । ननु विरामार्थकत्वात् कथं सकर्मकतेत्यत आह—उपरमयतीत्यर्थ इति । ननु णिजभावात् कथमयमर्थो लभ्यते इत्यत आह—अन्तर्भावितण्यर्थोऽयमिति । धातूनामनेकार्थत्वादिति भावः । इति परस्मैपदप्रक्रिया ।

भावकर्मणोरिति । भावो भावना क्रियेति पर्यायाः । कर्मशब्दः कर्मकारके वर्तते । भावे कर्मणि च यो लकारस्तस्यात्मनेपदमित्यर्थः । सार्वधातुके यगिति । "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यतो धातोरिति, "चिण्भावकर्मणोः" इत्यतो भावकर्मणोरिति चानुवर्तते । तदाह—धातोरिति । भावकर्मवाचिनीति । भावार्थकलकारेणानूद्यत इति । द्वौ, त्रयः, इत्यादौ द्विवचनबहुवचनवदिति भावः । युष्मदस्मद्भ्यामिति । युष्मदि अस्मदि च तिङ्समानाधिकरणे उपपदे मध्यमोत्तमपुरुषौ विहितौ । युष्मदस्मदोस्तिङ्समानाधिकरणतिङ्वाच्यकारकवाचित्वमेव । भावे लकारे तु 'आस्यते त्वया' 'आस्यते मया' इत्यादौ भाव एव तिङ्वाच्यः । न तु युष्मदस्मदर्थौ । अतो न मध्यमोत्तमावित्यर्थः । कर्मलकारे तु 'त्वं वन्द्यसे, अहं वन्द्ये' इत्यादौ लकारस्य युष्मदस्मदोश्च सामानाधिकरण्यसम्भवात्पुरुषत्रयमपि यथायथमुदाहरिष्यते । तिङ्वाच्येति । सत्वं—द्रव्यम्, लिङ्गसंख्यान्वययोग्यम् । तिङ्वाच्या या भावना क्रिया सा असत्वरूपा लिङ्गसंख्यान्वयायोग्या, शब्दशक्तिस्वभावात् । ततश्च तस्यां तिङ्वाच्यभावनायां द्वित्वबहुत्वयोरप्रतीतेः 'युवाभ्यां युष्माभिर्वा आस्यते' इत्यादौ न द्विवचनं बहुवचनं चेत्यर्थः । किन्त्वेकवचनमेवेति । तिङ्वाच्यभावलकारस्येति शेषः । त्वया मयेति । त्वत्कर्तृकं मत्कर्तृकम् अन्यकर्तृकं भवनमित्यर्थः । भूयते । भूधातोः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति भावरूपे अर्थे "वर्तमाने लट्" इति लट्लकारे अटि गते, "भावकर्मणोः" इति आत्मनेपदे प्राप्ते, तत्र एकवचनविवक्षायां ते "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "सार्वधातुके यक्" इति यकि, कस्येत्संज्ञायां लोपे च कृते कित्वाद्गुणाभावे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'भूयते' इति रूपम् । बभूवे । भूधातोः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति भावे, "परोक्षे लिट्" इति लिटि, इटि गते, लः स्थाने "भावकर्मणोः" इति आत्मनेपदे ते, "लिट् च" इत्यार्धधातुकसंज्ञायाम्,

देशेऽज्झनग्रहदृशां वा चिण्वदिट् च ६।४।६२। उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । चिण्वद्भावपक्षेऽयमिट् । चिण्वद्भावाद्वृद्धिः । भाविता–भविता । भाविष्यते-भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट–भविषीष्ट ॥ चिण् भावकर्मणोः

---

"लिटस्तझयोरेशिरेच्" इति तस्य एशि कृते "भुवो वुग्लुङ्लिटोः" इति वुकि, किस्वादन्त्यावयवे "लिटि धातोरनभ्यासस्य" इति द्वित्वे, "पूर्वोऽभ्यासः" इत्यभ्यास-संज्ञायां "हलादिः शेषः" इति आदिहलः शेषे "ह्रस्वः" इति अभ्यासस्य ह्रस्वत्वे "भवतेरः" इति अभ्यासोकारस्य अत्वे, "अभ्यासे चर्च" इति भस्य बत्वे च कृते 'बभूवे' इति रूपम् । स्यसिच्। अच् हन् ग्रह दृश् एषां द्वन्द्वात् षष्ठी। उपदेश इत्यच एव विशेषणम्, नेतरेषाम्, अव्यभिचारात् । तदाह—उपदेशे योऽजिति । अजित्यस्य उपदिशान्वयित्वेऽपि सौत्रः समासः । अजिति लुप्तषष्ठीकं वा । चिण्वदिति सप्तम्यन्ताद्वतिः, स्यसिच्सीयुट्तासिष्वित्युपमेयतः सप्तमीदर्शनात् । तदाह—चिणीवेति । अङ्गकार्यमिति । अङ्गस्येत्यधिकृतत्वादिति भावः । अयमिडिति । सेट्कस्य वलादिलक्षण इट् तु स्यादेवेति भावः । भाविता । भूधातोः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति भावे "अनद्यतने लुट्" इति अनद्यतनभविष्यत्यर्थे लुटि, उटि गते, लः स्थाने "भावकर्मणोः" इति आत्मनेपदे ते, सार्वधातुकसञ्ज्ञायां शपि प्राप्ते, तम्बाधित्वा "स्यतासी लृलुटोः" इति तासि, तासः आर्धधातुकत्वे, "लुटः प्रथमस्य डारौरसः" इति तस्य डात्वे, अनुबन्धलोपे, 'डित्वसामर्थ्यादभस्यापि टेर्लोपे" इति तासष्टेर्लोपे, "स्यसिच्सीयुट् तासिषु भावकर्मणोः" इति तासः चिण्वद्भावात् इडागमे, अङ्गस्य 'भू' इत्यस्य "अचो ञ्णिति" इति वृद्धौ आवादेशे च 'भाविता' इति रूपम् । भविता । चिण्वद्भावाभावपक्षे भूधातोः भावे लुटि, "भावकर्मणोः" इति लुटस्ते, तासि, तस्य डात्वे तासष्टेर्लोपे, तास आर्धधातुकत्वादिटि, "सार्वधातुकार्धधातुकयोः" इति गुणे "एचोऽयवायावः" इत्यवादेशे 'भविता' इति रूपम् । भाविष्यते । भूधातुतो "लः कर्मणि च भावे चाकर्मकेभ्यः" इति भावे, "लृट् शेषे च" इति लृटि, "भावकर्मणोः" इति लृटो लः स्थाने आत्मनेपदे ते, "स्यतासी लृलुटोः" इति स्ये, "स्यसिच्सीयुट्तासिषु भावकर्मणोः" इति चिण्वद्भावात् स्यस्य इडागमे, अङ्गस्य भुवो वृद्धौ, आवादेशे, षत्वे, टेरेत्वे च कृते 'भाविष्यते' इति रूपम् । भविष्यते । चिण्वद्भावाभावपक्षे–भावे लृटि, "भावकर्मणोः" इति ते, स्ये, स्यस्य आर्धधातुकत्वादिटि, गुणे अवादेशे, षत्वे टेरेत्वे च तत्सिद्धिः । भूयताम् । भूधातोः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्मणि, "लोट् च" इति विध्यादौ लोटि, लः स्थाने "भावकर्मणोः" इति आत्मनेपदे ते तस्य "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसञ्ज्ञायां "सार्वधातुके यक्" इति यकि, टेरेत्वे, "आमेतः" इति एकारस्य आमि च 'भूयताम्' इति रूपम् । अभूयत । भूधातोर्भावे अनद्यतन-

३।१।६६। च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे। अभावि। अभाविष्यत-अभविष्यत। अकर्मकोऽप्युपसर्गवशात्सकर्मकः। अनुभूयते आनन्दश्चैत्रेण त्वया मया च। अनुभूयेते। अनुभूयन्ते। त्वमनुभूयसे। अहमनुभूये। अन्वभावि। अन्वभा-

---

भूते चार्थे लङि, "भावकर्मणोः" इति लस्ते, "सार्वधातुके यक्" इति यकि, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अङ्गस्य अडागमे च तत्सिद्धिः। भूयेत। भूधातोर्भावे विध्यादौ लिङ, "भावकर्मणोः" इति लिङस्ते, "सार्वधातुके यक्" इति यकि, "लिङः सीयुट्" इति सीयुटि, उटि गते टित्वात्तस्याद्यावयवे जाते, "लिङः सलोपोऽनन्त्यस्य" इति सलोपे, "लोपो व्योर्वलि" इति यलोपे, "आद्गुणः" इति गुणे च कृते 'भूयेत' इति रूपम्। भाविषीष्ट। भूधातोः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति भावे "आशिषि लिङ्लोटौ" इत्याशिषि लिङि, लिङो लः स्थाने "भावकर्मणोः" इत्यात्मनेपदे ते तस्य "लिङाशिषि" इत्यार्धधातुकसंज्ञायाम् "लिङः सीयुट्" इति सीयुटि, उटि गते "सुट्तिथोः" इति सुटि उटि गते, "स्यसिच्सीयुट्तासिषु भावकर्मणोः" इति चिण्वद्भावे, इडागमे च कृते, "अचो ञ्णिति" इति वृद्धौ आवादेशे, उभयत्र षत्वे, तस्य ष्टुत्वेन टकारे 'भाविषीष्ट' इति रूपम्। चिण्वद्भावाभावपक्षे—भविषीष्ट। भावे आशिषि लिङस्ते सीयुटि, सुटि, इडागमे षत्वे ष्टुत्वे च तत्सिद्धिः। चिण्भावकर्मणोः। च्लेरिति। "च्लेः सिच्" इत्यतस्तदनुवृत्तेरिति भावः। तशब्दे परे इति। "चिण् ते पदः" इत्यतस्तदनुवृत्तेरिति भावः। अभावि। भूधातोः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति भावे, "लुङ्" इति भूतार्थे लुङि कृते, लः स्थाने "भावकर्मणोः" इति ते, "च्लि लुङि" इति च्लौ, च्लेः स्थाने "चिण्भावकर्मणोः" इति चिणि, चस्य णस्य चेत्संज्ञायां लोपे च "अचो ञ्णिति" इति वृद्धौ, "एचोऽयवायावः" इत्यावादेशे "चिणो लुक्" इति तशब्दस्य लुकि, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यङ्गस्याडागमे 'अभावि' इति रूपम्। अभाविष्यत। भावे लृङस्ते "स्यतासी लृलुटोः" इति स्ये, "स्यसिच्सीयुट्तासिषु भावकर्मणोः" इति चिण्वद्भावे, इडागमे वृद्धौ, आवादेशे षत्वे अडागमे च तत्सिद्धिः। अभविष्यत। चिण्वद्भावाभावपक्षे—लृङस्ते, स्ये, इटि, गुणे अवादेशे, षत्वे अडागमे च तत्सिद्धिः। अनुभूयते। अनुपूर्वात् भूधातोरुपभोगार्थकात्सकर्मकात्कर्मणि लटि, लटस्ते यकि, 'अनुभूयते' इति। अत्र कर्तुरनभिहितत्वात् तृतीया—चैत्रेण त्वया मया चेति। आतामि—अनुभूयेते। आनन्दौ, अत्र कर्मानुरोधात् पुरुषवचनव्यवस्था ऊह्या। अनुभूयन्ते। आनन्दाः। त्वम्—इति कर्म, तदनुरोधात् लटो लः स्थाने मध्यमपुरुषैकवचने थासि, यकि. "थासः से" इति थासः स्थाने से कृते—अनुभूयसे। युवामनुभूयेथे। यूयमनुभूयध्वे। अहमनुभूये। अनूपसर्गपूर्वकभूधातोः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्मणि "वर्तमाने लट्" इति लटि, लटो लः स्थाने उत्तमपुरुषैकवचनविवक्षायां "भावकर्मणोः" इति आत्मनेपदे इटि, "सार्वधातुके यक्" इति यकि, कस्ये-

विपाताम्–अन्वभविपाताम्। णिलोपः। भाव्यते। भावयाञ्चक्रे। भावयाम्बभूवे।

---

त्संज्ञायां लोपे च "टित आत्मनेपदानां टेरे" इति टेरेत्वे "अतो गुणे" इति पररूपत्वे च 'अनुभूये' इति रूपम्। आवामनुभूयावहे। वयमनुभूयामहे इति। लिटि–अनुबभूवे, अनुबभूवाते, अनुबभूविरे। अनुबभूविषे, अनुबभूवाथे, अनुबभूविध्वे। अनुबभूवे, अनुबभूविवहे, अनुबभूविमहे। लुटि–अनुभविता, अनुभवितारौ, अनुभवितारः। अनुभवितासे, अनुभवितासाथे, अनुभविताध्वे। अनुभविताहे, अनुभवितास्वहे, अनुभवितास्महे। लृटि—अनुभविष्यते इत्यादि। लोटि—अनुभूयताम्। लङि–अन्वभूयत। विधौ–अनुभूयेत। आशिषि—अनुभूयात्, इत्यादि। अन्वभावि। अनुपूर्वकभूधातोः, सकर्मकत्वात् "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्मणि, "लुङ्" इति भूतार्थे लुङि, "भावकर्मणोः" इति लुङस्ते "च्लि लुङि" इति च्लौ, "चिण् भावकर्मणोः"इति च्लेः चिणि, चस्य णस्य चेत्संज्ञायां लोपे च "अचो ञ्णिति" इति वृद्धौ "एचोऽयवायावः" इत्यावि, "चिणो लुक्" इति तशब्दस्य लुकि, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अडागमे यणि च कृते 'अन्वभावि' इति रूपम्। अन्वभाविपाताम्। अनूपसर्गकभूधातोः कर्मणि लुङि, "भावकर्मणोः" इति आत्मनेपदे, द्विवचने आतामि, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते "स्यसिच्सीयुट्तासिषु भावकर्मणोः"इति चिण्वद्भावात् वृद्धौ, अनेनैव सूत्रेण इडागमे "एचोऽयवायावः"इति आवादेशे सिचः षत्वे अङ्गस्याडागमे अनोरुकारस्य यणि च कृते'अन्वभाविषाताम्'इति। अन्वभविषाताम्। चिण्वद्भावाभावपक्षे वृद्ध्यभावे, "सार्वधातुकार्धधातुकयोः"इति गुणे "आर्धधातुकस्येड्वलादेः"इति इडागमे, शेषं पूर्ववत्। अग्रे रूपाणि–अन्वभाविषत, अन्वभविषत। अन्वभाविष्ठाः, अन्वभविष्ठाः, अन्वभाविषाथाम्-अन्वभविषाथाम्। अन्वभाविढ्वम्, अन्वभाविध्वम्, अन्वभविढ्वम्-अन्वभविध्वम्। अन्वभाविषि अन्वभविषि, अन्वभाविष्वहि, अन्वभविष्वहि, अन्वभाविष्महि–अन्वभविष्महि। इति। लृङि-अन्वभाविष्यत–अन्वभविष्यत। भाव्यते। भूधातोः "हेतुमति च" इति णिचि, णस्य चस्य चेत्संज्ञायां लोपे च "अचो ञ्णिति" इति वृद्धौ, "एचोऽयवायावः" इत्यावादेशे, 'भावि' इति जाते "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम् "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्मणि "वर्तमाने लट्" इति लटि, "भावकर्मणोः" इत्यात्मनेपदे ते "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे "सार्वधातुके यक्" इति यकि, कस्येत्संज्ञायां लोपे च "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायाम् "णेरनिटि" इति णिलोपे। "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'भाव्यते' इति। भाव्यते, भाव्येते, भाव्यन्ते। भाव्यसे, भाव्येथे, भाव्यध्वे। भाव्ये, भाव्यावहे, भाव्यामहे। भावयाञ्चक्रे। भूधातोः "हेतुमति च" इति णिचि, णस्य चस्य चेत्संज्ञायां लोपे च "अचो ञ्णिति" इति वृद्धौ, "एचोऽयवायावः" इत्यावादेशे "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम्

भावयामासे । चिण्वदिट्, भाविता । आभीयत्वेनासिद्धत्वाण्णिलोपः । भावयिता । भाव-

---

"परोक्षे लिट्" इति कर्मणि लिटि, "कास्यनेकाच आम् वक्तव्यः" इत्यामि, आमः "आर्धधातुकं शेषः" इत्यार्धधातुकत्वात् "णेरनिटि" इति णिलोपे प्राप्ते तम्बाधित्वा "अयामन्ताल्वाय्येत्न्विष्णुषु" इति णेरयादेशे 'भावयाम् लिट्' इति जाते, "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकृञोऽनुप्रयोगे कृते 'भावयाम् कृ लिट्' इति भूते लिटो लः स्थाने "भावकर्मणोः" इत्यात्मनेपदे ते "लिटस्तझयोरेशिरेच्" इति एशि शगते "लिटि धातोरनभ्यासस्य" इति द्वित्वे, अभ्यासत्वे, उरदत्वे, रपरे, हलादिशिष्टे, चुत्वे, यणि, मस्यानुस्वारे, परसवर्णे च कृते 'भावयाञ्चक्रे' इति । भावयाञ्चक्रे, भावयाञ्चक्राते, भावयाञ्चक्रिरे । भावयाञ्चकृषे, भावयाञ्चक्राथे, भावयाञ्चकृढ्वे । भावयाञ्चक्रे, भावयाञ्चकृवहे, भावयाञ्चकृमहे । इति । भावयाम्बभूवे । भूधातोर्णिचि, अनुबन्धलोपे, वृद्धौ, आवादेशे, धातुसञ्ज्ञायाम्, कर्मणि लिटि, आमि, लिटो लुकि, लिट्परभुवोऽनुप्रयोगे, लिटः स्थाने "भावकर्मणोः" इति ते तस्य एशादेशे, द्वित्वे अभ्यासकार्ये च कृते तत्सिद्धिः । भावयाम्बभूवे, भावयाम्बभूवाते, भावयाम्बभूविरे । भावयाम्बभूविषे, भावयाम्बभूवाथे, भावयाम्बभूविध्वे । भावयाम्बभूवे, भावयाम्बभूविवहे, भावयाम्बभूविमहे । भावयामासे । 'भावि' इति णिजन्तात्कर्मणि लिटि, आमि, लिटो लुकि, लिट्परासोऽनुप्रयोगे, लिटस्ते, तस्य एशादेशे, द्वित्वे, अभ्यासकार्ये, च तत्सिद्धिः । भावयामासे, भावयामासाते, भावयामासिरे । भावयामासिषे, भावयामासाथे, भावयामासिध्वे । भावयामासे, भावयामासिवहे, भावयामासिमहे । भाविता । भूधातोः "हेतुमति च" इति णिचि, णचयोरित्सञ्ज्ञायां लोपे च "अचो ञ्णिति" इति वृद्धौ, आवादेशे, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्मणि, "अनद्यतने लुट्" इति लुटि, लुटो लः स्थाने "भावकर्मणोः" इति ते, "स्यतासी लृलुटोः" इति तासि, "स्यसिच्सीयुट् तासिषु भावकर्मणोः" इति चिण्वद्भावे, तास इडागमे च कृते 'भावि इ तास् त' इति जाते, "असिद्धवदत्राभात्" इति इटोऽसिद्धत्वात् "णेरनिटि" इति णिलोपे, "लुटः प्रथमस्य डारौरसः" इति तस्य डात्वे, अनुबन्धलोपे, डित्वसामर्थ्यादभस्यापि टेर्लोपे, 'भाविता' इति रूपम् । भाविता, भावितारौ, भावितारः, भावितासे, इत्यादि । भावयिता । भूधातोर्णिजन्तात्कर्मणि लुटि, 'भावि ता' इति स्थिते, अत्र चिण्वद्भावाभावपक्षे "आर्धधातुकस्येड्वलादेः" इति इटि, तस्य सिद्धत्वात् णिलुगभावे जाते, णिच इकारस्य गुणे, अयादेशे च तत्सिद्धिः । भावयिता, भावयितारौ, भावयितारः, भावयितासे, इत्यादि । लृटि—भाविष्यते—भावयिष्यते । लोटि—भाव्यताम् । लङि—अभाव्यत । लिङि—भाव्येत । आशिषि—भाविषीष्ट । 'भावि' इति णिजन्तात्कर्मणि अर्थे "आशिषि लिङ्लोटौ" इति लिङि, "भावकर्मणोः" इति लिङस्ते-

यिषीष्ट । अभावि । अभाविषाताम्–अभावयिषाताम् । बुभूष्यते । बुभूषाञ्चक्रे । बुभूषिता ।

---

"लिङः सीयुट्" इति सीयुडागमे, उटि गते, टित्वादाद्यावयवे जाते, "सुट् तिथोः" इति सुटि, उटि गते, टित्वात् तकारस्याद्यावयवे जाते, "स्यसिच्सीयुट् तासिषु भावकर्मणोः" इति चिण्वद्भावे, अनेनैव इडागमे, अस्य इडागमस्य आभीयत्वेन असिद्धत्वात् "णेरनिटि" इति णिलोपे, उभयत्र सकारद्वयस्य षत्वे, तकारस्य ष्टुत्वे च 'भाविषीष्ट' इति रूपम् । भाविषीष्ट, भाविषीयास्ताम्, भाविषीरन् । इत्यादि । भावयिषीष्ट । चिण्वद्भावाभावपक्षे "आर्धधातुकस्येड्वलादेः" इति इडागमे, तस्य सिद्धत्वात् णिलुगभावे "सार्वधातुकार्धधातुकयोः" इति णेरिकारस्य गुणे अयादेशः, शेषं पूर्ववत् । भावयिषीष्ट, भावयिषीयास्ताम्, भावयिषीरन् । भावयिषीष्ठाः, इत्यादि । अभावि । भूधातोः "हेतुमति च" इति णिचि, अनुबन्धलोपे, "अचो ञ्णिति" इति वृद्धौ, आवादेशे 'भावि' इति जाते, तस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्मणि "लुङ्" इति लुङि, अनुबन्धलोपे लः स्थाने "भावकर्मणोः" इति ते, "च्लि लुङि" इति च्लौ, "चिण् भावकर्मणोः" इति च्लेश्चिणि, अनुबन्धलोपे, "णेरनिटि" इति णिलोपे, "चिणो लुक्" इति तशब्दस्य लोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अङ्गस्याडागमे, 'अभावि' इति रूपम् । अभाविषाताम् । भूधातोः "हेतुमति च" इति णिचि, अनुबन्धलोपे, वृद्धौ, आवादेशे, "सनाद्यन्ता धातवः" इति धातुत्वात् कर्मणि लुङि, लुङो लः स्थाने प्रथमपुरुषद्विवचनविवक्षायां "भावकर्मणोः" इत्यात्मनेपदे आतामि, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते, "स्यसिच्सीयुट्तासिषु भावकर्मणोः" इति चिण्वद्भावे इटि च कृते, इट आभीयत्वेन असिद्धत्वात् "णेरनिटि" इति णिलोपे, सिचः सस्य षत्वे अङ्गस्याडागमे च कृते मिलित्वा 'अभाविषाताम्' इति रूपम् । अभावयिषाताम् । चिण्वद्भावाभावपक्षे—"आर्धधातुकस्येड्वलादेः" इति इटि, णेरयादेशे शेषं पूर्ववत् विधाय 'अभावयिषाताम्' इति रूपम् । लुङो झौ–अभाविषत, अभावयिषत । अभाविष्ठाः, अभावयिष्ठाः, अभाविषाथाम्, अभावयिषाथाम्, अभाविध्वम्–अभावयिध्वम् । अभाविषि, अभावयिषि, अभाविष्वहि, अभावयिष्वहि, अभाविष्महि, अभावयिष्महि । लृङि—अभाविष्यत, अभावयिष्यत । इत्यादि । बुभूष्यते । भूधातोः "धातोः कर्मणः समानकर्तृकात्" इति सनि, नगते, सनः "आर्धधातुकं शेषः" इत्यार्धधातुकत्वादिटि प्राप्ते "अज्झनगमां सनि" इति इटो निषेधे, "इको झल्" इति सनः कित्वाद् "क्ङिति च" इति गुणाभावे "सन्यङोः" इति द्वित्वे अभ्यासत्वे "ह्रस्वः" इति ह्रस्वत्वे "अभ्यासे चर्च" इति भस्य बत्वे "आदेशप्रत्यययोः" इति सनः षत्वे, 'बुभूष' इति जाते "सनाद्यन्ता धातवः" इति धातुत्वात् कर्मणि लटि, लः स्थाने "भावकर्मणोः" इति आत्मनेपदे प्रथमपुरुषविवक्षायां ते "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "सार्वधातुके यक्" इति यकि, कगते "अतो लोपः" इति सनोऽकारस्य

बुभूषिष्यते। बोभूय्यते। बोभूयते। "अकृत्सार्वधातुकयोर्दीर्घः"। स्तूयते विष्णुः।

---

लोपे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'बुभूष्यते' इति रूपम्। बुभूष्यते, बुभूष्येते, बुभूष्यन्ते। बुभूष्यसे, बुभूष्येथे, बुभूष्यध्वे। बुभूष्ये, बुभूष्यावहे, बुभूष्यामहे। इति। बुभूषाञ्चक्रे। 'बुभूष' इति पूर्ववत् सन्नन्तं प्रसाध्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "परोक्षे लिट्" इति लिटि, "कास्यनेकाच आम्वक्तव्यः" इति आमि, "आमः" इति लिटो लुकि, "कृञ्चानुप्रयुज्यते लिटि" इति लिट्परकृञोऽनुप्रयोगे, लिटो लः स्थाने ते, तस्य स्थाने एशि "लिटि धातोरनभ्यासस्य" इति द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये च कृते आमो मस्य अनुस्वारे परसवर्णे च कृते, यणि च कृते 'बुभूषाञ्चक्रे' इति रूपम्। बुभूषाञ्चक्राते, बुभूषाञ्चक्रिरे। इत्यादि। बुभूषिता। 'बुभूष' इति सन्नन्तम्प्रसाध्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम्, तस्मात् कर्मणि लुटि, "भावकर्मणोः" इति लुटस्ते, तासि, तास इटि, तस्य डात्वे डगते, डित्वसामर्थ्यादभस्यापि टेर्लोपे "अतो लोपः" इति सनोऽकारस्य लोपे, मिलित्वा 'बुभूषिता' इति रूपम्। बुभूषितारौ, बुभूषितारः। बुभूषितासे, बुभूषितासाथे, बुभूषिताध्वे। बुभूषिताहे, बुभूषितास्वहे, बुभूषितास्महे। इति। बुभूषिष्यते। 'बुभूष' इति सन्नन्तम्प्रसाध्य धातुसंज्ञायां कर्मणि लटि, "भावकर्मणोः" इति लृटस्ते, स्ये, इटि, "अतो लोपः" इति सनोऽकारस्य लोपे, षत्वे, टेरेत्वे च रूपम्। लोटि—बोभूष्यताम्। लङि—अबोभूष्यत। विधौ—बोभूष्येत। आशिषि—बोभूष्यात्। लुङि—अबोभूषि। लृङि—अबोभूषिष्यत। बोभूय्यते। भूधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि, ङलोपे "सन्यङोः" इति द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये "गुणो यङ्लुकोः" इति अभ्यासस्य गुणे, 'बोभूय' इति जाते, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्मणि, "वर्तमाने लट्" इति वर्तमानेऽर्थे लटि, "भावकर्मणोः" इत्यात्मनेपदे प्रथमपुरुषैकवचनविवक्षायां ते, तिङ्शित्सार्वधातुकम्" इति तस्य सार्वधातुकसंज्ञायां "सार्वधातुके यक्" इति यकि, कगते, "अतो लोपः" इति यङोऽकारस्य लोपे, "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'बोभूय्यते' रूपम्। लिटि—बोभूय्याञ्चक्रे। लुटि—बोभूयिता। लृटि—बोभूयिष्यते। लोटि—बोभूय्यताम्। लङि—अबोभूय्यत। लिङि—बोभूय्येत। आशिषि—बोभूयिषीष्ट। लुङि—अबोभूयिष्ट। लृङि—अबोभूयिष्यत। बोभूयते। भूधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि, "यङोऽचि च" इति यङो लुकि, प्रत्ययलक्षणेन यङन्तत्वात् "सन्यङोः" इति द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये "गुणो यङ्लुकोः" इति अभ्यासस्य गुणे 'बोभू' इति जाते, "सनाद्यन्ता धातवः" इति धातुसंज्ञायां कर्मणि लटि, "भावकर्मणोः" इति लटस्ते, "सार्वधातुके यक्" इति यकि, टेरेत्वे 'बोभूयते' इति। लिडादौ—बोभवाञ्चक्रे, बोभविता, बोभविष्यते, बोभूयताम्;

स्ताविता–स्तोता । स्ताविष्यते–स्तोष्यते । अस्तावि । अस्ताविषाताम्–अस्तोषाताम् । ऋ गतौ । "गुणोर्ति" इति गुणः । अर्यते । उपदेशग्रहणाच्चिण्वदिट् । आरिता–अर्ता । स्मृ स्मरणे । स्मर्यते । सस्मरे । स्मारिता–स्मर्ता । "अनिदिताम्" इति

---

अबोभूयत । बोभूयेत । अबोभावि । अबोभविष्यत । इत्यादि । स्तूयते विष्णुः । ष्टुञ् स्तुतौ, धातोः कर्मणि लटि, "धात्वादेः षः सः" इति षस्य सत्वे, "निमित्तापाये नैमित्तिकस्याप्यपायः" इति न्यायेन ष्टुत्वे गते, "भावकर्मणोः" इति लस्ते "सार्वधातुके यक्" इति यकि, कगते, "अकृत्सार्वधातुकयोः" इति स्तु इत्यस्य दीर्घे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'स्तूयते' इति रूपम् । लिटि–तुष्टुवे, तुष्टुवाते, तुष्टुविरे । तुष्टुविषे, इत्यादि । स्ताविता । स्तुधातोः कर्मणि लुटि, "भावकर्मणोः" इति लुटस्ते, "स्यतासी लृलुटोः" इति तासि, "लुटः प्रथमस्य डारौरसः" इति तस्य डात्वे, डगते डित्वसामर्थ्यात् तासष्टेर्लोपे, "स्यसिच् सीयुट्तासिषु भावकर्मणोः" इति तासः चिण्वद्भावे इडागमे च कृते, चिण्वद्भावात् "अचो ञ्णिति" इति वृद्धौ, आवादेशे च 'स्ताविता' इति रूपम् । स्तोता । पूर्ववत् लुटि कृते, चिण्वद्भावाभावे वृद्धेरिडागमस्य चाभावे गुणे च कृते तत्सिद्धिः । स्ताविष्यते । स्तुधातोः कर्मणि लृटि "भावकर्मणोः" इति लृटस्ते, 'स्यतासी लृलुटोः" इति स्ये, "स्यसिच् सीयुट्तासिषु भावकर्मणोः" इति चिण्वद्भावे, इडागमे च, चिण्वद्भावाद्वृद्धौ, आवादेशे, षत्वे टेरेत्वे च कृते 'स्ताविष्यते' इति । स्तोष्यते । चिण्वद्भावाभावपक्षे—कर्मणिलृटस्ते, स्ये, गुणे, षत्वे टेरेत्वे च तत्सिद्धिः । लोटि–स्तूयताम् । लङि—अस्तूयत । विधौ—स्तूयेत । आशिषि—स्ताविषीष्ट, स्तोषीष्ट । अस्तावि । स्तुधातोः कर्मणि लुङि, "भावकर्मणोः" इति लुङस्ते, "च्लि लुङि" इति च्लौ, "चिण् भावकर्मणोः" इति च्लेश्चिणि, अनुबन्धलोपे, वृद्धौ, आवादेशे "चिणो लुक्" इति तशब्दस्य लोपे, अङ्गस्य अडागमे, 'अस्तावि' इति रूपम् । अस्ताविषाताम् । स्तुधातोः कर्मणि लुङः स्थाने आतामि, च्लौ, च्लेः सिचि, इचि गते, "स्यसिच सीयुट् तासिषु भावकर्मणोः" इति चिण्वद्भावे, इडागमे च, चिण्वद्भावात् वृद्धौ, आवादेशे, सिचः सस्य षत्वे, अङ्गस्याडागमे, 'अस्ताविषाताम्' इति । चिण्वद्भावाभावपक्षे—अस्तोषाताम् । स्तुधातोः कर्मणि लुङः स्थाने आतामि, च्लौ, च्लेः सिचि, इचि गते, गुणे, षत्वे, अडागमे च 'अस्तोषाताम्' इति रूपम् । अर्यते । ऋ गतौ, इत्यस्माद् धातोः कर्मणि लुङस्ते "सार्वधातुके यक्" इतियकि, कगते "आर्धधातुकं शेषः" इति यक आर्धधातुकसञ्ज्ञायां "सार्वधातुकार्धधातुकयोः" इति गुणे प्राप्ते, "क्ङिति च" इत्यनेन तस्य निषेधे, "गुणोर्तिसंयोगाद्योः" इति गुणे अकारे "उरण् रपरः" इति रपरत्वे टेरेत्वे च 'अर्यते' इति । लिटि—आरे, लुटि–आरिता, अर्ता । लृटि–आरिष्यते, लोटि–अर्यताम्, लङि–आर्यत, लिङि-अर्येत, आशिषि–आरिषीष्ट, ऋषीष्ट, लुङि–आरि, लृङि—आरि-

नलोपः, स्रस्यते। इदितस्तु नन्यते। सम्प्रसारणम्। इज्यते॥ तनोतेर्यकि ६।४।४४। आकारान्तादेशो वा स्यात्। तायते-तन्यते॥ तपोऽनुतापे च ३।१।६५। तपश्च्लेश्चिण् न स्यात्कर्मकर्तर्यनुतापे च। अन्वतप्त पापेन। "घुसा-

---

प्यत। स्मर्यते। स्मृधातोः कर्मणि लटि, "भावकर्मणोः" इति लटस्ते "सार्वधातुके यक्" इति यकि, कगते "गुणोर्तिसंयोगाद्योः" इति गुणे अकारे "उरण् रपरः" इति रपरे च जाते टेरेत्वे च 'स्मर्यते' इति रूपम्। सस्मरे। स्मृधातोः कर्मणि लिटि, "भावकर्मणोः" इति लिटस्ते, तस्य स्थाने "लिटस्तझयोरेशिरेच्" इति एशि, शगते, "लिटि धातोरनभ्यासस्य" इति द्वित्वे, "पूर्वोऽभ्यासः" इति अभ्यासत्वे, "उरत्" इति अत्वे विहिते "उरण् रपरः" इति रपरत्वे कृते "हलादिः शेषः" इत्यादिहलः शेषे 'सस्मृ ए' इति जाते "गुणोर्तिसंयोगाद्योः" ति गुणे रपरे च जाते मिलित्वा 'सस्मरे' इति रूपम्। स्मारिता। स्मृधातोः कर्मणि लुटस्ते तस्य डात्वे तासि डित्वसामर्थ्याट्टिलोपे च कृते "स्यसिच्सीयुट्तासिषु भावकर्मणोः" इति चिण्वद्भावे इडागमे च कृते, वृद्धौ 'स्मारिता' इति। स्मर्ता। चिण्वद्भावाभावपक्षे गुणः, शेषं पूर्ववत्। लृटि—स्मारिष्यते-स्मरिष्यते, लोटि—स्मर्यताम्, लङि—अस्मर्यत। लिङि—स्मर्येत। आशिषि—स्मारिषीष्ट—स्मृषीष्ट, लुङि—अस्मारि, लृङि—अस्मारिष्यत। स्रस्यते। स्रंसुधातोः कर्मणि लटि, "भावकर्मणोः" इति लटस्ते "सार्वधातुके यक्" इति यकि, कगते, "अनिदितां हल उपधायाः क्ङिति" इति उपधास्थनकारस्य लोपे, टेरेत्वे, च कृते 'स्रस्यते' इति रूपम्। नन्यते। अनुबन्धविनिर्मुक्तात् टुनदि समृद्धौ, इति धातोः कर्मणि लटि, लटस्ते यकि, कगते, "इदितो नुम् धातोः" इति नुमि, अनुबन्धलोपे, मित्वादन्त्यादचः परे, नस्य अनुस्वारे परसवर्णे टेरेत्वे च कृते तत्सिद्धिः। इज्यते। यजदेवपूजासङ्गतिकरणदानेषु इति धातोः कर्मणि लटि, लटस्ते यकि, कगते, कित्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणेन यकारस्य इत्वे "सम्प्रसारणाच्च" इति पूर्वरूपे टेरेत्वे च कृते 'इज्यते' इति रूपम्। तनोतेर्यकि। "विड्वनोः" इत्यतः आदिति "ये विभाषा" इत्यतो विभाषेति चानुवर्तते। तदाह—आकारोऽन्तादेशो वा स्यादिति। तायते, तन्यते। तनु विस्तारे धातोः कर्मणि लटि, लटस्ते, "सार्वधातुके यक्" इति यकि, कगते, टेरेत्वे, "तनोतेर्यकि" इति आकारान्तादेशे च सति 'तायते' इति रूपम्। आकारान्तादेशाभावे 'तन्यते' इति रूपम्। तपोऽनुतापे चेति। "च्लेः सिच्" इत्यतः च्लेरिति "चिण् ते पदः" इत्यतः चिण् इति "न रुधः" इत्यतो नेति चानुवर्तते। चकारात् "अचः कर्मकर्तरि" इत्यतः कर्मकर्तरीति समुच्चीयते। तदाह—तपश्च्लेरित्यादि। अन्वतप्त पापेन। अनुपूर्वकतपधातोः कर्मणि लुङि, "भावकर्मणोः" इति लुङस्ते, "च्लि लुङि" इति च्लौ, "चिण् भावकर्मणोः" इति च्लेःस्थाने चिणि प्राप्ते, "तपोऽनुतापे च" इति तस्य निषेधे, "च्लेः सिच्" इति सिचि इचि गते, "झलो झलि" इति

स्था" इतीत्वम् । दीयते । धीयते । ददे ॥ **आतो युक् चिण्कृतोः ७।३।३३।** आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च । दायिता-दाता । दायिषीष्ट-दासीष्ट । अदायि । अदायिषाताम् । भज्यते ॥ **भञ्जेश्च चिणि ६।४।३३।** नलोपो

---

सिचः सस्य लोपे, अङ्गस्याडागमे अनोरुकारस्य यणि च कृते 'अन्वतस्त' इति । दीयते । अनुबन्धविनिर्मुक्तात् डुदाञ् दाने धातोः कर्मणि लटस्ते यकि, कगते, "दाधाघ्वदाप्" इति दाधातोर्घुसंज्ञायां "स्थाघ्वोरिच्च" इत्यनेन दाधातोराकारस्य ईत्वे टेरेत्वे च कृते रूपम् । धीयते । अत्रापि अनुबन्धविनिर्मुक्तात् डुधाञ् धारणपोषणयोरित्यस्माद्धातोः कर्मणि लटस्ते यकि, कगते, "दाधाघ्वदाप्" इति घुसंज्ञायां "स्थाघ्वोरिच्च" इत्यनेन अकारस्य ईत्वे टेरेत्वे च कृते रूपम् । ददे । दाधातोः कर्मणि लिटस्ते, "लिटस्तझयोरेशिरेच्" इति तस्य एशि, शगते, "लिटि धातोरनभ्यासस्य" इति द्वित्वे, अभ्यासत्वे अभ्यासकार्ये विशेषतश्च "ह्रस्वः" इति ह्रस्वत्वे, "असंयोगाल्लिट् कित्" इति कित्वात् "आतो लोप इटि च" इति आलोपे, मिलित्वा 'ददे' इति रूपम् । ददे, ददाते, ददिरे । ददिषे, ददाथे, ददिध्वे । ददे, ददिवहे, ददिमहे । इति । एवं धाधातोरपि बोध्यम् । आतो युगिति । 'अङ्गस्य' इत्यधिकृतम् आता विशेषितम् । तदन्तविधिः । "अचो ञ्णिति" इत्यतो "ञ्णिति" इत्यनुवृत्तं कृत एव विशेषणम् , न तु चिणः, तस्य णित्वाव्यभिचारात् । तदाह—आदन्तानामिति । दायिता । दाधातोः कर्मणि लुटस्ते, तासि, तस्य डात्वे, डगते, डित्वसामर्थ्यात् तासष्टेर्लोपे, "स्यसिच्सीयुट्तासिषु भावकर्मणोः" इति चिण्वद्भावे, इडागमे च कृते, चिण्वद्भावात् "आतो युक् चिण्कृतोः" इति युगागमे, कगते, कित्वादन्त्यावयवे जाते मिलित्वा 'दायिता' इति रूपम् । दाता । चिण्वद्भावाभावे इदं रूपम् । लृटि—दायिष्यते, दास्यते । लोटि—दीयताम् । लङि—अदीयत । विधिलिङि—दीयेत । अशिषि—दायिषीष्ट । दाधातोः कर्मणि आशिषि लिङस्ते, लिङः सीयुटि, तस्य सुटि, अनुबन्धलोपे, "स्यसिच्सीयुट्तासिषु भावकर्मणोः" इति चिण्वद्भावे, इडागमे च कृते, चिण्वद्भावाद् "आतो युक् चिण्कृतोः" इति युकि कगते कित्वादन्त्यावयवे जाते, षत्वे, ष्टुत्वे च रूपम् । चिण्वद्भावाभावपक्षे—दासीष्ट इति । अदायि । दाधातोः कर्मणि लुङि, "भावकर्मणोः" इति लुङस्ते, "च्लि लुङि" इति च्लौ "चिण्भावकर्मणोः" इति च्लेः चिणि, अनुबन्धलोपे, "आतो युक् चिण्कृतोः" इति युकि, कगते, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति अङ्गस्य अडागमे, "चिणो लुक्" इति तशब्दस्य लुकि, 'अदायि, इति रूपम् । अदायिषाताम् । दाधातोः कर्मणि लुङि, "भावकर्मणोः" इति आत्मनेपदे, द्विवचनविवक्षायां लुङः स्थाने आतामि, "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि, इचि गते, "स्यसिच्" इति चिण्वद्भावे इडागमे, चिण्वद्भावात् "आतो युक् चिण्कृतोः" इति युगागमे, कगते, सिचः सस्य षत्वे अङ्गस्याडागमे च कृते 'अदायिषाताम्' इति रूपम्।

वा स्यात् । अभाजि-अभञ्जि । लभ्यते । विभाषा चिण्णमुलोः ७।१।६९। लभेर्नुमागमो वा स्यात् । अलम्भि-अलाभि ॥ इति भावकर्मप्रक्रिया ॥

## अथ कर्मकर्तृप्रक्रिया ।

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः । कर्मवत्कर्मणा तुल्यक्रियः ३।१।८७। कर्मस्थया क्रियया तुल्यक्रियः

---

चिण्वद्भावाभावपक्षे—'अदिपातात्' इति । भज्यते । भञ्ज्धातोः कर्मणि लटि, लटस्ते, सार्वधातुसञ्ज्ञायां "सार्वधातुके यक्" इति यकि, कगते, "अनिदितां हल उपधायाः क्ङिति" इति नलोपे, टेरेत्वे च 'भज्यते' इति रूपम् । भञ्जेश्च चिणि । "श्नान्नलोपः" इत्यतो नेति लुप्तषष्ठीकम् , लोप इति चानुवर्तते । "जान्तनशां विभाषा" इत्यतो विभाषेति मत्वा शेषं पूरयति—नलोपो वा स्यादिति । अभाजि । भञ्ज्धातोः कर्मणि लुङि, "भावकर्मणोः" इति लुङस्ते, "च्लि लुङि" इति च्लौ, "चिण् भावकर्मणोः" इति च्लेश्चिणि, अनुबन्धलोपे "भञ्जेश्च चिणि" इति वा नलोपे, "अत उपधायाः" इति वृद्धौ, "चिणो लुक्" इति तशब्दस्य लोपे, अङ्गस्य अडागमे 'अभाजि' इति रूपम् सिद्धम् । नलोपाभावे—अभञ्जि । लभ्यते । लभ्धातोः कर्मणि लटि, लटो लः स्थाने "भावकर्मणोः" इति आत्मनेपदे ते, "तिङ्शित्" इति सार्वधातुकसंज्ञायां "सार्वधातुके यक्" इति यकि, कगते, "टित आत्मनेपदानां टेरे" इति टेरेत्वे 'लभ्यते' इति रूपम् । विभाषा चिण्णमुलोरिति । "लभेश्च" इत्यतो लभेरिति, "इदितो नुम् धातोः" इत्यतो नुम् इति मत्वा शेषं पूरयति—लभेर्नुमागमो वेति । अलम्भि । लभ्धातोः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्मणि, "लुङ्" इत्यनेन भूतार्थे लुङि, उङि गते, "भावकर्मणोः" इति आत्मनेपदे प्रथमपुरुषैकवचनविवक्षायां लुङो लः स्थाने ते, तस्य "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "सार्वधातुके यक्" इति यकि प्राप्ते, तम्बाधित्वा "च्लि लुङि" इति च्लौ, "च्लेः सिच्" इति सिचि प्राप्ते तम्बाधित्वा "चिण् भावकर्मणोः" इति च्लेः स्थाने चिणि, चणयोरित्संज्ञायां लोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यङ्गस्याडागमे, "विभाषा चिण्णमुलोः" इति चिणि परे लभेर्नुमि, उमि गते, मित्वादन्त्यावयवे जाते, नस्य अनुस्वारे परसवर्णे च 'अलम्भि' इति रूपम् । नुमागमाभावे—"अत उपधायाः" इति वृद्धौ 'अलाभि' इति रूपम् । इति भावकर्मप्रक्रिया ।

सकर्मकाणामप्यकर्मकत्वादिति । ये छिदिभिदिप्रभृतय एककर्मकाः, तत्र कर्मणः कर्तृत्वविवक्षायां 'वृक्षः छिनत्ति' इत्यादौ प्राक् सकर्मकत्वेऽपि सम्प्रति कर्मणः कर्तृत्वविवक्षायामकर्मका एते इत्यर्थः । कर्तरि भावे च लकार इति । न तु कर्मणि, असम्भवात् । अत एव अकर्मकेभ्यो भावे कर्तरि च ल इत्युक्तमिति भावः । कर्मवत्कर्मणेति ।

कर्ता कर्मवत्स्यात्। कार्यातिदेशोऽयम्। तेन यगात्मनेपदचिण्चिण्वदिटः स्युः। पच्यते फलम्। भिद्यते काष्ठम्। अपाचि। अभेदि। भावे—भिद्यते काष्ठेन।

इति कर्मकर्तृप्रक्रिया॥

---

"कर्तरि शप्" इत्यतः कर्तरीत्यनुवृत्तं प्रथमया विपरिणम्यते। तुल्या क्रिया यस्य सः, तुल्यक्रियः कर्ता। कर्मणा इत्यनेन कर्मकारकस्था क्रिया विवक्षिता, क्रियायाः कर्मकारकेण तुल्यत्वस्य तत्क्रियासादाय्यैव उपपाद्यत्वात्। तदाह—कर्मस्थयेत्यादिना। कर्मणः कर्तृत्वेन विवक्षायां कर्ता कर्मवदिति यावत्। कार्यातिदेशोऽयमिति। यद्यपि शास्त्रातिदेशे कार्यातिदेशे वा न फलभेदः। तथापि शास्त्रातिदेशस्यापि कार्यातिदेशार्थत्वान्मुख्यत्वात् कार्यातिदेश एवाश्रयणीय इत्यर्थः। तेनेति। स्युरित्यत्रान्वेति। कर्मवत्त्ववचनेन कर्मकार्याणि "सार्वधातुके यक्", इति यक्, "भावकर्मणोः" इति आत्मनेपदम्, "चिण् भावकर्मणोः" इति चिण्, "स्यसिच्सीयुट्तासिषु" इति चिण्वत्त्वम्, तत्संनियोगशिष्टः इट् च स्युरित्यर्थः। कर्मणः कर्तृत्वविवक्षायां कर्तरि विहितानि शास्त्राण्येव न स्युरित्यर्थः। पच्यते फलमिति। 'कालः फलं पचति' इत्यत्र यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते, तदा कर्मण एव कर्तृत्वात् पच्धातुरकर्मकः। तस्मात् "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्तृरूपेऽर्थे वर्तमानक्रियायां "वर्तमाने लट्" इति लटि, "कर्मवत्कर्मणा तुल्यक्रियः" इति कर्मवद्भावात् आत्मनेपदे ते,"सार्वधातुके यक्" इति यकि, कस्येत्सञ्ज्ञायां लोपे च जाते "टित आत्मनेपदानां टेरे" इति टेरेत्वे च 'पच्यते' इति रूपम्। कर्तरि लकारे कर्तुरुक्तत्वात् कर्तृवाचकफलशब्दात् प्रथमा। भिद्यते काष्ठमिति। 'काष्ठानि भिनत्ति' अत्र यदा कर्तृव्यापारो न विवक्ष्यते, तदा 'काष्ठानि' इति कर्मणः कर्तृत्वात् भिद्धातोरकर्मकत्वम्। तस्मात् कर्तरि लटि, "कर्मवत्कर्मणा तुल्यक्रियः" इति कर्मवद्भावात् लटः स्थाने आत्मनेपदे ते यकि, टेरेत्वे च तत्सिद्धिः। कर्तुरुक्तत्वात्प्रथमा। अपाचि। पच् धातोः कर्तृव्यापारस्याविवक्षितत्वेन अकर्मकत्वात् कर्तरि लुङि, "कर्मवत्कर्मणा तुल्यक्रियः" इति कर्मवद्भावात् "भावकर्मणोः" इति लुङो लः स्थाने आत्मनेपदे ते, तस्य सार्वधातुकत्वात् यकि प्राप्ते, तम्बाधित्वा "च्लि लुङि" इति च्लौ, "चिण् भावकर्मणो" इति च्लेः चिणि, चिणोऽनुबन्धलोपे, "अत उपधायाः" इति वृद्धौ,"चिणो लुक्" इति चिणः परस्य तशब्दस्य लुकि, अङ्गस्याडागमे च 'अपाचि' इति रूपम्। अभेदि। भिद्धातोः कर्तरि लुङि "कर्मवत्कर्मणा तुल्यक्रियः" इति कर्मवद्भावात् लुङः स्थाने आत्मनेपदे ते च्लौ, च्लेः स्थाने "चिण् भावकर्मणोः" इति चिणि, चस्य णस्य चेत्सञ्ज्ञायां लोपे च कृते भिदो गुणे अडागमे, "चिणो लुक्" इति तशब्दस्य लुकि च कृते 'अभेदि' इति रूपम्। भावे—भिद्यते काष्ठेनेति। कर्तृव्यापारस्याविवक्षायां भिदोऽकर्मकत्वात्, भिदः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति भावे "वर्तमाने लट्" इति लटि, लः स्थाने

## अथ लकारार्थप्रक्रिया ।

**अभिज्ञावचने लृट् ३।२।११२।** स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात् । लङोऽपवादः । वस निवासे । स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादिप्रयोगेऽपि ॥ **न यदि ३।२।११३।** यद्योगे उक्तं न स्यात् । अभिजानासि कृष्ण यद्वने अभुञ्ज्महि ॥ **लट् स्मे ३।२।११८।** लिटोऽपवादः । यजति स्म युधिष्ठिरः ॥ **वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१।** वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः । कदाऽऽगतोऽसि । अयमागच्छामि, अयमागमं वा । कदा गमिष्यसि । एष गच्छामि, गमिष्यामि वा । हेतु-

---

"भावकर्मणोः" इत्यात्मनेपदे ते, "सार्वधातुके यक्" इति यकि, कस्येत्सञ्ज्ञायां लोपे च यकः कित्वात् "क्ङिति च" इति गुणाभावे "टित आत्मनेपदानां टेरे" इति टेरेत्वे च कृते 'भिद्यते' इति रूपम् । अत्र कर्तुरनभिहितत्वात् "कर्तृकरणयोस्तृतीया" इति तृतीयेति भावः । इति कर्मकर्तृप्रक्रिया ।

अभिज्ञावचन इति । अभिज्ञा—स्मृतिः, सा उच्यते बोध्यते, अनेनेति विग्रहः । तदाह—स्मृतिबोधिन्युपपदे इति । स्मृतिबोधकपदे समीपे प्रयुज्यमाने सतीत्यर्थः । "भूते" इत्यधिकृतम् । "अनद्यतने लङ्" इत्यतोऽनद्यतने इत्यनुवर्तते । तदाह—भूतानद्यतने इति । लङोऽपवाद इति । "अनद्यतने लङ्" इत्यस्यापवाद इत्यर्थः । स्मरसीति । हे कृष्ण गोकुले अवसामेति यत् तत् स्मरसि इत्यर्थः । अत्र वाक्यार्थः कर्म । कृतं गोकुलवासं स्मरसीति यावत् । एवमिति । स्मरसि इति पदयोग इव बुध्यसे इत्यादि स्मृतिबोधकपदयोगेऽपि लृडित्यर्थः । न यदि । यदीति सप्तमीं मत्वा आह—यद्योगे इति । उक्तं नेति । "अभिज्ञावचने" इति लृट् न भवतीत्यर्थः । अभिजानासीति । वने अभुञ्ज्महीति यत् तत् स्मरसीत्यर्थः । लट् स्मे । स्मेत्यव्ययम् । तद्योगे लिट्विषये लट् स्यादित्यर्थः । यजति स्मेति । स्मशब्दो भूतकालद्योतकः । वर्तमानसामीप्य इति । "वर्तमाने लट्" इत्यारभ्य आपादसमाप्तेः "उणादयो बहुलम्" इति तृतीयपादादिमसूत्रात् प्राक् वर्तमानाधिकारः । तस्मिन्नधिकारे येन विशेषणेन याभ्यः प्रकृतिभ्यो वर्तमाने प्रत्यया विहिताः ते सर्वे तेनैव विशेषणेन ताभ्यः प्रकृतिभ्यो वर्तमानसमीपकाले भूते भविष्यति च वा भवन्तीत्यर्थः । अत्र भूते भविष्यति चेत्यार्थिकम्, तयोरेव वर्तमानसामीप्यसत्वात् । कदा आगतोऽसि—इत्यागतं प्रति प्रश्नः । अयमागच्छामि इत्युत्तरम् । अव्यवहितपूर्वकाले आगतवानस्मीत्यर्थः । वर्तमानसमीपकाले भूते लट् । अयमित्यनेन आगमनकालीनं प्रस्वेदपरिकरबन्धादियुक्तं रूपं निर्दिश्यते इदानीमागमनं सूचयितुम्—आगममिति । वर्तमानवत्त्वाभावे भूते लुङ् । कदा गमिष्यसीति । गमनात्प्राक् प्रश्ने, एष गच्छामि, इत्युत्तरम् । अव्यवहितोत्तरकाले गमिष्यामीत्यर्थः ।

हेतुमतोर्लिङ् ३।३।१५६। वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । भविष्यत्येवेष्यते । नेह, हन्तीति पलायते । "विधिनिमन्त्रणा" इति लिङ् । विधिः-प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । यजेत । निमन्त्रणं-नियोगकरणमावश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । इह भुञ्जीत । आमन्त्रणं-कामचाराऽनुज्ञा । इहासीत । अधीष्टः-सत्कारपूर्वको व्यापारः । पुत्रमध्यापयेद्भवान् । सम्प्रश्नः-सम्प्रधारणम् । किं भो वेदमधीयीय उत तर्कम् । प्रार्थनं-याञ्चा । भो भोजनं लभेय । एवं लोट् । इति लकारार्थप्रक्रिया ॥ इति तिङन्तम् ॥

---

## अथ कृदन्ते कृत्यप्रकरणम् ।

धातोः ३ । १ । ९१ । आतृतीयाध्यायसमाप्त्यन्तं ये प्रत्ययास्ते धातोः परे स्युः । "कृदतिङ्" इति कृत्संज्ञा ॥ वाऽसरूपोऽस्त्रियाम् ३।१।९४ अस्मिन्धात्व-

---

एष इति तु अयमितिवत् व्याख्येयः । वर्तमानकालसमीपे भविष्यति लट् । गमिष्यामि वेति । वर्तमानवत्त्वाभावे भविष्यति लृट् । हेतुहेतुमतोर्लिङ् । पूर्वसूत्राद्विभाषानुवृत्तिं मत्वा आह—वा स्यादिति । पक्षे लट् । हेतुभूते फलभूते वाऽर्थे वर्तमानाद्धातोर्लिङ् वा स्यादिति यावत् । भविष्यत्येवेति । लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणादिति भावः । हन्तीति । इतिर्हेतौ, वर्तमानकालिकहननाद्धेतोरित्यर्थः । विधिनिमन्त्रणा । ननु विध्यादयो हि न लिङो वाच्याः । "लः कर्मणि च भावे चाकर्मकेभ्यः" इति सूत्रेण कर्तृकर्मभावानां लकारवाच्यत्वबोधनात् । न च "लः कर्मणि च" इति शास्त्रं लिङ्व्यतिरिक्तलकारविषयमेवास्त्विति वाच्यम् । तथा सति यजेत इत्यादौ कर्तृवाचकत्वाभावेन शबाद्यनापत्तेरित्यत आह—योत्येष्विति । "लः कर्मणि च" इति सूत्रं सामान्यविषयं चेदपि "विधिनिमन्त्रणा०" इति विशेषशास्त्रेण न बाध्यते, अविरोधात् । तथाच विध्यादिविशिष्टकर्त्रादिषु लिङिति फलतीति मत्वाह—वाच्येषु वेति । पक्षद्वयमपीदं भाष्ये स्थितम् । भृत्यादेर्निकृष्टस्य प्रवर्तनमिति । तद्यथा भृत्यं स्वामी वदति—'भवान् वस्त्रं चालयेत्' इति । दौहित्रादेः प्रवर्तनमिति । दौहित्रादीन् प्रति इह श्राद्धे भवान् भुञ्जीतेति । "त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलः" इति वचनात् । कामचारानुज्ञेति । यथेच्छं क्रियतामित्यभ्यनुज्ञानमित्यर्थः । अधीष्टः सत्कारपूर्वको व्यापारः । भाष्यवाक्यमिदम् । सत्कृत्य प्रवर्तनमित्यर्थः । सम्प्रश्नः सम्प्रधारणम् । इदं कार्यं नवेति विचार्य अनिर्धारणम् । एवं लोडिति । "लोट् च" इति विध्यादिषु विहितो लोडप्येवमुदाहर्तव्य इत्यर्थः । इति लकारार्थप्रक्रिया ।

धातोः । आतृतीयेति । आतृतीयाध्यायपरिसमाप्तेरित्यर्थः, तच्च भाष्ये स्पष्टम् । कृदतिङ् । व्याख्यातम् प्राक् । वासरूपोऽस्त्रियाम् । असरूप इति च्छेदः । इयम्परिभा-

धिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात्, स्त्र्यधिकारोक्तं विना ॥ कृत्याः ३।१।९५ ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥ कर्तरि कृत् ३।४।६७ कृत्प्रत्ययः कर्तरि स्यात्। इति प्राप्ते ॥ तयोरेव कृत्यक्तखलर्थाः ३।४।७० एते भावकर्मणोरेव स्युः ॥ तव्यत्तव्यानीयरः ३।१।९६ धातोरेते प्रत्ययाः स्युः। एधितव्यं, एधनीयं त्वया। भावे औत्सर्गिकमेकवचनं क्लीबत्वम्। चेतव्यश्चयनीयो वा धर्मस्त्वया।

---

शेति यावत्। ण्वुल्तृचावुत्सर्गः "इगुपधज्ञाप्रीकिरः कः" इत्यस्यापवादः। तद्विषये ण्वुल्तृचावपि भवतः। विक्षेपकः, विक्षेप्ता। विक्षिपः। स्त्रीशब्दः स्वर्यते। तदाह— स्त्र्यधिकारोक्तं विनेति। "स्त्रियां क्तिन्" इति वक्ष्यमाणस्त्र्यधिकारस्थमपवादं विनेत्यर्थः। स्त्र्यधिकारस्थस्तु असरूपः प्रत्ययः उत्सर्गस्य नित्यमेव बाधक इति भावः। कृत्याः। कृत्यसंज्ञका इत्यर्थः। ततश्च "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" "अर्हे कृत्यतृचश्च" "शकि लिङ् च" इत्यादिषु प्रवर्तते। ण्वुलः प्रागिति। "ण्वुल्तृचौ" इत्यतः प्रागित्यर्थः। एतच्च भाष्ये स्पष्टम्। कर्तरि कृत्। अर्थनिर्देशोऽयम्। तयोरेव कृत्यक्तखलर्थाः। "लः कर्मणि च भावे चा" इति सूत्रोपात्ते भावकर्मणी तच्छब्देन परामृश्येते। तदाह—एते भावकर्मणोरेवेति। न तु कर्तरीति भावः। तव्यत्तव्यानीयरः। तव्यत् तव्य अनीयर् एषां द्वन्द्वः। प्रत्ययाः स्युरिति। ते कृत्संज्ञकाः कृत्यसंज्ञकाश्च इत्यपि ज्ञेयम्। एधितव्यम्। एधवृद्धौ धातुतः "धातोः" इत्यनेन धातोः परेऽत्र भवितव्यतां विधाय "कृदतिङ्" इत्यनेन कृत्संज्ञायां "कृत्याः" इत्यनेन कृत्यसंज्ञायां "कर्तरि कृत्" इति कर्त्रर्थे प्राप्ते "तयोरेव कृत्यक्तखलर्थाः" इत्यनेन अकर्मकात् धातोर्भावे सकर्मकाच्च धातोः कर्मणि कृत्यक्तखलर्थानां प्राप्तौ सत्याम् "तव्यत्तव्यानीयरः" इत्यकर्मकादेध धातोर्भावे तव्यति कृते, तकारस्य "हलन्त्यम्" इतीत्संज्ञायां "तस्य लोपः" इति लोपे 'एध् तव्य' इति जाते "आर्धधातुकं शेषः" इति तव्यत आर्धधातुकसंज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति इडागमे 'एधितव्य' इति जाते "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसंज्ञायां "ङ्याप्प्रातिपदिकात्" इति स्वादिप्राप्तौ प्रथमैकवचने सौ समागते "भावे औत्सर्गिकं क्लीबत्वम्" इति क्लीबत्वात् "अतोऽम्" इति सोरमि, "अमि पूर्वः" इति पूर्वरूपत्वे च कृते 'एधितव्यम्' इति रूपम्। तव्येऽप्येवमेव। एधनीयम्। एध्धातोरकर्मकत्वात् "तयोरेव कृत्यक्तखलर्थाः" इति भावे "तव्यत्तव्यानीयरः" इत्यनेन अनीयरि, रस्येत्संज्ञायां लोपे च मिलित्वा "एधनीय" इति जाते तस्य कृदन्तत्वात् प्रातिपदिकत्वे, औत्सर्गिकमेकवचने क्लीबत्वे च 'एधनीयम्' इति। अत्र त्वत्कर्तृका एधनक्रियेत्यर्थः। कर्मण्युदाहरति—चेतव्यः, चयनीय इति। चिधातोः सकर्मकत्वात् कर्मणि, तव्यति अनीयरि वा प्रत्यये कृते, अनुबन्धलोपे, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे कृदन्तत्वात्प्रातिपदिकत्वे, सौ, रुत्वे विसर्गे च 'चेतव्यः' इति। अनीयरि अयादेशे कृदन्तत्वात्प्रातिपदिकत्वे सौ रुत्वे विसर्गे

( केलिमर उपसङ्ख्यानम् ) । पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । भेत्तव्या इत्यर्थः । कर्मणि प्रत्ययः ॥ **कृत्यल्युटो बहुलम् ३।३।११३** क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ स्नात्यनेनेति स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः । **अचो यत् ३।१।९७** अजन्ताद्धातोर्यत् । चेयम् ॥ **ईद्यति ६।४।६५** यति परे आत ईत्स्यात् । देयम् । ग्लेयम् । **पोरदुपधात् ३।१।९८** पवर्गान्तादुदुपधाद्यत् स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् । **एतिस्तुशास्वृदृजुषः क्यप् ३।१।१०९** एभ्यः क्यप् स्यात् ॥ **ह्रस्वस्य पिति कृति तुक् ६।१।७१** इत्यः । स्तुत्यः । शासु

---

च 'चयनीयः' इति । केलिमर इति । धातोरित्येव । भावकर्मणोरेवेदम् । पचेलिमा माषा इति । पच् धातोः "तयोरेव कृत्यक्तखलर्थाः" इति कर्मणि, "केलिमर उपसंख्यानम्" इति वार्तिकेन केलिमरप्रत्यये, ककाररेफयोरित्संज्ञायां लोपे च 'पच् एलिम' इति, कृदन्तत्वात्प्रातिपदिकत्वे, जसि, विभक्तिकार्ये च तत्सिद्धिः । भिदेलिमाः सरलाः । भिद्धातोः कर्मणि केलिमरप्रत्यये, अनुबन्धलोपे, कित्वाद्गुणाभावे प्रातिपदिकत्वात् जसि, विभक्तिकार्ये च तत्सिद्धिः । कृत्यल्युटो बहुलमिति । याभ्यः प्रकृतिभ्यो येष्वर्थेषु विहिताः ततोऽन्यत्रापि स्युरित्यर्थः । स्नानीयम् । करणे अनीयर । दानीयः । सम्प्रदाने अनीयर । अचो यत् । धातोरिति विशेषणत्वात्तदन्तविधिः, तदाह—अजन्ताद्धातोरिति । चेयम् । चिञ् चयने धातोः "अचो यत्" इति यति कृते, अनुबन्धलोपे "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे, "सार्वधातुकार्धधातुकयोः" इति गुणे, कृदन्तत्वात्प्रातिपदिकत्वे सौ, सोरमि, पूर्वरूपे च तत्सिद्धिः । ईद्यति । आत इति । "आतो लोप इटि च" इत्यतस्तदनुवृत्तेरिति भावः । देयम् । दाधातोः "अचो यत्" इति यति, तगते, "ईद्यति" इत्याकारस्य ईत्वे, "आर्धधातुकं शेषः" इति यत आर्धधातुकत्वे, "सार्वधातुकार्धधातुकयोः" इति गुणे, 'देय' इति जाते, कृदन्तत्वात्प्रातिपदिकत्वे, सौ, सोरमि, पूर्वरूपे च तत्सिद्धिः । ग्लेयम् । ग्लै हर्षक्षये धातोः "अचो यत्" इति यति, तगते, "आदेच उपदेशेऽशिति" इति ग्लैधातोराकारान्तादेशे "ईद्यति" इति ईत्वे, यत आर्धधातुकत्वात् गुणे, प्रातिपदिकत्वे, सोरमि, पूर्वरूपे च तत्सिद्धिः । पोरदुपधात् । ण्यतोपवाद इति । यत्ण्यतोरनुबन्धरहितयोः सारूप्यात् वासरूपविधेरप्रवृत्तेः शप्यमित्यादौ ण्यतोऽपवादोऽयमिति भावः । शप्यम् । शप् धातोः "ऋहलोर्ण्यत्" इति ण्यति प्राप्ते तम्बाधित्वा "पोरदुपधात्" इत्यनेन यति तगते, कृदन्तत्वात्प्रातिपदिकत्वे विभक्तिकार्ये च कृते, तत्सिद्धिः । लभ्यम् । लभ् धातोः "पोरदुपधात्" इति यति विभक्तिकार्ये च तत्सिद्धि । एतिस्तुशास्वृदृजुष इति । एति, स्तु, शास्, वृ, दृ, जुष् एषां षण्णां समाहारद्वन्द्वात्पञ्चमी । सुप्यनुपसर्गे भाव इति निवृत्तम् । तदाह— एभ्यः क्यप्स्यादिति । ह्रस्वस्य । स्पष्टम् । इत्यः । इण् गतौ, इत्यस्माद्धातोः "एति स्तुशा-

अनुशिष्टौ ॥ **शास इदङ्हलोः ६।४।३४** शास उपधाया इत्स्यादङि हलादौ क्ङिति। शिष्यः। वृत्यः। आदृत्यः। जुष्यः ॥ **मृजेर्विभाषा ३।१।११३** मृजेः क्यब्वा स्यात्। मृज्यः ॥ **ऋहलोर्ण्यत् ३।१।१२४** ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् स्यात्। कार्यम्। हार्यम्। धार्यम् ॥ **चजोः कु घिण्ण्यतोः ७।३।५२** चजोः कुत्वं स्यात्

---

स्वृदजुपः क्यप्" इति क्यपि, कपयोरित्संज्ञायां लोपे च इणो णगते, 'इ य' इति भूते "ह्रस्वस्य पिति कृति तुक्" इति ह्रस्वस्य इण इकारस्य पिति कृति परे तुगागमे कृते, उकि, गते, किस्वादन्त्यावयवे जाते विभक्तिकार्ये च कृते 'इत्यः' इति रूपम्। स्तुत्यः। ष्टुञ् स्तुतौ इति धातोः "एतिस्तुशास्वृदजुपः क्यप्" इति क्यपि, ष्टुञो ञलोपे, "धात्वादेः षः सः" इति षस्य सत्वे, तेन ष्टुत्वेऽपि, 'स्तु' इति जाते, क्यपोऽनुबन्धलोपे, "ह्रस्वस्य पिति कृति तुक्" इति तुगागमे, उकि गते, किस्वादन्त्यावयवे जाते, विभक्तिकार्ये च सति 'स्तुत्यः' इति रूपम्। शास इदङ्हलोरिति। "अनिदितां हल उपधायाः क्ङिति" इत्यत उपधायाः क्ङिति इत्यनुवर्तते तदाह—शास उपधाया इति। शिष्यः। शासु अनुशिष्टौ धातुः। अनुबन्धविनिर्मुक्तात् शास् इत्यस्मात् "एतिस्तुशास्वृदजुपः क्यप्" इति क्यपि, कपयोरित्संज्ञायां लोपे च कृते 'शास् य' इति जाते "शास इदङ्हलोः" इति शास उपधाया इत्वे, "शासिवसिघसीनां च" इति षत्वे, विभक्तिकार्ये च 'शिष्यः' इति रूपम्। वृत्यः। वृञ् वरणे इत्यस्माद्धातोः "एतिस्तुशास्वृदजुपः क्यप्" इति क्यपि, कस्य च लोपे, "ह्रस्वस्य पिति कृति तुक्" इति तुकि, उकि गते, संयोगे विभक्तिकार्ये च तत्सिद्धिः। आदृत्यः। आङ्पूर्वकदृधातोः क्यपि, अनुबन्धलोपे, "ह्रस्वस्य पिति कृति तुक्" इति तुकि उको लोपे, विभक्तिकार्ये च तत्सिद्धिः। जुष्यः। जुषी प्रीतिसेवनयोः इति धातोरनुबन्धलोपे, तस्मात् 'एतिस्तुशास्वृदजुपः क्यप्" इति क्यपि, कपयोरित्संज्ञायां लोपे च कृते, किस्वाद्गुणाभावे, कृदन्तत्वात्प्रातिपदिकत्वे, विभक्तिकार्ये च कृते 'जुष्यः' इति रूपम्। मृजेर्विभाषा। पूर्वसूत्रात्क्यबनुवर्तते। मृज्यः। मृजू शुद्धौ, इति धातोरनुबन्धलोपे, तस्मात् "मृजेर्विभाषा" इति क्यपि, कपयोर्लोपे, किस्वाद्वृद्ध्यभावे, प्रातिपदिकत्वे विभक्तिकार्ये च तत्सिद्धिः। ऋहलोर्ण्यत्। पञ्चम्यर्थे षष्ठी। तदाह—ऋवर्णान्तादिति। कार्य्यम्। डुकृञ् करणे इति धातोरनुबन्धलोपे, तस्मात् "ऋहलोर्ण्यत्" इति ण्यति, णकारतकारयोर्लोपे, 'कृ य' इति जाते, 'आर्धधातुकं शेषः' इति ण्यतो यकारस्य आर्धधातुकसंज्ञायां "सार्वधातुकार्धधातुकयोः" इति गुणे प्राप्ते, तम्बाधित्वा "अचो ञ्णिति" इति वृद्धौ, "उरण् रपरः" इति रपरत्वे, "अचो रहाभ्यां द्वे" इति यस्य द्वित्वे कृदन्तत्वात्प्रातिपदिकत्वे, विभक्तिकार्ये च 'कार्य्यम्' इति रूपम्। हार्य्यम्। हृञ् हरणे धातोः "ऋहलोर्ण्यत्" इति ण्यति, अनुबन्धलोपे, "अचो ञ्णिति" इति वृद्धौ, रपरत्वे च कृते, "अचो रहाभ्यां द्वे" इति यकारस्य द्वित्वे, विभक्तिकार्ये च तत्सिद्धिः। धार्य्यम्। धृञ् धारणे धातोः

घिति ण्यति च परे । मृजेर्वृद्धिः ७।२।१४ मृजेरिको वृद्धिः स्यात् सार्वधातुकार्धधातुकयोः । मार्ग्यः । भोज्यं भक्ष्ये ७।३।६९ भोग्यमन्यत् । इति कृत्यप्रक्रिया ॥

---

## अथ पूर्वकृदन्तप्रकरणम् ।

ण्वुल्तृचौ ३।१।१३३ धातोरेतौ स्तः कर्तरि कृदिति कर्त्रर्थे ॥ युवोरनाकौ ७।१।१ युवु एतयोरनाकौ स्तः । कारकः । कर्ता ॥ नन्दिग्रहिपचादिभ्यो

---

"ऋहलोर्ण्यत्" इति ण्यति, णतयोर्लोपे, वृद्धौ, रपरत्वे, यस्य द्वित्वे, विभक्तिकार्ये च तत्सिद्धिः । चजोः कुघिण्यतोः । कु इति अविभक्तिको निर्देशः । चजोर्घिण्यतोश्च यथासंख्यं तु न । "तेन रक्तं रागात्" इति वञि जस्य कुत्वनिर्देशात् मृजेर्वृद्धिरिति । "इको गुणवृद्धी" इति परिभाषया इक इत्युपस्थितम् । मृजेरित्यवयवषष्ठी । तदाह—मृजेरिको वृद्धिरिति । मार्ग्यः । मृज्धातोः "मृजेर्विभाषा" इति क्यबभावे, "ऋहलोर्ण्यत्" इति ण्यति, णतयोर्लोपे, ण्यतो यकारस्य "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायां "सार्वधातुकार्धधातुकयोः" इति गुणे प्राप्ते तम्बाधित्वा "मृजेर्वृद्धिः" इति मृजेरुपधाऋकारस्य वृद्धौ "उरण् रपरः" इति रपरत्वे च 'मार्ज् य' इति जाते, "चजोः कु घिण्यतोः" इति जस्य कुत्वे, कृदन्तत्वात्प्रातिपदिकत्वे, विभक्तिकार्ये च कृते 'मार्ग्यः' इति रूपम् । भोज्यं भक्ष्ये इति । भक्ष्ये गम्ये ण्ये, भुजेः कुत्वाभावो निपात्यते । तथाहि—भुजधातोः "ऋहलोर्ण्यत्" इति ण्यति, णस्य तस्य चेत्संज्ञायां लोपे च "आर्धधातुकं शेषः" इति ण्यतो यकारस्य आर्धधातुकसंज्ञायां "पुगन्तलघूपधस्य च" इति लघूपधगुणे 'भोज् य' इति जाते, "चजोः कु घिण्यतोः" इति जस्य कुत्वे प्राप्ते, "भोज्यं भक्ष्ये" इत्यनेन कुत्वाभावे निपातिते, "कृत्तद्धितसमासाश्च" इति कृदन्तत्वात् प्रातिपदिकसंज्ञायाम्, प्रथमैकवचनविवक्षायां सौ, "अतोऽम्" इति सोरमादेशे "अमि पूर्वः" इति पूर्वरूपे च 'भोज्यम्' इति भक्ष्ये रूपेऽर्थे सम्पन्नम् । भोग्यमन्यत् । भुज्धातोः "ऋहलोर्ण्यत्" इति ण्यति, णतयोर्लोपे, ण्यतो यस्य आर्धधातुकत्वात् "पुगन्तलघूपधस्य च" इति लघूपधगुणे, "चजोः कु घिण्यतोः" इति जस्य कुत्वे कृदन्तत्वात्प्रातिपदिकत्वे, सोरमि, पूर्वरूपे च तत्सिद्धिः । इति कृत्यप्रक्रिया ।

ण्वुल्तृचौ । अनयोर्वर्तमानकालादन्यत्र न प्रयोग इति भाष्यम् । युवोरनाकाविति । युश्च वुश्च युवु । समाहारद्वन्द्वे सौत्रं पुंस्त्वमेकत्वं च । तदाह–यु वु एतयोरिति । कारकः । करोतीति विग्रहे कृधातोः "कर्तरि कृत्" इति कर्त्रर्थे "ण्वुल्तृचौ" इति ण्वुलि "चुटू" इति णस्येत्संज्ञायां लस्य "हलन्त्यम्" इत्यनेनेत्संज्ञायां "तस्य लोपः" इत्यनेन णलयोर्लोपे, "युवोरनाकौ" इत्यनेन वोः स्थाने अकादेशे, तस्य "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते, तम्बाधित्वा "अचो ञ्णिति" इति वृद्धौ, आ इति जाते "उरण् रपरः" इति रपरे कृदन्तत्वात्प्रातिपदिकत्वे सौ, रुत्वे विसर्गे

**ल्युणिन्यचः** ३।१।१३४ नन्द्यादेर्ल्युः, ग्राह्यादेर्णिनिः, पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । लवणः । ग्राही । स्थायी । मन्त्री । पचादिराकृतिगणः । **इगुपधज्ञाप्रीकिरः कः** ३।१।१३५ एभ्यः कः स्यात् । बुधः । कृशः ।

---

च 'कारकः' इति रूपम् । कर्ता । करोतीति विग्रहे कृधातोः "ण्वुल्तृचौ" इति तृचि, चगते, तृच आर्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे रपरे च 'कर्तृ' इति भूते तस्मात् सौ, विभक्तिकार्ये च 'कर्ता' इति रूपम् । नन्दिग्रहीति । नन्दि ग्रहि पच एषां द्वन्द्वः । नन्दिग्रहिपचाः आदिर्येषामिति विग्रहः । आदिशब्दस्य प्रत्येकमन्वयः फलति । ल्यु, णिनि, अच् एषां द्वन्द्वात् प्रथमा । यथासंख्यमन्वयः । तदाह—नन्द्यादेरिति । नन्दि इति ण्यन्तग्रहणम् । तदाह—नन्दयतीति नन्दनः । टुनदि—समृद्धौ, धातोरनुबन्धलोपे, "इदितो नुम्धातोः" इति मित्वादन्त्यादचः परे नुमि, उमि गते, अनुस्वारे, परसवर्णे, 'नन्द' इति जाते, तस्माद् "हेतुमति च" इति णिचि, अनुबन्धलोपे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां तस्मात् 'नन्दि' इति धातोः "कर्तरि कृत्" इति कर्त्रर्थे "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति ल्युप्रत्यये, लगते, "युवोरनाकौ" इति योरनादेशे, तस्य आर्धधातुकत्वात् "णेरनिटि" इति णिलोपे संयोगे विभक्तिकार्ये च कृते तत्सिद्धिः । जनार्दनः । जन उपपदक—अर्द-धातोः नन्द्यादित्वाल्ल्युप्रत्यये, योरनादेशे, संयोगे विभक्तिकार्ये च तत्सिद्धिः । लवणः । लूधातोर्नन्द्यादित्वात् ल्युप्रत्यये लगते, योरनादेशे, तस्यार्धधातुकत्वात् गुणे, अवादेशे विभक्तिकार्ये च तत्सिद्धिः । ग्राही । ग्रह—उपादाने धातोः "कर्तरि कृत्" इति कर्त्रर्थे, "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति ग्रहादित्वात् णिनि, णस्येत्संज्ञायां लोपे च "अत उपधायाः" इति उपधावृद्धौ, संयुक्ते कृते, कृते च विभक्तिकार्ये, 'ग्राही' इति रूपम् । स्थायी । ष्ठा गतिनिवृत्तौ, इति धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति णिनि, णगते, ष्ठाधातोः, "धात्वादेः षः सः" इति षस्य सत्वे, ष्टुत्वे गते, "आतो युक् चिण्कृतोः" इति युगागमे, उकि गते, कित्वात् स्थाधातोरन्तावयवे जाते, संयुक्ते कृते, कृदन्तत्वात्प्रातिपदिकत्वे, सौ, तस्य "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति लोपे, "सौ च" इति इन्नन्तस्योपधाया दीर्घत्वे "नलोपः प्रातिपदिकान्तस्य" इति नलोपे च कृते तत्सिद्धिः । मन्त्री । मत्रि गुप्तपरिभाषणे धातोः ग्रह्यादित्वात् णिनि, णगते, मत्रिधातोरिदित्वात् नुमागमे, विभक्तिकार्ये च कृते तत्सिद्धिः । पचादिराकृतिगण इति । पच वप इत्यादिकतिपयधातून् पठित्वा आकृतिगण इति गणपाठे वचनादिति भावः । इगुपधज्ञेति । 'कॄ विक्षेपे' इत्यस्य इत्वे रपरत्वे च किर् इति रेफान्तम् । इगुपध, ज्ञा, प्री, किर्, एषां द्वन्द्वात्पञ्चमी । कित्वं गुणनिषेधार्थम् । बुधः । बोधतीति विग्रहे बुध् धातोः "कर्तरि कृत्" इति कर्त्रर्थे "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये, "लशक्वतद्धिते" इति कस्येत्संज्ञायां "तस्य लोपः"

ज्ञः । प्रियः । किरः ॥ आतश्चोपसर्गे ३।१।१३६ प्रज्ञः । सुग्लः । गेहे कः ३।१।१४४ गेहे कर्तरि ग्रहेः कः स्यात् । गृहम् । कर्मण्यण् ३।२।१ कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् । कुम्भं करोति कुम्भकारः ॥ आतोऽनुपसर्गे कः ३।२।३

---

इति लोपे, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "पुगन्तलघूपधस्य च" इति गुणे प्राप्ते, "क्ङिति च" इति निषेधे संयुक्ते च कृते कृदन्तत्वात्प्रातिपदिकत्वे विभक्तिकार्ये च कृते तत्सिद्धिः । कृशः । एवमेव कृश्धातोः इगुपधत्वात् के प्रत्यये कित्वाद् गुणाभावे विभक्तिकार्ये च तत्सिद्धिः । ज्ञः । जानातीति ज्ञः । ज्ञाधातोः "इगुपधज्ञाप्रीकिरः कः" इति के, कस्येत्संज्ञायां लोपे च "आतो लोप इटि च" इत्यालोपे, संयोगे विभक्तिकार्ये च कृते 'ज्ञः' इति भवति । प्रियः । प्रीणातीति प्रियः, इत्यत्र प्रीधातोः "इगुपधज्ञाप्रीकिरः कः" इति के प्रत्यये, कगते, "अचि श्नुधातुभ्रुवाम्" इति इयङि, अङो लोपे, संयोगे, विभक्तिकार्ये च कृते तत्सिद्धम् । किरः । किरतीति किरः इति विग्रहे कृधातोः "इगुपधज्ञाप्रीकिरः कः" इति के, कलोपे, कित्वाद्गुणाभावे "ऋत इद्धातोः" इति इत्वे "उरण् रपरः" इति रपरत्वे संयोगे, विभक्तिकार्ये च कृते तत्सिद्धिः । आतश्चोपसर्गे इति । उपसर्गे उपपदे आदन्ताद्धातोः कः स्यादिति फलति । प्रज्ञः । प्रकर्षेण जानातीति प्रज्ञः । प्रोपसर्गात् ज्ञाधातोः "आतश्चोपसर्गे" इति के कगते कित्वात् आर्धधातुकत्वाच्च "आतो लोप इटि च" इति आलोपे कृते, संयोगे विभक्तिकार्ये च कृते 'प्रज्ञः' इति रूपम् । सुग्लः । सुष्ठु ग्लायतीति सुग्लः इत्यत्र सुपूर्वकग्लैधातोः "आतश्चोपसर्गे" इति के, कलोपे, "आदेच उपदेशेऽशिति" इत्यैकारस्य आत्वे "आतो लोप इटि च" इत्याकारलोपे संयोगे विभक्तिकार्ये च कृते, 'सुग्लः' इति रूपम् । गेहे क इति । "विभाषा ग्रहः" इत्यस्यापवादः । गृहम् । गृह्णाति धान्यादिकम् इति गृहम् । ग्रह् धातोः "गेहे कः" इति के, कगते "ग्रहिज्यावयि" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे, "पुगन्तलघूपधस्य च" इति गुणे प्राप्ते, "क्ङिति च" इति गुणनिषेधे, संयोगे, विभक्तिकार्ये च कृते 'गृहम्' इति रूपम् । कर्मण्यण् । कर्मण्युपपदे इति । "तत्रोपपदं सप्तमीस्थम्" इत्यत्र तत्रेत्यनेनैवं लभ्यत इति भावः । कुम्भं करोतीति । अस्वपदो लौकिकविग्रहोऽयम् । 'कुम्भ अस् कार' इत्यलौकिकविग्रहोऽयम् । 'कुम्भ अस् कार' इत्यलौकिकविग्रहवाक्ये सुबुत्पत्तेः प्रागेव कारकशब्देन कृदन्तेन कुम्भ अस् इति षष्ठ्यन्तस्य समासः इति वक्ष्यते । कुम्भकारः । अत्र कुम्भ इति कर्मणि उपपदे कृधातोः "कर्मण्यण्" इति अणि, णगते, "अचो ञ्णिति" इति वृद्धौ, "उरण् रपरः" इति रपरत्वे, कार इति जाते, 'कुम्भ अस् कार' इत्यत्र "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः" इति सुबुत्पत्तेः प्रागेव 'उपपदमतिङ्' इति समासे समासत्वात् "कृत्तद्धितसमासाश्च" इति 'कुम्भ अस् कार' इत्यस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इति असो लोपे, एकदेश-

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात् । अणोऽपवादः । आतो लोपः । गोदः । धनदः । कम्बलदः । अनुपसर्गे किम् ? गोसंदायः । "मूलविभुजादिभ्यः कः" मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः । चरेष्टः ३।२।१६ अधिकरणे उपपदे । कुरुचरः ॥ भिक्षासेनादायेषु च ३।२।१७ भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः । कृञो हेतुताच्छील्यानुलोम्येषु

---

विकृतन्यायेन समुदायात्सौ, रुत्वे विसर्गे च 'कुम्भकारः' इत्यस्य सिद्धिः । आतोऽनुपसर्गे इति । गोदः । गां ददातीति विग्रहे गो इति कर्मणि उपपदे "कर्मण्यण्" इति अणि प्राप्ते, तम्बाधित्वा "आतोऽनुपसर्गे कः" इति के, कलोपे, "उपपदमतिङ्" इति समासे, सुपो लुकि, 'गोदा अ' इति स्थिते "आतो लोप इटि च" इति आलोपे, संयोगे, विभक्तिकार्ये च 'गोदः' इति रूपम् । एवं धनं ददातीत्यत्र के धनदः । कम्बलं ददातीत्यत्र कम्बलोपपदे दाधातोः के, आतो लोपे च कम्बलदः इति च बोध्यम् । गोसन्दायः । अनुपसर्गे इत्युक्तत्वात् अत्र न कः, किन्तु "कर्मण्यण्" इति अणि, णगते, "आतो युक् चिण्कृतोः" इति युगागमे, उपपदसमासे सुपो लुक, समुदायात्सौ, रुत्वे, विसर्गे च तत्सिद्धिः । मूलविभुजः । मूल इति कर्मण्युपपदे, समुपसर्गकभुज्धातोः "मूलविभुजादिभ्यः कः" इति के, कलोपे, कित्वात् गुणाभावे, उपपदसमासे, समासावयवकसुपो लुकि, समुदायात्सौ, रुत्वे विसर्गे च तत्सिद्धिः । महीध्रः । महीं धरतीति विग्रहे महीति कर्मण्युपपदे धृधातोः "मूलविभुजादिभ्यः कः' इति के, कलोपे, कित्वाद्गुणाभावे, उपपदसमासे समासावयवकसुपो लुकि, 'मही धृ+अ' इति जाते "इको यणचि" इति यणि, विभक्तिकार्ये च 'महीध्रः' इति रूपम् । एवमेव 'कुध्रः' इत्यत्रापि बोध्यम् । चरेष्ट इति । ट इति च्छेदः । अधिकरणे उपपदे इति शेषः । "अधिकरणे शेतेः" इत्यतस्तदनुवृत्तेरिति भावः । कुरुचर इति । कुरुषु चरतीति, कुरुचरः । अत्र अधिकरणे कुरुषु इत्युपपदे चर् धातोः "चरेष्टः" इति टप्रत्यये "चुटू" इति टस्येत्संज्ञायां लोपे च कृते उपपदसमासे सुपो लुकि, समुदायात्सौ, रुत्वे विसर्गे च तत्सिद्धिः । भिक्षा सेनादायेषु चेति । 'भिक्षा, सेना, आदाय एषु चोपपदेषु चरेष्टः स्यादित्यर्थः । भिक्षाचरः । भिक्षां चरतीति विग्रहः । अत्र भिक्षोपपदे चरधातोः "भिक्षासेनादायेषु च"इति टप्रत्यये, टलोपे, उपपदसमासे सुपो लुकि,समुदायात् सौ, रुत्वे विसर्गे च तत्सिद्धिः । एवं सेनां चरतीति सेनाचरः इत्यत्रापि बोध्यम् । सेनां प्रापयतीति तस्यार्थः । ल्यबन्तमिति । अत्र व्याख्यानमेव शरणम् । आदायचरः । आदायेत्युपपदे चर्धातोः "भिक्षासेनादायेषु च" इति टप्रत्यये, टलोपे, उपपदसमासे सुपो लुकि, समुदायात्सौ, रुत्वे विसर्गे च तत्सिद्धिः । लब्धं द्रव्यं गृहीत्वा चरतीति तस्यार्थः । कृञो हेतुताच्छिल्येति । हेतुः—कारणम् । आनुलोम्यम्—आराध्यचित्तानुवर्तनम् । बोत्येष्विति । कर्तुरेव प्रत्ययवाच्यत्वादिति भावः । व्याख्यानात् हेत्वादिषूपपदेष्विति नार्थः ।

३।२।२० एषु द्योत्येषु करोतेष्टः स्यात् ॥ अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८।३।४६ अदुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः स्यात् करोत्यादिषु परेषु । यशस्करी विद्या । श्राद्धकरः । वचनकरः ॥ एजेः खश् ३।२।२८ ण्यन्तादेजेः खश् स्यात् ॥ अरुर्द्विषदजन्तस्य मुम् ६।३।६७ अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते परे न त्वव्ययस्य । शित्त्वाच्छवादिः । जनमेजयतीति जनमेजयः ॥ प्रियवशे वदः खच् ३।२।३८ प्रियंवदः । वशंवदः ॥

---

कर्मण्युपपदे इत्यपि द्रष्टव्यम् । "कुप्वोः" इति जिह्वामूलीयमाशङ्क्य आह—अतः कृकमीति । अतः इति पञ्चमी । "विसर्जनीयस्य सः" इति "नित्यं समासेऽनुत्तरपदस्थस्य" इति चानुवर्तते । तदाह—अदुत्तरस्येत्यादिना यशस्करी विद्या । यशः करोतीति विग्रहे यश इति कर्मण्युपपदे, हेतुद्योत्ये कृधातोः "कृञो हेतुताच्छील्यानुलोम्येषु" इत्यनेन टे प्रत्यये, टस्येत्संज्ञायां लोपे च कृते, टगताकारस्य आर्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे अकारे "उरण् रपरः" इति रपरत्वे च जाते 'कर' इति सम्पन्ने, 'यशस् अस् कर' इत्यलौकिकविग्रहे "उपपदमतिङ्" इति समासे, "कृत्तद्धितसमासाश्च" इति प्रातिपदिकत्वे "सुपो धातुप्रातिपदिकयोः" इति असो लुकि, एकदेशविकृतन्यायेन प्रातिपदिकत्वस्य सत्वात्समुदायात्सौ, तस्मिन् परे स्त्रीत्वविवक्षायां "टिड्ढाणञ्द्वयसज्दघ्नञ्" इत्यादिना टित्वान्ङीपि, अनुबन्धलोपे, "यचि भम्" इति भसंज्ञायाम् "यस्येति च" करगतरेफोत्तरवर्तिन अकारस्य लोपे, संयोगे कृते "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति स् लोपे, यशसः सकारस्य "ससजुषोरुः" इति रुत्वे "खरवसानयोर्विसर्जनीयः" इति विसर्गे, तस्य विसर्गस्य "कुप्वोः" इति जिह्वामूलीये प्राप्ते, तम्बाधित्वा "अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" इत्यनेन विसर्गस्य नित्यं सत्वे जाते 'यशस्करी 'इति सिद्धम् । श्राद्धकरः । श्राद्धं करोति तच्छीलः इति विग्रहः । श्राद्धमिति कर्मण्युपपदे ताच्छील्यार्थे द्योत्ये "कृञो हेतुताच्छील्यानुलोम्येषु" इति टप्रत्यये, टगते अस्य आर्धधातुकत्वाद्गुणे रपरे, उपपदसमासे, सुपो लुकि, समुदायात्सौ, रुत्वे विसर्गे च तत्सिद्धिः । एवं वचनं करोतीति विग्रहे आनुलोम्ये द्योत्ये, टप्रत्यये कृते साधनिका ऊह्या । एजेः खश् । एजेरिति ण्यन्तस्य एज्धातोर्ग्रहणम् । नत्विका निर्देशः, व्याख्यानादिति भावः । खकारशकारावितौ । कर्मण्युपपदे इत्यपि ज्ञेयम् । अरुर्द्विषदजन्तस्य मुमिति । अरुस् , द्विषत् , अजन्त एषां समाहारद्वन्द्वात् षष्ठी । "अलुगुत्तरपदे"इत्यधिकारात् उत्तरपदे इति लभ्यते । "खित्यनव्ययस्य" इत्यतः खितीत्यनुवृत्तम् । खितः प्रत्ययत्वात्तदन्तविधिः । तदाह—खिदन्ते उत्तरपदे इति । जनमेजयः । जनमिति कर्मण्युपपदे एजि इति ण्यन्तधातोः"एजेः खश्" इति खशि, खस्य शस्य चेत्संज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति खशोऽकारस्य सार्वधातुकसंज्ञायां तस्मिन् परे "कर्तरि शप्" इति शपि, शपयोरित्संज्ञायां लोपे

**आत्ममाने खश्च ३।२।८३** स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् । चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितम्मन्यः । पण्डितमानी । **अन्येभ्योऽपि दृश्यन्ते ३।२।७५** मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः । **नेड् वशि कृति ७।२।८** वशादेः कृत इण् न स्यात् । शॄ हिंसायाम् । सुशर्मा । प्रातरित्वा ॥

---

च शपोऽकारस्य सार्वधातुकत्वात् एजेरिकारस्य गुणे, आयादेशे, उपपदसमासे, सुपो लुकि, 'जन एजय' इति भूते "अरुर्द्विषदजन्तस्य मुम्" इति खिदन्ते एजय इत्युत्तरपदे अजन्तस्य जन इत्यस्य मुमागमे, उमि गते, मस्य अनुस्वारे परसवर्णे च कृते, समुदायात् विभक्तिकार्ये च कृते 'जनमेजयः' इति सिद्धम्। प्रियवशे वदः खच्। प्रिये वशे च कर्मण्युपपदे वद्धातोः खजित्यर्थः । प्रियम्वदः । प्रियं वदतीति प्रियमिति कर्मण्युपपदे वद्धातोः खचि, खचयोर्लोपे, उपपदसमासे सुपो लुकि, "अरुर्द्विषदजन्तस्य मुम्" इति खिदन्ते वद इत्युत्तरपदे पूर्वपदस्य प्रिय इत्यस्य मुमि, उमि गते, अनुस्वारे, परसवर्णे च कृते समुदायस्य विभक्तिकार्ये च तत्सिद्धिः । एवं वशं वदतीति 'वशंवदः' इत्यत्रापि बोध्यम् । आत्ममाने खश्चेति । आत्मनः-स्वस्य, मानः-मननम्, आत्ममानः । तदाह—स्वकर्मके मनने इति । पण्डितम्मन्यः । पण्डितमिति कर्मण्युपपदे, मन्धातोः "आत्ममाने खश्च" इति खशि, खशयोरित्सञ्ज्ञायां लोपे च कृते खशोऽकारस्य "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसञ्ज्ञायां "दिवादिभ्यः श्यन्" इति श्यनि, शकारनकारयोरित्सञ्ज्ञायां लोपे च जाते, "अतो गुणे" इति पररूपे 'मन्य' इति जाते, "उपपदमतिङ्" इत्युपपदसमासे सुपो लुकि, "अरुर्द्विषदजन्तस्य मुम्" इति पूर्वपदस्य मुमागमे, उमि गते, मस्यानुस्वारे परसवर्णे च कृते, समुदायस्य विभक्तिकार्ये च तत्सिद्धम् । पण्डितमानी । आत्मानं पण्डितं मन्यते इत्यत्र कर्मण्युपपदे मन्धातोः "आत्ममाने खश्च" इति णिनि, णगते, "अत उपधायाः" इति मनोऽकारस्य वृद्धौ, उपपदसमासे, सुपो लुकि, विभक्तिकार्ये च तत्सिद्धिः । अन्येभ्योऽपि दृश्यन्ते इति । "विजुपे छन्दसि" "आतो मनिन् क्वनिब्वनिपश्च" इत्यधिकारे इदं सूत्रम् । मनिनि अन्त्यो नकार इत्, इकार उच्चारणार्थः । क्वनिपि वनिपि च पकार इत्, इकार उच्चारणार्थः । नेड्वशि कृति । षष्ठ्यर्थे सप्तमी । वशा कृद्विशेष्यते । तदादिविधिः । तदाह—वशादेरिति । सुशर्मा । सुष्ठु शृणाति सुशर्मा इत्यत्र सुपूर्वकशॄधातोः "अन्येऽपि दृश्यन्ते" इति मनिनि, इनो लोपे, 'शॄ मन्' इति जाते, मनिनः "आर्धधातुकं शेषः" इत्यार्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे, "उरण् रपरः" इति रपरत्वे, "आर्धधातुकस्येड्वलादेः" इति इटि प्राप्ते, "नेड्वशि कृति" इत्यनेन निषिद्धे उपपदसमासे,समासत्वात्प्रातिपदिकत्वे सावागते, उलोपे "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तस्योपधाया दीर्घत्वे, "हल्ङ्याब्भ्यः" इति सुलोपे, 'नलोपः प्रातिपदिकान्तस्य" इति नलोपे, 'सुशर्मा' इति रूपम् । प्रातरित्वा । प्रातरित्युपपदे इण् धातोः "अन्येभ्योऽपि दृश्यन्ते"

विड्वनोरनुनासिकस्याऽऽत् ६।४।४१ अनुनासिकस्याऽऽत्स्यात् ॥ विजायत इति विजावा । ओणृ अपनयने । अवावा । विच् । रुष रिष हिंसायाम् । रोट् । रेट् । सुगण् ॥ क्विप् च ३।२।७६। अयमपि दृश्यते । उखास्रत् । पर्णध्वत् । वाहभ्रट् ॥

---

इति क्वनिपि, कस्य पस्य चेत्सञ्ज्ञायां लोपे च इकारे गते 'प्रातर् इ वन्' इति भूते "ह्रस्वस्य पिति कृति तुक्" इति तुकि, उकि गते, क्विबादन्त्यावयवे, उपपदसमासे सुपो लुकि, 'प्रातरित्वन्' इत्यस्य परे सौ अन उपधादीर्घे, सलोपे नलोपे च 'प्रातरित्वा' इति रूपम् । विड्वनोरनुनासिकस्येति । विड्वनोरिति सप्तमी । अनुनासिकस्य आदिति छेदः । विजावा । विपूर्वकजन्धातोः "अन्यभ्योऽपि दृश्यन्ते" इति वनिपि, इपि गते 'विजन् वन्' इति भूते "विड्वनोरनुनासिकस्यात्" इति अनुनासिकस्य अनो नकारस्य आत्वे सवर्णदीर्घे 'विजावन्' इति जातेऽस्मात्सौ, "सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घे, सलोपे च 'विजावा' इति रूपम् । अवावा । ओणृ अपनयने धातोः "अन्येभ्योऽपि दृश्यन्ते" इति वनिपि, धातोः ऋगते, वनिप इपि गते, 'ओण् वन्' इति स्थिते, "विड्वनोरनुनासिकस्यात्" इति ओणो नकारस्य आत्वे 'ओ आ वन्' इति जाते "एचोऽयवायावः" इत्यवादेशे संयोगे 'अवावन्' इति कृदन्तप्रातिपदिकत्वात्सौ, उलोपे, "सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घे, "हल्ङ्याब्भ्यः" इति सलोपे, "नलोपः प्रातिपदिकान्तस्य" इति नलोपे, 'अवावा' इति रूपम् । राट् । रुष् हिंसायामिति धातोः "अन्येभ्योऽपि दृश्यन्ते" इति विचि, इचो लोपे, वस्य "आर्धधातुकं शेषः" इत्यार्धधातुकसञ्ज्ञायाम् "अपृक्त एकाल् प्रत्ययः" इति वस्य अपृक्तसंज्ञायां "वेरपृक्तस्य" इति वलोपे, प्रत्ययलक्षणेन आर्धधातुके परे "पुगन्तलघूपधस्य च" इति लघूपधगुणे कृदन्तत्वात्प्रातिपदिकत्वे, सौ, उलोपे, "हल्ङ्याब्भ्यः" इति सलोपे "झलां जशोऽन्ते" इति षस्य डत्वे, "वावसाने" इति वा टत्वे च कृते 'रोट्' इति । एवमेव रिष् हिंसायामिति धातोर्विचि, रेट् । तथैव सुपूर्वकगणसंख्याने धातोर्विचि—सुगण् । क्विप् चेति । अयमपीति । सर्वधातुभ्यः सोपपदेभ्यश्च छन्दसि लोके च क्विप् दृश्यते इत्यर्थः । उखास्रत् । उखायाः स्रंसते इति विग्रहः । उखा इत्युपपदे स्रंस् धातोः "क्विप् च" इति क्विपि, क्विपः सर्वापहारे, "अनिदितां हल उपधायाः क्ङिति" इति नलोपे, उपपदसमासे, समासावयवसुपो लुकि, समासत्वात्प्रातिपदिकत्वे सौ, उलोपे, "हल्ङ्याब्भ्यः" इति सलोपे, "वसुस्रंसुध्वंस्वनडुहां दः" इति स्रसः सकारस्य दत्वे, "वावसाने" इति चर्त्वेन तकारे 'उखास्रत्' इति रूपम् । पर्णध्वत् । पर्णात् ध्वंसते इति विग्रहः । "क्विप् च" इति क्विपि, क्विपः सर्वापहारे, "अनिदितां हल उपधायाः क्ङिति" इति नलोपे, उपपदसमासे, सुपो लुकि, समुदायात्सौ, तस्य लोपे "वसुस्रंसुध्वंस्वनडुहां दः" इति सस्य दत्वे चर्त्वे च कृते 'पर्णध्वत्' इति रूपम् । वाहभ्रट् । वाहात् भ्रश्यते इति विग्रहः । वाह इत्युपपदे भ्रश् धातोः "क्विप् च" इति क्विपि, क्विपः सर्वापहारे, "अनि-

**सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८** अजात्यर्थे सुपि धातोर्णिनिः स्यात्, ताच्छील्ये द्योत्ये। उष्णभोजी॥ **मनः ३।२।८२** सुपि मन्यतेर्णिनिः स्यात्। दर्शनीयमानी॥ **खित्यनव्ययस्य ६।३।६६** खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्। ततो मुम्। कालिमन्या॥ **करणे यजः ३।२।८५** करणे उपपदे भूतार्थयजेर्णिनिः स्यात् कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी॥ **दृशेः क्वनिप् ३।२।९४**

---

दितां हल उपधायाः क्ङिति" इति नलोपे, उपपदसमासे, सुपो लुकि, समुदायात्सौ, तस्य लोपे, "व्रश्चभ्रस्ज०" इत्यादिना शस्य षत्वे तस्य "झलां जशोऽन्ते" इति डत्वे, "वावसाने" इति टत्वे च कृते उक्तं रूपम्। सुप्यजाताविति। "सुपि स्थः" इत्यतः सुपीत्यनुवृत्तौ पुनः सुब्ग्रहणमुपसर्गेऽपि विधानार्थम्। अन्यथा "आतोऽनुपसर्गे" इत्यत अनुपसर्गे इत्यनुवर्तेत। तद्ध्वनयन्नुदाहरति—उष्णभोजी। उष्णं भोक्तुं शीलमस्यास्तीति उष्णमिति जातिभिन्ने कर्मण्युपपदे भुज् धातोः "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनि, णगते आर्धधातुकसंज्ञायां "पुगन्तलघूपधस्य च" इति लघूपधगुणे, उपपदसमासे, सुपो लुकि, समुदायात्सौ, उगते, "सर्वनामस्थाने चासम्बुद्धौ" इत्युपधाया दीर्घत्वे "हल्ङ्याब्भ्यः" इति सलोपे, "नलोपः प्रातिपदिकान्तस्य" इति नलोपे, 'उष्णभोजी' इति रूपम्। मनः। दैवादिकस्यैव मनेर्ग्रहणम्, न तु तानादिकस्य बहुलग्रहणानुवृत्तेः। तदाह—सुपि मन्यतेरिति। दर्शनीयमानी। दर्शनीयमात्मानं मन्यते इत्यत्र दर्शनीयमिति कर्मण्युपपदे मन् धातोः "मनः" इति णिनि, णलोपे, "अत उपधायाः" इति उपधावृद्धौ, उपपदसमासे सुपो लुकि, संयोगे च कृते 'दर्शनीयमानिन्' इति भूते तस्मात्सौ, उलोपे, "सर्वनामस्थाने चासम्बुद्धौ" इति नान्तस्योपधाया दीर्घत्वे "हल्ङ्याब्भ्यः" इति सलोपे, "नलोपः प्रातिपदिकान्तस्य" इति नलोपे च कृते तत्सिद्धिः। खित्यनव्ययस्य। ह्रस्वः स्यादिति। "इको ह्रस्वोऽङ्यो गालवस्य" इत्यतस्तदनुवृत्तेरिति भावः। अत्र ह्रस्वश्रुत्या अच इत्युपस्थितं द्रष्टव्यम्। ततो मुमिति। पूर्वं ह्रस्वे कृते ततो मुमित्यर्थः। कालिम्मन्या। आत्मानं कालीम्मन्यते इत्यत्र कालीमिति कर्मण्युपपदे मन्धातोः "आत्ममाने खश्च" इति खशि, खशयोरित्संज्ञायां लोपे च कृते, "तिङ्शित्सार्वधातुकम्" इति खशोऽकारस्य सार्वधातुकसंज्ञायाम् "दिवादिभ्यः श्यन्" इति श्यनि, शनयोरित्संज्ञायां लोपे च कृते, "अतो गुणे" इति पररूपत्वे उपपदसमासे सुपो लुकि, "खित्यनव्ययस्य" इति पूर्वपदस्य कालीत्यस्य ह्रस्वत्वे, "अरुर्द्विषदजन्तस्य मुम्" इति मुमि उमि गते, मस्यानुस्वारे परसवर्णे च कृते, 'कालिम्मन्य' इति जाते स्त्रीत्वविवक्षायाम् "अजाद्यतष्टाप्" इति टापि, टपयोरित्संज्ञायां लोपे च कृते "अकः सवर्णे दीर्घः" इति सवर्णदीर्घे तस्मात्सौ, उगते, "हल्ङ्याब्भ्यः" इति सलोपे च तत्सिद्धिः। करणे यज इति। सोमे-

कर्मणि भूते। पारं दृष्टवान् पारदृश्वा॥ राजनि युधिकृञः ३।२।९५ क्वनिप्स्यात्। युधिरन्तर्भावितण्यर्थः। राजानं योधितवान् राजयुध्वा। राजकृत्वा॥ सहे च ३।२।९६ कर्मणीति निवृत्तम्। सह योधितवान् सहयुध्वा। सहकृत्वा॥ सप्तम्यां जनेर्डः ३।२।९७ तत्पुरुषे कृति बहुलम् ६।३।१४ ङेरलुक् स्यात्। सरसिजम्,

---

नेति। सोमाख्यलताविशेषरसेन यागं कृतवानित्यर्थः। सोमयाजी। सोमेनेति करणे उपपदे भूतार्थे कर्तर्यर्थे यज्धातोर्णिनि प्रत्यये, णगते "अत उपधायाः" इति वृद्धौ, उपपदसमासे सुपो लुकि, 'सोमयाजिन्' इति भूते तस्मात्सौ, उलोपे, "सौ च" इति नान्तस्योपधाया दीर्घत्वे, "हल्ङ्याब्भ्यः" इति सलोपे, "नलोपः प्रातिपदिकान्तस्य" इति नलोपे च कृते "सोमयाजी" इति सिद्धम्। एवमेव-'अग्निष्टोमयाजी' इत्यत्र बोध्यम्। अग्निष्टोमाख्ययागेन अपूर्वं भावितवानित्यर्थः। दृशेः क्वनिविति। "आतो मनिन्क्वनिब्वनिपश्च" "अन्येभ्योऽपि दृश्यन्ते" इत्येव क्वनिपि सिद्धे तत्सहचरित-मनिनादिव्यावृत्त्यर्थमिदं, सोपपदाणादिबाधनार्थञ्च। निष्ठा तु भवत्येव, सोपपदप्रत्यय-स्यैवात्र पुनः क्विग्रहणेन निवृत्तेः। पारदृश्वा। पारमिति कर्मण्युपपदे दृशधातोः "दृशेः क्वनिप्" इति क्वनिपि, कस्य पस्य इकारस्य चेत्संज्ञायां लोपे च कृते कित्वाद्गुणाभावे, 'दृश्वन्' इति भूते, कर्मणा-पारमित्यनेन सह उपपदसमासे सुपो लुकि, समुदायात्सौ उलोपे "सर्वनामस्थाने चासम्बुद्धौ" इति उपधादीर्घे, सुलोपे, नलोपे च "पारदृश्वा" इति रूपम्। राजनि युधिकृञ इति। युधि कृञ् अनयोः समाहारद्वन्द्वात्पञ्चमी। क्वनिप् स्यादिति। राजनि कर्मण्युपपदे भूतार्थाद्युधेः कृञश्च क्वनिप् स्यादित्यर्थः। राजयुध्वा। राजानमिति कर्मण्युपपदे युध् धातोः "राजनि युधिकृञः" इति क्वनिपि, अनुबन्धलोपे, कित्वाद्गुणाभावे उपपदसमासे सुपो लुकि, "नलोपः प्रातिपदिकान्तस्य" इति नलोपे, समुदायात्सौ, विभक्तिकार्ये च तत्सिद्धिः। राजकृत्वा। राजानं कृतवानित्यर्थः। अत्र कृञ्धातोः क्वनिपि, अनुबन्धलोपे, "ह्रस्वस्य पिति कृति तुक्" इति तुगागमे कृत्वन् इति जाते, राजानमिति कर्मणा उपपदसमासे सुपो लुकि विभक्तिकार्ये च तत्सिद्धिः। सहे चेति। सहे उपपदे युधिकृञ्भ्यां क्वनिबित्यर्थः। सहयुध्वा। सहोपपदे युध्धातोः "सहे च" इति क्वनिपि, अनुबन्धलोपे, कित्वाद्गुणाभावे, उपपदसमासे, समुदायात्सौ, उलोपे, "सर्वनामस्थाने चासम्बुद्धौ" इति उपधादीर्घे, "हल्ङ्याब्भ्यः" इति सुलोपे, "नलोपः प्रातिपदिकान्तस्य" इति नलोपे, 'सहयुध्वा' इति रूपम्। सहकृत्वा। सह कृतवान् इति 'सहकृत्वा' अत्र सहोपपदे कृधातोः "सहे च" इति क्वनिपि, अनुबन्ध-लोपे, "ह्रस्वस्य पिति कृति तुक्" इति तुगागमे, उकि गते, 'सहकृत्वन्' इति भूते तस्मात्सौ, विभक्तिकार्ये च कृते उक्तरूपस्य सिद्धिः। सप्तम्यां जनेर्ड इति। सप्तम्यन्ते उपपदे जनेः भूतार्थात् ड इत्यर्थः। तत्पुरुषे कृतीति। तत्पुरुषे सप्तम्या बहुलमलुक् स्यात् कृदन्ते उत्तरपदे संज्ञायामित्यर्थः। सरसिजम्। सरसि जातम् सरसिजम्, अत्र सप्तम्य-

सरोजम् ॥ उपसर्गे च संज्ञायाम् ३।२।९९ 'प्रजा स्यात्सन्ततौ जने' ॥ क्तक्तवतू निष्ठा १।१।२६ एतौ निष्ठासंज्ञौ स्तः ॥ निष्ठा ३।२।१०२ भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र "तयोरेव" इति भावकर्मणोः क्तः । "कर्तरि कृत्" इति कर्तरि क्तवतुः । उकारावितौ । स्नातं मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान् विष्णुः ॥ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८।२।४२ रदाभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठा-

---

न्ते सरसि इत्युपपदे जन्धातोः "सप्तम्यां जनेर्डः" इति डे, "चुटू" इति डस्येत्संज्ञायां लोपे च कृते अ इत्यवशिष्टे, डित्वसामर्थ्यादभस्यापि टेर्लोपे, उपपदसमासे, "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति सप्तम्याः–ङेर्लोपे प्राप्ते, "तत्पुरुषे कृति बहुलम्" इति ङेरलुकि, एकदेशविकृतन्यायेन समुदायस्य प्रातिपदिकत्वात्सौ, "अतोऽम्" इति सोरमि, "अमि पूर्वः" इति पूर्वरूपे 'सरसिजम्' इतिरूपम् । "तत्पुरुषे कृति बहुलम्" इति बहुलग्रहणात् "सुपो धातुप्रातिपदिकयोः" इति सप्तम्याः—ङेर्लुकि च, सरस् शब्दावयवस्य सस्य रुत्वे, उत्वे, गुणे च 'सरोजम्' इति । उपसर्गे च संज्ञायामिति । "जनेर्डः" इति शेषः, संज्ञायामिति समुदायोपाधिः । प्रजा । प्रोपसर्गकजन्धातोर्डप्रत्यये, "चुटू" इति डस्येत्संज्ञायां "तस्य लोपः" इति लोपे च कृते डित्वसामर्थ्यादभस्यापि टेर्लोपे, "अजाद्यतष्टाप्" इति टापि, टस्य पस्य चेत्संज्ञायां लोपे च "अकः सवर्णे दीर्घः" इति दीर्घे, सौ, उलोपे, "हल्ङ्याब्भ्यः" इति सलोपे च कृते 'प्रजा' इति रूपम् । क्तक्तवतू निष्ठा । क्त, क्तवतु अनयोर्द्वन्द्वः । निष्ठेति प्रत्येकाभिप्रायमेकवचनम् । निष्ठा । "भूते" इति "धातोः" इति चाधिकृतम् । तदाह—भूतार्थेत्यादि । भावकर्मणोः क्त इति । तथा च क्तप्रत्ययविषये कर्तरीति न सम्बध्यते इति भावः । कर्तरि क्तवतुरिति । कृत्यक्तखलर्थानामेव भावकर्मणोर्विधानादिति भावः । स्नातं मया । स्नाधातोः "निष्ठा" इति निष्ठाप्रत्यये प्राप्ते, का नाम निष्ठा इति जिज्ञासायां "क्तक्तवतू निष्ठा" इति निष्ठासंज्ञा क्तक्तवत्वोरिति उभयोः प्राप्तौ, "तयोरेव कृत्यक्तखलर्थाः" इति भावे क्तप्रत्यये कृते, कस्येत्संज्ञायां लोपे च औत्सर्गिकमेकवचने क्लीबत्वे च तत्सिद्धिः । मया इत्यत्र कर्त्रनभिहितत्वात्तृतीया । स्तुतस्त्वया विष्णुः । स्तुधातोः "तयोरेव कृत्यक्तखलर्थाः" इति कर्मणि, "निष्ठा" इत्यनेन क्ते, कलोपे, कित्वाद्गुणाभावे, 'स्तुतः' इति । विश्वं कृतवान् विष्णुः । अत्र कृधातोः "कर्तरि कृत्" इति कर्तरि, "निष्ठा" इत्यनेन क्तवतुप्रत्यये, कस्येत्संज्ञायां लोपे च क्तवतुगतोकारस्यापि लोपे, 'तवत्' इत्यवशिष्टे तस्यार्धधातुकत्वात् गुणे प्राप्ते "क्ङिति च" इति तस्य निषेधे, 'कृतवत्' इति भूते "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसंज्ञायां सौ, उलोपे, "उगिदचां सर्वनामस्थाने धातोः" इति नुमि, उमि गते, मित्वादन्त्याचः परे, "अत्वसन्तस्य चाधातोः" इत्युपधाया दीर्घे, "हल्ङ्याब्भ्यः" इति सलोपे, "संयोगान्तस्य लोपः" इति तलोपे 'कृतवान्' इति सम्पन्नम् । रदाभ्यां निष्ठातो न

पेक्षया पूर्वस्य धातोर्दस्य च। शृ हिंसायाम्। ॠत इत्। रपरः। णत्वम्। शीर्णः। भिन्नः। छिन्नः। **संयोगादेरातो धातोर्यण्वतः ८।२।४३** निष्ठातस्य नः स्यात्। द्राणः। ग्लानः॥ **ल्वादिभ्यः ८।२।४४** एकविंशतेर्लूञादिभ्यः प्राग्वत्। लूनः। ज्या धातुः। "ग्रहिज्या" इति सम्प्रसारणम्॥ **हलः ६।४।२** अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्तस्य दीर्घः स्यात्। जीनः॥ **ओदितश्च ८।२।४५** भुजो भुग्नः।

---

इति। रदाभ्यामित्यकाराद्युच्चारणार्थौ। तदाह—रेफदकाराभ्यामिति। निष्ठायाः त्, निष्ठात्, तस्य निष्ठातः इति विग्रहः। तदाह—निष्ठातस्येति। निष्ठातकारस्येत्यर्थः। नः स्यादिति। नकारः स्यादित्यर्थः। सूत्रे न इति प्रथमान्तम्। अकार उच्चारणार्थः। दकारस्य चेति। नकार इत्यनुषज्यते। शीर्णः। शृहिंसायामिति धातोः "तयोरेव कृत्य-क्तखलर्थाः" इति कर्मणि, "निष्ठा" इत्यनेन क्ते, कलोपे, किश्वाद्गुणाभावे, "ॠत इद्धातोः" इति ॠकारस्य इत्वे "उरण् रपरः" इति रपरत्वे "हलि च" इति दीर्घे 'शीर्त' इति जाते, "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति तकारस्य नकारे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति नस्य णत्वे, विभक्तिकार्ये च कृते तत्सिद्धिः। भिन्नः। भिद्धातोः "निष्ठा" इति क्ते, कलोपे, "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति निष्ठा-तस्य भिदो दस्य च नत्वे, कित्वाद्गुणाभावे विभक्तिकार्ये च तत्सिद्धिः। एवं छिद्धातोः क्ते, कलोपे, उभयत्र नकारे च 'छिन्नः' इति बोध्यम्। संयोगादेः। निष्ठातस्य नः स्या-दिति। शेषपूरणमिदम्। द्राणः। द्राधातोः "निष्ठा" इति क्ते, कलोपे, "संयोगादेरातो-धातोर्यण्वतः" इति निष्ठातस्य नत्वे, नस्य णत्वे, विभक्तिकार्ये च कृते 'द्राणः' इति रूपम्। ग्लानः। ग्लैधातोः "निष्ठा" इति क्ते, कलोपे, "आदेच उपदेशेऽशिति" इति ग्लैधातोरैच आत्वे, "संयोगादेरातो धातोर्यण्वतः" इति तस्य नत्वे, विभक्तिकार्ये च कृते 'ग्लानः' इति रूपम्। ल्वादिभ्यः। एकविंशतेरिति। क्र्यादिषु प्वादयो द्वाविंशतिः, तेषु आद्यं पूञं विहाय ल्वादिभ्य एकविंशतिरित्यर्थः। लूनः। लूञ् छेदने धातोः "निष्ठा" इति क्ते, कलोपे, "ल्वादिभ्यः" इति निष्ठातकारस्य नत्वे, विभक्तिकार्ये च तत्सिद्धिः। हलः। दिग्योगे पञ्चम्येषा। हलः परस्येति लभ्यते। "सम्प्रसारणस्य" इति सूत्रमनु-वर्तते। अङ्गस्येत्यधिकृतमिहानुवृत्तमावर्त्यते। एकमवयवषष्ठ्यन्तं हल इत्यत्रान्वेति, अङ्गावयवाद्धल इति लभ्यते। द्वितीयन्तु स्थानषष्ठ्यन्तं सम्प्रसारणेन विशेष्यते। तदन्तविधिः। "ढ्रलोपे" इत्यतो दीर्घ इत्यनुवर्तते। तदाह—अङ्गावयवादित्यादिना। जीनः। ज्या वयोहानौ, इति धातोः "निष्ठा" इति क्ते प्रत्यये कलोपे, "ग्रहिज्याव-यिव्यधि" इति सम्प्रसारणे, "सम्प्रसारणाच्च" इति पूर्वरूपे "हलः" इति जातसम्प्र-सारणस्य इकारस्य दीर्घे "ल्वादिभ्यः" इति निष्ठातस्य नत्वे, कृदन्तत्वात्प्रातिपदिकत्वे, सौ, उगते, सस्य रुत्वे, रेफस्य विसर्गत्वे च 'जीनः' इति रूपम्। ओदितश्च। ओकारेतो धातोः परस्य निष्ठातस्य नत्वमित्यर्थः। भुग्नः। भुजो धातोरोकारस्येत्संज्ञायां लोपे

टुओश्वि । उच्छूनः ॥ शुषः कः ८।२।५१ निष्ठातस्य कः स्यात् । शुष्कः ॥ पचो वः ८।२।५२ पक्वः । क्षै हर्षक्षये । क्षायो मः ८।२।५३ क्षामः ॥ निष्ठायां सेटि ६।४।५२ णेर्लोपः । भावितः । भावितवान् । दृह हिंसायाम् ॥ दृढः स्थूलबलयोः ७।२।२० स्थूले बलवति च निपात्यते ॥ दधातेर्हिः ७।४।४२ तादौ

---

च, तस्मात् "निष्ठा" इति क्तक्तवतोः प्राप्तयोः "तयोरेव कृत्यक्तखलर्थाः" इति कर्मणि क्तप्रत्यये, कलोपे, "ओदितश्च" इति निष्ठातकारस्य नत्वे, "पूर्वत्रासिद्धम्" इति तस्यासिद्धत्वात् "चोः कुः" इति जकारस्य कुत्वेन गकारे कृते, कृदन्तत्वात्प्रातिपदिकत्वेन सौ, उलोपे, सस्य रुत्वे, रेफस्य विसर्गत्वे च तत्सिद्धिः । उच्छूनः । उदुपसर्गकटुओश्विधातोः "निष्ठा" इति क्तप्रत्यये, कलोपे, "आदिर्ञिटुडवः" इति टोरित्संज्ञायां लोपे च "उपदेशेऽजनुनासिक इत्" इति ओकारस्येत्संज्ञायां लोपे च 'श्वि त' इति स्थिते "ओदितश्च" इति तकारस्य नत्वे, "पूर्वत्रासिद्धम्" इति तस्यासिद्धत्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणे, "सम्प्रसारणाच्च" इति पूर्वरूपे 'शु न' इति भूते "हलः" इति सम्प्रसारणस्य दीर्घे "श्वीदितः" इति इडागमाभावे, "शश्छोऽटि" इति छत्वे, उदः तकारस्य श्चुत्वेन चकारे, कृदन्तत्वात्प्रातिपदिकत्वे, सौ, उलोपे, सस्य रुत्वे, रेफस्य विसर्गत्वे च 'उच्छूनः' इति रूपम् । शुषः क इति । शुषः परस्य निष्ठातस्य कः स्यादिति फलितम् । शुष्कः । शुषधातोः "निष्ठा" इति क्ते, कलोपे, "शुषः कः" इति तस्य क आदेशे विभक्तिकार्ये च तत्सिद्धिः । पचो व इति । पचेः परस्य निष्ठातस्य वः स्यादित्यर्थः । पक्वः । पच्धातोः "निष्ठा" इति क्तप्रत्यये, कलोपे, "पचो वः" इति पचः परस्य निष्ठातस्य वादेशे "पूर्वत्रासिद्धम्" इति वादेशस्यासिद्धत्वेन झल्परत्वात् "चोः कुः" इति चस्य कत्वे, विभक्तिकार्ये च 'पक्वः' इति । क्षायो म इति । क्षै-क्षये इत्यस्मात्परस्य निष्ठातस्य मः स्यादित्यर्थः । क्षामः। क्षैक्षये इत्यस्माद्धातोः "निष्ठा" इत्यनेन क्ते प्रत्यये, कलोपे, "आदेच उपदेशेऽशिति" इति क्षै धातोरेचः आत्वे, "क्षायो मः" इति निष्ठातस्य मादेशे, विभक्तिकार्ये च कृते 'क्षामः' इति रूपम् । निष्ठायां सेटि । णेर्लोपः । शेषपूरणमिदम् । "णेरनिटि" इत्यतो णेरिति "आतो लोपः" इत्यस्माल्लोप इति चानुवर्तते इति भावः । 'अनिटि' इति निषेधादप्राप्ते आरम्भः । भावितः, भावितवान् । भूधातोः "हेतुमति च" इति णौ, णलोपे, "अचो ञ्णिति" इति भूधातोर्वृद्धौ, "एचोऽयवायावः" इत्यावादेशे, 'भावि' इति जाते, "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम्, तस्मात् "निष्ठा" इति कर्मणि क्ते, कर्तरि च क्तवतौ कृते, कलोपे, "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति इडागमे, टगते, "निष्ठायां सेटि" इति णिलोपे, कृदन्तत्वात्प्रातिपदिकत्वे विभक्तिकार्ये च कृते तत्सिद्धिः । दृढः स्थूलबलयोरिति । बलशब्दः अर्शआद्यजन्तः बलवत्परः। तदाह—बलवति चेति । दृढः । दृह् धातोः "निष्ठा" इति क्ते, कलोपे, अत्र इडभावो

किति । हितम् ॥ दो दद्घोः ७।४।४६ घुसंज्ञकस्य दा इत्यस्य दथ् स्यात् तादौ किति । चर्त्वम् । दत्तः । लिटः कानज्वा ३।२।१०६ क्वसुश्च ३।२।१०७ लिटः कानच् क्वसुश्च वा स्तः । "तङानावात्मनेपदम्" । चक्राणः । म्वोश्च ८।२।६५ मान्तस्य धातोर्नत्वं स्यात् म्वोः परतः । जगन्वान् ॥ लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४ अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः ।

निष्ठातकारस्य ढत्वं हलोपश्च निपात्यते, तेन ढढ इति जाते, कृदन्तत्वात्प्रातिपदिकत्वे सौ, उलोपे, सस्य रुत्वे, रेफस्य विसर्गत्वे च 'ढढः' इति । दधातेर्हिः । तादौ कितीति । शेषपूरणमिदम् । "धास्यति" इत्यतस्तदनुवृत्तेरिति भावः । हितम् । डुधाञ्—धारणपोषणयोः, इति धातोरनुबन्धलोपे, धाइत्यवशिष्टे, तस्मात् "निष्ठा" इति क्ते, कलोपे, 'धा त' इति भूते, "दधातेर्हिः" इत्यनेन धा इत्यस्य स्थाने हि आदेशे, कृदन्तत्वात्प्रातिपदिकत्वे, सौ, "अतोऽम्" इति सोरमि, "अमि पूर्वः" इति पूर्वरूपे, 'हितम्' इति सिद्धम् । दो दद्घोः । द इति षष्ठ्यन्तम् । तदाह—दा इत्यस्येति । दथ् इति च्छेदः तदाह—दथ् स्यादिति । तवर्गद्वितीयान्तोऽयमादेशः । तादौ कितीति । ति कितीत्यनुवृत्तेरिति भावः । चर्त्वमिति । "खरि च" इति थकारस्य तकार इत्यर्थः । दत्तः । डुदाञ् दाने धातुः, तस्यानुबन्धलोपे कृते, तस्मात्—दा इत्यस्मात्, "निष्ठा" इति क्तप्रत्यये, कस्येत्सञ्ज्ञायां लोपे च कृते, "दो दद्घोः" इति दा इत्यस्य स्थाने दथ् इत्यादेशे कृते "खरि च" इति थस्य चर्त्वेन तकारे 'दत्त' इति जाते तस्मात्सौ, उगते, सस्य रुत्वे, रेफस्य विसर्गत्वे च कृते 'दत्तः' इति रूपम् । लिटः कानज्वेति । "छन्दसि लिट्" "लिटः कानज्वा" "क्वसुश्च" त्रीणि इमानि सूत्राणि छन्दसि भूते च । चक्राणः । कृधातोः लिटि, "लिटः कानज्वा" इति लिटो लः स्थाने कानचि, कस्य चस्य चेत्सञ्ज्ञायां लोपे च कृते 'कृ आन' इति जाते "लिटि धातोरनभ्यासस्य" इति द्वित्वे, "पूर्वोऽभ्यासः" इति अभ्याससंज्ञायां "उरत्" इति अभ्यासऋवर्णस्य अत्वे, "उरण् रपरः" इति रपरत्वे, 'कर् कृ आन' इति जाते, "हलादिः शेषः" इति र्लोपे, "कुहोश्चुः" इति अभ्याससंज्ञककस्य चत्वे "इको यणचि" इति यणि, कृदन्तत्वात्प्रातिपदिकत्वे, सौ, उलोपे, रुत्वे विसर्गे च तत्सिद्धिः । जगन्वान् । गम् धातोः लिटि, "क्वसुश्च" इति लिटो लः स्थाने क्वसौ, कस्य उकारस्य चेत्संज्ञायां लोपे च कृते 'गम् वस्' इति भूते "लिटि धातोरनभ्यासस्य" इति द्वित्वे, अभ्याससंज्ञायां "हलादिः शेषः" इति मलोपे, "कुहोश्चुः" इति गस्य जकारे 'जगम् वस्' इति जाते, "म्वोश्च" इति मस्य नत्वे, कृदन्तत्वात्प्रातिपदिकत्वे तस्मात्सौ, उलोपे, "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमि, उमि गते, मित्वादन्त्यादचः परे जाते 'जगन्वन्स्' इति भूते, "सान्तमहतः संयोगस्य" इति सान्तसंयोगस्योपधाया दीर्घे "हल्ङ्याब्भ्यः" इति सुलोपे, "संयोगान्तस्य लोपः" इति स्लोपे, संयोगान्तस्य लोपस्य असिद्धत्वात् नलोपाभावे 'जगन्वान्' इति

शवादिः । पचन्तं चैत्रं पश्य ॥ **आने मुक् ७।२।८२** अदन्ताङ्गस्य मुगागमः स्यादाने परे ॥ पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् द्विजः ॥ **विदेः शतुर्वसुः ७।१।३६** वेत्तेः परस्य शतुर्वसु-

---

रूपम् । लटः शतृशानचाविति । "वर्तमाने लट्" इति पूर्वसूत्रविहितस्यैव एतौ शतृशानचौ । "अनन्तरस्य" इति न्यायादिति "वर्तमानसामीप्ये" इत्यादिभाष्ये स्पष्टम् । शतृप्रत्यये शकारऋकाराविती । पचन्तं चैत्रं पश्येति । पच् धातोः "वर्तमाने लट्" इति लटि, "लटः शतृशानचावप्रथमाऽसमानाधिकरणे" इति लटो लः स्थाने शतृ आदेशे शकारस्य ऋकारस्य चेत्संज्ञायां लोपे च "तिङ्शित्सार्वधातुकम्" इति शित्वात्सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि, शपयोरित्संज्ञायां लोपे च कृते, 'पच् अ अत्' इति भूते, "अतो गुणे" इति पररूपे कृदन्तत्वात्प्रातिपदिकत्वे द्वितीयैकवचनविवक्षायाम् अमि, "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमि, उमि गते, मित्वादन्त्याचः परे जाते, तस्यानुस्वारे परसवर्णे च कृते, मिलित्वा 'पचन्तम्' इति रूपम् । आने मुगिति । "अङ्गस्य" इत्यधिकृतम् । "अतो येयः" इति पूर्वसूत्रादनुवृत्तेन षष्ठ्या विपरिणतेन अता विशेष्यते । तदन्तविधिः । तदाह—अदन्तस्येति । मुकि ककारः इत्, उकार उच्चारणार्थः, कित्वादन्त्यावयवः । पचमानं चैत्रं पश्य । पच् धातोः "वर्तमाने लट्" इति लटि, "लटः शतृशानचावप्रथमाऽसमानाधिकरणे" इति लटो लः स्थाने शानचि, शचयोरित्संज्ञायां लोपे च कृते, शित्वात् "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि, शपयोरित्संज्ञायां लोपे च कृते 'पच् अ आन' इति भूते "आने मुक्" इति 'पच' इत्यदन्ताङ्गस्य मुगागमे उकि गते, कित्वादन्त्यावयवे जाते संयोगे विभक्तिकार्ये च कृते 'पचमानम्' इति रूपम् । अनुवर्तमाने इति । "वर्तमाने लट्" इति पूर्वसूत्रादनुवृत्तस्य लडित्यस्य षष्ठ्या विपरिणामेन उक्तार्थलाभे सतीत्यर्थः । अप्रथमेति । सूत्राक्षरानारूढस्यापि लाभार्थमित्यर्थः । सन् द्विजः । अस्—भुवि धातोः "वर्तमाने लट्" इति लटि, "लटः शतृशानचावप्रथमासमानाधिकरणे" इत्यनेन प्रथमासमानाधिकरणेऽपि लटो लः स्थाने शतृप्रत्यये, शपि, "अदिप्रभृतिभ्यः शपः" इति शपो लुकि, 'अस्—अत्' इति जाते "सार्वधातुकमपित्" इति अतः सार्वधातुकस्य ङित्वात् "श्नसोरल्लोपः" इति असोऽकारस्य लोपे, कृदन्तत्वात्प्रातिपदिकत्वे सौ, उलोपे, "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमि, उमि गते, मित्वादन्त्यादचः परे जाते 'सनुत् स्' इति भूते "हल्ङ्याब्भ्यः" इति सलोपे, "संयोगान्तस्य लोपः" इति तलोपे 'सन्' इति रूपम् । विदेः शतुर्वसुः । वेत्तेरिति । 'विद ज्ञाने' इति लुग्विकरणस्यैव ग्रहणम्, शतुः परस्मैपदित्वात् विद्यतेर्विन्तेश्चात्मनेपदित्वात् । वा स्यादिति । "तुह्योस्तातङ्" इत्यतस्तदनुवृत्तेरिति भावः । विद्वान् । विद् धातोर्लटः शतरि, तस्थाने "विदेः शतुर्वसुः" इति शतृस्थाने वसुरादेशे उगते, 'विद्वस' इति

रादेशो वा स्यात् । विदन्, विद्वान् ॥ **तौ सत् ३।२।१२७** तौ शतृशानचौ सत्संज्ञौ स्तः ॥ **लृटः सद्वा ३।३।१४** व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तम् । करिष्यमाणं पश्य॥ **आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ३।२।१३४** क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ॥ **तृन् ३।२।१३५** कर्ता कटान् ॥ जल्पभि-

---

जाते, कृदन्तत्वात्प्रातिपदिकत्वे सौ, उलोपे, "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमि, उमि गते, मित्वादन्त्याचः परे "अत्वसन्तस्य चाऽधातोः" इत्युपधाया दीर्घे "हल्ङ्याब्भ्यः" इति सुलोपे, "संयोगान्तस्य लोपः" इति सलोपे 'विद्वान्' इति रूपम् । विदन् । विदो लटि, लटः शतरि, अनुबन्धलोपे, शपि, शपो लुकि, 'विदत्' इति भूते तस्मात्सौ उलोपे, "उगिदचां सर्वनामस्थानेऽधातोः" इति नुमि, उमि गते, मित्वादन्त्याचः परे "हल्ङ्याब्भ्यः" इति सलोपे, "संयोगान्तस्य लोपः" इति द्वितीयसकारस्य लोपे 'विदन्' इति रूपम् । तौ सत् । "लटः शतृशानचौ" इति सूत्रोपात्तौ शतृशानचौ तच्छब्दः परामृशति तदाह—तौ शतृशानचाविति । लटः सद्वा । लृटः शतृशानचौ वा स्त इत्यर्थः । व्यवस्थितेति । व्याख्यानादिति भावः । करिष्यन्तम् । कृधातोः "लृट् शेषे च" इति लृटि, लृटो लः स्थाने "लृटः सद्वा" इति "तौ सत्" इति सत्संज्ञकौ, शतृशानचौ प्राप्तौ, तयोर्मध्ये शतरि कृते, अनुबन्धलोपे, 'कृ अत्' इति भूते "स्यतासी लृलुटोः" इति स्ये, "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति इडागमे, कृ इत्यस्य गुणे रपरे, षत्वे, "अतो गुणे" इति पररूपे 'करिष्यत्' इति भूते, कृदन्तत्वात्प्रातिपदिकत्वे, अमि तस्य सर्वनामस्थानत्वात् अङ्गस्य नुमि उमि गते मित्वादन्त्याचः परे तस्यानुस्वारे, परसवर्णे च कृते, 'करिष्यन्तम्' इति रूपम् । करिष्यमाणम् । कृधातोः लृटि, लृटो लः स्थाने "तौ सत्" इति शानचि, शचयोर्लोपे, स्ये, इटि, गुणे, रपरे, षत्वे, 'करिष्य—आन' इति भूते "आने मुक्" इति मुगागमे, कित्वादन्त्यावयवे, मिलित्वा 'करिष्यमान' इति जाते नस्य णत्वे विभक्तिकार्ये च कृते "करिष्यमाणम्' इति रूपम् । आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । आङ्—अभिविधौ । तदाह—क्विपमभिव्याप्येति । "भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्" इति सूत्रमभिव्याप्येति यावत् । तत्र ताच्छीलिकाः प्रत्ययाः प्रायेण सोपसर्गेभ्यो नेति "आढ्यसुभग" इति सूत्रे भाष्ये स्पष्टम् । तच्छीलः—तत्स्वभावः, फलमनपेक्ष्य स्वभावादेव प्रवर्तमान इति यावत् । सः धर्मः यस्य सः तद्धर्मा । स्वधर्मोऽयमिति प्रवर्तमानः । तस्य धात्वर्थस्य साधुकर्ता—तत्साधुकारी । तृन् । धातोस्तृन् प्रत्ययः स्यात् तच्छीलादिषु कर्तृषु । कर्ता कटान् । करोति तच्छील इत्यस्मिन्नर्थे कृधातोः "तृन्" इति तृनि, नलोपे, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे अकारे, "उरण् रपरः" इति

**दकुट्टलुण्टवृङः षाकन् ३।२।१५५** **षः प्रत्ययस्य १।३।६** प्रत्ययस्यादिः ष इत्संज्ञः स्यात्। जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी॥ **सनाशंसभिक्ष उः ३।२।१६८** चिकीर्षुः। आशंसुः। भिक्षुः॥ **भ्राजभासधु-**

---

रपरत्वे, 'कर्तृ' इति भूते "कृत्तद्धितसमासाश्च" इति प्रातिपदिकत्वे सौ, उलोपे, "सुडनपुंसकस्य" इति सः सर्वनामस्थानसंज्ञायां "ऋदुशनस्पुरुदंसोऽनेहसाञ्च" इत्यनङि, अङो लोपे, "ङिच्च" इत्यनेन ऋस्थाने जाते "सर्वनामस्थाने चाऽसम्बुद्धौ" इति उपधायाः दीर्घे "हल्ङ्याब्भ्यः" इति सलोपे, "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'कर्ता' इति रूपम्। जल्पभिक्षकुट्टेति। एभ्यः पञ्चभ्यः षाकन् स्यात् तच्छीलादिष्वित्यर्थः। षः प्रत्ययस्य। "आदिर्ञिटुडवः" इत्यतः आदिरित्यनुवर्तते। "उपदेशेऽजनुनासिक इत्" इत्यतः इदिति च। तदाह—प्रत्ययस्यादिरिति। षकारस्य इत्संज्ञायाम् "तस्य लोपः" इति लोपः। जल्पाकः। जल्पति तच्छीलः इत्यस्मिन्नर्थे "जल्पभिक्षकुट्टलुण्टवृङः षाकन्" इति षाकनि, "षः प्रत्ययस्य" इति प्रत्ययस्यादिषकारस्येत्संज्ञायां "तस्य लोपः" इति षलोपे नलोपे च कृते मिलित्वा 'जल्पाक' इति भूते कृदन्तत्वात्प्रातिपदिकत्वे सौ, उलोपे, सस्य रुत्वे रेफस्य विसर्गत्वे च 'जल्पाकः' इति रूपम्। भिक्षाकः। भिक्ष्धातोः "जल्पभिक्षकुट्टलुण्टवृङः षाकन्" इत्यनेन षाकनि "षः प्रत्ययस्य" इति षस्येत्संज्ञायां "हलन्त्यम्" इति नस्य चेत्संज्ञायां "तस्य लोपः" इत्युभयोर्लोपे संयोगे कृते, विभक्तिकार्ये च 'भिक्षाकः' इति रूपम्। एवमेव कुट्टाकादयः शब्दा अप्यूह्याः। वराकी। अत्र वृ धातोः प्रकृतसूत्रेण षाकनि कृते वराक इति भूते "षिद्गौरादिभ्यश्च" इत्यनेन ङीषि, उपयोर्लोपे भसंज्ञायां "यस्येति च" इत्यकारलोपे "ङ्याप्प्रातिपदिकात्" इति सौ, उलोपे "हल्ङ्याब्भ्यः" इति सुलोपे च कृते 'वराकी' इति रूपम्। सनाशंसभिक्ष उः। सन्, आशंस, भिक्ष एषां त्रयाणां द्वन्द्वात्पञ्चम्येकवचनम्। सनिति सन्प्रत्ययान्तं गृह्यते। 'षणु दाने, षण सम्भक्तौ' इत्यनयोस्तु न ग्रहणम्, गर्गादिषु विजिगीषुशब्दपाठाल्लिङ्गात्। एभ्यः उप्रत्ययः स्यात् तच्छीलादिष्वित्यर्थः। चिकीर्षुः। कर्तुमिच्छतीति विग्रहे कृधातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि, नलोपे "इको झल्" इति सनः कित्वाद्गुणाभावे "अज्झनगमां सनि" इति दीर्घे "ॠत इद्धातोः" इतीत्वे रपरत्वे च "हलि च" इति दीर्घे 'कीर्स' इति भूते "सन्यङोः" इति द्वित्वे अभ्यासत्वे, अभ्यासकार्ये च कृते सनः सस्य षत्वे, 'चिकीर्ष' इति जाते "सनाशंसभिक्ष उः" इति सन्नन्तात् उप्रत्यये तस्यार्धधातुकत्वात् "अतो लोपः" इत्यकारलोपे संयोगे कृते विभक्तिकार्ये च कृते 'चिकीर्षुः' इति रूपम्। आशंसुः। आङ्पूर्वकशंस्धातोः "सनाशंसभिक्ष उः" इति उप्रत्यये विभक्तिकार्ये च कृते तत्सिद्धिः। एवं भिक्ष धातोः उप्रत्यये कृते 'भिक्षुः' इति रूपम्। भ्राजभासधुर्विद्युतेति। भ्राज, भास, धुर्वि, द्युत, ऊर्जि, पॄ, जु, ग्रावस्तु, एभ्यो

विभ्राङ्भासिधूर्विद्युदूर्ग्पूर्जूग्रावस्तुवः क्विप् ३।२।१७७ विभ्राट् । भाः ॥ राल्लोपः ६।४।२१ रेफाच्छ्वोर्लोपः स्यात् क्वौ झलादौ क्ङिति । धूः । विद्युत् । ऊर्क् । पूः । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् ( क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च ) । वक्तीति वाक् ॥ च्छ्वोः शूडनुनासिके च ६।

ऽस्मभ्यः क्विप्स्यात् तच्छीलादिषु कर्तृष्वित्यर्थः । विभ्राट् । विशेषेण भ्राजते तच्छीलः इत्यर्थे व्युपसर्गपूर्वकभ्राज्धातोः क्विपि, इकारे गते "लशक्वतद्धिते" इति कस्य "हलन्त्यम्" इति पस्य च इत्संज्ञायां लोपे च कृते "वेरपृक्तस्य" इत्यनेन वस्येत्संज्ञायां "तस्य लोपः" इति लोपे च कृते 'विभ्राज्' इति भूते कृदन्तत्वात्प्रातिपदिकत्वे, सौ उगते सस्य "हल्ङ्याब्" इति लोपे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति जस्य षत्वे "झलां जशोऽन्ते" इति षस्य डत्वे "वावसाने" इति वा टत्वे 'विभ्राट्' इति । भाः । भास्धातोः "भ्राजभास०" इत्यादिना क्विपि, क्विपः सर्वस्यापहारे कृदन्तत्वात्प्रातिपदिकत्वे सौ, उलोपे हल्ङ्यादिना सलोपे भासः सस्य रुत्वे रेफस्य विसर्गत्वे च 'भाः' इति रूपम् । राल्लोप इति । "च्छ्वोः शूडनुनासिके च" इति सूत्रं शूड्वर्जमनुवर्तते । "अनुनासिकस्य क्विझलोः" इत्यतः क्विझलोरिति च तदाह—रेफाच्छ्वोरिति । धूः । धुर्व धातोः क्विपि, क्विपो लोपे, "राल्लोपः" इति व्लोपे, 'धुर्' इति कृदन्तत्वात् सौ, उलोपे, हल्ङ्यादिना सुलोपे "र्वोरुपधाया दीर्घ इकः" इति दीर्घे, रेफस्य विसर्गत्वे च तत्सिद्धिः । विद्युत् । विपूर्वकद्युत्धातोः क्विपि, तस्य लोपे विभक्तिकार्यं च तत्सिद्धिः । ऊर्क् । ऊर्जधातोः क्विपि, क्विपो लोपे, सौ, उगते, सुलोपे "रात्सस्य" इति नियमात् जलोपाभावे, 'चोः कुः" इति कुत्वे च तत्सिद्धिः । पूः । पृधातोः "भ्राजभास०" इत्यादिना क्विपि, क्विपो लोपे, "उदोष्ठ्यपूर्वस्य" इति उत्वे "उरण् रपरः" इति रपरत्वे तस्मात् सौ, तस्य लोपे, "र्वोरुपधाया दीर्घ इकः" इति दीर्घे रेफस्य विसर्गत्वे च तत्सिद्धिः । दृशिग्रहणस्यापकर्षादिति । उत्तरसूत्रादिति भावः । अत्र व्याख्यानमेव शरणम् । जूः । जु इति सौत्रो धातुः, तस्मात् क्विपि, क्विपो लोपे, दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घे कृदन्तत्वात्प्रातिपदिकत्वे तस्मात्सौ, उगते, सस्य रुत्वे रेफस्य विसर्गत्वे च तत्सिद्धिः । ग्रावस्तुत् । ग्रावाणं स्तौति इति ग्रावस्तुत् अत्र ग्रावपूर्वकस्तुधातोः क्विपि, क्विपो लोपे, क्विपः पित्वात् "ह्रस्वस्य पिति कृति तुक्" इति तुकि, उकि गते, कित्वादन्त्यावयवे जाते तस्माद् सौ, उगते, हल्ङ्यादिना च तस्य लोपे, 'ग्रावस्तुत्' इति रूपम् । क्विब्वचीति । उणादिसूत्रमिदम् । वाक् । वच् धातोः क्विपि, क्विपो लोपे, "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च" इत्यनेन दीर्घे, असम्प्रसारणे च, कृदन्तत्वात्प्रातिपदिकत्वे तस्मात्सौ, उलोपे, हल्ङ्यादिना सुलोपे "चोः कुः" इति कुत्वे च तत्सिद्धिः । च्छ्वोः शूडनुनासिके च । च्छ् व् अनयोर्द्वन्द्वात् षष्ठीद्विवचनम् । छकारात्प्राक् तुकः श्चुत्वेन चकारस्य निर्देशः । शूठ

८१९ सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति । पृच्छतीति प्राट् । आयतं स्तौति आयतस्तूः । कटं प्रवते कटप्रूः। जूरुक्तः । श्रयति हरिं श्रीः ॥ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३।२।१८२ दावादेः ष्ट्रन् स्यात्करणेऽर्थे । दात्यनेन दात्रम् । नेत्रम् ॥ तितुत्रतथसिसुसरकसेषु च ७।२।९ एषां दशानां कृत्प्रत्ययानामिण् न स्यात् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् ।

---

इति छेदः । श् ऊठ् अनयोः समाहारद्वन्द्वात् प्रथमा । चकारेण क्विझलोः द्वितीयस्यानुवर्तते । तदाह—सतुक्कस्य इत्यादि । प्राट् । प्रच्छधातोः क्विपि, क्विपो लोपे, "क्विब्वचिप्रच्छि०" इति प्रच्छधातोः दीर्घे असम्प्रसारणे च जाते "च्छ्वोः शूडनुनासिके च" इति सतुक्कस्य छस्य शत्वे तस्मात् सौ, उलोपे, सस्य हल्ङ्यादिना लोपे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन शस्य षत्वे "झलां जशोऽन्ते" इति षस्य डत्वे "वावसाने" इति वा टत्वे, 'प्राट्' इति रूपम् । आयतस्तूः । आयतं स्तौति इति विग्रहे "क्विब्वचिप्रच्छ्यायतस्तु०" इत्यनेन क्विपि, स्तुधातोर्दीर्घत्वे प्रकृतसूत्रे निपातनादेव समासे, समासत्वात्प्रातिपदिकत्वे, तस्मात् सौ, उलोपे, सस्य रुत्वे, रेफस्य विसर्गत्वे च तत्सिद्धिः । कटप्रूः । कटपूर्वकप्रुधातोः "क्विब्वचिप्रच्छ्यायतस्तुकटप्रु०" इत्यादिना प्रच्छ्धातोर्दीर्घत्वे च कृते क्विपो लोपे विभक्तिकार्ये च तत्सिद्धिः । जूरुक्त इति । "भ्राजभास" इत्यत्रेति शेषः । अतोऽत्र तद्ग्रहणं मास्त्विति भावः । श्रीः । श्रिञः । क्विपि दीर्घः । दाम्नी । दाप्, नी, शस, यु, युज, स्तु, तुद, सि, सिच, मिह, पत, दश, नह्, एषां त्रयोदशानां द्वन्द्वः । 'दाप् लवने' इत्यस्य पकारस्य स्थाने "यरोऽनुनासिकेऽनुनासिको वा" इति कृतमकारस्य निर्देशः । दात्रम् । दाप्धातोः "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" इति ष्ट्रनि नलोपे, "षः प्रत्ययस्य" इति षस्येत्संज्ञायाम्, "तस्य लोपः" इति षलोपे, दात्र इत्यवशिष्टे विभक्तिकार्ये च कृते, तत्सिद्धम् । नेत्रम् । नयति अनेन इति निधातोः "दाम्नीशसयु०" इत्यनेन ष्ट्रनि, अनुबन्धलोपे 'त्र' इत्यवशिष्टे तस्यार्धधातुकसंज्ञायां "सार्वधातुकार्धधातुकयोः" इति गुणे सौ, सोरमि, पूर्वरूपे च तत्सिद्धिः । तितुत्रतथसिसुसरकसेषु च । ति, तु, त्र, त, थ, सि, सु, सर, क, स एषां दशानां द्वन्द्वः । अत्र सरेत्येकम् । ति—तन्तिः, "स्त्रियाम्" इति क्तिन्, तु- सक्तुः, "तनिगमि" इत्यादिना तुप्रत्ययः । त्र-शस्त्रम्, पत्रम्, "दाम्नी" इत्यादिना ष्ट्रन् प्रत्ययः । त-हस्तः । औणादिकः तप्रत्ययः । क्तप्रत्यये तु हसितमित्येव । थ-कुष्ठम् । औणादिकः क्थप्रत्ययः । सि—कुक्षिः, कुषेरौणादिकः क्सिप्रत्ययः । सु-इक्षुः, इषेरौणादिकः क्सु प्रत्ययः । सर-अक्षरम्, अशेः सरन् । क-शल्कः शलेः कः । स-वत्सः 'वदेः सः' । शस्त्रम् । शसधातोः ष्ट्रनि, अनुबन्धलोपे 'शस्+त्र' इति स्थिते "आर्धधातुकं शेषः" इति आर्धधातुकसंज्ञायाम् "आर्धधातुकस्येड्वलादेः" इति इडागमे

दंष्ट्रा। नध्री॥ अर्तिलूधूसूखनसहचर इत्रः ३।२।१८४ अरित्रम्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्॥ पुवः संज्ञायाम् ३।२। १८५ पवित्रम्। इति पूर्वकृदन्तम्।

---

प्राप्ते "तितुत्रतथसिसुसरकसेषु च" इति तस्य निषेधे संयोगे कृते विभक्तिकार्यं च कृते तत्सिद्धिः। योत्रम्। युधातोः "दाम्नीशसयुयुज" इत्यनेन ष्ट्रनि, अनुबन्धलोपे आर्धधातुकत्वादिटि प्राप्ते "तितुत्रतथसि" इति तस्य निषेधे "सार्वधातुकार्धधातुकयोः" इति गुणे कृते विभक्तिकार्यं च कृते तत्सिद्धिः। योक्त्रम्। युजधातोः "दाम्नीशसयुयुज" इति ष्ट्रनि, अनुबन्धलोपे आर्धधातुकत्वात् "पुगन्तलघूपधस्य च" इत्यनेन गुणे "तितुत्रतथसिसुसरकसेषु च" इति इडभावे "चोः कुः" इति जस्य कुत्वे विभक्तिकार्य च तत्सिद्धिः। स्तोत्रम्। स्तुधातोः प्रकृतसूत्रेण ष्ट्रनि, "तितुत्रतथसिसुरकसेषु च" इति इडभावे गुणे विभक्तिकार्ये च तत्सिद्धिः। तोत्त्रम्। तुद् धातोः ष्ट्रनि इडभावे "पुगन्तलघूपधस्य च" इति गुणे "खरि च" इति दस्य चर्त्वेन तकारे विभक्तिकार्ये च तत्सिद्धम्। सेत्रम्। सिधातोः ष्ट्रनि रूपम्। सेक्त्रम्। सिच् धातोः ष्ट्रनि, लघूपधगुणे कुत्वे विभक्तिकार्ये च तत्सिद्धिः। मेढ्रम्। मिह्-सेचने धातोः "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" इति ष्ट्रनि, अनुबन्धलोपे, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "पुगन्तलघूपधस्य च" इति लघूपधगुणे 'मेह्+त्र' इति भूते "हो ढः" इति हस्य ढत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे "ष्टुना ष्टुः" इति धस्य ढत्वे "ढो ढे लोपः" इति पूर्वढस्य लोपे विभक्तिकार्ये च कृते तत्सिद्धिः। पत्रम्। पद्धातोः ष्ट्रनि, षस्य नस्य चेत्संज्ञायां लोपे च "निमित्तापाये नैमित्तिकस्याप्यपायः" इति ष्टुत्वे गते 'पद्—त्र' इति भूते "खरि च" इति दस्य तत्वे, विभक्तिकार्ये च कृते 'पत्रम्' इति रूपम्। दंष्ट्रा। दंश्धातोः "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" इति ष्ट्रनि, षनयोर्लोपे, ष्टुत्वे च गते क्ङित्वाभावान्नलोपाभावे, "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति शस्य षत्वे तस्य ष्टुत्वे कृदन्तत्वात्प्रातिपदिकत्वे टापि, विभक्तिकार्ये च तत्सिद्धिः। नध्री। नह्यते अनया इति विग्रहः। चर्मरज्जुः। 'नह बन्धने त्रः। "नहो धः" इति हस्य धत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे षित्वात् "षिद्गौरादिभ्यश्च" इति ङीषि कृते तत्सिद्धिः। अर्तिलूधू। अर्ति, लू, धू, सू, खन, सह, चर एषां सप्तानां द्वन्द्वात्पञ्चमी। अरित्रम्। ऋधातोः "अर्तिलूधूसूखनसहचर इत्रः" इति इत्रप्रत्यये "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे "उरण् रपरः" इति रपरत्वे सयुक्ते च कृते, कृते च विभक्तिकार्ये 'अरित्रम्' इति रूपम्। लवित्रम्। लूधातोः "अर्तिलूधूसूखनसहचर इत्रः" इति इत्रे आर्धधातुकत्वे गुणे, अवादेशे संयोगे विभक्तिकार्ये च तत्सिद्धिः। धवित्रम्। धूधातोः इत्रे गुणे अवादेशे विभक्तिकार्ये च तत्सिद्धम्। सवित्रम्। सूधातोः इत्रे गुणे अवादेशे विभक्ति-

## अथोणादयः ।

"कृवापाजिमिस्वदिसाध्यशूभ्य उण्" । करोतीति कारुः । वातीति वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् । स्वादुः । साध्नोति परकार्यमिति साधुः । आशु शीघ्रम् । इत्युणादयः ।

---

कार्ये च कृते तत्सिद्धिः । खनित्रम् । खन्धातोः इत्रे कृते संयोगे विभक्तिकार्ये च कृते तत्सिद्धम् । एवम्—'सहित्रम्' 'चरित्रम्' इत्यपि बोध्यम् । पुवः संज्ञायाम् । इत्र इति शेषः । करणे इत्येव । पवित्रम् । पूयतेऽनेनाज्यम् इति विग्रहे पूधातोः इत्रे, तस्य आर्धधातुकसंज्ञायां गुणेऽवादेशे विभक्तिकार्ये च कृते, तत्सिद्धिः । इति पूर्वकृदन्तम् ।

कृवापाजि । डु कृञ्–करणे, वा गतिगन्धनयोः, पा–पाने, जि–अभिभवे, डुमिञ्–प्रक्षेपणे, स्वद–आस्वादने, साध–संसिद्धौ, अशू–व्याप्तौ, एषां द्वन्द्वात्पञ्चमी । एभ्य उण्प्रत्ययः स्यात्कर्त्रर्थे इत्यर्थः । कारुः । कृधातोः "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इति उणि, "हलन्त्यम्" इति णस्येत्संज्ञायां "तस्य लोपः" इति लोपे, 'कृ+उ' इति स्थिते "अचो ञ्णिति" इति ऋकारस्य वृद्धौ "उरण् रपरः" इति रपरत्वे 'क् आर् उ' इति जाते, संयोगे च कृते कृदन्तत्वात्प्रातिपदिकत्वे सौ, उलोपे सस्य रुत्वे रेफस्य विसर्गत्वे च 'कारुः' इति रूपम् । वायुः । वाधातोः "कृवापाजि०" इति उणि, णगते "आतो युक् चिण्कृतोः" इति युगागमे, कगते कित्वादन्त्यावयवे जाते, संयोगे कृते कृदन्तत्वात्प्रातिपदिकत्वे सौ, उगते, सस्य रुत्वे, रेफस्य विसर्गत्वे च 'वायुः' इति रूपं सिद्धम् । पायुः । पाधातोः उणि, णगते "आतो युक् चिण्कृतोः" इति युगागमे, कगते कित्वादन्त्यावयवे जाते, कृदन्तत्वात्प्रातिपदिकत्वे सौ, उलोपे, सस्य रुत्वे, रेफस्य विसर्गत्वे च तत्सिद्धिः । गुदमिति । 'गुदं त्वपानं पायुर्ना' इत्यमरः । जायुः । जिधातोः "कृवापाजिमिस्वदि०" इति उणि, णगते, "अचो ञ्णिति" इति वृद्धौ, "एचोऽयवायावः" इत्यायादेशे कृदन्तत्वात्प्रातिपदिकत्वे, सौ, उलोपे, सस्य रुत्वे, रेफस्य विसर्गत्वे च, तत्सिद्धिः । 'अगदो जायुः' इत्यमरः । मायुः । मिञ् प्रक्षेपणे इत्यस्मात् "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इति उणि, णलोपे, "अचो ञ्णिति" इति प्राप्तां वृद्धिं बाधित्वा "मीनातिमिनोति दीङां ल्यपि च" इति आत्वे, "आतो युक् चिण्कृतोः" इति युगागमे, कस्येत्संज्ञायां लोपे च, कित्वादन्त्यावयवे जाते, संयोगे कृते, विभक्तिकार्ये च तत्साधुः । 'मायुः पित्तं कफः श्लेष्मा' इत्यमरः । स्वादुः । स्वदते रोचते इति स्वादुः पटः । विशेष्यनिघ्नोऽयम् । स्वादुफलमित्यादि । स्वद आस्वादने इत्यस्माद्धातोः "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इति उणि प्रत्यये, "हलन्त्यम्" इति णस्येत्संज्ञायां "तस्य लोपः" इति लोपे, "अत उपधायाः" इति स्वद उपधाया वृद्धौ कृते संयोगे च कृते, "कृत्तद्धितसमासाश्च" इति प्रातिपदिकत्वे तस्मात्सौ उलोपे, सस्य रुत्वे, रेफस्य विसर्गत्वे च 'स्वादुः' इति रूपम् । साधुः । साध्नोति परकार्यमिति विग्रहे

## अथोत्तरकृदन्तम् ।

**उणादयो बहुलम् ३।३।१** एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः । "संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु" ॥ **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१०** क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति ।

---

साधूधातोः "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इति कर्तरि उणि, णगते "अत उपधायाः" इति वृद्धौ कृते, संयोगे च कृते, कृदन्तत्वात्प्रातिपदिकत्वे, तस्मात्सौ, उगते, सस्य रुत्वे, रेफस्य विसर्गत्वे च 'साधुः' इति रूपम् । आशु । अशूधातोः उणि, णगते, "अत उपधायाः" इति उपधावृद्धौ, विभक्तिकार्ये च 'आशु' इति । शीघ्रम् । त्रिलम्बाभावमात्रपरत्वे क्लीबत्वम् । तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गमिति बोध्यम् । "उणादयो बहुलम्" इति बहुलवचनाल्लक्ष्यानुसारेण व्यवस्था। रहत्यागे इत्यस्मादुणि, उपधावृद्धौ 'राहुः' इति भवति । एवं वस्निवासे इत्यस्मादुण् । वसति अस्मिन् सर्वमिति वासुः । वासुश्चासौ देवश्च "वासुदेवः" इत्यादयो बोध्याः। इति उणादयः ।

उणादयो बहुलम् । तृतीयेऽध्याये तृतीयपादस्येदमादिमं सूत्रम् । उण् आदिर्येषान्ते उणादयः । बहून् अर्थान् लातीति बहुलम् । "वर्तमाने लट्" इत्यतो वर्तमान इति "पुवः संज्ञायाम्" इत्यतः संज्ञायामिति चानुवर्तते तदाह—एते वर्तमाने संज्ञायां चेति । अपरिपूर्णानामुणादीनां परिपूरणार्थस्य बहुलग्रहणस्य फलमाह—केचिदविहिता अपीति । संज्ञास्विति । संज्ञासु—अनादिसंज्ञासु न तु सर्वासु । धातुरूपाणि ऊह्यन्ते इति शेषः, यथा—"ह्वपेरलच्" इति विहितमलच्प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरूह्यते तेन शङ्कुलेति सिद्ध्यति । कार्याद्विद्यादिति । ऋफिड इत्यादौ गुणप्रतिषेधादिकार्यानुरोधात् अनुबन्धं ककारादिकं विद्यादित्यर्थः । एतच्छास्त्रमुणादिष्विति । एतत् सर्वमुणादिषु शास्त्रं शासितव्यमित्यर्थः । तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । क्रियाऽर्थः प्रयोजनं यस्याः सा क्रियार्था तस्याम् । "भविष्यति गम्यादयः" इत्यतो भविष्यतीत्यनुवर्तते । तदाह–भविष्यत्यर्थे इति । मान्तत्वादिति। तुमुनो मान्तकृत्वात् "कृन्मेजन्तः" इत्यव्ययत्वमित्यर्थः । ततश्च "अव्ययकृतो भावे" इति वचनात् भावे तुमुन् । ण्वुल् तु कर्तर्येव । कृष्णं द्रष्टुं याति । दृश्धातोः "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति तुमुनि, उनो लोपे "सृजिदृशोर्झल्यमकिति" इत्यमि, मलोपे मित्वाद् "मिदचोऽन्त्यात्परः" इत्यन्त्यादचः परे जाते 'द् अ श् तुम्' इति भूते "इको यणचि" इति यणि, "व्रश्चभ्रस्जसृज" इति शस्य षत्वे "ष्टुना ष्टुः" इति टत्वे 'द्रष्टुम्' इति जाते कृदन्तत्वात्प्रातिपदिकत्वे सौ, "कृन्मेजन्तः" इति मान्तत्वादव्ययत्वे, "अव्ययादाप्सुपः" इति सुपो लुकि च विहिते 'कृष्णं द्रष्टुं यातीति ॥ कृष्णं च दर्शको याति । दृश्धातोः "तुमुन्ण्वुलौ

कृष्णं दर्शको याति ॥ **कालसमयवेलासु तुमुन् ३।३।१६७** कालार्थेषूपदेषु तुमुन् स्यात् । कालः समयो वेला वा भोक्तुम् ॥ **भावे ३।३।१८** सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः ॥ **अकर्तरि च कारके संज्ञायाम् ३।३।१९** कर्तृभिन्ने कारके घञ् स्यात् । **घञि च भावकरणयोः ६।४।२७** रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् ? रज्यत्यस्मिन्निति रङ्गः ॥ **निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३।३।४१** एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधानं राशीकरणम् । निकायः । कायः । गोमयनिकायः । **एरच् ३।३।५६** इवर्णान्तादच् स्यात् ।

---

क्रियायां क्रियार्थायाम्" इति ण्वुलि, णलयोर्लोपे, 'दृश् वु' इति स्थिते "युवोरनाकौ" इति वोरकादेशे, "पुगन्तलघूपधस्य च" इति गुणे, विभक्तिकार्ये च कृते 'कृष्णं दर्शको याति' इति । कालसमयवेलासु । अक्रियोपपदेऽपि प्रवृत्त्यर्थमिदम् । भोक्तुम् । भुज्धातोः "कालसमयवेलासु तुमुन्" इति तुमुनि, उनि गते, तुम आर्धधातुकत्वात् "पुगन्तलघूपधस्य च" इति गुणे "चोः कुः" इति जस्य कुत्वेन गत्वे "खरि च" इति कत्वे, "कृन्मेजन्तः" इत्यव्ययत्वाद् सुपो लुकि च तत्सिद्धिः । भावे । घञ् स्यादिति । "पदरुज" इत्यतस्तदनुवृत्तेरिति भावः । पाकः । पच्धातोः "भावे" इति घञि, "लशक्वतद्धिते" इति घस्य "हलन्त्यम्" इति ञस्य चेत्सञ्ज्ञायां लोपे च 'पच्+अ' इति जाते, "अत उपधायाः" इति अकारस्य वृद्धौ, "चजोः कुघिण्यतोः" इति चस्य कुत्वे, कृदन्तत्वात्प्रातिपदिकत्वे, सौ, उगते, सस्य रुत्वे च 'पाकः' इति रूपम् । अकर्तरि च कारके । कारके इति प्रत्ययार्थनिर्देशः, नतूपपदम्, व्याख्यानात् । संज्ञाशब्देन रूढिर्विवक्षिता । तेन रागः इति वक्ष्यमाणमुदाहरणं सङ्गच्छते । घञि चेति । "अनिदिताम्" इति नलोपप्रकरणे "रञ्जेश्च" इत्युत्तरसूत्रमिदम् । तदाह—रञ्जेर्नलोपः स्यादिति । रागः । रञ्ज्धातोः "अकर्तरि च कारके संज्ञायाम्" इति घञि घकारञकारयोर्लोपे, "घञि च भावकरणयोः" इति नलोपे "अत उपधायाः" इति वृद्धौ, "चजोः कुघिण्यतोः" इति जस्य कुत्वे, विभक्तिकार्ये च 'रागः' इति रूपम् । रङ्गः । अत्र भावकरणार्थाभावेन नलोपाभावे "चजोः कुघिण्यतोः" इति विभक्तिकार्ये च तत्सिद्धम् । निवासचितीति । "अकर्तरि च कारके" "भावे" इति चानुवर्तते एव । निपूर्वकचिधातोः "निवासचितिशरीरोपसमाधानेष्वादेश्च कः" इति घञि, आदेः—चेश्चकारस्य कुत्वे, घकारञकारयोर्लोपे 'नि कि+अ' इति भूते अस्य आर्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणे, "एचोऽयवायावः" इति अयादेशे 'निकय्+अ' इति जाते "अत उपधायाः" इति वृद्धौ, कृदन्तत्वात्प्रातिपदिकत्वे, सौ, उलोपे, रुत्वे विसर्गे च, 'निकायः' इति जायते । कायः, गोमयनिकायः । अत्रापि प्रकृतसूत्रेण घञि, चेश्चकारस्य कुत्वे वृद्धौ, अयादेशे, विभक्तिकार्यञ्च पूर्ववदेव बोध्यम् ।

चयः । जयः ॥ ॠदोरप् ३।३।५७ ॠवर्णान्तादुवर्णान्तादप् स्यात् । करः । गरः । यवः । लवः । स्तवः । पवः । ( घञर्थे कविधानम् ) प्रस्थः । विघ्नः । ड्वितः क्त्रिः ३।३।८८ क्त्रेर्मम् नित्यम् ४।४।२० क्त्रिप्रत्ययान्तात् मम् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् . उप्त्रिमम् । ट्वितोऽथुच ३।३।८९ टुवेपृ

---

परच् इवर्णान्ताद्धातोः अच् स्यात् भावे अकर्तरि च कारके इत्यर्थः । घञपवादः । चयः, जयः । चिधातोः जिधातोश्च "एरच्" इत्यनेन अचि कृते, चलोपे, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे, "सार्वधातुकार्धधातुकयोः" इति गुणे, अयादेशे विभक्तिकार्ये च ते रूपे सिद्ध्यतः । ॠदोरप् । पञ्चम्यर्थे षष्ठी । ॠत्, उ, अनयोः समाहारे सौत्रं पुंस्त्वम् । ॠदन्तादुवर्णान्ताच्च अप् स्याद्भावे अकर्तरि च कारके इत्यर्थः । घञपवादः । करः । कृधातोः "ॠदोरप्" इत्यपि, पगते, आर्धधातुकसंज्ञायां, "सार्वधातुकार्धधातुकयोः" इति गुणे अकारे, "उरण् रपरः" इति रपरे च जाते, संयोगे कृते, विभक्तिकार्ये च 'करः' इति रूपम् । एवमेव गृधातोः "ॠदोरप्" इत्यपि कृते बोध्यम् । यवः । युधातोः "ॠदोरप्" इत्यपि, पगते, आर्धधातुकत्वे, "सार्वधातुकार्धधातुकयोः" इति गुणे, "एचोऽयवायावः" इत्यवादेशे, विभक्तिकार्ये च तत्सिद्धिः । एवमेव लवः, स्तवः, पवः, इत्यत्रापि । घञर्थे कविधानमिति । वार्तिकमिदम् । 'स्थास्नापाव्यधिहनियुध्यर्थम्' इति वार्तिकशेषो भाष्ये पठितः । प्रस्थः । प्रतिष्ठन्तेऽस्मिन् धान्यानि इति प्रस्थः । प्रोपसर्गपूर्वकात् स्थाधातोः "घञर्थे कविधानम्" इति अधिकरणेऽर्थे के, कलोपे आर्धधातुकसंज्ञायाम् "आतो लोप इटि च" इत्यालोपे विभक्तिकार्ये च कृते 'प्रस्थः' इति रूपम् । विघ्नः । विपूर्वकहन्धातोः "घञर्थे कविधानम्" इति के, कलोपे, आर्धधातुकसंज्ञायां, "गमहनजनखनघसां लोपः क्ङिति" इत्युपधाकारस्य लोपे, "होहन्तेर्ञ्णिन्नेषु" इति हस्य कुत्वेन घत्वे, विभक्तिकार्ये च कृते, 'विघ्नः' इति रूपम् । ड्वितः क्त्रिः । डुः इत् यस्य सः ड्वित् तस्मात् क्त्रिप्रत्ययः स्यादित्यर्थः । ककार इत् । अयं स्वभावाद्भावे एव । क्त्रेर्मम् नित्यम् । मप् नित्यमिति छेदः । पक्त्रिमम् । 'डुपचष्—पाके' इति धातोः "आदिर्ञिटुडवः" इति डोरित्संज्ञायां षस्य "हलन्त्यम्" इतीत्संज्ञायां "तस्य लोपः" इत्युभयोर्लोपे, अकारे च गते, पच् इत्यवशिष्टे तस्मात् "ड्वितः क्त्रिः" इति क्त्रिप्रत्यये, कलोपे, पचेश्चकारस्य "चोः कुः" इति कुत्वे, 'पक्त्रि' इति जाते तस्मात् "क्त्रेर्मम्नित्यम्" इति नित्यं मपि, पगते, 'पक्त्रिम' इति भूते विभक्तिकार्ये च कृते 'पक्त्रिमम्' इति रूपम् । उप्त्रिमम् । डुवप्—बीजसन्ताने धातोः अनुबन्धलोपे कृते, "ड्वितः क्त्रिः" इति क्त्रिप्रत्यये कलोपे, कित्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणे, 'उ अप् त्रि' इति भूते "सम्प्रसारणाच्च" इति पूर्वरूपे, "क्त्रेर्मम् नित्यम्" इति मपि, पगते, विभक्तिकार्ये च कृते, "उप्त्रिमम्' इति रूपम् । ट्वितोऽथुच् । अथुजिति छेदः । टु इत् यस्येति

कम्पने, वेपथुः ॥ यजयाचयतविच्छप्रच्छरक्षो नङ् ३।३।९० यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । रक्ष्णः ॥ स्वपो नन् ३।३।९१ स्वप्नः । उपसर्गे घोः किः ३।३।९२ प्रधिः । उपाधिः ॥ स्त्रियां क्तिन् ३।३।९४ स्त्रीलिङ्गे भावे क्तिन् स्यात् । घञोऽपवादः । कृतिः । स्तुतिः । ( ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः ) तेन नत्वम् । कीर्णिः । लूनिः । धूनिः । पूनिः । ( सम्पदादिभ्यः क्विप् ) सम्पत् ।

---

विग्रहः अयमपि स्वभावाद्भावे एव । वेपथुः । टुवेपृ—कम्पने धातोः "आदिर्ञिटुडवः" इति टोरित्संज्ञायां लोपे च, ऋगते, टित्वात् "ट्वितोऽथुच्" इति अथुचि, चगते संयोगे विभक्तिकार्ये च कृते 'वेपथुः' इति रूपम् । यजयाचयतेति । "अकर्तरि च कारके" इति "भावे" इति चानुवर्तते । यज्ञः । यज्धातोः "यजयाचयतविच्छप्रच्छरक्षो नङ्" इति नङि प्रत्यये, ङलोपे, "स्तोः श्चुना श्चुः" इति श्चुत्वेन नस्य ञत्वे ज्ञोः संयोगेन ज्ञे जाते, विभक्तिकार्ये च तत्सिद्धिः । याच्ञा । याच्धातोः "यजयाचयतविच्छप्रच्छरक्षो नङ्" इति नङि, ङलोपे, श्चुत्वे टापि, विभक्तिकार्ये च तत्सिद्धिः । एवं सर्वत्र । तत्र-'विश्नः, प्रश्नः' इत्यत्र "च्छ्वोः शूडनुनासिके च" इति सतुक्कस्य छस्य 'शकारः' इति विशेषः । रक्ष्णः । अत्र रक्ष् धातोः प्रकृतसूत्रेण नङि, णत्वे च शेषं पूर्ववत् । स्वपो नन् । नकारो निस्स्वरार्थः । स्वप्नः । स्वप्धातोः "स्वपो नन्" इति ननि, नगते विभक्तिकार्ये च कृते तत्सिद्धिः । उपसर्गे घोः किः । भावे अकर्तरि च कारके । किस्वसातो लोपार्थम् । प्रधिः । प्रोपसर्गाद् धाधातोः "दाधाघ्वदाप्" इति घुसञ्ज्ञायाम् "उपसर्गे घोः किः" इति किप्रत्यये, कलोपे, आर्धधातुकसञ्ज्ञायाम्, "आतो लोप इटि च" इत्याकारलोपे, संयोगे च कृते, कृते च विभक्तिकार्ये 'प्रधिः' इति रूपम् । एवमेव 'उपाधिः' इत्यत्रापि बोध्यम् । स्त्रियां क्तिन् । "कृत्यल्युटो बहुलम्" इत्यतः प्राक् स्त्रियामित्यधिक्रियते । स्त्रीलिङ्गे इति । स्त्रीत्वविशिष्टभावे अकर्तरि च कारके इत्यर्थः । धातुमात्रादयं क्तिन् । घञोऽपवाद इति । "हलश्च" इति वक्ष्यमाणघञोऽपवाद इत्यर्थः । एवञ्च स्त्रीत्वविशिष्टे भावादौ क्तिनेव । घञ् तु पुंस्त्वविशिष्टभावादाविति लभ्यते । वास-रूपविधिर्नात्र प्रवर्तते, अस्त्रियामित्युक्तेः । कृतिः । करणं कृतिः, इत्यत्र कृधातोः "स्त्रियां क्तिन्" इति क्तिनि, कस्य नस्य च लोपे, कित्वाद्गुणाभावे विभक्तिकार्ये च तत्सिद्धिः । एवं 'स्तुतिः' इत्यत्रापि । ऋल्वादिभ्य इति । ऋकारान्तात्ल्वादिभ्यश्च पर इत्यर्थः । तेनेति । निष्ठावद्वचनेनेत्यर्थः । नत्वमिति । "रदाभ्यां निष्ठातः" इति नत्वस्य प्रकृतत्वादिति भावः । कीर्णिः । कॄधातोः "स्त्रियां क्तिन्" इति क्तिनि कनयोर्लोपे, कित्वाद्गुणाभावे, "ॠत इद्धातोः" इति इत्वे, "उरण् रपरः" इति रपरत्वे "हलि च" इति दीर्घे 'कीर्ति' इति जाते, "ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः" इति निष्ठावद्भावेन "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति तस्य नत्वे, "रषाभ्यां णो नः समानपदे" इति नस्य णत्वे,

विपत् । आपत् । क्तिन्नपीष्यते । सम्पत्तिः । विपत्तिः । आपत्तिः ॥ ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३।३।९७ एते निपात्यन्ते ॥ ज्वरत्वरस्रिव्यविमवामुपधायाश्च ६।४।२१ एषामुपधावकारयोरूठ् स्यादनुनासिके क्वौ झलादौ क्ङिति । अतः क्विप् । जूः । तूः । स्रूः । ऊः । मूः ॥ इच्छा ३।३।१०१ इषेर्निपातोऽयम् ॥ अ प्रत्ययात् ३।३।१०२ प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात् । चिकीर्षा ।

---

विभक्तिकार्ये च कृते 'कीर्णिः' इति रूपम् । एवं गृधातोः गीर्णिः । लूनिः । लुधातोः "स्त्रियां क्तिन्" इति क्तिनि, कनयोर्लोपे, 'लूति' इति भूते "ल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः" इति निष्ठावद्भावेन "ल्वादिभ्यश्च" इति तस्य नत्वे, विभक्तिकार्ये च तत्सिद्धिः। एवं 'धूनिः, पूनिः' इत्यत्रापि बोध्यम् । "सम्पदादिभ्यः क्विप्" इति वार्तिकम् । भावे अकर्तरि च कारके स्त्रियाम् इति शेषः । सम्पत् । सम्पूर्वकपद्धातोः "सम्पदादिभ्यः क्विप्" इति क्विपि, क्विपो लोपे, विभक्तिकार्ये च कृते तत्सिद्धिः । एवमेव विपत् । ननु 'अस्त्रियाम्' इति निषेधेन वाऽसरूपविधेरभावात् क्विपाऽनेन क्तिनो बाधात् सम्पत्तिरित्यादिकथमित्यत आह—क्तिन्नपीष्यते इति । "कृत्यल्युटो बहुलम्" इति बहुलग्रहणेन सिद्धमित्याहुः । भाष्ये तु नैवं दृश्यते । सम्पत्तिः । सम्पूर्वकपद्धातोः क्तिनि, अनुबन्धलोपे दस्य चर्त्वेन तकारे विभक्तिकार्ये च तत्सिद्धिः । एवमेव 'विपत्तिः, आपत्तिः' इत्यत्रापि । ऊतियूति । एते स्त्रियां क्तिन्नन्ताः निपात्यन्त इत्यर्थः । तथाहि—अव्धातोः क्तिनि, "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इति ऊठ्, ऊतिः । यूतिः, जूतिः । अत्र अनयोर्दीर्घत्वं च निपात्यते । स्यतेः—सातिः । अत्र "द्यतिस्यति०" इतीत्वे प्राप्ते इह इत्वाभावो निपात्यते । सातिः । अत्र सनोतेर्वा "जनसन०" इत्यात्वे कृते स्वरार्थं निपातनम् । हेतिः । हनः क्तिनि, नकारस्य निपातनादित्वे आद्गुणे हेतिरिति रूपम् । हिनोतेस्तु क्तिनि कृते "क्ङिति च" इति निषेधं बाधित्वा निपातनात् गुणे रूपमित्यर्थः । कीर्तिः । कृत संशब्दने । स्वार्थिकण्यन्ताद् "ण्यासश्रन्थो युच्" इति युचं बाधित्वा क्तिन्निपात्यते । उदात्तश्च सः । ज्वरत्वरस्रिव्यविमवामिति । ज्वर, त्वर, स्रिवि, अवि, मव एषां द्वन्द्वः । "च्छ्वोः शूठ्" इत्यतो वकारग्रहणम्, ऊठ्ग्रहणम्, अनुनासिके इति चानुवर्तते । छस्य श इति नानुवर्तते, ज्वरादिषु छस्य अभावेन असम्भवात्। "अनुनासिकस्य क्विझलोः क्ङिति" इत्यतः क्विझलोरिति चानुवर्तते। चकारो वकारसमुच्चयार्थः । तदाह—एषामुपधावकारयोरिति । जूः । ज्वर् धातोः क्विपि, क्विपो लोपे, प्रत्ययलक्षणेन क्विपः सत्वात् "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इत्युपधावकारयोरूठि, 'ज् ऊठ् र्' इति जाते ठस्येत्संज्ञायां लोपे संयोगे च कृते, 'जू र्' इति भूते प्रातिपदिकत्वात्सौ, उलोपे, हल्ङ्यादिना सुलोपे, रस्य विसर्गत्वे च 'जूः' इति। एवम्- त्वर् धातोः 'तूः' । स्रिविधातोः 'स्रूः' । अव्धातोः 'ऊः' । मव्धातोः 'मूः' । इच्छा । भावेश इति । नत्वकर्तरि कारके चेत्यर्थः, निपातनसामर्थ्यादिति भावः। अ प्रत्ययात् । अ इति

पुत्रकाम्या ॥ **गुरोश्च हलः ३।३।१०३** गुरुमतो हलन्तात्स्त्रियामप्रत्ययः स्यात् । ईहा ॥ **ण्यासश्रन्थो युच ३।३।१०७** अकारस्यापवादः । कारणा । हारणा ॥ **नपुंसके भावे क्तः ३।३।११४ ल्युट च ३।३।११५** हसितम् । हसनम् ॥ **पुंसि संज्ञायां घः प्रायेण ३।३।११८ छादेर्घेद्व्युपसर्गस्य ६।४।९६** द्विप्रभृत्युपसर्ग-

---

लुप्तप्रथमाकम् । भावे अकर्तरि च कारके इत्येव । चिकीर्षा । कृधातोः सनि, नगते, "इको झल्" इति सनः कित्वे, "अज्झनगमां सनि" इति दीर्घे, "ऋत इद्धातोः" इति इत्वे, "उरण् रपरः" इति रपरत्वे, "हलि च" इति दीर्घे "सन्यङोः" इति द्वित्वे, अभ्यासत्वे, अभ्यासकार्ये सनः सस्य षत्वे च जाते, 'चिकीर्ष' इति भूते "सनाद्यन्ताधातवः" इति धातुसंज्ञायाम् तस्मात् चिकीर्षधातोः "अप्रत्ययात्" इति अप्रत्यये, "अतो लोपः" इति सनोऽकारलोपे कृदन्तत्वात्प्रातिपदिकत्वे टापि, अनुबन्धलोपे सवर्णदीर्घे, तस्मात् सौ, उलोपे, "हल्ङ्याब्भ्यो दीर्घात्" इति सलोपे कृते 'चिकीर्षा' इति रूपम् । 'पुत्र-काम्या' आत्मानं पुत्रमिच्छति इत्यर्थे "काम्यच्च" इति काम्यचि, चलोपे, 'पुत्रकाम्य' इति भूते, "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम्, तस्मात् पुत्रकाम्य इति धातोः "अप्रत्ययात्" इति अप्रत्यये, "अतो लोपः" इति काम्यगताकारलोपे अप्रत्ययेन संयोगे कृते, कृदन्तत्वात्प्रातिपदिकत्वे, टापि, अनुबन्धलोपे, सवर्णदीर्घे विभक्तिकार्ये च तत्सिद्धिः । गुरोश्च हलः । धातोरित्यनुवृत्तं हला विशेष्यते । तदन्तविधिः । हलन्तधा-तोर्गुरुत्वासम्भवात् गुरुमान् लक्ष्यते । तदाह—गुरुमत इति । भावे अकर्तरि च कारके इत्येव । ईहा । ईह् चेष्टायां धातोः "गुरोश्च हलः" इति अप्रत्यये कृदन्तत्वात्प्रातिपदि-कत्वे टापि, सवर्णदीर्घे विभक्तिकार्ये च कृते 'ईहा' इति रूपम् । ण्यासश्रन्थो युच् । णि, आस, श्रन्थ्, एभ्यः स्त्रियां भावादिषु युच् स्यादित्यर्थः । अकारस्येति । "अ प्रत्ययात्" इति विहितस्येत्यर्थः । कारणा । कृधातोः "हेतुमति च" इति णिचि, णचयोर्लोपे, "अचो ञ्णिति" इति वृद्धौ, रपरे च 'कारि' इति जाते, "ण्यासश्रन्थो युच्" इति युचि, चलोपे, "युवोरनाकौ" इति अनादेशे, 'कारि+अन' इति भूते, "णेरनिटि" इति णिलोपे, 'कार्+अन' इति भूते संयोगे णत्वे, टापि, विभक्तिकार्ये च कृते 'कारणा' इति रूपम् । हारणा । एवमेव हृधातोर्णिचि युचि अनादेशे णिलोपे, टापि, विभक्ति-कार्यं च तत्सिद्धिर्ज्ञेया । नपुंसके भावे क्तः । क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात् । ल्युट् च । चात् क्तः । नपुंसके भावे इत्येव । हसितम् । हस्धातोः "नपुंसके भावे क्तः" इति क्ते, कलोपे, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे, "आर्धधातुकस्ये-ड्वलादेः" इति इडागमे, प्रातिपदिकत्वे, सौ, सोरमि, पूर्वरूपे च, तत्सिद्धिः । हसनम् । हस्धातोः "ल्युट् च" इति ल्युटि, अनुबन्धलोपे 'यु' इत्यवशिष्टे, "युवोरनाकौ" इत्यनादेशे, 'हसन' इति जाते, प्रातिपदिकत्वे, विभक्तिकार्यं च कृते तत्सिद्धिः । पुंसि संज्ञायामिति । करणाधिकरणयोरित्येव । पूर्वसूत्रापवादः । छादेर्घे । 'अद्व्युपसर्गस्य' इति

हीनस्य छादेर्ह्रस्वः स्यात् घे परे । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । आकुर्वन्त्यस्मिन्नित्याकरः । अवे तृस्त्रोर्घञ् ३।३।१२० अवतारः कूपादेः । अवस्तारो जवनिका ॥ हलश्च ३।३।१२१ घापवादः । हलन्तात् घञ् स्यात् । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः । ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३।३।१२६ "करणाधिकरणयोः" इति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल । "तयोरेव" इति भावे कर्मणि च । कृच्छ्रे-दुष्करः कटो भवता । अकृच्छ्रे

---

छेदः। ह्रस्वः स्यादिति । "खचि ह्रस्वः" इत्यतस्तदनुवृत्तेः । दन्तच्छदः । छद् धातोर्णिचि, अनुबन्धलोपे उपधावृद्धौ, 'छादि' इति "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम्, तस्मात् "पुंसि संज्ञायां घः प्रायेण" इति घे, "लशक्वतद्धिते" इति घस्येत्संज्ञायां लोपे च "णेरनिटि" इति णिलोपे, छादेर्घेऽद्व्युपसर्गस्य" इति उपधाह्रस्वे, संयोगे कृते, विभक्तिकार्यं समासे च कृते तत्सिद्धिः । आकरः । आङ्पूर्वककृधातोः "पुंसि सञ्ज्ञायां घः प्रायेण" इति घे, घलोपे "सार्वधातुकार्धधातुकयोः" इति गुणे रपरे संयोगे विभक्तिकार्ये च कृते तत्सिद्धिः। अवे तृस्त्रोर्घञ् । अवेत्युपसर्गे उपपदे तॄ स्तॄ आभ्यां घञ् स्यात् पुंसि सञ्ज्ञायां प्रायेणेत्यर्थः। अवतारः। अवोपसर्गपूर्वक तॄ धातोः "अवे तृस्त्रोर्घञ्" इति घञि, घस्य ञस्य चेत्सञ्ज्ञायां लोपे च अस्य "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति गुणे, रपरे, "अत उपधायाः" इति वृद्धौ, विभक्तिकार्यं च 'अवतारः' इति सिद्धम् । अवस्तारः। अवोपसर्गपूर्वकात् स्तॄधातोः "अवे तृस्त्रोर्घञ्" इति घञि, घस्य ञस्य च लोपे, आर्धधातुकत्वे गुणे रपरे "अत उपधायाः" इति वृद्धौ, संयोगे विभक्तिकार्य च तत्सिद्धिः। हलश्च ।

स्पष्टम् । घापवाद इति । "पुंसि सञ्ज्ञायाम्" इति विहितस्य घस्यापवाद इत्यर्थः। रामः । रम्धातोः "हलश्च" इति घञि, अनुबन्धलोपे, "अत उपधायाः" इति वृद्धौ, कृदन्तत्वात्प्रातिपदिकत्वे सौ, उलोपे, सस्य रुत्वे रेफस्य विसर्गत्वे च 'रामः' इति रूपम् । अपामार्गः । अपोपसर्गकमृज् धातोः "हलश्च" इति घञि, अनुबन्धलोपे "मृजेर्वृद्धिः" इति वृद्धौ, "उरण् रपरः" इति रपरत्वे, "चजोः कुघिण्यतोः" इति जस्य कुत्वेन गत्वे, "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति उपाकारस्य दीर्घे, कृदन्तत्वात्प्रातिपदिकत्वे, सौ, उलोपे, सस्य रुत्वे, रेफस्य विसर्गत्वे च 'अपामार्गः' इति सिद्धम् । ईषद्दुस्सुष्विति । निवृत्तमिति । व्याख्यानादिति भावः। तर्हि "कर्तरि कृत्" इति कर्तरि स्यादित्यत आह—तयोरेवेति। इह दुरिति कृच्छ्रार्थ एवान्वेति, अकृच्छ्रार्थे तु ईषदिति सु इति चान्वेति। योग्यताबलात्। तदेतदाह—कृच्छ्रे दुष्कर इत्यादिना। दुस्पूर्वककृधातोः "ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खलि, खलयोर्लोपे, "आर्धधातुकं शेषः" इति आर्धधातुकत्वे, "सार्वधातुकार्धधातुकयोः" इति

ईषत्करः । सुकरः ॥ **आतो युच् ३।३।१२८** खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥ **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३।४।१८** प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचां ग्रहणं पूजार्थम् । "अमैवाव्ययेन" इति नियमान्नोपपदसमासः । "दो दद्घोः" । अलं दत्त्वा । "घुमास्था" इतीत्वम् । पीत्वा खलु । अलंखल्वोः किम् ? मा कार्षीत् । प्रतिषेधयोः किम् ? अलंकारः । **समानकर्तृकयोः पूर्वकाले ३।४।२१** समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा भुक्त्वा पीत्वा व्रजति । **न क्त्वा सेट् १।२।१८** सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् ?

---

गुणे, "उरण् रपरः" इति रपरत्वे सस्य षत्वे विभक्तिकार्यं च कृते 'दुष्करः' इति रूपम् । एवमेव । ईषत्करः । सुकरः इत्यादौ बोध्यम् । आतो युजिति । कर्तृकर्मणोरिति नानुवर्तते, अस्वरितत्वात् । ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु आदन्ताद्धातोर्युच् स्यादित्यर्थः । तयोरेवेति भावे कर्मणि च । खलोऽपवाद इति । वाऽसरूपविधिस्तु न भवति, "क्त्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्न" इत्युक्तेः । ईषत्पानः । ईषत्पूर्वकपाधातोः "आतो युच्" इति युचि, चलोपे, "युवोरनाकौ" इति योरनादेशे, विभक्तिकार्ये च कृते, 'ईषत्पानः' इति । एवमेव—दुष्पानः । अत्र "इदुदुपध०" इति षः । अलंखल्वोरिति । क्त्वा स्यादिति । भावार्थकोऽयम् । "अव्ययकृतो भावे" इति वचनात् । एतच्च 'तुमर्थे सेसेन" इति सूत्रे भाष्ये स्पष्टम् । ननु "उदीचां माङो व्यतीहारे" इत्युत्तरसूत्रे उदीचां ग्रहणादस्य नित्यत्वावश्यकत्वात् प्राचां ग्रहणं व्यर्थमित्यत आह—प्राचां ग्रहणं पूजार्थमिति । न च वाऽसरूपविधिराशङ्क्यः । तस्य "स्त्रियां क्तिन्" इत्यतः प्रागेव प्रवृत्तेरुक्तत्वात् । उपपदसमासे ल्यपमाशङ्क्य आह—अमैवाव्ययेनेति । अलं दत्त्वेति । दानेन किञ्चिदपि साध्यं नास्तीत्यर्थः । अत्र साध्यते—अलं पूर्वकदाधातोः "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वाप्रत्यये कलोपे "दोदद्घोः" इति दाधातोर्दथादेशे "खरि च" इति दस्य तत्वे कृदन्तत्वात्प्रातिपदिकत्वे सौ समागते "क्त्वातोसुन्कसुनः" इति अव्ययसञ्ज्ञायाम् "अव्ययादाप्सुपः" इति सोर्लुकि च कृते 'अलं दत्त्वा' इति । पीत्वा खलु । पानेन साध्यं नास्तीत्यर्थः । खलवन्तात्पाधातोः क्त्वाप्रत्यये कलोपे, "घुमास्था" इति पकाराकारस्य ईत्वे 'पीत्वा खलु' इति । समानेति । समानकर्तृकयोरिति निर्धारणे षष्ठी । पूर्वकाल इत्यस्य पूर्वकालके धात्वर्थे इत्यर्थः, विद्यमानादिति शेषः । क्त्वा स्यादिति । अव्ययकृत्वाद्भावार्थकोऽयम् । भुक्त्वा व्रजति । पूर्वकालिकाद्भोजनात् उत्तरकालिकं व्रजनमित्यर्थः । भुज्धातोः क्त्वाप्रत्यये कलोपे "चोः कुः" इति जस्य गत्वे, गस्य कत्वे च कृते तत्सिद्धिः । द्वित्वमतन्त्रमिति । समानकर्तृकयोरिति द्वित्वमविवक्षितमिति भावः । न क्त्वा सेट् । किन्नेति । "असंयोगाल्लिट् कित्" इत्यतः किदित्यनुवृत्तेरिति भावः । शयित्वेति । क्त्वा-

क्त्वा। रलो व्युपधाद्धलादेः संश्च १।२।२६ इवर्णोवर्णोपधाद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतित्वा, द्योतित्वा। लिखित्वा, लेखित्वा। व्युपधात्किम्? वर्तित्वा। रलः किम्? सेवित्वा। हलादेः किम्? एषित्वा। सेट् किम्? भुक्त्वा॥ उदितो वा ७।२।५६ उदितः परस्य क्त्व इ वा स्यात्। शमित्वा, शान्त्वा। देवित्वा, द्यूत्वा। "दधातेर्हिः"। हित्वा॥ जहातेश्च क्त्वि ७।४।४३ हित्वा। हाङ्स्तु हात्वा॥ समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७ अव्ययपूर्वपदे-

---

भावात् न गुणनिषेधः। रलो। क्त्वासनाविति। चकारेण "पूङः क्त्वा च" इत्यतः क्त्वाया अनुकर्षादिति भावः। सेटाविति। "न क्त्वा सेट्" इत्यतस्तदनुवृत्तेरिति भावः। वा किताविति। "नोपधात्थफान्ताद्वा" इत्यतः "असंयोगाल्लिट् कित्" इत्यतश्च तदनुवृत्तेरिति भावः। द्युतित्वा, द्योतित्वा। द्युत् धातोः "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्यये कलोपे, "आर्धधातुकं शेषः" इत्यार्धधातुकत्वे, "आर्धधातुकस्येड्वलादेः" इति इडागमे, "न क्त्वा सेट्" इति कित्वनिषेधे प्राप्ते, "रलो व्युपधाद्धलादेः संश्च" इति क्त्वाप्रत्ययस्य वैकल्पिके कित्वे, "क्ङिति च" इति गुणनिषेधे च जाते, 'द्युतित्वा' इति। कित्वाभावपक्षे–"पुगन्तलघूपधस्य च" इति गुणे कृते 'द्योतित्वा'। एवमेव 'लिखित्वा, लेखित्वा' इत्यत्र बोध्यम्। वर्तित्वा। अत्र इवर्णोवर्णोपधत्वाऽभावात् "न क्त्वा सेट्" इति नित्यं कित्वनिषेधत्वात् "पुगन्तलघूपधस्य च" इति गुणे च कृते तत्सिद्धम्। सेवित्वा। अत्र रलन्तत्वाऽभावात् "न क्त्वा सेट्" इति कित्वाऽभावे "पुगन्तलघूपधस्य च" इति गुणे च कृते 'सेवित्वा' इति। एवमेव हलाद्यभावत्वात् 'एषित्वा'। भुक्त्वा। सेडभावत्वेन कित्वाद् गुणाभावः। उदितो वेति। क्त्व इति। "जॄव्रश्च्योः" इति पूर्वसूत्रात्तदनुवृत्तेरिति भावः। शमित्वा, शान्त्वा। शम्धातोः "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्यये "उदितो वा" इति वा इडागमे 'शमित्वा' इति। इडभावे "अनुनासिकस्य क्विझलोः क्ङिति" इति दीर्घत्वे, "नश्चापदान्तस्य झलि" इति मस्य अनुस्वारे, "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णत्वे च कृते 'शान्त्वा' इति। देवित्वा, द्यूत्वा। दिव्धातोः क्त्वाप्रत्यये कलोपे, "उदितो वा" इति वेटि, "पुगन्तलघूपधस्य च" इति गुणे च कृते 'देवित्वा'। इडभावपक्षे—"छ्वोः शूडनुनासिके च" इत्यूठि, ठलोपे, "इको यणचि" इति यणि च कृते 'द्यूत्वा' इति। हित्वा। धाधातोः क्त्वाप्रत्यये कलोपे, "दधातेर्हिः" इति धास्थाने हित्वे कृते 'हित्वा' इति रूपम्। 'ओ हाक् त्यागे' इत्यस्य क्त्वायां हिभावं दर्शयति–जहातेश्च क्त्वि। हित्वेति। त्यक्त्वेत्यर्थः। हाङ्स्त्विति। "जहातेश्च क्त्वि" इति हिभावविधौ जहातेरिति निर्देशात् 'ओहाक् त्यागे' इत्यस्य ग्रहणम्, न तु 'ओहाङ् गतौ' इत्यस्य। तस्य "भृञामित्" इति इत्वे जिहातेरिति निर्देशापत्तेः। समासे। "अनञ्पूर्वे" इति पर्युदासात् अव्ययपूर्वपद इति लभ्यते इति मत्वा आह—

ऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् ? अकृत्वा ॥ **आभीक्ष्ण्ये णमुल् च ३।४।२२** आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च ॥ **नित्यवीप्सयोः ८।१।४** आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु कृदन्तेषु । स्मारं स्मारं नमति शिवम् । स्मृत्वा स्मृत्वा । पायं पायम् । भोजं भोजम् । श्रावं श्रावम् । **अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३।४।२७** एषु कृञो णमुल् स्यात् । सिद्धोऽप्रयोगोऽस्य एवं भूतश्चेत् कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारम् । एवंकारम् । इत्थंकारं भुङ्क्ते ॥ सिद्धेति किम् ? शिरोऽन्यथा कृत्वा भुङ्क्ते । इत्युत्तरकृदन्तम् । इति कृदन्तप्रकरणम् ॥

---

अन्ययेत्यादि । तुगिति । "ह्रस्वस्य पिति" इत्यनेनेति भावः । प्रकृत्येति । कृधातोः "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्यये अनुबन्धलोपे, कित्वाद्गुणाभावे, 'कृत्वा' इति निष्पन्ने, प्रशब्दः प्रकर्षे, तस्य "कुगति" इति क्त्वान्तेन नित्यसमासे "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यपि, अनुबन्धलोपे, "ह्रस्वस्य पिति कृति तुक्" इति तुकि, उको लोपे च कृते 'प्रकृत्य' इति रूपम् । अकृत्वा । नञ्पूर्वककृधातोः क्त्वि, नञ्समासत्वात् ल्यबभावे 'अकृत्वा' इति रूपम् । आभीक्ष्ण्ये णमुल् च । "समानकर्तृकयोः पूर्वकाले" इत्युत्तरमिदं सूत्रम् । तदाह—पूर्वविषये इति । नित्यवीप्सयोरिति । नित्यमिह पौनःपुन्यमित्याह—आभीक्ष्ण्य इति । द्योत्य इति । "नपुंसकमनपुंसकेन" इत्येकशेषः, एकवचनत्वञ्च बोध्यः । स्मारं स्मारम् । स्मृधातोः "आभीक्ष्ण्ये णमुल् च" इति णमुलि, णकारोकारलकारलोपे 'स्मृअम्' इत्यवशिष्टे, "अचो ञ्णिति" इति वृद्धौ, रपरे च 'स्मारम्' इति जाते, "नित्यवीप्सयोः" इति द्वित्वे, कृदन्तत्वात्प्रातिपदिकत्वात्सौ, "कृन्मेजन्तः" इत्यव्ययत्वे, "अव्ययादाप्सुपः" इति सुपो लुकि, मस्यानुस्वारे च 'स्मारं स्मारं नमति शिवम्' इति सिद्धम् । स्मृत्वा स्मृत्वा । स्मृधातोः "आभीक्ष्ण्ये णमुल् च" इति क्त्वाप्रत्यये कलोपे, गुणाभावे, "नित्यवीप्सयोः" इति द्वित्वे च 'स्मृत्वा स्मृत्वा' इति । पायं पायम् । पाधातोः "आभीक्ष्ण्ये णमुल् च" इति णमुलि, अनुबन्धलोपे, "आतो युक् चिण्कृतोः" इति युकि, उको लोपे, "नित्यवीप्सयोः" इति द्वित्वे च कृते, पायंपायमिति । भोजंभोजम् । भुज्धातोः णमुलि, अनुबन्धलोपे, "पुगन्तलघूपधस्य च" इति गुणे "नित्यवीप्सयोः" इति द्वित्वे च कृते, भोजंभोजमिति । श्रावं श्रावमिति । श्रुधातोः "आभीक्ष्ण्ये णमुल् च" इति णमुलि, अनुबन्धलोपे, "अचो ञ्णिति" इति वृद्धौ, "एचोऽयवायावः" इत्यावि, "नित्यवीप्सयोः" इति द्वित्वे, मस्यानुस्वारे च कृते, श्रावंश्रावमिति । अन्यथैवम् । अन्यथा, एवम्, कथम्, इत्थम्, एषामव्ययानां द्वन्द्वात्सप्तमीबहुवचनम् । सिद्धः अप्रयोगः–प्रयोगाभावः यस्य कृञः स सिद्धाप्रयोग इति विग्रहः । तदाह—एषु कृञ इत्यादि । ननु कृञः अप्रयोगे कथं तदर्थावगतिः । अर्थावगत्यभावे

## अथ विभक्त्यर्थाः ।

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २।३।४६** नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे सङ्ख्यामात्रे च प्रथमा स्यात् ॥ प्रातिपदिकार्थमात्रे–उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । लिङ्गमात्रे–तटः । तटी । तटम् । परिमाणमात्रे—द्रोणो व्रीहिः । वचनं सङ्ख्या—एकः । द्वौ । बहवः ॥ **सम्बोधने च २।३।४७** प्रथमा स्यात् । हे राम । इति प्रथमा । **कर्तुरीप्सिततमं कर्म १।४।४९** कर्तुः क्रियया

---

तत्प्रयोगो वा किमर्थं इत्यत आह—व्यर्थत्वादिति । निष्फलत्वादिति भावः । अन्यथाकारम् । अन्यथापूर्वकक्रुधातोः "अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्" इति णमुलि, अनुबन्धलोपे, "अचो ञ्णिति" इति वृद्धौ, अव्ययत्वात्सुपो लुकि 'अन्यथाकारम्' इति रूपम् । एवमेव 'एवङ्कारम्' इत्यादि । इति कृदन्तप्रकरणम् ।

प्रातिपदिकार्थलिङ्गेति । पदम्पदमिति प्रतिपदम्, प्रतिपदं भवं प्रातिपदिकम्, तस्यार्थः प्रातिपदिकार्थः । स च लिङ्गञ्च परिमाणं च वचनं च प्रातिपदिकार्थलिङ्गपरिमाणवचनानि । तान्येवेति प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रं तस्मिन् । "द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति भाष्योक्त्या द्वन्द्वान्ते श्रूयमाणमात्रपदस्य प्रत्येकमन्वयात्प्रातिपदिकार्थमात्र इत्याद्यर्थः सम्पद्यते । नियतोपस्थितिक इति । नियता—व्यापिका उपस्थितिर्यस्य स नियतोपस्थितिकः । यस्मिन्प्रातिपदिके उच्चारिते सति यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थः । मात्रशब्दस्येति । "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति न्यायादिति भावः । उच्चैः ,नीचैः, कृष्णः, श्रीः, ज्ञानम् । अत्र "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इत्यनेन सूत्रेण प्रातिपदिकार्थमात्रे प्रथमा विभक्तिर्भवति । तटः, तटी, तटम् । अत्र प्रातिपदिकार्थत्वेऽपि लिङ्गाधिक्ये प्रथमा । परिमाणमात्रे द्रोणो व्रीहिः । द्रोणो व्रीहिरित्यत्र द्रोणशब्दात्प्रातिपदिकार्थमात्रे प्रथमाविधानेऽभेदान्वयो दुर्वारः स्यात् । स च अत्र बाधितः स्यात् । द्रोणव्रीह्योर्भिन्नत्वादतः परिमाणमात्रे प्रथमाविधानम् । तेन द्रोणरूपं यत्परिमाणम्; तत्परिच्छिन्नो व्रीहिरित्यर्थस्य लाभः । वचनं संख्या । ननु एकादिशब्दादेवैकत्वादिसंख्याबोधसिद्धौ तदर्थं संख्यायामेकवचनादिविधानं विफलमिति चेद् ? न । 'अपदं न प्रयुञ्जीत' इति वचनेन तस्य विधानस्य सार्थक्यात् । न चैवं तर्हि एकशब्दाद् द्विवचनबहुवचनापत्तिरिति वाच्यम् । अनन्वितार्थविभक्तिकल्पनापेक्षयाऽनुवादकविभक्तिर्न्याय्येति वचनात् । एकः, द्वौ, बहवः । अत्र वचनाधिक्यात् "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इत्यनेन प्रथमा । सम्बोधने चेति । सम्बोधने अधिके गम्येऽपि प्रथमा स्यादित्यर्थः । सम्बोधनमभिमुखीकृत्य ज्ञापनम् ।

आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्। **कर्मणि द्वितीया २।३।२** अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहिते तु कर्मादौ प्रथमा। हरिः सेव्यते। लक्ष्म्या हरिः सेवितः॥ **अकथितं च १।४।५१** अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्। "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्" ॥१॥ गां दोग्धि पयः। बलिं याचते वसुधाम्। तण्डुलानोदनं पचति। गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। माणवकं धर्मं ब्रूते, शास्ति वा। शतं जयति देवदत्तम्। सुधां क्षीरनिधिं मथ्नाति। देवदत्तं शतं मुष्णाति। ग्राममजां नयति, हरति, कर्षति, वहति वा। अर्थनिबन्धनेयं संज्ञा। बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते, अभिधत्ते.

---

हे राम। अत्र "सम्बोधने च" इति सम्बोधनाधिक्ये प्रथमा। कर्तुरीप्सिततमं कर्मेति। कर्तुरिति "कस्य च वर्तमाने" इति कर्तरि षष्ठी। आप्नोतेः सन्। द्वित्वम्। कर्त्राऽऽप्तुमिष्यमाणतमं कर्मेत्यर्थः। कर्ता च धातूपात्तव्यापाराश्रयः। स च केनाप्तुमिच्छतीति करणाकाङ्क्षायां विशेषणीभूतेन व्यापारेणेत्यर्थाल्लभ्यते। तदाह—क्रिययेति। कारकमिति। एतच्च "कारके" इत्यधिकाराल्लभ्यते। तत्र हि व्यत्ययेन प्रथमार्थे सप्तमी। प्रतिसूत्रं वाक्यं भित्वा कारकसंज्ञाऽनेन विधीयते। तद्यथा अपाये ध्रुवं कारकसंज्ञं स्यादित्यादि। कर्मणि द्वितीया। द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते तैरेवात्र व्यवहारः। हरिं भजतीति। अत्र "कर्तुरीप्सिततमं कर्म" इति कर्मसंज्ञायाम् "कर्मणि द्वितीया" इति द्वितीया विभक्तिर्जाता। हरिः सेव्यते। अत्र तिङ्प्रत्ययेन उक्तकर्मत्वान्न द्वितीया। लक्ष्म्या हरिः सेवितः। अत्र कृत्प्रत्ययेन उक्तकर्मत्वान्न द्वितीया। अकथितञ्चेति। अत्र अविवक्षा द्विधा प्राप्तिपूर्विका अप्राप्तिपूर्विका च। दुह्याच् पच् इति। दुह प्रपूरणे। टुयाचृ याच्ञायाम्। डुपचष् पाके। दण्ड दण्डनिपातने। रुधिर् आवरणे। प्रच्छ ज्ञीप्सायाम्। चिञ् चयने। ब्रूञ् व्यक्तायां वाचि। शासु अनुशिष्टौ। जि जये। मन्थ विलोडने। मुष् स्तेये। णीञ् प्रापणे। हृञ् हरणे। कृष् विलेखने। वह प्रापणे। एषां कर्मणा युक्तं कर्माकथितं कर्म इत्युच्यते। गां दोग्धि पयः। अत्र 'गोः पयो दोग्धि' इति अपादानस्याविवक्षितत्वात् "अकथितञ्च" इति कर्मसंज्ञायां "कर्मणि द्वितीया" इति द्वितीयायां कृतायां 'गां पयो दोग्धि' इति। बलि शब्दे अपादानत्वस्याविवक्षितत्वात् "अकथितञ्च" इति कर्मसंज्ञायाम् "कर्मणि द्वितीया" इति द्वितीयायां कृतायां बलिं याचते वसुधाम्। तण्डुलैरोदनम्पचति इत्यत्र करणस्याविवक्षितत्वात् "अकथितञ्च" इति कर्मसंज्ञायाम् "कर्मणि द्वितीया" इति द्वितीयायाम् 'तण्डुलानोदनं पचति' इति। गर्गान् शतं दण्डयति। अत्र गर्गेभ्यः इति अपादानस्याविवक्षितत्वात् कर्मसंज्ञायां द्वितीया। व्रजमवरुणद्धि गाम्। अत्र अधिकरणस्याऽविवक्षितत्वात् कर्म। माणवकं

वक्तीत्यादि ॥ इति द्वितीया । **स्वतन्त्रः कर्ता १।४।५४** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । **साधकतमं करणम् १।४।४२** क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् ॥ **कर्तृकरणयोस्तृतीया २।३।१८** अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ॥ इति तृतीया । **कर्मणा यमभिप्रैति स सम्प्रदानम् १।४।३२** दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः ॥ **चतुर्थी सम्प्रदाने २।३।१३** विप्राय गां ददाति ॥ **नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च २।३।१६** एभिर्योगे चतुर्थी स्यात् । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः, समर्थः, शक्त इत्यादि ॥ इति चतुर्थी । **ध्रुवमपायेऽपादानम् १।४।२४** अपायो

---

पन्थानं पृच्छति । अत्र अपादानस्याविवक्षितत्वात्कर्म । एवमग्रेऽप्यूह्यम् । स्वतन्त्रः कर्ता । स्वतन्त्र इति प्रधानीभूत उच्यते । अगुणीभूतो यः । स्थाल्यादीनां वस्तुतः स्वातन्त्र्याभावेऽपि स्थाली पचति, काष्ठानि पचन्ति इत्यादि प्रयोगोऽपि साधुरेवेति ध्वनयति—विवक्षितोऽर्थ इति । साधकतमम् । प्रकृष्टेति । यद्व्यापारादनन्तरं फलनिष्पत्तिस्तत्प्रकृष्टम् । उक्तञ्च—'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्' । इति । कर्तृकरणयोस्तृतीया । "अनभिहिते" इत्यधिकारादाह—अनभिहिते इति । रामेण बाणेन हतो वाली । अत्र "साधकतमं करणम्" इति करणसंज्ञायाम् "कर्तृकरणयोस्तृतीया" इति रामशब्दात् कर्तरि तृतीया, बाणशब्दाच्च करणे तृतीया ज्ञेया । कर्मणायमभिप्रैति । अन्वर्थसंज्ञाविज्ञानाद्ददातिकर्मणेति विज्ञायते । सम्यक्प्रदीयतेऽस्मै तत्सम्प्रदानमिति । अत एवाह—दानस्येति । दानक्रियाकर्मणा कर्ता यमभिप्रैति सम्बध्नाति सम्बन्धुमीप्सति वा तत्कारकं सम्प्रदानसंज्ञकमित्यर्थः । चतुर्थी सम्प्रदाने । सम्प्रदाने कारके चतुर्थी विभक्तिर्भवति । विप्राय गां ददाति । अत्र "कर्मणा यमभिप्रैति" इति सम्प्रदानसंज्ञायाम् "सम्प्रदाने चतुर्थी" इति चतुर्थी । नमः स्वस्तीति । युज्यते इति योगः, कर्मणि घञ् । नमस् इत्यादिभिर्युक्तादित्यर्थः । फलितमाह—एभिर्योगे इति । हरये नमः । अत्र सर्वत्र "नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च" इति चतुर्थी । प्रजाभ्यः स्वस्तीति । प्रजासम्बन्धिकुशलमित्यर्थः । अग्नये स्वाहेति । अग्न्युद्देश्यकं द्रव्यदानमित्यर्थः । पितृभ्यः स्वधेति । पित्रुद्देश्यकं द्रव्यदानमित्यर्थः । अलमितीति । वार्तिकमेतत् । अलमित्यनेन पर्याप्त्यर्थकशब्दानां ग्रहणमित्यर्थः । तेनेति । पर्याप्त्यर्थकग्रहणेनेत्यर्थः । ध्रुवमपाये । ध्रुगतिस्थैर्ययोः । अस्मात्पचाद्यचि, कुटादित्वाण्ङित्वे, उवङ् । ध्रुवस्थैर्ये इति केचित् । तत्रेगुपधेति कः । ध्रुवं स्थिरम् । अपायशब्देन विवक्षितमाह—विश्लेष इति । एवं च प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागाश्रयो ध्रुवमिति फलितम् । तच्चार्थादवधिरेवेत्याह—अवधि-

विश्लेषस्तस्मिन्साध्ये यत् ध्रुवमवधिभूतं कारकं तदपादानं स्यात्॥ **अपादाने पञ्चमी २।३।२८** ग्रामादायाति। धावतोऽश्वात्पततीत्यादि॥ इति पञ्चमी। **षष्ठी शेषे २।३।५०** कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषस्तत्र षष्ठी स्यात्। राज्ञः पुरुषः। कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते। मातुः स्मरति। एधोदकस्योपस्कुरुते। भजे शम्भोश्चरणयोः॥ इति षष्ठी। **आधारोऽधिकरणम् १।४।४५** कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात्॥ **सप्तम्यधिकरणे च २।३।३६** अनभिहिते अधिकरणे सप्तमी स्यात्। चकाराद्दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधार-

---

भूतमिति। अपादाने। स्पष्टत्वान्न व्याख्यातम्। ग्रामादायातीति। आगच्छतीत्यर्थः। कस्मादित्याकाङ्क्षाविषयत्वात् ग्रामोऽवधिरिति अपादानत्वात् पञ्चमी। धावत इति। इह धावनक्रियाविशिष्टस्याश्वस्य प्रकृतपत्धातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते। षष्ठी शेषे। उक्तादन्यः शेषः। "कर्मणि द्वितीया" इत्यादिसूत्रेषु द्वितीयादिविधिषु हि कर्मकर्तृकरणसम्प्रदानापादानाधिकरणकारकाण्यनुक्रान्तानि। प्रथमाविधौ प्रातिपदिकार्थोऽनुक्रान्तः। एतेभ्योऽन्यः स्वस्वामिभावादिसम्बन्धः शेषपदार्थ इत्यर्थः। राज्ञः पुरुषः। अत्र सम्बन्धविवक्षायां "षष्ठी शेषे" इति षष्ठी। कर्मादीनामिति। कर्मत्वकर्तृत्वादीनामपि सम्बन्धत्वसामान्यात्मना विवक्षायां षष्ठ्येव। न तु कारकविभक्तय इत्यर्थः। सतां गतमिति। सत्पुरुषसम्बन्धि गमनमित्यर्थः। अत्र कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठी। सर्पिषो जानीते इति। करणस्य सम्बन्धमात्रविवक्षायां षष्ठी। सर्पिःसम्बन्धि प्रवर्तनमित्यर्थः। मातुः स्मरतीति। कर्मत्वस्य शेषत्वविवक्षायां मातृसम्बन्धिस्मरणमित्यर्थः। एधो दकस्योपस्कुरुते। एधः—काष्ठं, दकस्य = उदकस्य, उपस्कुरुते गुणमाधत्ते इति तदर्थः। एधशब्द अकारान्तः पुलिङ्गः, "कारके" इति सूत्रे 'एधाः पच्यन्ते' इति भाष्यप्रयोगात्। सान्तः क्लीबोऽपि। भजे शम्भोश्चरणयोरिति। अत्र चरणयोः कर्मत्वस्य शेषत्वविवक्षायां षष्ठी। शम्भुचरणसम्बन्धि भजनमित्यर्थः। आधारोऽधिकरणम्। आध्रियतेऽस्मिन्नित्याधारः, आङ्पूर्वकाद्धरतेरधिकरणे घञ्। अधिक्रियतेऽस्मिन्नित्यधिकरणम्। अधिपूर्वकात्करोतेर्ल्युट्। आधारोऽधिकरणसंज्ञः इत्यर्थं कस्याधार इत्याकाङ्क्षोदये क्रियाधारो गृह्यते, तत्र साक्षात्क्रियाया आधाराभावात् कर्तृकर्मद्वारा कर्तृकर्मनिष्ठक्रियाया आधारो गृह्यते, तदाह—कर्तृकर्मद्वारा तन्निष्ठक्रियाया इति। कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति। सप्तम्यधिकरणे च। "अनभिहिते" इत्यधिकारात् चकारात् "दूराऽन्तिकार्थेभ्यो द्वितीया च" इत्यस्याप्यनुकर्षणाच्चाह—अनभिहिते इत्यादिना। औपश्लेषिकः। उप-समीपे, श्लेषः—सम्बन्ध उपश्लेषः, तत्र कृतमौपश्लेषिकम्। अयं

त्रिधा। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छाऽस्ति। सर्वस्मिन्नात्माऽस्ति। वनस्य दूरे अन्तिके वा॥ इति सप्तमी। इति विभक्त्यर्थाः॥

## अथ समासाः।

समासः पञ्चधा। तत्र समसनं समासः। स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः। प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः। प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः। तत्पुरुषभेदः कर्मधारयः, कर्मधारयभेदो द्विगुः। प्रायेणान्यपदा-

---

प्रथम आधारः। अस्योदाहरणम्—कटे आस्ते। अत्र "आधारोऽधिकरणम्" इत्यधिकरणसंज्ञायाम् "सप्तम्यधिकरणे च" इति सप्तमी। एवमेव—'स्थाल्यां पचति' इत्यत्रापि सप्तमी। वैषयिकः—विषये भवो वैषयिकः। अस्योदाहरणम्—मोक्षे इच्छा अस्ति। अत्र कर्तृभूतेच्छागतां सत्ताक्रियां प्रति मोक्षस्य विषयतासम्बन्धपुरस्कारेण इच्छाद्वाराधारत्वादधिकरणम्। अभिव्यापकः। अभि–सर्वतो भावेन व्याप्नोतीति अभिव्यापकः। यः आधारः सर्वमभिव्याप्नोति सोऽभिव्यापक इत्युच्यते। अस्योदाहरणम्—सर्वस्मिन्नात्माऽस्ति। सर्वस्मिन्नभिव्याप्य आत्मा वर्तत इत्यर्थः। अत्र आत्मरूपकर्तृगतां सत्ताक्रियां प्रति कृत्स्नव्याप्तिं पुरस्कृत्य आत्मद्वारा सत्ताधारत्वात्सर्वस्याधिकरणत्वम्। वनस्य दूरे अन्तिके वेति। अत्र चकारात् "दूराऽन्तिकार्थेभ्यः" इत्यनुवर्त्य सप्तमी विधीयते। प्रातिपदिकार्थे विधिरयम्। दूरम्–अन्तिकमित्यर्थः। इति विभक्त्यर्थः।

तत्रेति। पञ्चविधेषु समासेष्वित्यर्थः। समसनम्। इत्यस्य मिलनमित्यर्थः। तच्च पृथगर्थपदानामेकार्थोपस्थितिजनकत्वरूपमित्यर्थः। विशेषसञ्ज्ञाविनिर्मुक्त इति। विशेषाश्च ताः सञ्ज्ञा विशेषसञ्ज्ञाः, अव्ययीभावादयस्ताभिर्विनिर्मुक्तो रहितो विशेषसञ्ज्ञाविनिर्मुक्तः। अव्ययीभावादिविशेषसञ्ज्ञारहितः केवलसमास इत्यभिधीयते। प्रायेण पूर्वपदार्थप्रधानः। पूर्वश्चासौ पदार्थश्च पूर्वपदार्थः, स प्रधानो यस्मिन् स पूर्वपदार्थप्रधानः। यस्मिन् समासे पूर्वपदार्थस्य प्राधान्यं सोऽव्ययीभावसञ्ज्ञक इत्यर्थः। सूपप्रति, उन्मत्तगङ्गमित्याद्यव्ययीभावेऽपि सूपोन्मत्तयोः पूर्वपदार्थयोरप्राधान्यात्प्रसक्तव्यभिचारविनिवृत्यर्थमसुक्तलक्षणे प्रायेणेति पदम्। प्रायेणोत्तरपदार्थप्रधानः। उत्तरपदार्थः प्रधानो यस्मिन् स उत्तरपदार्थप्रधानः। यस्मिन्समासे उत्तरपदार्थस्य प्राधान्यं सः। तत्पुरुषसमासेऽपि अतिमालादौ अतिक्रमणकर्तृत्वरूपपूर्वपदार्थस्यैव प्राधान्येन मालादिरूपोत्तरपदार्थस्याप्राधान्यादुक्तलक्षणे प्राप्तव्यभिचारनिवृत्तये प्रायेणेति पदम्। प्रायेणान्यपदार्थप्रधानः। अन्यः पदार्थः प्रधानो यस्मिन् सोऽन्यपदार्थप्रधानः। यस्मिन् समासेऽन्यपदार्थस्य वर्तिपदार्थातिरिक्तस्य प्राधान्यं स बहुव्रीहिसञ्ज्ञक इत्यर्थः। बहुव्रीहावपि 'द्वित्राः' इत्यादावन्यपदार्थस्याऽप्राधान्यात्प्रायेणेत्युक्तम्। प्रायेणोभयपदार्थप्रधानः।

र्थप्रधानो बहुव्रीहिश्चतुर्थः। प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः॥ **समर्थः पदविधिः २।१।१** पदसम्बन्धी यो विधिः स समार्थाश्रितो बोध्यः॥ **प्राक्कडारात्समासः २।१।३** कडाराः कर्मधारये इत्यतः प्राक्समास इत्यधिक्रियते॥ **सह सुपा २।१।४** सुप् सुपा सह वा समस्यते। समासत्वात्प्रातिपदिकत्वेन सुपो लुक्। परार्थाभिधानं वृत्तिः। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स च लौकिकोऽलौकिकश्चेति द्विधा। तत्र पूर्वं भूतो भूतपूर्व इति लौकिकः। पूर्व अम् भूत सु इत्यलौकिकः। "भूतपूर्वे चरट्" इति निर्देशाद्भूतशब्दस्य पूर्वनिपातः। (**इवेन समासो विभक्त्यलोपश्च**) वागर्थौ इव, वागर्थाविव। इति केवलसमासः प्रथमः॥

---

उभयः पदार्थः प्रधानो यस्मिन् स उभयपदार्थप्रधानः। यस्मिन् समासे उभयपदार्थस्य प्राधान्यं स द्वन्द्वसञ्ज्ञक इत्यर्थः। पाणिपादमित्यादिद्वन्द्वेऽप्युभयपदार्थस्याऽप्राधान्यादुक्तं प्रायेणेति। समर्थः पदविधिः। सामर्थ्यं द्विविधम्। व्यपेक्षारूपम्, एकार्थीभावरूपञ्च। तत्र स्वार्थपर्यवसायिनां पदानाम् आकाङ्क्षादिवशात्परस्परसम्बन्धरूपा व्यपेक्षा। सा च राज्ञः पुरुषः इत्यादिवाक्ये एव। स्वार्थपर्यवसायिनां पदानां विशेषणविशेष्यभावावगाह्येकोपस्थितिजनकत्वमेकार्थीभावत्वम्। तच्च 'राजपुरुष' इत्यादिवृत्तावेव। प्राक्कडारात्। 'आकडारात्' इत्येव प्रागिति सिद्धे प्राग्ग्रहणमेकसञ्ज्ञाऽधिकारेऽपि अव्ययीभावादिसञ्ज्ञासमुच्चयार्थमिति भाष्ये स्पष्टम्। समासः। सम्पूर्वकस्य अस्यतेरेकीकरणात्मकः संश्लेषोऽर्थः। समस्यते अनेकं पदमिति समासः। "अकर्तरि च कारके सञ्ज्ञायाम्" इति कर्मणि घञ्। अत एव मूले समस्यते इति वक्ष्यते। तथाच अन्वर्थेयं सञ्ज्ञा। सह सुपा। "सुबामन्त्रिते" इत्यतः सुबित्यनुवर्तते। सुबन्तं सुबन्तेन सहोच्चारितं समाससञ्ज्ञं भवतीति फलति। पदार्थाऽभिधानं वृत्तिरिति। प्रत्ययान्तर्भावेणाऽपरपदार्थान्तर्भावेण वा यो विशिष्टोऽर्थः स परार्थः,सोऽभिधीयते येन तत्परार्थाभिधानमित्यर्थः। वृत्त्यर्थावबोधकमिति। वृत्तीनां पञ्चविधानामर्थस्यावबोधकं वाक्यं विग्रह इत्यर्थः। लौकिकोऽलौकिकश्चेति। लोके प्रयोगार्हो लौकिकः। लोके प्रयोगानर्होऽलौकिक इत्यर्थः। भूतपूर्वः। पूर्व+अम्, भूत+सु इत्यलौकिकविग्रहे "सह सुपा" इति समासे जाते समासत्वात् "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसंज्ञायाम् "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, 'पूर्व+भूत' इत्यवशिष्टे अत्र 'प्रथमानिर्दिष्टं समास उपसर्जनम्" इति द्वयोरप्युपसर्जनसञ्ज्ञायाम् "उपसर्जनं पूर्वम्" इति विनिगमकाऽभावात् उभयोरपि पूर्वनिपाते प्राप्ते "भूतपूर्वे चरट्" इति निर्देशात् भूतशब्दस्य पूर्वनिपाते "एकदेशविकृत" न्यायेन प्रातिपदिकत्वात्सौ, रुत्वे विसर्गे च तत्सिद्धिः। इवेनेति। इवेत्यव्ययेन सुबन्तस्य समासः। "सुपो धातु" इति लुगभावः। पूर्वपदस्य

## अथाऽव्ययीभावः।

अव्ययीभावः २।१।५। अधिकारोऽयं प्राक् तत्पुरुषात् ॥ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २।१।५ विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते। प्रायेणाविग्रहो नित्यसमासः, प्रायेणास्वपदविग्रहो वा। विभक्तौ-हरि ङि अधि इति स्थिते ॥ प्रथमानिर्दिष्टं समास उपसर्जनम् १।२।४३ समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ उपसर्जनं पूर्वम् २।२।३० समासे उपसर्जनं प्राक् प्रयोज्यम्। इत्यधेः प्राक् प्रयोगः। सुपो लुक्। एकदेशविकृतस्यानन्यत्वात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः। "अव्ययीभावश्च" इत्यव्ययत्वात्सुपो लुक्। अधिहरि ॥ अव्ययीभावश्च २।४।१८ अयं नपुंसकं

---

प्रकृतिसिद्धस्वरश्च भवति, न तु समासस्वर इति वक्तव्यमित्यर्थः। "सह सुपा" इति सिद्धे समासविधानमिवशब्दस्य पूर्वनिपातनिवृत्त्यर्थम्। अन्यथा अत्र इवशब्दस्यापि सुबन्तत्वाविशेषात् समासशास्त्रे प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् पूर्वनिपातः स्यात्। वागर्थाविव। अत्र "इवेन समासो विभक्त्यलोपश्च" इति समासे विभक्त्यलोपे च कृते "एचोऽयवायावः" इत्यावादेशे च तत्सिद्धिः। इति केवलसमासविवरणम्।

अव्ययीभावः। अधिकारोऽयमिति। एकसंज्ञाऽधिकारेऽपि अनया संज्ञया समाससंज्ञा न बाध्यते इति "प्राक्कडारात्" इत्यत्रोक्तम्। अव्ययं विभक्तीत्यादि। अव्ययमिति शब्दनिर्देशः। विभक्त्यादिरर्थनिर्देशः। उच्यन्ते इति वचनाः। कर्मणि ल्युट्। विभक्ति, समीप, समृद्धि, व्यृद्धि, अर्थाभाव, अत्यय, असम्प्रति, शब्दप्रादुर्भाव, पश्चात्, यथा, आनुपूर्व्य, यौगपद्य, सादृश्य, सम्पत्ति, साकल्य, अन्त, एतेषां षोडशानां द्वन्द्वः। ते च ते वचनाश्च इति विग्रहः। विभक्त्यर्थादिषु वाच्येष्वित्यर्थः। अव्ययीभावः, समासः, इति चाधिकृतम्। तदाह—विभक्त्यर्थादिष्विति। हरि ङि इति। सन्धिकार्यात्प्रागलौकिकविग्रहवाक्य एव समासप्रवृत्तेः। "प्रत्ययोत्तरपदयोश्च" इति भाष्यसम्मतत्वादिति भावः। प्रथमानिर्दिष्टमिति। अत्र समासपदं लक्षणया समासविधायकशास्त्रपरम्। तथा च समासविधायकशास्त्रे प्रथमान्ततयोच्चरितं यत्पदं तदुपसर्जनसंज्ञमिति निष्कृष्टोऽर्थः। उपसर्जनं पूर्वमिति। अत्र सूत्रे लौकिकोपसर्जनं शास्त्रीयोपसर्जनं च गृह्यते। पूर्वमित्यस्य पूर्वं प्रयोज्यमित्यर्थ इति भावः। एकदेशविकृतस्येति। छिन्नपुच्छे शुनि यथा श्वत्वव्यवहारो न विहन्यते, तथा सुब्विशिष्टस्य प्रातिपदिकत्वे सुपो निवृत्तावपि प्रातिपदिकत्वं न विहन्यते इत्यर्थः। अधिहरि। हरौ इत्यधिहरि, अत्र 'हरि ङि अधि' इति स्थिते "अव्ययं विभक्ति०" इति समासे "प्रथमानिर्दिष्टं समास उप-

स्यात्। गाः पातीति गोपस्तस्मिन्नित्यधिगोपम्। नाव्ययीभावादतोऽम्त्वपञ्चम्याः २।४।८३ अदन्तादव्ययीभावात्सुपो न लुक्, तस्य तु पञ्चमीं विना अमादेशश्च स्यात्। तृतीयासप्तम्योर्बहुलम् २।४।८४ अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात्। उपकृष्णम्, उपकृष्णेन। मद्राणां समृद्धिः सुमद्रम्। यवनानां व्यृद्धिः

---

सर्जनम्" इत्यधीत्यस्योपसर्जनसंज्ञायाम् "उपसर्जनं पूर्वम्"इत्यधीत्यस्य पूर्वनिपातत्वे 'अधिहरि ङि' इति जाते समासत्वात्प्रातिपदिकत्वे "सुपो धातुप्रातिपदिकयोः" इति ङेर्लुकि, एकदेशविकृतन्यायेन प्रातिपदिकत्वात्समुदायात्सौ, "अव्ययीभावश्च" इत्यनेन सूत्रेणाव्ययत्वात् "अव्ययादाप्सुपः" इति सोर्लुकि च कृते 'अधिहरि' इति रूपम्। अव्ययीभावश्च। अयं नपुंसकं स्यादिति। "स नपुंसकम्" इत्यतस्तदनुवृत्तेरिति भावः। अधिगोपम्। गोपि, इत्यधिगोपम्—इत्यत्र 'गोपा ङि अधि' इति स्थिते "अव्ययं विभक्ति०" इति समासे, "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसंज्ञायाम् "सुपो धातुप्रातिपदिकयोः" इति ङेर्लुकि, "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति अधीत्यस्योपसर्जनसंज्ञायाम्, "उपसर्जनं पूर्वम्" इति तस्य पूर्वनिपाते, एकदेशविकृतन्यायेन प्रातिपदिकत्वात् सौ, "अव्ययीभावश्च" इत्यनेन क्लीबत्वात् 'ह्रस्वो नपुंसके प्रातिपदिकस्य" इति 'गोपा' इत्यस्य ह्रस्वत्वे, "अव्ययीभावश्च" इत्यनेनाव्ययत्वात् "अव्ययादाप्सुपः" इति सोर्लोपे प्राप्ते,तम्बाधित्वा "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इति सोरमि, "अमि पूर्वः" इति पूर्वरूपे च 'अधिगोपम्' इति रूपम्। नाव्ययीभावादिति। अम् तु अपञ्चम्या इति छेदः। नाव्ययीभावादतः इत्येकं वाक्यम्। "ण्यक्षत्रियार्ष" इत्यतो लुगित्यनुवर्तते। "अव्ययादाप्सुपः" इत्यतः सुप इति च। अता अव्ययीभावो विशेष्यते। तदन्तविधिः। तदाह—अदन्तादव्ययीभावादित्यादिना। अम् तु अपञ्चम्याः इति वाक्यान्तरम्। पञ्चमीभिन्नस्य तु सुपः अमादेशः स्यात्। पञ्चम्यास्तु अम् न भवतीति लभ्यते। तदाह—तस्य पञ्चमीं विनेति। तृतीयासप्तम्योरिति। "नाव्ययीभावाद्" इत्यस्मात् अत इत्यनुवर्तते, तदाह—अदन्तादिति। अमादेशाभावे तु "नाव्ययीभावात्" इत्यलुक्। उपकृष्णम्। उपकृष्णेन। कृष्णस्य समीपे 'उपकृष्णम्' इत्यत्र 'अव्ययं विभक्तिसमीप" इत्यादिना समासे, प्रातिपदिकत्वे सुपो लुकि, "प्रथमानिर्दिष्टं समास उपसर्जनम्"इति समीपार्थक-उप इत्यस्य उपसर्जनसंज्ञायाम् "उपसर्जनम्पूर्वम्" इति पूर्वनिपाते, समुदायात् टाविभक्तौ, "तृतीयासप्तम्योर्बहुलम्" इत्यमादेशे "अमि पूर्वः" इति पूर्वरूपे च 'उपकृष्णम्' इति। अम्भावाभावे "टाङसिङसामिनात्स्याः" इति इनादेशे गुणे च 'उपकृष्णेन' इति सिद्धम्। सुमद्रम्। अत्र "अव्ययं विभक्ति"इत्यादिना समृद्ध्यर्थक 'सु' इत्यव्ययेन सह समासे, प्रातिपदिकत्वे, सुपो लुकि, सोरुपसर्जनसंज्ञायाम्, तस्य पूर्वनिपाते, समुदायात्सौ, "अव्ययीभावश्च" इत्यव्ययत्वात् "अव्ययादाप्सुपः" इति सुपो लुकि प्राप्ते, "नाव्ययीभावादतोम्त्व-

दुर्यवनम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा सम्प्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ॥ अव्ययीभावे चाकाले ६।३।८१ सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत्सचक्रम् । सदृशः सख्या ससखि । क्षत्राणां सम्पत्तिः

---

पञ्चम्याः" इति सोरमि, "अमि पूर्वः" इति पूर्वरूपे च कृते 'सुमद्रम्' इति सिद्धम् । दुर्यवनम् । व्यृद्ध्यर्थकदुरित्यव्ययेन सह समासोऽत्र बोध्यः । साधनिका पूर्ववत् । निर्मक्षिकम् । अभावार्थकनिरित्यव्ययेन सह "अव्ययं विभक्ति" इत्यादिना समासे निरित्यस्य पूर्वनिपाते, सोरमि च कृते, शेषं पूर्ववत् । अतिहिमम् । अत्ययार्थक-अति इत्यव्ययेन सह "अव्ययं विभक्तिसमीप०" इत्यादिना समासे प्रातिपदिकत्वे, सुपो लुकि, अतेरुपसर्जनसंज्ञायां तस्य पूर्वनिपाते समुदायात्सौ, "अव्ययीभावश्च" इत्यव्ययत्वात् सोर्लुकि प्राप्ते, "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इत्यमि, "अमि पूर्वः" इति पूर्वरूपे च 'अतिहिमम्' इति । अतिनिद्रम् । असम्प्रति—सम्प्रति न युज्यते, इत्यर्थकातीत्यव्ययेन सह "अव्ययं विभक्तिसमीप०" इत्यादिना समासः, शेषं पूर्ववत् । इतिहरि । इतीत्यव्ययम् शब्दप्रकाशे वर्तते । तस्य हरिशब्देन स्वरूपपरेण षष्ठ्यन्तेन समास इति भावः । विष्णोः पश्चादनुविष्णु । अनु इत्यव्ययं पश्चादर्थे वर्तते इत्यर्थः । सूत्रे यथाशब्देन तदर्थो लभ्यते । यथार्थे विद्यमानमव्ययं समस्यते इति लभ्यते, इत्यभिप्रेत्याह—योग्यतेति । अनुरूपमिति । अत्रानु इत्यव्ययं योग्यतायाम्, अतो यथार्थे वर्तत इति भावः । अर्थमर्थं प्रतीति । लौकिकविग्रहवाक्यम् । अत्र वीप्सायां द्विर्वचनम् । यथाशक्ति । अत्र यथेत्यव्ययं पदार्थानतिक्रमे वर्तत इत्यर्थः । तेन सह "अव्ययं विभक्ति०" इत्यादिना समासे, प्रातिपदिकत्वे, "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति उपसर्जनसंज्ञायाम् "उपसर्जनं पूर्वम्" इति पूर्वनिपाते, समुदायात् सौ, "अव्ययीभावश्च" इत्यव्ययत्वात् "अव्ययादाप्सुपः" इति सोर्लुकि च तत्सिद्धिः । अव्ययीभावे । सहस्येति । "सहस्य सः संज्ञायाम्" इत्यतः तदनुवृत्तेरिति भावः । न तु काले । कालवाचके परे सहस्य सो नेत्यर्थः । सचक्रमिति । अत्र "अव्ययं विभक्तिसमीप०" इति यौगपद्यवाचिना सहेत्यव्ययेन सह समासे पूर्वनिपातत्वे "सुपो धातुप्रातिपदिकयोः" इति टालुकि, "अव्ययीभावे चाकाले" इति सहस्य सादेशे प्रातिपदिकत्वे सौ, सोरमि, पूर्वरूपत्वे च विहिते 'सचक्रम्' इति । ससखि । अत्र "अव्ययं विभक्ति" इति सादृश्यवाचिना सहेत्यव्ययेन सह समासे पूर्वनिपातत्वे, "अव्ययीभावे चाकाले" इति सहस्य सादेशे "सुपो धातुप्रातिपदिकयोः" इति टालुकि समासत्वात् प्रातिपदिकत्वे, सौ, "अव्ययीभावश्च" इत्यव्ययसंज्ञायाम्

सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साग्नि ॥ **नदीभिश्च २।१।२०** नदीभिः सह सङ्ख्या समस्यते । समाहारे चायमिष्यते । पञ्चगङ्गम् । द्वियमुनम् ॥ **तद्धिताः ४।१।७६** आपञ्चमसमाप्तेरधिकारोऽयम् ॥ **अव्ययीभावे शरत्प्रभृतिभ्यः ५।४।१०७** शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीपमुपशरदम् । प्रतिविपाशम् । जराया जरश्च । उपजरसमित्यादि ।

---

"अव्ययादाप्सुपः" इति सोर्लुकि च कृते 'ससखि' इति । सनक्षत्रम् । अत्र "अव्ययं विभक्तिसमीप०" इति सम्पत्त्यर्थवाचिना सहेत्यव्ययेन सह समासे समासत्वात्प्रातिपदिकत्वे "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, सहस्य पूर्वनिपातत्वे, "अव्ययीभावे चाकाले" इति सहस्य सादेशे, समुदायात् सौ, विभक्तिकार्ये च कृते तत्सिद्धिः । सतृणम् । साकल्यवाचिना सहेत्यव्ययेन सह "अव्ययं विभक्ति०" इति समासे पूर्ववत्समासकार्ये, अव्ययीभावे चाकाले" इति सहस्य सादेशे विभक्तिकार्ये च कृते तत्सिद्धिः । साग्नि । अन्तवाचिना सहेत्यव्ययेन सह समासे, पूर्वनिपाते, सहस्य सादेशे, "अव्ययीभावश्च" इत्यव्ययत्वात् "अव्ययादाप्सुपः" इति सोर्लुकि च 'साग्नि' इति रूपम् । नदीभिश्चेति । "संख्या वंश्येन" इत्यतः संख्येत्यनुवर्तते, तदाह—संख्या समस्यत इति । पञ्चगङ्गम् । पञ्चानां गङ्गानां समाहारः पञ्चगङ्गम्, इत्यत्र पञ्चन् + आम् + गङ्गा—आम्' इति अलौकिकविग्रहे "नदीभिश्च" इति समासे, "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, "नलोपः प्रातिपदिकान्तस्य" इति नलोपे, 'पञ्चगङ्गा' इति जाते, "अव्ययीभावश्च" इत्यनेन नपुंसकत्वे "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वे प्रातिपदिकत्वात्सौ, "अव्ययीभावश्च" इत्यव्ययत्वात् "अव्ययादाप्सुपः" इति लुकि प्राप्ते, "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इत्यमि, "अमि पूर्वः" इति पूर्वरूपे च कृते 'पञ्चगङ्गम्' इति । द्वियमुनम् । द्वयोर्यमुनयोः समाहारः इति विग्रहः । अत्र नदीशब्दविशेषस्य नदीवाचकानां च ग्रहणम् इति संख्यासंज्ञासूत्रे भाष्ये स्पष्टम् । तेन पञ्चनदम्, सप्तगोदावरमित्यादि सिद्ध्यति । साधनिका तु पूर्ववदवगन्तव्या । अव्ययीभावे । "राजाहस्सखिभ्यष्टच्" इत्यतः टजित्यनुवर्तते । तदाह—शरदादिभ्य इति । अव्ययीभावे उत्तरपदं यत् शरदादिप्रकृतिकं सुबन्तं तदन्तात् टच् स्यात् । स च अलौकिकविग्रहवाक्यान्तावयव इत्यर्थः । उपशरदमिति । अत्र "अव्ययं विभक्ति" इति समासे पूर्वनिपाते, "अव्ययीभावे शरत्प्रभृतिभ्यः" इति टचि, टचयोर्लोपे, सौ, "नाव्ययीभावात्" इति सोरमि, "अमि पूर्वः" इति पूर्वरूपत्वे च कृते 'उपशरदम्' इति । विपाशां प्रतीति—प्रतिविपाशम् । जराया । "जराया जरश्च" इति शरदादिगणसूत्रम् । जराशब्दस्य जरसादेशश्चास्मिन् गणे वाच्य इत्यर्थः । उपजरसमिति । जरायाः समीपमित्यर्थः । सामीप्ये उपेत्यव्ययस्य जरायाः इति षष्ठ्यन्तेन अव्ययीभावसमासे कृते

**अनश्च ५।४।१०८** अन्नन्तादव्ययीभावाट्टच् स्यात् ॥ **नस्तद्धिते ६।४।१४४** नान्तस्य भस्य टेर्लोपः स्यात् तद्धिते । उपराजम् । अध्यात्मम् ॥ **नपुंसकादन्यतरस्याम् ५।४।१०९** अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मम् , उपचर्म ॥ **झयः ५।४।१११** झयन्तादव्ययीभावाट्टच् स्यात् । उपसमिधम् , उपसमित् ॥

इत्यव्ययीभावः ।

## अथ तत्पुरुषः ।

**तत्पुरुषः २।१।२२** अधिकारोऽयम् प्राग्बहुव्रीहेः ॥ **द्विगुश्च २।१।२३** द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ॥ **द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २**

---

टच् , सुब्लुक्, उपेत्यस्य पूर्वनिपातः टचो विभक्तित्वाभावात् तस्मिन् परेऽप्राप्ते जरसि, अनेन जरस् । टजन्ताद्यथायथं सुपः अम्भाव इति भावः । अनश्चेति । अव्ययीभावे इत्यनुवृत्तं पञ्चम्या विपरिणम्यते । अन इति तद्विशेषणम् । तदन्तविधिः । तदाह—अन्नन्तादिति । नस्तद्धित इति । न इति षष्ठ्यन्तम् पदम् । तेन भस्येत्यधिकृतं विशेष्यते । तदन्तविधिः । टेरिति सूत्रमनुवर्तते । "अल्लोपोऽनः" इत्यस्माल्लोप इति च । तदाह—नान्तस्येति । उपराजमिति । राज्ञः समीपमित्यर्थः । सामीप्ये उपेत्यस्याव्ययीभावः । "अनश्च" इति टच् । सुब्लुक्, टिलोपः । उपराजशब्दाद्यथायथं सुप् , अम्भावः । टचि परे "अव्ययानां भमात्रे टिलोपः" इत्यस्याप्रवृत्तिः, टजन्तस्यैवाव्ययीभावसमासत्वेन अव्ययत्वात् । अतो "नस्तद्धिते" इत्यारम्भः । अध्यात्ममिति । आत्मनीत्यर्थः । विभक्त्यर्थे अव्ययीभावः । शेषं पूर्ववत् । नपुंसकादन्यतरस्याम् । अन इत्यनुवृत्तं नपुंसकादित्यस्य विशेषणम् । तदन्तविधिः । अन्नन्तात्क्लीबादिति लब्धम् । तेनाव्ययीभावे इत्यनुवृत्तं पञ्चम्या विपरिणतं विशेष्यते । तदन्तविधिः । तदाह—अन्नन्तादिति । उपचर्मम् । उपचर्मेति । चर्मणः समीपमित्यर्थः । सामीप्ये उपेत्यव्ययस्याव्ययीभावः । टचि टिलोपः । अयम्भावः–टजभावे उपचर्मेति रूपम् । झयः । झया अव्ययीभावे इत्यनुवृत्तं पञ्चम्या विपरिणतं विशेष्यते । तदन्तविधिः । अन्यतरस्यामिति टजिति चानुवर्तते । तदाह—झयन्तादिति । उपसमिधम् । अत्र "अव्ययं विभक्ति" इति समासे, पूर्वनिपाते "झयः" इति टचि, विभक्तिकार्ये च कृते 'उपसमिधम्' इति । टजभावपक्षे—'उपसमित्' इति । इति अव्ययीभावः ।

तत्पुरुषः । प्रागिति । "शेषो बहुव्रीहिः" इत्यतः प्रागित्यर्थः । द्विगुश्च । द्विगुरपीति "तद्धितार्थोत्तरपदसमाहारे च" इति वक्ष्यमाणसमासस्य "संख्यापूर्वो द्विगुः" इति द्विगुसंज्ञा विधास्यते । स द्विगुसमासोऽपि तत्पुरुषसंज्ञक इति यावत् । एतत्सूत्राभावे एकसंज्ञाधिकारात् द्विगुसंज्ञया तत्पुरुषसंज्ञा बाध्येतेति । भावः । द्वितीयाश्रित । द्वितीयान्तमिति । "प्राक्कडारात्समासः" इत्यतः समास इत्यधिक्रियते, "सह सुपा" इत्यनुवर्तते,

१।२४ द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः। कृष्णं श्रितः कृष्णश्रित इत्यादि ॥ **तृतीया तत्कृतार्थेन गुणवचनेन २।१।३०** तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किम्? अक्ष्णा काणः ॥ **कर्तृकरणे कृता बहुलम् २।१।३२** कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः। "कृद्ग्रहणे गतिकारकपूर्व-

---

"तत्पुरुषः" इत्यधिक्रियते, "विभाषा" इति च, केवलस्य द्वितीयासुपः प्रयोगाभावात्तदन्तविधिः। श्रितादिशब्दानां स्वतः सुप्त्वाभावेन लक्षणया श्रितादिप्रकृतिकत्वपरता। तदाह—श्रितादिप्रकृतिकैरित्यादि। द्वितीयान्तम्। कृष्णश्रितः। 'कृष्ण अम् श्रित सु' इत्यलौकिकविग्रहे "द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति समासे "कृत्तद्धितसमासाश्च" इति प्रातिपदिकत्वे, "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति द्वितीयान्तस्य कृष्णमित्यस्योपसर्जनसंज्ञायाम्, "उपसर्जनं पूर्वम्" इति पूर्वनिपाते, एकदेशविकृतन्यायेन प्रातिपदिकत्वात्सौ, रुत्वे, विसर्गे च तत्सिद्धिः। इत्यादीति। दुःखातीतः। गर्तं पतितो गर्तपतितः। ग्रामं गतो, ग्रामगतः। ग्राममत्यस्तः—अतिक्रान्तः, ग्रामात्यस्तः। ग्रामं प्राप्तः ग्रामप्राप्तः। संशयमापन्नः। इति। तृतीया तत्कृत। तत्कृतेत्यस्यान्यवहितमप्यर्थेनेति परित्यज्य गुणवचनेनेत्यत्रान्वयं वक्तुमाह—तत्कृतेति लुप्ततृतीयाकमिति। तत्र तृतीयेत्यनेन तृतीयान्तं विवक्षितम्। तत्कृतेति लुप्ततृतीयाकं भिन्नं पदम्। तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लभ्यते। तत्कृतेत्येतच्च गुणद्वारा गुणवचनेऽन्वेति। ततश्च तृतीयान्तं तृतीयान्तार्थकृतो यो गुणः तद्वाचिना समस्यते। अर्थशब्देन च तृतीयान्तं समस्यत इति वाक्यद्वयं संपद्यते इति भाष्ये स्थितम्। तदाह—तृतीयान्तमित्यादिना। शङ्कुलाखण्डः। 'शङ्कुला टा खण्ड सु' अत्र "तृतीया तत्कृतार्थेन गुणवचनेन" इति समासे प्रातिपदिकत्वे, सुपो लुकि, तृतीयान्तस्य प्रथमानिर्दिष्टत्वात्पूर्वनिपाते, समुदायात्सौ, सस्य रुत्वे, रेफस्य विसर्गत्वे च तत्सिद्धिः। धान्यार्थः। 'धान्य टा अर्थ सु' इत्यलौकिकविग्रहवाक्ये, "तृतीया तत्कृतार्थेन गुणवचनेन" इति समासे, प्रातिपदिकत्वे, सुपो लुकि, तृतीयान्तस्य पूर्वनिपाते समुदायात्सौ, रुत्वे, विसर्गे च तत्सिद्धिः। अक्ष्णा काण इति। नहि अक्ष्णा काणत्वं कृतम्, किन्तु रोगादिनेति भावः। कर्तृकरणे। कर्ता च करणं चेति समाहारद्वन्द्वात्सप्तमी। तृतीयेत्यनुवर्तते। प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। कृतेत्यपि तथैव। तदाह—कर्तरि करणे चेति। हरित्रातः। 'हरि टा त्रात सु' इत्यलौकिकविग्रहे "कर्तृकरणे कृता बहुलम्" इति समासे, समासत्वात्प्रातिपदिकत्वे "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, तृतीयान्तस्य प्रथमानिर्दिष्टत्वात्पूर्वनिपाते, समुदायात्सौ, रुत्वे विसर्गे च तत्सिद्धिः। एवमेव 'नखभिन्नः' इत्यत्रापि बोध्यम्। ननु कृदन्तस्य

स्याऽपि ग्रहणम्" नखनिर्भिन्नः ॥ **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६** चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् । यूपाय दारु यूपदारु । तदर्थेन प्रकृतिविकृतिभाव एवेष्टः । तेनेह न । रन्धनाय स्थाली । **( अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् )** द्विजायायं द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोर-

---

समर्थविशेषणत्वेऽपि समासप्रत्ययविधौ तदन्तविधिप्रतिषेधान्नखनिर्भिन्न इत्यत्र न स्यादित्यत आह—कृद्ग्रहणे इति । परिभाषेयम् "गतिरनन्तरः" इति सूत्रे भाष्ये स्थिता । नखनिर्भिन्नः । नखैर्निर्भिन्नः—नखनिर्भिन्नः इत्यत्र कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् "कर्तृकरणे कृता बहुलम्" इति समासे, प्रातिपदिकसंज्ञायाम् "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, नखस्य पूर्वनिपाते विभक्तिकार्ये च तत्सिद्धिः । चतुर्थी तदर्थार्थ । प्रत्ययग्रहणपरिभाषया चतुर्थीत्यनेन चतुर्थ्यन्तं गृह्यते । तदर्थ, अर्थ, बलि, हित, सुख, रक्षित एषां द्वन्द्वः । चतुर्थ्यन्तम् एतैः षड्भिः समस्यते, स तत्पुरुष इति फलितम् । तदर्थेत्यत्र तच्छब्देन चतुर्थ्यन्तार्थो विवक्षितः । तस्मै चतुर्थ्यन्तार्थाय इदं तदर्थम् । "अर्थेन नित्यसमासः" इति वक्ष्यमाणः समासः । चतुर्थ्यन्तवाच्यप्रयोजकं यत् तत् तदर्थमिति पर्यवस्यति । तदाह—चतुर्थ्यन्तार्थायेत्यादिना । यूपदारु । 'यूप ङे दारु सु' इत्यत्र "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति समासे, "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसंज्ञायाम् "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति चतुर्थ्यन्तस्य उपसर्जनसंज्ञायाम् "उपसर्जनं पूर्वम्" इति पूर्वनिपाते, एकदेशविकृतन्यायेन प्रातिपदिकत्वात्सौ "स्वमोर्नपुंसकात्" इति सोर्लुकि च तत्सिद्धम् । तदर्थेनेति । तदर्थेन समास इति यदुक्त तत्प्रकृतिविकृतिभाव एव भवति, न त्वन्यत्रेत्यर्थः । सूत्रे 'बलिहितसुखरक्षितात्' ज्ञापकात् । अथ प्रकृतिविकृतिभावग्रहणस्य प्रयोजनमाह—नेहेति । रन्धनायेति । पाकायेत्यर्थः । स्थाल्याश्चतुर्थ्यन्यवाच्यपाकार्थत्वेऽपि प्रकृतिविकृतिभावविरहान्न समासः । अथेदानीमर्थशब्देन चतुर्थ्यन्तस्य समासे विशेषमाह—अर्थेनेति । अर्थशब्देन चतुर्थ्यन्तस्य नित्यसमास इति वक्तव्यम् । अन्यथा विभाषाधिकाराद्विकल्पः स्यात् । विशेष्यस्य प्रधानस्य यल्लिङ्ग तल्लिङ्गमित्यपि वक्तव्यम् । अन्यथा अर्थशब्दस्य नित्यपुंलिङ्गत्वात् "परवल्लिङ्गम्" इति सर्वत्र पुंल्लिङ्गतैव स्यादित्यर्थः । द्विजायायं द्विजार्थः सूप इति । तत्र द्विजायायमित्यस्वपदविग्रहः । तत्र अर्थशब्दस्थाने अयमिति शब्दः, नित्यसमासत्वेनास्वपदविग्रहौचित्यात् । द्विजायेति तादर्थ्ये चतुर्थी । तदन्तस्य अर्थशब्देन समासः, विशेष्यसूपशब्दस्य पुंल्लिङ्गत्वात् समस्तस्यद्विजार्थशब्दस्य पुंल्लिङ्गता च । द्विजस्य उपकारकः सूप इत्यर्थः । द्विजार्था यवागूरिति । द्विजायेयमिति विग्रहः । अर्थशब्दस्य नित्यपुंल्लिङ्गत्वेऽपि "परवल्लिङ्गम्" इति पुंल्लिङ्गं बाधित्वा अनेन विशेष्यलिङ्गानुसारेण स्त्रीलि-

क्षितम् ॥ पञ्चमी भयेन २।१।३७ चोराद्भयम्, चोरभयम् ॥ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २।१।३९ पञ्चम्याः स्तोकादिभ्यः ६।३।२ "अलुगुत्तरपदे"। स्तोकान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। कृच्छ्रादागतः ॥ षष्ठी २।२।८ सुबन्तेन सह प्राग्वत्। राजपुरुषः ॥ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २।२।१ अवयविना सह पूर्वादयः समस्यन्ते एकत्वसङ्ख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः।

---

क्त्ता। द्विजार्थं पय इति। द्विजायेदमिति विग्रहः। अत्र विशेष्यलिङ्गानुसारान्नपुंसकत्वम्। भूतबलिः। भूतेभ्यो बलिरिति विग्रहः। तादर्थ्यचतुर्थ्यन्तस्य बलिशब्देन समासः। गोहितम्। गोभ्यो हितमिति विग्रहः। गवामनुकूलमित्यर्थः। गोरक्षितम्। तृणादिकमिति शेषः। गोभ्यो रक्षितमिति विग्रहः। तादर्थ्यचतुर्थ्यन्तस्य रक्षितशब्देन समासः। पञ्चमी भयेन। पञ्चम्यन्तं भयशब्देन सुबन्तेन समस्यत इत्यर्थः। चोरभयम्। 'चोर ङसि भय सु' इत्यत्र "पञ्चमी भयेन" इति समासे सुपो लुकि, पञ्चम्यन्तस्य पूर्वनिपाते समुदायात्सौ, विभक्तिकार्ये च तत्सिद्धिः। स्तोकान्तिक। स्तोक, अन्तिक, दूर, एतदर्थकानि, कृच्छ्र, एतानि पञ्चम्यन्तानि क्तप्रत्ययान्तेन समस्यन्त इत्यर्थः। अर्थग्रहणं स्तोकान्तिकदूरेषु सम्बध्यते। पञ्चम्याः स्तोकादिभ्यः। स्तोकादिभ्यः परा या पञ्चमी तस्याः "सुपो धातु" इति लुङ् न स्यादित्यर्थः। उत्तरपदे इति। उत्तरशब्दः समासचरमावयवे रूढः। पदे इत्येव सिद्धे उत्तरग्रहणात्। स्तोकान्मुक्तः। 'स्तोक ङसि, मुक्त सु' इत्यत्र "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इति समासे, प्रातिपदिकत्वात्सुपो लुकि प्राप्ते, "पञ्चम्याः स्तोकादिभ्यः" इति पञ्चम्या अलुकि, "टाङसिङसामिनात्स्याः" इति ङसेरादादेशे सवर्णदीर्घे, समुदायात्सौ, रुत्वे विसर्गे च तत्सिद्धिः। एवमेव 'अन्तिकादागतः' इत्यादौ बोध्यम्। अभ्याशादागतः। अन्तिकपर्यायस्योदाहरणम्। षष्ठी। षष्ठ्यन्तं सुबन्तेन समस्यते, स तत्पुरुष इत्यर्थः। राजपुरुषः। 'राजन् अस् पुरुष सु' इत्यलौकिकविग्रहवाक्ये "षष्ठी" इत्यनेन समासे सति "सुपो धातुप्रातिपदिकयोः" इति सुब्लुकि अन्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेनाश्रित्य "नलोपः प्रातिपदिकान्तस्य" इति नलोपे, विभक्तिकार्ये च कृते 'राजपुरुषः' इति सिद्धम्। पूर्वापर। "पूर्वापराधरोत्तरम्" इति समाहारद्वन्द्वात् प्रथमैकवचनम्। एकदेशशब्दोऽवयवे रूढः। एकदेशः अस्यास्तीत्येकदेशी अवयवी, तेनेति लभ्यते। अधिकरणं द्रव्यम्। एकमधिकरणम्, एकाधिकरणम्। इति विग्रहः। एकत्वविशिष्टद्रव्ये वर्तमानेन अवयविवाचकसुबन्तेन पूर्वापराधरोत्तरशब्दाः सुबन्ताः समस्यन्ते, स तत्पुरुष इत्यर्थः। फलितमाह—अवयविना सहेत्यादिना। षष्ठीसमासापवाद इति। पूर्वं कायस्येति विग्रहे "षष्ठी" इति सूत्रेण समासे सति षष्ठ्यन्तस्य समासविधानात् प्रथमानिर्दिष्टत्वात् पूर्वनिपातः स्यात्। तन्निवृत्त्यर्थमिदं वचनमित्यर्थः। पूर्वं कायस्येति। अत्र पूर्वं कायस्येति विग्रहवाक्यम्।

एकाधिकरणे किम् ? पूर्वश्छात्राणाम् । अर्धं नपुंसकम् २।२।२। समांशवाच्यर्ध-शब्दो नित्यं क्लीबे प्राग्वत् । अर्धं पिप्पल्या अर्धपिप्पली ॥ सप्तमी शौण्डैः २।१।४०। सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्ड इत्यादि । "द्वितीया तृतीया" इत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्स-मासो ज्ञेयः । दिक्सङ्ख्ये सञ्ज्ञायाम् २।१।५०। सञ्ज्ञायामेवेति नियमार्थं सूत्र-म् । पूर्वेषुकामशमी । सप्तर्षयः । तेनेह न, उत्तरा वृक्षाः । पञ्च ब्राह्मणाः । तद्धि-

---

अर्धमिति गम्यम् । विशेष्याभिप्रायान्नपुंसकत्वम् । पूर्वकाय इति । पूर्वशब्दस्य समास-विधौ प्रथमानिर्दिष्टत्वात् पूर्वनिपातः । "परवल्लिङ्गम्" इति पुंस्त्वमिति भावः । अपरकाय इति । अपरं कायस्येति विग्रहः । अधरकायः । उत्तरकायः । पूर्वश्छात्राणाम् । अत्र छात्रशब्दः छात्रसमुदायपरः । उद्भूतावयवसमुदायापेक्षं बहुवचनम् । अवयवा-वयविभावसम्बन्धे षष्ठी । ततश्छात्राणामेकदेशित्वे सत्यपि एकत्वविशिष्टत्वाभावान्न समासः । अर्धं नपुंसकम् । अर्धमिति नपुंसकलिङ्गनिर्देशादेव नपुंसकत्वे लब्धे पुनर्नपुंस-कग्रहणं नित्यनपुंसकलिङ्गस्य ग्रहणार्थमित्यभिप्रेत्याह—समांशवाच्यर्धशब्दो नित्यं क्लीबे इति । वर्तते इति शेषः । "वा पुंस्यर्धोऽर्धं समेंऽशके" इति कोशादिति भावः । प्राग्व-दिति । एकत्वविशिष्टेनावयविना समस्यत इत्यर्थः । अर्धपिप्पली । 'अर्धं सु पिप्पली ङस्' इत्यत्र "अर्धं नपुंसकम्" इति समासे समासत्वात्प्रातिपदिकत्वेन सुपो लुकि, "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्युपसर्जनसंज्ञायाम् "उपसर्जनम्पूर्वम्" इति अर्ध-शब्दस्य पूर्वनिपाते समुदायात्सौ विभक्तिकार्यं च तत्सिद्धिः। अत्र पिप्पलीशब्दस्य विग्रहे नियतविभक्तिकत्वेऽपि "एकविभक्तावषष्ठ्यन्तवचनम्" इति निषेधादुपसर्जनत्वाभा-वान्न ह्रस्व इति भावः । सप्तमी शौण्डैः । बहुवचननिर्देशाद् गणपाठसामर्थ्याच्च आद्य-र्थावगतिरित्यभिप्रेत्याह—शौण्डादिभिरिति । अक्षेषु शौण्ड इति । शौण्डः क्रियाकुशलः । वैषयिकाधिकरणत्वे सप्तमी । अक्षविषयकक्रीडाकुशल इत्यर्थः । अक्षशौण्डः । 'अक्ष सुप् शौण्ड सु' इत्यत्र "सप्तमी शौण्डैः" इति समासे सप्तम्यन्तस्य प्रथमानिर्दिष्टत्वात्पूर्व-निपाते सुपो लुकि, विभक्तिकार्ये च कृते तत्सिद्धिः । दिक्संख्ये संज्ञायाम् । दिक्संख्ये समानाधिकरणेन सुबन्तेन समस्येते, स तत्पुरुष इत्यर्थः । ननु "विशेषणं विशेष्येण बहुलम्" इत्येव सिद्धे किमर्थमिदं वचनमित्यत आह —संज्ञायामेवेति । पूर्वेषुकामशमीति। पूर्वशब्दस्य इषुकामशमीशब्देन सह समासः । देशविशेषस्य संज्ञेयम् । सप्तर्षय इति । मरीच्यत्रिप्रभृतीनां सप्तानामृषीणां संज्ञेयम् । 'सप्तन् जस् ऋषि जस्' इति विग्रहे सुपो लुकि, नलोपे गुणे विभक्तिकार्ये च कृते तत्सिद्धिः । इह नेति । असंज्ञात्वादिति भावः । तद्धितार्थे । एकापि सप्तमी विषयभेदात् भिद्यते । तत्र तद्धिता-र्थेत्यंशो वैषयिकाधारत्वे वर्तते । उत्तरपदेत्यंशे सामीपिकमाधारत्वमादाय परसप्तमी पर्यवस्यति । समाहारांशे तु वाच्यतया आधारत्वे सप्तमी । पूर्वसूत्रात् दिक्संख्ये इत्य-

**तार्थोत्तरपदसमाहारे च २।१।५१।** तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्सङ्ख्ये प्राग्वत् । पूर्वस्यां शालायां भवः पूर्वा शाला इति समासे जाते । **(सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः)** ॥ **दिक्पूर्वपदादसञ्ज्ञायां ञः ४।२।१०७।** अस्माद्भवाद्यर्थे ञः स्यादसञ्ज्ञायाम् ॥ **तद्धितेष्वचामादेः ७।२।११७।** ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात् । "यस्येति च" । पौर्वशालः । पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ **(द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्)** ॥ **गोरतद्धितलुकि ५।४।९२** गोन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि । पञ्चगवधनः । **तत्पुरुषः समानाधिकरणः कर्मधारयः १।२।४२ सङ्ख्यापूर्वो द्विगुः २।१।५२** तद्धितार्थेत्यत्रोक्तस्त्रिविधः सङ्ख्यापूर्वो द्विगुसञ्ज्ञः

---

नुवर्तते । तदाह—तद्धितार्थे विषये इति । तद्धितार्थे भविष्यत्तद्धितजन्यज्ञानविषये सतीत्यर्थः । तद्धिते भविष्यतीति यावत् । प्राग्वदिति । समानाधिकरणेन समस्यते स तत्पुरुष इत्यर्थः । सर्वनाम्न इति । मात्रशब्दः कार्त्स्न्ये । समासतद्धितादिवृत्तिगतसर्वनाम्नां पुंवत्वमिति तदर्थः । दिक्पूर्वपदात् । पञ्चम्यर्थे सप्तमी । असंज्ञाभूतात् दिक्पूर्वपदात् ञः स्यादित्यर्थः । तद्धितेष्वचामादेः । "अचो ञ्णिति" इत्यनुवर्तते । "मृजेर्वृद्धिः" इत्यतो वृद्धिरिति च । अचामिति निर्धारणे षष्ठी । तदाह—ञिति णिति चेति । पौर्वशालः । पूर्वस्यां शालायां भव इत्यर्थे "तद्धितार्थोत्तरपदसमाहारे च" इति समासे कृते "दिक्पूर्वपदात्" इति ञप्रत्यये कृते "यस्येति च" इत्याकारलोपे "तद्धितेष्वचामादेः" इति आदिवृद्धौ, "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति 'पूर्वा' इत्यस्य पुंवत्वे, समुदायस्य एकदेशविकृतन्यायेन प्रातिपदिकत्वात्सौ, रुत्वे विसर्गे च "पौर्वशालः" इति । अथ उत्तरपदे परत उदाहरति—पञ्च गाव इति । द्वन्द्वतत्पुरुषयोरिति । उत्तरपदे परतः यौ द्वन्द्वतत्पुरुषौ तयोर्नित्यत्वं वक्तव्यमित्यर्थः । गोरतद्धितलुकीति । "तत्पुरुषस्याङ्गुलेः" इत्यतस्तत्पुरुषस्येत्यनुवृत्तं पञ्चम्या विपरिणतं गोरित्यनेन विशेष्यते । तदन्तविधिः । "राजाहस्सखिभ्यः" इत्यतष्टजित्यनुवर्तते । "समासान्त" इत्यधिकृतम् । तदाह—गोऽन्तादित्यादिना । पञ्चगवधनः । पञ्च गावो धनं यस्य स पञ्चगवधनः—इत्यत्र 'पञ्चन्–जस्, गो–जस्, धन सु' इति त्रिपदे बहुव्रीहौ अवान्तरपञ्चगोशब्दयोः "तद्धितार्थोत्तरपदसमाहारे च" इति वा समासे प्राप्ते "द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" इति नित्ये समासे कृते "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, पञ्चन्शब्दस्य नकारस्य "नलोपः प्रातिपदिकान्तस्य" इति लोपे 'पञ्चगो' इत्यस्मात् "गोरतद्धितलुकि" इति टचि, अनुबन्धलोपे अवादेशे 'पञ्चगव' इति बहुव्रीहावन्तरे जाते बहुव्रीहिसमासस्यापि प्रातिपदिकत्वात् सोर्लोपे, समुदायात् सौ, रुत्वे विसर्गे च तत्सिद्धिः । तत्पुरुषः समान । समानाधिकरणः मत्वर्थीयः अर्शआद्यच् । समानाधिकरणानेकपदाव-

स्यात्। **द्विगुरेकवचनम् २।४।१** द्विग्वर्थः समाहार एकवत् स्यात्॥ **स नपुंसकम् २।४।१७** समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। पञ्चानां गवां समाहारः पञ्चगवम्॥ **विशेषणं विशेष्येण बहुलम् २।१।५७** भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात् क्वचिन्नित्यम्। कृष्णसर्पः। क्वचिन्न। रामो जामदग्न्यः॥ **उपमानानि सामान्यवचनैः २।१।५५** घन इव श्यामो घनश्यामः। (**शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम्**)। शाकप्रियः पार्थिवः शाकपार्थिवः। देवपूजको ब्राह्मणो देवब्राह्मणः॥

---

यत्नकस्तत्पुरुषः कर्मधारयसंज्ञको भवतीत्यर्थः। संख्यापूर्वो द्विगुरिति। संख्या पूर्वोऽवयवो यस्येति बहुव्रीहिः। "तद्धितार्थ" इति पूर्वसूत्रविहितसमासः अन्यपदार्थः, प्रत्यासत्तेः। तदाह—तद्धितार्थेत्यत्रोक्तस्त्रिविध इति। तद्धितार्थे विषये, उत्तरपदे च परतः समाहारे च वाच्ये इत्येवं त्रिप्रकारो यः संख्यापूर्वः समासः उक्तः स द्विगुरिति यावत्। द्विगुरेकवचनम्। अत्र "समाहारग्रहणं कर्तव्यम्"इति वार्तिकात् समाहार इति लभ्यते। वक्तीति वचनम्। बाहुलकात् कर्तरि ल्युट्। सामान्ये नपुंसकम्। समाहारे द्विगुः एकार्थप्रतिपादकः स्यादिति लभ्यते। स नपुंसकम्। अनन्तरस्येति न्यायोऽत्र नाश्रीयते। तथात्वे द्विगुसङ्ग्रहो न स्यादित्याशयेनाह—द्विगुर्द्वन्द्वश्चेति। अत्र व्याचक्षते। प्रकरणादेवानुवृत्तिलाभे सग्रहणमेतत्प्रकरणानुपात्तस्यापि समाहारद्वन्द्वस्य संग्रहार्थमिति भावः। पञ्चगवम्। पञ्चानां गवां समाहारः इत्यत्र "तद्धितार्थोत्तरपदसमाहारे च" इति समासे सुपो लुकि, पञ्चन्शब्दस्य नलोपे"गोरतद्धितलुकि"इति टचि,टचयोर्लोपे,'पञ्च गो अ'इति भूते"एचोऽयवायावः"इत्यवादेशे,"संख्यापूर्वो द्विगुः"इति द्विगुसंज्ञायाम्,"द्विगुरेकवचनम्"इति एकवचने सौ, "स नपुंसकम्" इति नपुसकत्वात्सोरमि, पूर्वरूपत्वे च विहिते 'पञ्चगवम्' इति सिद्धम्। विशेषणं विशेष्येण बहुलम्। विशिष्यते अनेनेति विशेषणम्। इतरस्माद्व्यावर्तकम्। व्यावर्त्यं तु विशेष्यं भिन्नत्वेन ज्ञायमानम्। समानाधिकरणेनेत्यधिकृतम्। तदाह—भेदकमिति। प्राग्वदिति। समस्यते स तत्पुरुष इत्यर्थः। नीलोत्पलम्। 'नील सु उत्पल सु' इत्यत्र "विशेषणं विशेष्येण बहुलम्" इति समासे, समासत्वात्प्रातिपदिकत्वेन "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, एकदेशविकृतन्यायेन समुदायात्सौ, सोरमि, पूर्वरूपे च तत्सिद्धम्। उपमानानि। सामान्यम्—समानो धर्मः तं वदन्तीति। सामान्यवचनानि समानधर्मवाचकाः शब्दा इत्यर्थः। तादृशैः समर्थसुबन्तैः सह उपमानवाचकाः शब्दाः समस्यन्ते इति सूत्रस्यार्थः। उपमानवाचकस्य पूर्वनिपातार्थं सूत्रम्। घनश्यामः। अत्र घनशब्दो घनसदृशे लाक्षणिकः। 'घन सु श्याम सु' अत्र "उपमानानि सामान्यवचनैः" इति समासे, सुपो लुकि, उपमानवाचकस्य घनशब्दस्य पूर्वनिपाते, विभक्तिकार्ये च तत्सिद्धिः। शाकपार्थिवादीनामिति। "वर्णो वर्णेन" इति सूत्रभाष्ये इदं वार्तिकं पठितम्। शाकप्रियः

**नञ् २।२।६** नञ् सुपा सह समस्यते ॥ **न लोपो नञः ६।३।७३** नञो नस्य लोपः स्यादुत्तरपदे । न ब्राह्मणः अब्राह्मणः ॥ **तस्मान्नुडचि ६।३।७४** लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । नैकधेत्यादौ तु नशब्देन सह "सुप् सुपा" इति समासः ॥ **कुगतिप्रादयः २।२।१८** एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः । **ऊर्यादिच्विडाचश्च १।४।६१** ऊर्यादयः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसञ्ज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । सुपुरुषः ।

---

पार्थिवः शाकपार्थिवः । शाकः प्रियः यस्य स शाकप्रियः । "वा प्रियस्य" इति प्रियशब्दस्य परनिपातः । शाकप्रियश्चासौ पार्थिवश्च इति विग्रहे बहुव्रीहिगर्भो विशेषणसमासः । तत्र पूर्वखण्डे बहुव्रीहौ उत्तरपदस्य प्रियशब्दस्य लोपः । देवब्राह्मण इति । देवाः प्रियाः यस्य स देवप्रियः । स चासौ ब्राह्मणश्चेति विग्रहः । पूर्ववदुत्तरपदलोपः । नञ् । इदं समानाधिकरणाधिकारस्थं नेत्यभिप्रेत्याह—सुपा समस्यत इति । नलोपो नञः । नेति लुप्तषष्ठीकं पदम् । तदाह—नञो नस्येति । उत्तरपदे इति । "अलुगुत्तरपदे" इत्यतस्तदनुवृत्तेरिति भावः । अब्राह्मणः । 'न ब्राह्मण सु' इत्यत्र "नञ्" इति समासे "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, नञः पूर्वनिपाते "नलोपो नञः" इति नलोपे 'अब्राह्मण' इति जाते तस्माद्विभक्तिकार्ये च तत्सिद्धम् । तस्मान्नुडचि । तच्छब्देन पूर्वसूत्रावगतो लुप्तनकारो नञ् परामृश्यते । उत्तरपद इत्यनुवृत्तम् अचीत्यनेन विशेष्यते । तदादिविधिः । उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वात् इति परिभाषया सप्तमी षष्ठीं प्रकल्पयति । तदाह—लुप्तनकारादिति । अनश्वः । 'न अश्व सु' इत्यत्र "नञ्" इति समासे सुपो लुकि, नञः पूर्वनिपाते, "नलोपो नञः" इति नकारस्य लोपे 'अ अश्व' इति जाते "तस्मान्नुडचि" इति अश्वगताकारस्य नुटि, उटि गते, टित्वादाद्यावयवे भूते 'अ न् अश्व' इति जाते, संयोगे कृते, कृते च विभक्तिकार्ये तत्सिद्धिः । ननु 'नैकधा' इत्यत्रापि नञ्समासे "नलोपो नञः" इति नकारस्य लोपे "तस्मान्नुडचि" इति नुटि, अनेकधेत्येव स्यादित्यत आह—नैकधेत्यादौ त्विति । एतदर्थमेव "नञ्" इति सूत्रे "नलोपो नञः" इति सूत्रे च अकारानुबन्धग्रहणमिति भावः । कुगति । नित्यमिति वर्तते । कुशब्दोऽव्ययं गृह्यते, गत्यादिसाहचर्यात् । न द्रव्यवचनः । कुः पापार्थे । कुत्सितः पुरुष इति । नित्यसमासत्वादस्वपदविग्रहः । कुपुरुषः । 'कु सु पुरुष सु' इत्यत्र "कुगतिप्रादयः" इति नित्यसमासे, सुपो लुकि, 'कु' इत्यस्य पूर्वनिपाते विभक्तिकार्ये च कृते तत्सिद्धम् । ऊर्यादि । च्विडाचौ प्रत्ययौ । ऊरीकृत्य । ऊरीत्यव्ययमङ्गीकारे, तस्य "ऊर्यादिच्विडाचश्च" इति गतिसंज्ञायाम् "कुगतिप्रादयः" इति 'कृत्वा' इत्यनेन सह गतिसमासे "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति 'क्त्वा' इत्यस्य स्थाने ल्यपि, लपयोरित्संज्ञायां लोपे च 'ऊरीकृ य' इति भूते "ह्रस्वस्य पिति कृति तुक्" इति तुगागमे उकि गते, कित्वाद-

( प्रादयो गताद्यर्थे प्रथमया ) प्रगत आचार्यः । प्राचार्यः (अत्यादयः क्रान्ताद्यर्थे द्वितीयया ) अतिक्रान्तो मालामिति विग्रहे ॥ **एकविभक्ति चापूर्वनिपाते** १।२।४४ विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसञ्ज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥ **गोस्त्रियोरुपसर्जनस्य** १।२।४८ उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अतिमालः । (अवादयः क्रुष्टाद्यर्थे तृतीयया) अव-

---

न्त्यावयवे जाते, तस्मात्सौ, "अव्ययादाप्सुपः" इति सुपो लोपे च तत्सिद्धम् । शुक्लीकृत्येति । अशुक्लं शुक्लं कृत्वेत्यर्थः । "कृभ्वस्तियोगे" इत्यभूततद्भावे च्विः । गतिसमासे सति क्त्वो ल्यप् , "वेरपृक्तस्य" इति वलोपः । "अस्य च्वौ" इति ईत्वम् ॥ पटपटाकृत्येति । पटपटा इति शब्दं कृत्वेत्यर्थः । "अव्यक्तानुकरणात् द्व्यजवरार्धादनितौ डाच्" इति पटत् शब्दाड्डाचि द्वित्वम्, टिलोपः । "नित्यमाम्रेडिते डाचि" इति तकारपकारयोः पकार एकादेशः । गतिसमासे क्त्वो ल्यप् । सुपुरुष इति । अत्र क्रियायोगाभावाद्गतित्वेऽपि समासः । सोः पूजार्थकत्वेऽपि धातुवाच्यक्रियायोगाभावान्न गतित्वम् । अत्र "कुगतिप्रादयः" इति प्रादित्वात्समासे विभक्तिकार्यं च तत्सिद्धिः । प्रादय इति । गताद्यर्थे विद्यमानाः प्रादयः समस्यन्त इत्यर्थः । प्र गत आचार्य इति । प्रेत्यस्य विवरणं गत इति, गत आचार्य इत्येव अस्वपदविग्रहः, नित्यसमासत्वात् । प्राचार्यः । 'प्र आचार्य सु' इत्यत्र "कुगतिप्रादयः" इति समासे "प्रादयो गताद्यर्थे प्रथमया" इति प्रथमान्तेन सह समासे जाते सुपो लुकि, प्रेत्यस्य पूर्वनिपाते विभक्तिकार्ये च तत्सिद्धम् । अत्यादय इति । क्रान्ताद्यर्थ अत्यादयः समस्यन्त इत्यर्थः । अतिक्रान्तो मालामिति । अतिशब्दः क्रान्ते वर्तते । क्रान्तो मालामित्यस्वपदविग्रहः । तत्र क्रमधातोरतिक्रमणमर्थः । एकविभक्ति । "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यतः समास इति उपसर्जनमिति चानुवर्तते । समास इत्यनेन विग्रहवाक्यं लक्ष्यते। एकैव विभक्तिर्यस्य तदेकविभक्ति, नियतविभक्तिकमिति यावत् । एवञ्च विग्रहे यन्नियतविभक्तिक तत्पूर्वनिपातभिन्नकार्ये कर्तव्ये उपसर्जनं स्यादित्यर्थः। फलितमाह—विग्रहे यन्नियतेति । गोस्त्रियोरिति । "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यतो ह्रस्व इति प्रातिपदिकस्येति चानुवर्तते । उपसर्जनस्येति गोस्त्रियोर्विशेषणम् । प्रत्येकाभिप्रायमेकवचनम् । स्त्रीशब्देन स्त्रीप्रत्ययो गृह्यते । प्रत्ययग्रहणपरिभाषया तदन्तविधिः । उपसर्जनभूतस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य चेति लभ्यते । तदुभयं प्रातिपदिकस्य विशेषणम् । तदन्तविधिः । तदाह—उपसर्जनमित्यादिना । अतिमालः । 'अति माला अम्' इत्यत्र "कुगतिप्रादयः" इति सूत्रेण "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति वार्तिकव्यवस्थया च समासे कृते, सुपो लुकि, अतीत्यस्य पूर्वनिपाते "एकविभक्तिचापूर्वनिपाते" इति मालेत्यस्य उपसर्जनसंज्ञायाम् "गोस्त्रियोरुपसर्जनस्य" इति मालेत्यस्य ह्रस्वे, समुदायात्सौ, रुत्वे

क्रुष्टः कोकिलया अवकोकिलः। (**पर्यादयो ग्लानाद्यर्थे चतुर्थ्या**) परिग्लानोऽध्ययनाय पर्यध्ययनः। (**निरादयः क्रान्ताद्यर्थे पञ्चम्या**) निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः॥ **तत्रोपपदं सप्तमीस्थम् ३।१।९२** सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसञ्ज्ञं स्यात्। **उपपदमतिङ् २।२।१९।** उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भं करोतीति कुम्भकारः। अतिङ् किम्? मा भवान् भूत्। "माङि लुङ्" इति सप्तमीनिर्देशान्माङुपपदम्। "**गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः**"। व्याघ्री। अश्वक्रीती। कच्छपीत्यादि॥ **तत्पुरुषस्याङ्गुलेः सङ्ख्याव्य-**

---

विसर्गे च तत्सिद्धिः। अवादयः क्रुष्टाद्यर्थे इति। क्रुष्टाद्यर्थे अवादयः समस्यन्ते इत्यर्थः। अवकोकिलः। कोकिलया आहूत इत्यर्थः। 'अव कोकिला टा' इत्यलौकिकविग्रहे "कुगतिप्रादयः" इति सूत्रेण "अवादयः क्रुष्टाद्यर्थे तृतीयया" इति वार्तिकव्यवस्थया च समासे, सुपो लुकि, अवेत्यस्य पूर्वनिपाते "एकविभक्तिचापूर्वनिपाते" इत्युपसर्जनसंज्ञायाम् "गोस्त्रियोरुपसर्जनस्य" इति कोकिलेत्यस्य ह्रस्वत्वे सौ, रुत्वे विसर्गे च तत्सिद्धिः। पर्यादय इति। ग्लानाद्यर्थे पर्यादयः समस्यन्ते इत्यर्थः। पर्यध्ययनः। अत्र "पर्यादयो ग्लानाद्यर्थे" इत्यनेन समासः। निरादय इति। क्रान्ताद्यर्थे निरादयः समस्यन्त इत्यर्थः। निष्कौशाम्बिः। अत्र "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासे सुपो लुकि, "एकविभक्तिचापूर्वनिपाते" इत्युपसर्जनसंज्ञायाम्, "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वे विभक्तिकार्ये च कृते 'निष्कौशाम्बिः' इति रूपम्। तत्रोपपदम्। सप्तमीस्थमित्येतद्व्याचष्टे—सप्तम्यन्त इत्यादिना। तद्वाचकं पदमिति। एतच्चोपपदमित्यन्वर्थसंज्ञाबलाल्लभ्यते। उपपदमतिङ्। सुबन्तमिति। "सुबामन्त्रिते" इत्यतस्तदनुवृत्तेरिति भावः। समर्थेनेति। प्रथमान्तं समर्थग्रहणं तृतीयान्ततया विपरिणम्यत इति भावः। अतिङन्तश्चायं समास इति। सूत्रे ऽतिङिति तदन्तग्रहणमिति भावः। समासः तिङन्तघटितो न भवतीत्यर्थः। कुम्भकारः। कुम्भं करोतीत्यर्थे "कर्मण्यण्" इत्यणि 'कुम्भ अम् कृ अण्' इत्यलौकिकविग्रहे "अचो ञ्णिति" इति वृद्धौ "तत्रोपपदं सप्तमीस्थम्" इति कुम्भशब्दस्योपपदसंज्ञायाम् "उपपदमतिङ्" इति समासे सुपो लुकि, 'कुम्भकार' इति भूते समासत्वात्प्रातिपदिकत्वे विभक्तिकार्ये च कृते 'कुम्भकारः' इति रूपम्। मा भवान् भूदिति। अत्र भूदिति तिङन्तेन माङः समासनिवृत्त्यर्थमतिङ्ग्रहणमिति भावः। व्याघ्री। विशेषेण आसमन्ताज्जिघ्रतीति 'व्याघ्री' इत्यत्र "गतिश्च" इति गतित्वात् सुबुत्पत्तेः पूर्वं "कुगतिप्रादयः" इति समासे 'व्याघ्र' इति जाते "जातेरस्त्रीविषयादयोपधात्" इति ङीषि, ङकारषकारयोर्लोपे 'व्याघ्र ई' इति भूते "यचि भम्" इति भसंज्ञायाम् "यस्येति च" इति अलोपे, विभक्तिकार्ये च कृते 'व्याघ्री' इति। अश्वक्रीती। अश्वेन क्रीता इति

यादेः ५।४।८६ सङ्ख्याव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम् । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥ अहः सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ५।४।८७ एभ्यो रात्रेरच् स्याच्चात्सङ्ख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम् ॥ रात्राह्नाहाः पुंसि २।४।२९ एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अहश्च रात्रिश्चाहोरात्रः । सर्वरात्रः । पूर्वरात्रः । सङ्ख्यातरात्रः । सङ्ख्यापूर्वं रात्रं क्लीबम् ।

---

विग्रहे "गतिकारकोपपदानां कृद्भिः सह समासवचनम्, प्राक् सुबुत्पत्तेः" इति परिभाषया सुबुत्पत्तेः प्राक् "कर्तृकरणे कृता बहुलम्" इति समासे, सुपो लुकि, "क्रीतात्करणपूर्वात्" इति ङीपि ङपयोर्लोपे 'अश्वक्रीत–ई' इति जाते भसंज्ञायां यस्येति लोपे विभक्तिकार्ये च तत्सिद्धिः । सुबन्तेन समासे तु टाप् स्यादिति कच्छपी । कच्छेन पिबतीति कच्छपी इत्यत्र "आतोऽनुपसर्गे कः" इति के, कलोपे "आतो लोप इटि च" इति आकारलोपे "गतिकारकोपपदानां कृद्भिः" इति सुबुत्पत्तेः प्राक् "उपपदमतिङ्" इति समासे सुपो लुकि "जातेरस्त्रीविषयादयोपधात्" इति ङीपि, ङपयोर्लोपे भसंज्ञायाम् अकारलोपे संयोगे विभक्तिकार्ये च कृते 'कच्छपी' इति सिद्ध्यति । तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः । "अच्प्रत्यन्ववपूर्वात्" इत्यतः अजित्यनुवर्तते, "समासान्तः" इत्यधिकृतम् । तेन समासस्य अन्तावयव इति लभ्यते । प्रत्ययः परश्च इत्यधिकारात् अच्प्रत्ययस्य तत्पुरुषात्परत्वेऽपि तस्य तदवयवत्वात् । अङ्गुलेरिति अवयवषष्ठी । अङ्गुलेरिति तत्पुरुषविशेषणं, तदन्तविधिः । तदाह—संख्याव्ययादेरिति । संख्या च अव्ययं च संख्याव्यये, ते आदी यस्येति विग्रहः । द्व्यङ्गुलमिति । "तद्धितार्थ" इति द्विगुः । "प्रमाणे लः" "द्विगोर्नित्यम्" इति लुक् । द्व्यङ्गुलिशब्दादचि तस्य तद्धितत्वात्तस्मिन् परे "यस्येति च" इति इकारलोपः । निरङ्गुलमिति । "निरादयः क्रान्ताद्यर्थे" इति समासः "तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः" इति अच् इलोपः । अहस्सर्वैकदेशसंख्यातपुण्याच्च । एभ्यो रात्रेरिति । अहन्, सर्व, एकदेश, संख्यात, पुण्य, एभ्यः परस्य रात्रिशब्दस्येत्यर्थः । अहरादिपूर्वकस्य रात्र्यन्तस्य तत्पुरुषस्येति यावत् । अह्नो रात्रिरिति वा अहश्चासौ रात्रिश्चेति वा असम्भवादित्यत आह—अहर्ग्रहणं द्वन्द्वार्थमिति । रात्राह्नाहाः । द्वन्द्वतत्पुरुषयोरित्यनुवृत्तं प्रथमाबहुवचनेन विपरिणतं रात्रादिभिर्विशेष्यते, तदन्तविधिः । रात्राह्नाहान्तद्वन्द्वतत्पुरुषाः पुंसीत्यर्थः । फलितमाह—एतदन्ताविति । परवल्लिङ्गतापवादः । अहोरात्र इति । अहश्च रात्रिश्च तयोस्समाहारः इति द्वन्द्वे परत्वान्नपुंसकत्वं प्राप्तम् अपवादत्वात् परवल्लिङ्गमपि बाधित्वा अनेन पुंस्त्वम् । "अहस्सर्वैकदेश" इत्यच् । सर्वरात्रः । सर्वा चासौ रात्रिश्चेति "विशेषणं विशेष्येण बहुलम्" इति समासे, सुपो लुकि, "अहस्सर्वैकदेश॰" इत्यचि, भसंज्ञायाम् यस्येति लोपे "रात्राह्नाहाः पुंसि" इति पुंस्त्वे सौ, रुत्वे विसर्गे च तत्सिद्धिः । पूर्वरात्रः । रात्रेः पूर्वः (भागः) पूर्वरात्रः । "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" इति समासे, "अहस्सर्वैकदेशसंख्यातपुण्याच्च

द्विरात्रम् । त्रिरात्रम् ॥ **राजाहःसखिभ्यष्टच् ५।४।९१** एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः ॥ **आन्महतः समानाधिकरणजातीययोः ६।३।४६** महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाराजः । प्रकारवचने जातीयर्, महाप्रकारो महाजातीयः ॥ **द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः ६।३।४७** आत्स्यात् । द्वौ च दश च द्वादश । अष्टाविंशतिः ॥ **त्रेस्त्रयः ६।३।४८** त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ॥ **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २।४।२६** एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ ।

---

रात्रेः" इत्यच् । "रात्राह्नाहाः पुंसि" इति पुंस्त्वम् । संख्यापूर्वमिति । लिङ्गानुशासनसूत्रमिदम् । न त्वष्टाध्यायीस्थं नापि वार्तिकम् । भाष्येऽदर्शनात् । "रात्राह्नाहाः पुंसि" इत्यस्यायमपवादः । द्विरात्रमिति । द्वयोः रात्र्योः समाहारः इति समाहारद्विगुः । "अहस्सर्वैकदेश" इत्यच् । "संख्यापूर्वं रात्रं क्लीबम्" इति क्लीबत्वम् । एवं 'त्रिरात्रम्' इति । राजाहः सखिभ्यष्टच् । "तत्पुरुषस्याङ्गुलेः" इत्यतः तत्पुरुषस्येत्यनुवृत्तं पञ्चमीबहुवचनत्वेन विपरिणतं राजाहस्सखिभ्य इत्यनेन विशेष्यते । तदन्तविधिः, तदाह—एतदन्तादिति । परमराजः । परमश्चासौ राजा चेति विग्रहः । "विशेषणं विशेष्येण बहुलम्" इति समासः । "राजाहःसखिभ्यष्टच्" इति समासान्तष्टच् । "नस्तद्धिते" इति टिलोपः । आन्महतः । "अलुगुत्तरपदे" इत्युत्तरपदाधिकारस्थमिदं सूत्रम् । उत्तरपदे इत्यनुवृत्तं समानाधिकरणपदे अन्वेति, न तु जातीय इति, तस्य प्रत्ययत्वात् । तदाह—महत आकार इत्यादिना । महाराजः । महांश्चासौ राजा 'महाराजः' इत्यत्र "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति समासे, सुपो लुकि, "राजाहःसखिभ्यष्टच्" इति टचि, टचयोर्लोपे "नस्तद्धिते" इति टेर्लोपे संयोगे कृते 'महत् राज' इति जाते "आन्महतः समानाधिकरणजातीययोः" इति समानाधिकरणे राज इत्युत्तरपदे महतस्तकारस्यात्वे "अकः सवर्णे दीर्घः" इति दीर्घत्वे विभक्तिकार्ये चकृते 'महाराजः' इति । महाजातीयः । महत्सदृश इत्यर्थः । प्रकारवचने जातीयर्, आत्वम्, सवर्णदीर्घः । द्व्यष्टनः । संख्यायामिति । शेषपूरणेन सूत्रं व्याचष्टे—आत्स्यादिति । द्विशब्दस्य अष्टन्शब्दस्य च संख्यावाचके उत्तरपदे परे आत्स्यात, न तु बहुव्रीह्यशित्योरित्यर्थः । द्वादश । द्वौ च दश च द्वादश इत्यत्र "चार्थे द्वन्द्वः" इति समासे, सुपो लुकि, 'द्विदश' इति जाते "द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः" इति द्विशब्दस्याकारान्तादेशे विभक्तिकार्ये च कृते 'द्वादश' इति । एवमेव 'अष्टाविंशतिः' इत्यत्राप्यात्वम्बोध्यम् । परवल्लिङ्गमिति । परवदिति षष्ठ्यन्ताद्वतिः । तदाह—एतयोः परपदस्येवेति । द्वन्द्वपदमत्र इतरेतरयोगद्वन्द्वपरम्, समाहारद्वन्द्वे "स नपुंसकम्" इत्यस्य तदपवादत्वात् । कुक्कुटमयूर्याविमे । अत्र द्वन्द्वे अवयवलिङ्गेनानियमे प्राप्ते नियमार्थमिदम् । अर्धपिप्पलीति । "अर्धं नपुंसकम्" इति तत्पु-

अर्धपिप्पली । ( द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः ) पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः ॥ प्राप्तापन्ने च द्वितीयया २।४।४ समस्येते, अकारश्चानयोरन्तादेशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै अलंकुमारिः । अत एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥ अर्धर्चाः पुंसि च २।४।३१ अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चम् , अर्धर्चः । एवं—ध्वज तीर्थ शरीर मण्ड पीयूष देह अङ्कुश पात्र सूत्रादयः ॥ "सामान्ये नपुंसकम्" । मृदु पचति । प्रातः कमनीयम् ॥ इति तत्पुरुषः ।

## अथ बहुव्रीहिः ।

शेषो बहुव्रीहिः २।२।२३ अधिकारोऽयं प्राग् द्वन्द्वात् । अनेकमन्यपदार्थे २।२।२४ अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥

---

रूपः । अत्र "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति परपदस्य लिङ्गम् । द्विगुप्राप्तेति । द्विगु, प्राप्त, आपन्न, अलंपूर्व, गतिसमास एतेषु परवल्लिङ्गस्य प्रतिषेधो वक्तव्य इत्यर्थः । पञ्चकपालः । अत्र "तद्धितार्थोत्तरपदसमाहारे च" इति समासे, सुपो लुकि, "द्विगोर्लुगनपत्ये" इति प्राग्दीव्यतीयप्रत्ययस्य लुकि, "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति परवल्लिङ्गत्वे प्राप्ते परं "द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः" इति परवल्लिङ्गत्वप्रतिषेधे, विभक्तिकार्ये च कृते तत्सिद्धिः । प्राप्तजीविकः । "प्राप्तापन्ने च द्वितीयया" इति समासः । अत्र परवल्लिङ्गता प्राप्ता, सा "द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः"इत्यनेन निषिध्यते । आपन्नजीविकः । अत्र उत्तरपदस्य जीविकाशब्दस्य यल्लिङ्गं तत्समासस्य न भवति । अलङ्कुमारिरिति । अत्र उत्तरपदकुमारीलिङ्गं समासस्य न भवति । "एकविभक्ति च" इति कुमारीशब्दस्योपसर्जनत्वाद्ध्रस्वः। गतिसमासमुदाहरति–निष्कौशाम्बिरिति । अत्र कौशाम्बीशब्दलिङ्गं समासस्य न भवति। अर्धर्चाः । बहुवचनात्तदादीनां ग्रहणमित्याह—अर्धर्चादय इति । अर्धर्चमिति । ऋचोऽर्धमिति विग्रहे "अर्धं नपुंसकम्" इति समासः । "ऋक्पूः" इति अच् । परवल्लिङ्गं क्लीत्वं बाधित्वा पुंनपुंसकत्वविकल्पः । सामान्ये नपुंसकमिति । न्यायसिद्धमेतत् । विशेष्यविशेषणसन्निधाने सति स्त्रीत्वपुंस्त्वयोरनभिव्यक्तौ 'उभयोरन्तरं यच्च तदभावे नपुंसकम्' इति लक्षणलक्षितनपुंसकत्वस्यैव न्याय्यत्वात् । मृदु पचतीति । क्रियाविशेषणमिदं द्वितीयान्तम् । मृदु पाकं करोतीत्यर्थः । प्रातः कमनीयमिति । रमणीयमित्यर्थः । इति तत्पुरुषसमासः ।

शेषो बहुव्रीहिरिति । उक्तादन्यः शेषः । "द्वितीया श्रित" इत्यादिना ( शास्त्रेण ) यस्य त्रिकस्य ( विभक्तेः ) विशिष्यसमासो नोक्तः, स शेषः प्रथमान्त इत्यर्थः ।

**सप्तमीविशेषणे बहुव्रीहौ २।२।३५** सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥ **हलदन्तात्सप्तम्याः सञ्ज्ञायाम् ६।३।६** हलन्तादन्तात्सप्तम्या अलुक् । कण्ठेकालः । प्राप्तमुदकं यं प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः । ( **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** ) प्रपतितपर्णः प्रपर्णः । ( **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** ) अविद्यमान:

---

अनेकमन्यपदार्थे । प्रथमान्तमिति । शेषग्रहणानुवृत्तिलभ्यमिदम् । अन्यस्येति । उपस्थितप्रथमान्तातिरिक्तस्येत्यर्थः । सप्तमी विशेषणे । "उपसर्जनं पूर्वम्" इत्यतः पूर्वमित्यनुवर्तते । प्रत्ययग्रहणपरिभाषया सप्तमीति तदन्तग्रहणम् । तदाह—सप्तम्यन्तमिति । अत एव ज्ञापकादिति । प्रथमान्तानामेव बहुव्रीहिरिति सप्तम्यन्तस्य तत्र सम्भव एव नास्ति इति सप्तम्यन्तस्य "सप्तमी विशेषणे" इति सूत्रे पूर्वनिपातविधानं व्यर्थं सद् ज्ञापयति "भवति व्यधिकरणपदोऽपि बहुव्रीहिः क्वचित्" इति । यथा–कण्ठेकालः, शरेभ्यो जन्म यस्य स शरजन्मा – षडाननः । हलदन्तात् । अलुगिति । "अलुगुत्तरपदे" इत्यतस्तदनुवृत्तेरिति भावः । कण्ठेकालः । कण्ठे कालः इत्यत्र "अनेकमन्यपदार्थे" इत्यनेन ( ज्ञापकात् ) बहुव्रीहिसमासे, "सप्तमीविशेषणे बहुव्रीहौ" इति सप्तम्यन्तस्य पूर्वनिपाते, समासत्वात्प्रातिपदिकसंज्ञायां "हलदन्तात्सप्तम्याः संज्ञायाम्" इति सप्तम्याः अलुकि, सुपो लुकि, समुदायात्सौ, रुत्वे विसर्गे च तत्सिद्धिः । एवमेव 'त्वचि सारः' इत्यत्रापि बोध्यम् । प्राप्तोदकः । 'प्राप्त सु उदक सु' इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति बहुव्रीहिसमासे, प्रातिपदिकत्वे सुपो लुकि, गुणे, विभक्तिकार्ये च तत्सिद्धिः । ऊढरथः । ऊढो रथो येनेति विग्रहः । साधनिका पूर्ववत् । उपहृतपशू रुद्रः । उपहृतः पशुः यस्मै इति विग्रहः । उद्धृतौदना स्थाली । उद्धृतः ओदनो यस्याः इति बहुव्रीहिः । पीताम्बरो हरिः । पीतम् अम्बरं यस्येति विग्रहः । वीरपुरुषको ग्रामः । वीराः पुरुषाः यस्मिन् इति विग्रहः । अत्र "अनेकमन्यपदार्थे" इति समासे, सुपो लुकि, "शेषाद्विभाषा" इति कपि, समुदायात्सौ, रुत्वे, विसर्गे च तत्सिद्धिः । प्रादिभ्यः । प्रादिभ्यः परं यद्धातुजप्रकृतिकप्रथमान्तं तस्य अन्येन प्रथमान्तेन बहुव्रीहिर्वाच्यः, तत्र बहुव्रीहौ प्रादिभ्यः परस्य उत्तरपदस्य धातुजस्य लोपश्च विकल्पेन वाच्य इत्यर्थः । प्रपतितपर्ण इति । प्रकृष्टं पतितं प्रपतितम् । "प्रादयो गताद्यर्थे" इति समासः । प्रपतितं पर्णं यस्मादिति बहुव्रीहिः । प्रपर्ण इति । प्रपतितेति पूर्वपदे धातुजस्य उत्तरपदस्य लोपे रूपम् । नञोऽस्त्यर्थानाम् । नञः परेषामस्त्यर्थवाचिनां सुबन्तानां बहुव्रीहिर्वाच्यः । तत्रास्त्यर्थवाचिनामुत्तरपदभूतानां लोपश्च वा वक्तव्य इत्यर्थः । अविद्यमानपुत्र इति । न विद्यमान इति नञ्समासः । नञो नलोपः । अविद्यमानः पुत्रो

पुत्रोऽपुत्रः ॥ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६।३।३४ उक्तपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिर्निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः। "गोस्त्रियोः" इति ह्रस्वः। चित्रगुः। रूपवद्भार्यः। अनूङ् किम्? वामोरूभार्यः ॥ अप्पूरणीप्रमाण्योः ५।४।११६ पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य सः स्त्रीप्रमाणः। अप्रि-

---

यस्येति बहुव्रीहिः। अपुत्र इति। अस्त्यर्थकविद्यमानशब्दस्य लोपे रूपम्। स्त्रियाः पुंवत्। भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते। तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः। ऊङोऽभावोऽनूङ्। भाषितपुंस्कादनूङ् यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ्स्त्रीशब्दः। स्त्रियामिति सप्तम्यन्तमपि न स्त्रीप्रत्ययपरं किन्तु स्त्रीलिङ्गपरम्। तच्च "अलुगुत्तरपदे" इत्यधिकृते उत्तरपदेऽन्वेति। तदाह—स्त्रीलिङ्गे उत्तरपदे इति। ह्रस्व इति। चित्रा गावो यस्येति विग्रहे बहुव्रीहिसमासे सुब्लुकि सति अनेकमिति प्रथमान्तनिर्दिष्टतया, विग्रहे नियतविभक्तिकतया वा उपसर्जनत्वे सति चित्रगोशब्दे ओकारस्य "गोस्त्रियोः" इत्युकारो ह्रस्व इत्यर्थः। चित्रगुः। चित्रा गौर्यस्य इति विग्रहे "अनेकमन्यपदार्थ" इति समासे सुपो लुकि, "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति 'चित्रा' इत्यस्य पुंवद्भावे गोशब्दस्य "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वे विभक्तिकार्ये च तत्सिद्धिः। रूपवद्भार्यः। रूपवती भार्या यस्य इति विग्रहे "अनेकमन्यपदार्थ" इति बहुव्रीहिसमासे सुपो लुकि, "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्" इति पूर्वपदस्य पुंवद्भावे, उत्तरपदस्य "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वे विभक्तिकार्ये च तत्सिद्धिः। वामोरूभार्यः। अत्र अनूङ् इति निषेधान्न पुंवद्भावः। अप्पूरणी। अविति छेदः। "बहुव्रीहौ सक्थ्यक्ष्णोः" इत्यतो बहुव्रीहावित्यनुवृत्तं पूरणीप्रमाणीभ्यां विशेष्यते, तदन्तविधिः। स्त्रीलिङ्गनिर्देशात् पूरणप्रत्ययान्तं स्त्रीलिङ्गमिह गृह्यते। तदाह—पूरणार्थेत्यादिना। अप् स्यादिति। समासान्तस्तद्धित इत्यपि बोध्यम्। कल्याणीपञ्चमाः। कल्याणी पञ्चमी यासामिति विग्रहे "अनेकमन्यपदार्थ" इति बहुव्रीहौ कृते, पञ्चमीशब्दे पूरणार्थप्रत्ययान्ते परे कल्याणीशब्दस्य पुंवत्त्वनिषेधे "अप्पूरणीप्रमाण्योः" इति समासान्ते अप्प्रत्यये च कृते "यस्येति च" इतीकारलोपे विभक्तिकार्ये च कृते तत्सिद्धिः। स्त्रीप्रमाणः। इह बहुव्रीहौ कृते भाषितपुंस्कत्वाभावात् अपुंवद्भावे "अप्पूरणीप्रमाण्योः" इति अप्प्रत्यये "यस्येति च" इतीकारलोपे 'स्त्रीप्रमाण' इति रूपम्।

यादिषु किम् ? कल्याणीप्रियः, इत्यादि ॥ **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्** ५।४।११३ स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् ? दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । "अक्ष्णोऽदर्शनात्" इति वक्ष्यमाणोऽच् ॥ **द्वित्रिभ्यां ष मूर्ध्नः** ५।४।११५ आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ॥ **अन्तर्बहिर्भ्यां च लोम्नः** ५।४।११७ आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः ॥ बहिर्लोमः । **पादस्य लोपोऽहस्त्यादिभ्यः** ५।४।१३८ हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । व्याघ्रस्येव पादा-

---

बहुव्रीहौ सक्थ्यक्ष्णोः । 'बहुव्रीहौ' इति सप्तमी व्यत्ययेन पञ्चम्यर्थे । तदाह—स्वाङ्गवाचीति । सक्थ्यक्ष्यन्तादिति । बहुव्रीहिविशेषणत्वात् तदन्तविधिरिति भावः । षच् स्यादिति । समासान्तस्तद्धितश्चेति ज्ञेयम् । दीर्घसक्थ इति । दीर्घे सक्थिनी यस्य स दीर्घसक्थः इत्यत्र "अनेकमन्यपदार्थे" इति समासे कृते सुपो लुकि, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षचि, "यस्येति च" इति इकारलोपे विभक्तिकार्ये च कृते तत्सिद्धिः । जलजाक्षी । जलजे इव अक्षिणी यस्याः सा, इति बहुव्रीहिसमासे "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समासान्ते षचि, षचयोर्लोपे, भसंज्ञायाम् "नस्तद्धिते" इति टिलोपे "षिद्गौरादिभ्यश्च" इति षित्वान्ङीषि, अनुबन्धलोपे "यस्येति च" इति अलोपे विभक्तिकार्ये च कृते 'जलजाक्षी' इति रूपम् । दीर्घसक्थि शकटमिति । दीर्घे सक्थिनी–सक्थिसदृशावीषादण्डौ यस्येति विग्रहः । अत्र स्वाङ्गत्वाभावात् न षच् इति भावः । स्थूलाक्षेति । स्थूलानि अक्षाणि पर्वग्रन्थयो यस्या इति बहुव्रीहिः । अस्वाङ्गत्वादिह न षजिति भावः । ननु षजभावेऽपि नान्तलक्षणङीपि स्थूलाक्षिणीति स्यादित्यत आह—अक्ष्णोऽदर्शनादिति । षचि तु षित्वलक्षणाद्ङीष् स्यादिति भावः । द्वित्रिभ्याम् । षेति लुप्तप्रथमाकं पदम् । द्विमूर्ध इति । द्वौ मूर्धानौ यस्येति विग्रहः । अत्र "द्वित्रिभ्यां ष मूर्ध्नः" इति षचि, षचयोर्लोपे टिलोपे विभक्तिकार्ये च तत्सिद्धिः । त्रिमूर्ध इति । त्रयो मूर्धानो यस्येति विग्रहः । "द्वित्रिभ्यां ष मूर्ध्नः" इति समासान्तः षच् । "नस्तद्धिते" इति टिलोपः । अन्तर्बहिर्भ्याञ्च । अप्स्यादिति । "अप्पूरणीप्रमाण्योः" इत्यतस्तदनुवृत्तेरिति भावः । अन्तर्लोम इति । अन्तर्लोमानि यस्य इति "अनेकमन्यपदार्थे" इति बहुव्रीहिसमासे, सुपो लुकि, "अन्तर्बहिर्भ्याञ्च लोम्नः" इति अप्प्रत्यये समासान्ते कृते भसंज्ञायां टिलोपे च कृते तत्सिद्धिः । एवं बहिर्लोमः । पादस्य लोपः । अहस्त्यादिभ्य इति च्छेदः । उपमानादित्यनुवर्तते । तदाह—हस्त्यादिवर्जितादि । व्याघ्रपाद् । व्याघ्रस्येव पादौ यस्यासौ व्याघ्रपात् इत्यत्र "अनेकमन्यपदार्थे" इति समासे, सुपो लुकि 'व्याघ्रपाद' इति जाते "पादस्य लोपोऽहस्त्यादिभ्यः" इति दकारोत्तरवर्त्यकारलोपे, विभक्तिकार्ये "वावसाने" इति दस्य तत्वे च कृते 'व्याघ्रपात्' इति ।

वस्या व्याघ्रपात् । अहस्त्यादिभ्यः किम् ? हस्तिपादः । कुसूलपादः । **सङ्ख्यासुपूर्वस्य** ५।४।१४० पादस्य लोपः स्यात् समासान्तो बहुव्रीहौ । द्विपात् । सुपात् ॥ **उद्विभ्यां काकुदस्य** ५।४।१४८ लोपः स्यात् । उत्काकुत् । विकाकुत् ॥ **पूर्णाद्विभाषा** ५।४।१४९ पूर्णकाकुत्, पूर्णकाकुदः ॥ **सुहृद्दुर्हृदौ मित्रामित्रयोः** ५।४।१५० सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् । दुर्हृदमित्रः ॥ **उरःप्रभृतिभ्यः कप्** ५।४।१५१ । **सोऽपदादौ** ८।३।३८ पाशकल्पककाम्येषु विसर्गस्य सः । **कस्कादिषु च** ८।३।४८ एष्विण उत्तरस्य विसर्गस्य षः स्यादन्यत्र तु सः । इति सः । व्यूढोरस्कः । **इणः षः** ८।३।३९ इण उत्तरस्य विसर्गस्य षः स्यात् पाशकल्पककाम्येषु परेषु । प्रियसर्पिष्कः ॥ **निष्ठा** २।२।३६ निष्ठान्तं बहुव्रीहौ पूर्वं

---

हस्तिपादः, कुसूलपादः । अत्र पादशब्दस्य लोपो न, हस्त्यादित्वादिति भावः । संख्यासुपूर्वस्य । शेषपूरणेन सूत्रं व्याचष्टे—पादस्येति । उपमानात् परत्वाभावादप्राप्तौ वचनम् । द्विपादिति । द्वौ पादौ अस्येति विग्रहः । सुपादिति । शोभनौ पादावस्येति विग्रहः । अत्र "संख्यासुपूर्वस्य" इति समासान्तलोपः । उद्विभ्यां काकुदस्य । लोपः स्यादिति । उद्विभ्यां परस्य काकुदस्य लोपः स्याद् बहुव्रीहावित्यर्थः । उत्काकुत् । उन्नतं काकुदं यस्य उत्काकुत्, विगतं काकुदं यस्येति विकाकुत्, इत्यत्र बहुव्रीहिसमासे सुपो लुकि, "उद्विभ्यां काकुदस्य" इति दकारोत्तरवर्त्यकारलोपे विभक्तिकार्ये च 'उत्काकुत्' 'विकाकुत्' इति रूपे स्तः । पूर्णाद्विभाषा । पूर्णात्परस्य काकुदस्य लोपो वा स्यादित्यर्थः । पूर्णं काकुदं यस्येति विग्रहः । सुहृद् दुर्हृदौ । यथासंख्यमभिप्रेत्योदाहरति—सुहृन्मित्रमिति । सु शोभनं हृदयं यस्येति विग्रहः । अत्र "अनेकमन्यपदार्थे" इति समासे सुपो लुकि, "सुहृद्दुर्हृदौ मित्रामित्रयोः" इति हृदयशब्दस्य स्थाने हृद् आदेशे कृते विभक्तिकार्ये च कृते 'सुहृद्' इति रूपम् । एवम् 'दुर्हृद्' इत्यत्रापि बोध्यम् । उरःप्रभृतिभ्यः कप् । बहुव्रीहौ समासान्तः तद्धित इति विशेषः । तद्धितत्वात् ककारस्य नेत्संज्ञा । कस्कादिषु च । इण इत्यनुवर्तते । इण इति पञ्चम्यन्तम् । "विसर्जनीयस्य सः" इत्यतो विसर्जनीयस्येत्यनुवर्तते । कस्कादिष्विति विषयसप्तमी । कस्कादिगणे इणः परस्य विसर्गस्य षः स्यादित्यर्थः । "सोऽपदादौ" इत्यतः स इति प्रथमान्तमनुवर्तते । कस्कादिषु अनिणः परस्य विसर्गस्य सत्वं स्यादित्यर्थः । तदेवं वाक्यद्वयं सम्पद्यते । कस्कादिषु तथाविधानामेव कृतषत्वसत्वानां निर्देशादयं विषयविभागः । व्यूढोरस्कः । व्यूढम्—विशालम्, उरः—वक्षः यस्य इत्यत्र "अनेकमन्यपदार्थे" इति समासे, सुपो लुकि 'व्यूढ उरस्' इति जाते "उरः प्रभृतिभ्यः कप्" इति कपि, पलोपे "खरवसानयोः" इति रस्य विसर्गत्वे "कस्कादिषु च" इति विसर्गस्य सत्वे विभक्तिकार्ये च विहिते 'व्यूढोरकः' इति सिद्ध्यति । प्रियसर्पिष्कः । प्रियं सर्पिर्यस्येति

स्यात्। युक्तयोगः ॥ शेषाद्विभाषा ५।४।१५४ अनुक्तसमासान्ताच्छेषाद्बहुव्रीहेः कप् वा स्यात्। महायशस्कः, महायशाः। इति बहुव्रीहिः।

---

## अथ द्वन्द्वः।

**चार्थे द्वन्द्वः २।२।२९** अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्र 'ईश्वरं गुरुं च भजस्व' इति परस्पर-निरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः। भिक्षामट गां चानय, इति अन्यतरस्यानु-षङ्गिकत्वेनान्वयोऽन्वाचयः। अनयोरसामर्थ्यात्समासो न। धवखदिरौ छिन्धि इति मिलितानामन्वयः–इतरेतरयोगः। संज्ञापरिभाषम्। समूहः समाहारः। राजदन्ता-

---

विग्रहः। कप्। "कस्कादिषु च" इति सत्वम्। निष्ठा। निष्ठान्तमिति। "क्तक्तवतू निष्ठा" इति कृदन्ते उक्तम्, तदन्तमित्यर्थः। युक्तयोगः। युक्तो योगो येन स 'युक्त-योगः' इत्यत्र "अनेकमन्यपदार्थे" इति बहुव्रीहिसमासे, समासत्वात्प्रातिपदिकत्वे सुपो लुकि, "निष्ठा" इति निष्ठान्तस्य युक्त, इत्यस्य पूर्वनिपाते विभक्तिकार्ये च सिद्धिः। शेषाद्विभाषा। इतः पूर्वं येभ्यः समासान्ता विहिताः तेभ्योऽन्यः। तदाह–अनुक्त-समासान्तादिति। महायशस्कः। महत् यशो यस्येति च विग्रहः। "आन्महतः" इत्यात्वे, कपि, "कस्कादिषु च" इति सत्वे विभक्तिकार्ये च 'महायशस्कः' इति रूपम्। इति बहुव्रीहिः।

चार्थे द्वन्द्वः। "सुबामन्त्रिते" इत्यतः सुबिति, "अनेकमन्यपदार्थे" इत्यतोऽनेक-मिति चानुवर्तते। "समास" इति, "विभाषा" इति चाधिकृतम्। तदाह— अनेकमित्यादिना। समुच्चयेति। 'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यमरः। एकस्मिन्निति। एकस्मिन् क्रियापदे आवृत्ते एकस्य असमस्यमानपदस्य प्रथम-मन्वयः, तदनन्तरमन्यस्यान्वयो यत्र, तत्र समुच्चयः चार्थ इत्यर्थः। अन्यतरस्येति। यत्रान्यतरस्य पदस्य एकस्मिन् क्रियापदे आनुषङ्गिकत्वेन परार्थप्रवृत्तिविषयत्वेनान्वयः, इतरस्य तु पदस्यान्यस्मिन् क्रियापदे उद्देश्यत्वेनान्वय-श्चार्थ इत्यर्थः। धवखदिरौ छिन्धीति। धवश्च खदिरश्च 'धवखदिरौ' इत्यत्र इतरेतरयो-गत्वात् "चार्थे द्वन्द्वः" इति द्वन्द्वसमासे सुपो लुकि, विभक्तिकार्ये च कृते 'धवखदिरौ' इति सिद्धम्। मिलितानामिति। परस्परापेक्षितानां समुदितानामेकस्मिन् क्रियापदे-ऽन्वयो यत्र, तत्रेतरेतरयोगः परस्परसाहचर्यं चार्थः प्रत्येतव्य इत्यर्थः। समूहः समाहार इति। परस्परसाहित्यमित्यर्थः। संज्ञापरिभाषम्। संज्ञा च परिभाषा च अनयोः समाहारः संज्ञापरिभाषम्, इत्यत्र समाहारत्वात् "चार्थे द्वन्द्वः" इति द्वन्द्वसमासे, समासत्वात्प्रातिपदिकत्वे, सुपो लुकि, "स नपुंसकम्" इति नपुंसकत्वे, "ह्रस्वो

दिषु परम् २।२।३१ एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजा राजदन्तः । ( धर्मादिष्वनियमः ) अर्थधर्मौ, धर्मार्थावित्यादि ॥ द्वन्द्वे घि २।२।३२ द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ ॥ अजाद्यदन्तम् २।२।३३ इद द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ॥ अल्पाच्तरम् २।२।३४ शिवकेशवौ ॥ पिता मात्रा १।२।७० मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ, मातापितरौ वा ॥ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २।४।२ एषां द्वन्द्व एकवत् । पाणिपादम् ।

---

नपुंसके प्रातिपदिकस्य" इति ह्रस्वे, प्रथमैकवचनस्य सोरमि, "अमि पूर्वः" इति पूर्वरूपत्वे च कृते 'संज्ञापरिभाषम्' इति सिद्धम् । राजदन्तादिषु परम् । "उपसर्जनं पूर्वम्" इत्यनुवर्तते । तदाह—एष्विति । राजदन्तादिष्वित्यर्थः । पूर्वप्रयोगार्हमित्यतः प्राक् उपसर्जनमिति शेषः । राजदन्त इति । दन्तशब्दस्य षष्ठीतत्पुरुषेऽप्रधानतयोपसर्जनत्वेऽपि परनिपातः । धर्मादिष्वनियम इति । गणसूत्रमिदम् । अन्यतरस्य पूर्वनिपात इत्यर्थः । अर्थधर्मौ । धर्मश्चार्थश्च धर्मार्थौ इत्यत्र "चार्थे द्वन्द्वः" इति द्वन्द्वसमासे समासत्वात्प्रातिपदिकत्वे सुपो लुकि, "धर्मादिष्वनियमः" इत्यनेन नियमाऽभावाद् 'अर्थधर्मौ, धर्मार्थौ वा । द्वन्द्वे घि । पूर्वमित्यनुवर्तते । तदाह—पूर्वं स्यादिति । हरिश्च हरश्च हरिहरौ इत्यत्र "चार्थे द्वन्द्वः" इति द्वन्द्वसमासे सुपो लुकि, "द्वन्द्वे घि" इति घिसंज्ञकवति हरिशब्दे पूर्वप्रयुक्ते विभक्तिकार्ये च कृते 'हरिहरौ' इति । अजाद्यदन्तम् । अजादित्वे सति अदन्तमित्यर्थः । ईशकृष्णौ । ईशश्च कृष्णश्च 'ईशकृष्णौ' इत्यत्र "चार्थे द्वन्द्वः" इति द्वन्द्वसमासे, सुपो लुकि, "अजाद्यदन्तम्" इति ईशस्य पूर्वनिपाते, विभक्तिकार्ये च कृते, 'ईशकृष्णौ' इति रूपम् । अल्पाच्तरम् । अल्पः—अल्पसंख्यः अच् यस्य तदल्पाच्, तदेवाल्पाच्तरम् । अल्पसंख्याचकं पदं द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः । शिवकेशवौ । शिवश्च केशवश्च 'शिवकेशवौ' इत्यत्र "चार्थे द्वन्द्वः" इति द्वन्द्वसमासे सुपो लुकि, "अल्पाच्तरम्" इति अल्पाच्वति शिवशब्दे पूर्वप्रयुक्ते विभक्तिकार्ये च कृते 'शिवकेशवौ' इति रूपम् । पिता मात्रा । "पुमान् स्त्रिया" इत्यत्र सरूपाणामित्यनुवृत्तेरप्राप्ताविदं वचनम्, विकल्पार्थं च । पितरौ । अत्र "पिता मात्रा" इत्यनेन पितुरेकशेषे कृते विभक्तिकार्ये च कृते तत्सिद्धिः । एकशेषाभावे—मातापितरौ । अत्र "चार्थे द्वन्द्वः" इति द्वन्द्वसमासे, सुपो लुकि, "पितुर्दशगुणं माता गौरवेणातिरिच्यते" इति स्मृत्या मातुरभ्यर्हितत्वात्पूर्वनिपाते, "आनङ् ऋतः" इति मातृशब्दस्य ऋदन्तस्य पितृशब्दे उत्तरपदे आनङि कृते अकारङकारयोरित्संज्ञायां लोपे च कृते, ङित्वात् "ङिच्च" इत्यन्तावयवे जाते नलोपे च कृते "मातापितृ" इति भूते तस्माद् औ "ऋतो ङिसर्वनामस्थानयोः" इति गुणे रपरे सयोगे च कृते 'मातापितरौ' इति । द्वन्द्वश्च प्राणि । प्राणितूर्यसेनाङ्गानीति द्वन्द्वगर्भषष्ठीसमासः । द्वन्द्वान्ते श्रूयमाणः अङ्गशब्दः प्रत्येकं सम्बध्यते इत्यभिप्रेत्य आह—एषामिति । प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां चेत्यर्थः । द्वन्द्व इति । समा-

मार्दङ्गिकवैणविकम् । रथिकाश्वारोहम् ॥ द्वन्द्वाच्चुदषहान्तात्समाहारे ५।४।१०६ चवर्गान्तादषहान्ताच द्वन्द्वाट्टच् स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् , शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् ? प्रावृट्शरदौ । इति द्वन्द्वः ।

---

## अथ समासान्ताः ।

ऋक्पूरब्धूःपथामानक्षे ५।४।७४ अ अनक्षे इति च्छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः । अक्षे या धूस्तदन्तस्य तु न । अर्धर्चः । विष्णुपुरम् ।

---

हारद्वन्द्व इत्यर्थः । एकवदिति । एकवचनमित्यनुवर्तते । पाणिपादम् । पाण्योः पादयोश्च समाहार इति विग्रहः । अत्र "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति समाहारद्वन्द्वे, एकत्वे "स नपुंसकम्" इति नपुंसकत्वे सौ, सोरमि, पूर्वरूपे, च तत्सिद्धिः । मार्दङ्गिकवैणविकम् । मार्दङ्गिकश्च वैणविकश्च अनयोः समाहार इति विग्रहः । तूर्याङ्गत्वात् "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति एकत्वे, "स नपुंसकम्" इति नपुंसकत्वे, सौ, सोरमि, पूर्वरूपे च तत्सिद्धिः । रथिकाश्वारोहम् । रथिकाश्च अश्वारोहाश्च, एषां समाहारः इति विग्रहः । सेनाङ्गत्वात् "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति एकत्वे, "स नपुसकम्" इति नपुसकत्वे, सौ, सोरमि, पूर्वरूपे च कृते तत्सिद्धिः । द्वन्द्वाच्चुदष । समासान्ताधिकारस्थं तद्धिताधिकारस्थं चेदं सूत्रम् । टच्स्यादिति । "राजाहस्सखिभ्यष्टच्" इत्यतस्तदनुवृत्तेरिति भावः । वाक्त्वचमिति । वाक्च त्वक् च इति समाहारद्वन्द्वः । कुत्वस्यासिद्धत्वाच्चवर्गान्तत्वाट्टच् । एवं त्वक्स्रजमित्यत्रापि त्वक् च स्रक् चेति विग्रहः । शमीदृषदमिति । शमी च दृषच्चेति विग्रहः । अत्र दान्तत्वाट्टजिति भावः । वाक्त्विषम् । वाक् च त्विट् चेति विग्रहः । षान्तत्वाट्टच् , जश्त्वस्यासिद्धत्वादिति भावः । छत्रोपानहमिति । छत्रं च उपानच्चेति विग्रहः । हान्तत्वाट्टच् । प्रावृट्शरदौ । प्रावृट् च शरच्चेति विग्रहः । इतरेतरयोगद्वन्द्वत्वान्न टजिति भावः । इति द्वन्द्वसमासः ।

ऋक्पूरब्धूः । छेद इति । सूत्रे अ इति लुप्तप्रथमान्तनिर्देश इति भावः । "समासान्ताः" इत्यधिकृतम् । ऋगादिभिः समासो विशेष्यते । तदन्तविधिः । तदाह— ऋगाद्यन्तस्येति । ऋक् , पुर् , अप् , धुर् , पथिन् एतदन्तस्येत्यर्थः । अप्रत्यय इति । अकारात्मकप्रत्यय इत्यर्थः । अक्षे या धूरिति । अक्षसम्बन्धिनी या धूरित्यर्थः । अर्धर्च इति । ऋचोऽर्धमिति विग्रहः । "अर्धं नपुंसकम्" इति समासः । "ऋक्पूरब्धूःपथामानक्षे" इति अकारः समासान्तः । "अर्धर्चाः पुंसि च" इति पुंस्त्वम् । विष्णुपुरम् । विष्णोः पूः, विष्णुपुरम् इति षष्ठीतत्पुरुषः, "ऋक्पूरब्धूःपथामानक्षे" इति अप्रत्यये, विभक्तिकार्ये च तत्सिद्धम् । विमलापम् । विमलाः आपः यस्मिन् इति विग्रहः । प्रकृतसूत्रेण

धिमलापं सरः । राजधुरा । अक्षे तु अक्षधूः । दृढधूरक्षः । सखिपथः । रम्यपथो देशः । अक्ष्णोऽदर्शनात् ५।४।७६ अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः । गवामक्षीव गवाक्षः ॥ उपसर्गादध्वनः ५।४।८५ प्रगतोऽध्वानं प्राध्वो रथः ॥ न पूजनात् ५।४।६९ पूजनार्थात् परेभ्यः समासान्ता न स्युः । ( स्वतिभ्यामेव ) सुराजा । अतिराजा ॥ इति समासान्ताः ॥

---

# अथ तद्धिताः ।

## तत्रादौ साधारणप्रत्ययाः ।

समर्थानां प्रथमाद्वा ४।१।८२ इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत् । अश्वपत्यादिभ्यश्च ४।१।८४ एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरप-

---

समासान्तोऽप्रत्ययः । राजधुरा । राज्ञो धूरिति विग्रहः । धूर् शब्दोऽत्र राज्ये लाक्षणिकः । "ऋक्पूरब्धूःपथामानक्षे" इति अप्रत्ययः । "परवल्लिङ्गम्" इति स्त्रीत्वम् । टाप् । अक्षे त्विति । अत्र अक्षसंबन्धिनी या धूस्तदन्तात् अकारप्रत्ययो न । अक्षधूरिति । अक्षो नाम रथावयवदण्डविशेषः । दृढधूरक्ष इति । दृढा धूर्यस्येति विग्रहः । सखिपथः । सखा च पन्थाश्चेति द्वन्द्वः । अकारप्रत्ययः । "नस्तद्धिते" इति टिलोपः । रम्यपथ इति । रम्यः पन्था यस्येति विग्रहः । अक्ष्णोऽदर्शनात् । अदर्शनादिति च्छेदः । गवामक्षीवेति । अत्र "अक्ष्णोऽदर्शनात" इति अच्प्रत्यये, भसंज्ञायाम्, टिलोपे, संयोगे, अवङि, विभक्तिकार्यं च कृते 'गवाक्षः' इति सिद्धम् । उपसर्गादध्वनः । उपसर्गात्परो योऽध्वन्शब्दः तस्मादच् स्यादित्यर्थः । प्राध्वो रथ इति । "अत्यादय" इति समासः । "उपसर्गादध्वनः" इति अचि, "नस्तद्धिते" इति टिलोपः । न पूजनात् । परेभ्य इत्यध्याहार्यम् । "समासान्ताः" इति पूर्वसूत्रमनुवर्तते । तदाह—पूजनार्थादिति । सुराजा । सु शोभनो राजा इति विग्रहः । अतराजा । पूज्यो राजेत्यर्थः । उभयत्रापि "राजाहस्सखिभ्यष्टच्" इति टच् न भवति ॥ इति समासान्ताः ।

समर्थानां प्रथमाद्वा । विधेयस्यादर्शनान्नायं स्वतन्त्रविधिरिति मत्वाह—इदं पदत्रयमधिक्रियत इति । स्वरितत्वप्रतिज्ञाबलादिति भावः । प्राग्दिश इति यावदिति । "प्राग्दिशो विभक्तिः" इति सूत्रम् उत्तरावधिरित्यर्थः । "समर्थानाम्" इति निर्धारणे षष्ठी । सामर्थ्यं परिनिष्ठितत्वम् । कृतसन्धिकार्यत्वमिति यावत् । प्राथम्यञ्च—"तस्यापत्यम्" इत्यादितत्तत्सूत्रेषु प्रथमोच्चारितत्वम् । समर्थानां मध्ये प्रथमोच्चारितादित्यर्थः । अश्वपत्यादिभ्यश्च । चकारात् "प्राग्दीव्यतोऽण्" इत्यनुकृष्यते । तदाह—एभ्योऽण् स्यादिति । आश्वपतम् । अश्वपतेरपत्यम् इत्यर्थे "तस्यापत्यम्" इत्यपत्यार्थे "अश्वपत्यादिभ्यश्च" इति अणि, 'अश्वपति ङस् अण्' इति जाते "कृत्तद्धितसमासाश्च"

त्यादि आश्वपतम् । गाणपतम् ॥ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४।१।८५ दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोऽपवादः । दितेरपत्यं दैत्यः । अदितेरादित्यस्य वा ( अपत्यम् ) ॥ हलो यमां यमि लोपः ८।४।६४ हलः परस्य यमो लोपः स्याद्वा यमि । इति यलोपः । आदित्यः । प्राजापत्यः । ( देवाद्यञञौ ) दैव्यम् । दैवम् । ( बहिषष्टिलोपो यञ्च ) बाह्यः । ( ईकक् च ) किति च ७।२।११८ किति तद्धिते चाचामादेरचो वृद्धिः स्यात् । बाहीकः । ( गोरजादिप्रसङ्गे यत् ) गोरपत्यादि गव्यम् ॥ उत्सादिभ्योऽञ् ४।१।८६ औत्सः । इत्यपत्यादिविकारान्तार्थाः साधारणाः प्रत्ययाः ॥

---

इति तद्धितान्तत्वात्प्रातिपदिकत्वे, "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि, णलोपे, "यचि भम्" इति भत्वे, "यस्येति च" इति इकारलोपे, तद्धितेष्वचामादेः" इत्यादिवृद्धौ कृते, 'आश्वपत' इति जाते, ततः सौ, सोरमि, पूर्वरूपे च 'आश्वपतम्' इति सिद्धम् । गाणपतम् । गणपतेरपत्यादि इत्यत्र "अश्वपत्यादिभ्यश्च" इत्यणि, सुपो लुकि, "यचि भम्" इति भत्वे, "यस्येति च" इति इकारलोपे, "तद्धितेष्वचामादेः" इत्याद्यचो वृद्धौ, "कृत्तद्धितसमासाश्च" इति प्रातिपदिकत्वे, विभक्तिकार्ये च कृते 'गाणपतम्' इति । दित्यदित्यादित्य । दित्यादित्य इति । दिति, अदिति, आदित्य एतेभ्य इत्यर्थः । पत्युत्तरपदादिति । पतिः उत्तरपदं यस्य तस्मादिति विग्रहः । प्राग्दीव्यतीयेष्वर्थेष्विति । प्राग्दीव्यत इत्यनुवृत्तेरिति भावः । अणोऽपवाद इति । विशेषविहितत्वादिति भावः । दैत्य इति । दितेरपत्यमिति विग्रहः । दितेर्ण्यप्रत्ययः । "चुटू" इति णकार इत्, आदिवृद्धिः, "यस्येति च" इति इकारलोपः । अदितेरादित्यस्य वेति । अपत्यादीतिशेषः । हलो यमामिति । "झयो होऽन्यतरस्याम्" इत्यतोऽन्यतरस्यामित्यनुवर्तते । आदित्य इति । अदितिशब्दात् जाताद्यर्थे "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्ये प्रत्यये, णगते, आदिवृद्धौ, "यस्येति च" इति इकारलोपे, ततः सौ 'आदित्यः' इति रूपम् । आदित्यशब्दात् ण्ये, आदिवृद्धौ, "यस्येति च" इति अलोपे, "हलो यमां यमि लोपः" इति यकारस्य लोपे विभक्तिकार्ये च 'आदित्यः' इति रूपम् । प्राजापत्य इति । पत्युत्तरपदात् प्रजापतिशब्दात् ण्ये, आदिवृद्धौ, "यस्येति च" इति अलोपः । देवादिति । देवशब्दात् यञ् अञ् च प्रत्ययौ प्राग्दीव्यतीयेष्वर्थेषु वक्तव्याविन्यर्थः । दैव्यम्, दैवमिति । देवस्यापत्यादीति विग्रहः । यञि अञि च आदिवृद्धौ, "यस्येति च" इति अकारलोपः । बहिष इति । बहिस् इति सकारान्तमव्ययम् । तस्मात् प्राग्दीव्यतीयेष्वर्थेषु यञ्, प्रकृतेः टिलोपश्चेति वक्तव्यमित्यर्थः । बाह्य इति । बहिर्भवः इ त्यादिविग्रहः । यञि टिलोपे आदिवृद्धिः । ईकक् चेति । बहिष ईकक् च स्यात् प्रकृतेष्टिलोपश्चेति वक्तव्यमित्यर्थः । किति चेति । "तद्धितेष्वचामादेः" इति

## अथापत्याधिकारः ।

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४।१।८७ धान्यानां भवने इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः । पौंस्नः ॥ तस्यापत्यम् ४।१।९२ षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः । ओर्गुणः ६।४।१४६ उवर्णान्तस्य भस्य गुणः स्यात् तद्धिते । उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ॥ अपत्यं पौत्रप्रभृति गोत्रम् ४।१।१६२ अप-

---

सूत्रमनुवर्तते । तदाह—तद्धिते चाचामादेरिति । वाहीक इति । बहिष ईककि, टिलोपे, "किति च" इत्यादिवृद्धिः । गोरजादिप्रसङ्गे इति । अपत्ये तदन्येषु च प्राग्दीव्यतीयेष्वर्थेषु गोशब्दादजादिप्रत्ययप्रसङ्गे सति यत्प्रत्ययो वाच्य इत्यर्थः । गव्यम् । गवि भवं गोरागतमित्यादि विग्रहः । अणपवादो यत् । "वान्तो यि प्रत्यये" इति अवादेशः । उत्सादिभ्योऽञ् । प्राग्दीव्यतीयेष्वर्थेष्विति शेषः । अणिञाद्यपवादः । औत्सः । उत्सशब्दात् षष्ठ्यन्तात् अपत्याद्यर्थे "उत्सादिभ्योऽञ्" इत्यञि, अलोपे, आदिवृद्धौ, "यस्येति च" इति अलोपे, विभक्तिकार्ये च कृते "औत्सः" इति रूपम् । इति अपत्यादिविकारान्तार्थसाधारणप्रत्ययाः ।

स्त्रीपुंसाभ्याम् । भवनशब्देन धान्यानां भवने क्षेत्रे खञ्" इति सूत्रं विवक्षितम् । प्राग्दीव्यतः इत्यतः प्रागित्यनुवृत्तम् । तदाह—धान्यानामिति । स्त्रीपुंसाभ्यामिति । "अचतुर" इत्यच् । स्त्रीशब्दात् पुंस्शब्दाच्चेत्यर्थः । स्त्रैणः । स्त्रिया अपत्यम्, स्त्रीषु भवः स्त्रीणां समूहः इत्यादिविग्रहः । स्त्री ङस् इत्यस्मात् "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" इति सूत्रेण नञि, सुपो लुकि, नञो ञगते, "तद्धितेष्वचामादेः" इत्यादिवृद्धौ, "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्वे विभक्तिकार्ये च 'स्त्रैणः' इति रूपम् । पौंस्नः । पुंसोऽपत्यम्, पुंसि भवः, पुंसां समूहः, इत्यादि विग्रहः । पुंस्शब्दात् स्नञि, "स्वादिष्वसर्वनामस्थाने" इतिपदत्वात्संयोगान्तलोपः, आदिवृद्धिः । तस्यापत्यम् । "समर्थानां प्रथमाद्वा" इत्यधिक्रियते, तत्र प्रथमादित्यस्यार्थमाह—षष्ठ्यन्तादिति । समर्थानामित्यत्र सामर्थ्यं परिनिष्ठितत्वं तच्च कृतसन्धिकार्यमित्याह—कृतसन्धेरिति । ओर्गुण इति । ओः इत्युकारात् षष्ठ्येकवचनम् । तेन भस्येत्यधिकृतं विशेष्यते । तदन्तविधिः । "नस्तद्धिते" इत्यनुवर्तते । तदाह—उवर्णान्तस्येति । औपगव इति । उपगोरणि, आदिवृद्धिः । ओर्गुणः । अवादेशः । अत्र प्रकृत्यैव उपगोर्लाभात् अपत्यमेव प्रत्ययार्थ इति स्थितिः । आश्वपत इति । अश्वपतेरपत्यमिति विग्रहः । पत्युत्तरपदलक्षणं ण्यं बाधित्वा "अश्वपत्यादिभ्यश्च" इत्यणिति भावः । दैत्य इति । दितेरपत्यमिति विग्रहः । "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यः, अणपवादः । औत्स इति । उत्सः कश्चित्, तस्यापत्यमिति विग्रहः । "उत्सादिभ्योऽञ्" इत्यञ्, इञाद्यपवादः । स्वरे विशेषः । स्त्रैणः ।.

स्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥ **एको गोत्रे ४।१।९३** गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यमौपगवः ॥ **गर्गादिभ्यो यञ् ४।१।१०५** गोत्रापत्ये। गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः ॥ **यञञोश्च २।४।६४** गोत्रे यद्यन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः। **जीवति तु वंश्ये युवा ४।१।१६३** वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसञ्ज्ञमेव स्यात्। **गोत्राद्यून्यस्त्रियाम् ४।१।९४** यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्। स्त्रियां तु न युवसञ्ज्ञा ॥ **यञिञोश्च ४।१।**

---

पौत्र इति। स्त्रिया अपत्यं, पुंसोऽपत्यमिति विग्रहः। "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" इति नञ्स्नञौ, अणोऽपवादः। अपत्यं पौत्रप्रभृति गोत्रम्। पौत्रप्रभृति अपत्यं गोत्र गोत्रसंज्ञकमित्यर्थं पौत्रप्रभृतिषु साक्षादपत्यत्वाभावादाह—अपत्यत्वेन विवक्षितमिति। एको गोत्रे। पौत्रादौ प्रत्येकपुरुषं प्रत्ययप्राप्त्या शततमे सन्ताने एकोनशतप्रत्ययानामापत्तिरतो नियमार्थं सूत्रम्। तदाह—एक एव अपत्यप्रत्यय इति। एकोनशतं प्रत्यया नेष्टाः, किन्त्वेक एव प्रत्यय इष्ट इति भावः। औपगव इति। उपगोर्गोत्रापत्ये "तस्यापत्यम्" इत्यण्। गर्गादिभ्यो यञ्। गार्ग्यः। वात्स्य इति। गर्गस्य गोत्रापत्यमिति, वत्सस्य गोत्रापत्यमिति, च विग्रहः। यञञोश्च। द्वितीयाध्यायस्य चतुर्थपादे इदं सूत्रम्। न त्विदं चातुर्थिकमपत्याधिकारस्थम्। तत्र प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। "तद्राजस्य बहुषु तेनैवास्त्रियाम्" इति सूत्रं तद्राजस्येतिवर्जमनुवर्तते। "ण्यक्षत्रिय" इत्यतो लुगिति "यस्कादिभ्यो गोत्रे" इत्यतो गोत्रे इति च। तदाह—गोत्रे यदिति। एतयोरिति। यञञोरित्यर्थः। प्रत्यादर्शनस्यैव लुक्त्वादिति भावः। तत्कृते इति। यञ्प्रत्ययार्थगतबहुत्वे इति यावत्। गर्गा इति। गर्गस्य गोत्रापत्यानि गर्गा इत्यत्र "गर्गादिभ्यो यञ्" इति यञि, सुपो लुकि, भत्वे, अलोपे, आद्यचो वृद्धौ, गार्ग्या इति जाते "यञञोश्च" इति गकारोत्तरवर्त्तियकारलोपे, "निमित्तापाये नैमित्तकस्याप्यपायः" इति यकारनिमित्तवृद्ध्यभावे विभक्तिकार्ये च कृते 'गर्गाः' इति। एवमेव वत्साः। जीवति तु वंश्ये युवा। वंशः उत्पादकपित्रादिपरम्परा तत्र भवो वंश्यः। दिगादित्वाद्यत्। तदाह—वंश्ये पित्रादौ जीवतीति। जीवतीति सप्तम्यन्तम्। पौत्रादेरिति। पूर्वसूत्रात्पौत्रप्रभृति इत्यनुवृत्तं षष्ठ्या विपरिणम्यत इति भावः। यदपत्यमिति। "तस्यापत्यम्" इत्यतस्तदनुवृत्तेरिति भावः। तुः—अवधारणे, युवेत्यनन्तरं द्रष्टव्यः। तदाह—युवसञ्ज्ञमेवेति। गोत्राद्यून्यस्त्रियाम्। अपत्यमपत्यस्प्रतिप्रत्ययोत्पत्तौ प्रासद्यूनानिष्टप्रत्ययपरम्पराव्यावृत्तये नियमार्थं सूत्रं तदाह—गोत्रप्रत्ययान्तादेव प्रत्यय इति। सति सूत्रस्य नियमार्थत्वे युवापत्यविवक्षणेऽप्येक एव प्रत्ययो भवतीत्यनुमीयते। यञिञोश्च। "गोत्रे कुञ्जादिभ्यः" इत्यतो गोत्रे इति "नडादिभ्यः फक्"

१०१ गोत्रे यौ याञिञौ तदन्तात्फक् स्यात् ॥ **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७।१।२** प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन् छस्य ईय्, घस्य इय् एते स्युः । गर्गस्य युवापत्यं गार्ग्यायणः । दाक्षायणः । **अत इञ् ४।१।९५** अदन्तं यत्प्रातिपदिकं तस्मादिञ् स्यात् अपत्येऽर्थे । दाक्षिः । **बाह्वादिभ्यश्च ४।१।९६** बाहविः । औडुलोमिः । ( **लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः** ) उडुलोमाः । आकृतिगणोऽयम् । **अनृष्यानन्तर्ये विदादिभ्योऽञ् ४।१।१०४** ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे ॥ विदस्य गोत्रं वैदः । वैदौ । विदाः । पुत्रस्यापत्यं पौत्रः । पौत्रौ । पौत्राः । एवं दौहित्रादयः ॥

---

इत्यतः फगनुवर्तते, तदाह—गोत्रे यावित्यादि । आयनेयोनीयियः । आयन्, एय्, ईन्, ईय्, इय्, एषां द्वन्द्वात् प्रथमाबहुवचनम् । फ, ढ, ख, छ, घ एषां द्वन्द्वात्षष्ठीबहुवचनम् । फादिष्वकार उच्चारणार्थः । यथासंख्यपरिभाषया क्रमेणान्वयः । तदाह—प्रत्ययादेरिति । गार्ग्यायणः । गर्गस्य युवापत्यं, गार्ग्यस्य गोत्रापत्यमित्यत्र "जीवति तु वंश्ये युवा" इति युवसंज्ञायाम् "यञिञोश्च" इति यञन्ताद् गार्ग्यशब्दात्फकि, कलोपे, "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति फस्य स्थाने आयनि कृते, 'गार्ग्य आयन् अ' इति जाते, "यचि भम्" इति भत्वे, "यस्येति च" इति गकारोत्तरवर्त्यकारलोपे संयोगे, "अट्कुप्वाङ्नुम् व्यवायेऽपि" इति नस्य णत्वे, विभक्तिकार्ये च कृते 'गार्ग्यायणः' इति रूपम् । एवमेव दक्षस्य युवापत्यम्, दाक्षेर्गोत्रापत्यम्—दाक्षायणः । अत इञ् । प्रातिपदिकादित्यधिकृतम् अता विशेष्यते, तदन्तविधिः । तदाह—अदन्तं यत्प्रातिपदिकमिति । दाक्षिरिति । दक्षस्यापत्यमिति विग्रहः । इञ्, आदिवृद्धिः, "यस्येति च" इत्यकारलोपः । बाह्वादिभ्यश्च । अपत्ये इञिति शेषः । बाहविरिति । बाहुर्नाम कश्चिदृषिः, अथ 'ऋषयः' इत्यधिकृत्य 'बाहविर्गार्ग्यगौतमौ' इत्याश्वलायनसूत्रे दर्शनात् । बाहोरपत्यमिति विग्रहः । इञि "ओर्गुणः" इति उकारस्य ओकारे, अवादेशे विभक्तिकार्ये च 'बाहविः' इति सिद्धम् । औडुलोमिरिति । उडुलोम्नोऽपत्यमिति विग्रहः । इञि, "नस्तद्धिते" इति टिलोपः । आदिवृद्धिः । उडुलोमाः । उडुलोम्नोऽपत्यानि पुमांसः इति विग्रहः । अत्र उडुलोमन्शब्दात् बहुत्वे "लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः" इति अप्रत्यये, "नस्तद्धिते" इति टिलोपे विभक्तिकार्ये च तत्सिद्धिः । अनृष्यानन्तर्ये । अनृषीति लुप्तपञ्चमीकम् । "विदादिभ्योऽञ्" इति द्विरावर्तते । तथाच "अनृष्यानन्तर्ये विदादिभ्योऽञ्" इति कृत्स्नमेकं वाक्यम् । "विदादिभ्योऽञ्" इति वाक्यान्तरम् । तत्र द्वितीयं वाक्यं व्याचष्टे—भ्योऽञ् गोत्रे इति । गोत्रे विवक्षिते विदादिभ्योऽञ् स्यादित्यर्थः । अत्र प्रथमं वाक्यं कृत्स्नसूत्रं व्याचष्टे—ये त्विति । अनृषिभ्यो विदादिभ्यः अनन्तरापत्ये अञ् स्यादित्यक्षरार्थः । विदादौ हि ऋषयः अनृषयश्च पठिताः । तत्र ये

**शिवादिभ्योऽण् ४।१।११२** अपत्ये। शैवः। गाङ्गः॥ **ऋष्यन्धकवृष्णिकुरुभ्यश्च ४।१।११४** ऋषिभ्यः—वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः—श्वाफल्कः। वृष्णिभ्यः—वासुदेवः। कुरुभ्यः—नाकुलः। साहदेवः॥ **मातुरुत्संख्यासंभद्रपूर्वायाः ४।१।११५** सङ्ख्यादिपूर्वस्यमातृशब्दस्य उदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः। **स्त्रीभ्यो ढक् ४।१।१२०** स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात्। वैनतेयः॥ **कन्यायाः कनीन च ४।१।११६** चादण्।

---

अनृषयः तेभ्योऽनन्तरापत्ये अञिति फलितमिति भावः। बैदः। विदस्य गोत्रापत्यम् बैदः इत्यत्र "अनृष्यानन्तर्ये विदादिभ्योऽञ्" इत्यञि, भत्वे, अकारलोपे, आद्यचो वृद्धौ, विभक्तिकार्ये च कृते 'बैदः' इति। एवमेव पुत्रस्यापत्यम् 'पौत्रः'। दुहितुरपत्यम् 'दौहित्रः' इत्यादौ विदादिभ्योऽञ् बोध्यः। शिवादिभ्योऽण्। गोत्र इति निवृत्तम्। अतः प्रभृति सामान्येन प्रत्यया विधीयन्ते। यथायथमिञादीनामपवादः। शैवः। शिवस्यापत्यम् शैवः इत्यत्र "शिवादिभ्योऽण्" इत्यणि, भसंज्ञायाम् "यस्येति च" इति अकारलोपे, आद्यचो वृद्धौ, विभक्तिकार्ये च कृते 'शैवः' इति। एवं गङ्गायाः अपत्यम् 'गाङ्गः' इत्यत्रापि बोध्यम्। ऋष्यन्धक। 'ऋषयो मन्त्रद्रष्टारः'। ऋषिविशेषवाचिभ्यः अन्धकादिवंश्यवाचिभ्यश्चापत्ये अण् स्यादित्यर्थः। इञोऽपवादः। वासिष्ठः। वसिष्ठस्यापत्यम् वासिष्ठः इत्यत्र "ऋष्यन्धकवृष्णिकुरुभ्यश्च" इत्यणि, णगते, सुपो लुकि, आदिवृद्धौ, भत्वे, अलोपे, विभक्तिकार्ये च कृते तत्सिद्धिः। एवं वैश्वामित्रः। श्वाफल्कः। श्वफल्कस्याऽपत्यम् 'श्वाफल्कः' इत्यत्र "ऋष्यन्धकवृष्णिकुरुभ्यश्च" इत्यन्धकत्वादणि, सुपो लुकि, णगते, आद्यचो वृद्धौ, भत्वे, अलोपे, विभक्तिकार्ये च तत्सिद्धिः। वासुदेवः। वसुदेवस्यापत्यम् इत्यत्र वृष्णिवंश्यवाचित्वादणि, सुपो लुकि, आद्यचो वृद्धौ, भत्वे, अलोपे, विभक्तिकार्ये च कृते तत्सिद्धम्। नाकुलः। नकुलस्यापत्यम् 'नाकुलः' कुरुत्वादण्। एवं साहदेवः। मातुरुत्संख्या। "शिवादिभ्योऽण्" इत्यतोऽणित्यनुवर्तते। तदाह—अण् प्रत्ययश्चेति। द्वैमातुरः। द्वयोर्मात्रोरपत्यम् 'द्वैमातुरः' इत्यत्र "तद्धितार्थोत्तरपदसमाहारे च" इति समासे सुपो लुकि, "मातुरुत्संख्यासम्भद्रपूर्वायाः" इति मातुरुदादेशे अणि च 'द्वि मातुर अ' इति जाते "तद्धितेष्वचामादेः" इत्याद्यचो वृद्धौ संयोगे विभक्तिकार्ये च कृते 'द्वैमातुरः' इति सिद्धम्। एवं षण्णाम्मातॄणामपत्यम् 'षाण्मातुरः' इति। भद्रमातुरपत्यम् 'भाद्रमातुरः' इति। स्त्रीभ्यो ढगिति। स्त्रीशब्देन टाबादयः स्त्रीप्रत्ययाश्चातुर्थिका गृह्यन्ते, न त्वन्येऽपि स्त्रीवाचकाः, व्याख्यानादित्याह—स्त्रीप्रत्ययान्तेभ्य इति। वैनतेयः। विनता नाम गरुडमाता, तस्याः अपत्यमिति विग्रहः। विनताशब्दात् "स्त्रीभ्यो ढक्" इति ढकि, कगते, "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति ढस्य स्थाने एयादेशे भत्वे "यस्येति च" इति आकारलोपे, "किति च" इत्याद्यचो वृद्धौ, विभक्तिकार्ये च 'वैनतेयः' इति रूपम्। कन्यायाः कनीन चेति। कनीनेति लुप्त-

कानीनो व्यासः कर्णश्च ॥ **राजश्वशुराद्यत् ४।१।१३७ ( राज्ञो जातावेवेति वाच्यम् )** ये चाभावकर्मणोः ६।४।१६८ यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः। राजन्यः। श्वशुर्यः। जातावेवेति किम् ? **अन् ६।४।१६७** अन् प्रकृत्या स्यादणि परे। राजनः। **क्षत्राद् घः ४।१।१३८** क्षत्रियः। जातावित्येव। क्षात्रिरन्यत्र ॥ **रेवत्यादिभ्यष्ठक् ४।१।१४६ ठस्येकः ७।३।५०** अङ्गात्परस्य ठस्येकादेशः स्यात्। रैवतिकः। **जनपदशब्दात् क्षत्रियादञ् ४।१।१६८** जनपदक्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये। पाञ्चालः ॥ ( **क्षत्रियसमानशब्दाज्ज-**

---

यत्ययः। कन्याशब्दात् अण् भवति, कन्यायाः स्थाने कनीनादेशश्चेत्यर्थः। कानीनः। कन्यायाः अपत्यम् 'कानीनः' इत्यत्र "कन्यायाः कनीन च" इति अण्प्रत्यये, कन्यास्थाने कनीनादेशे, भत्वे "यस्येति च" इत्यलोपे, आद्यचो वृद्धौ, विभक्तिकार्ये च 'कानीनः' इति रूपम्। राजश्वशुराद्यत्। राजन्शब्दात् श्वशुरशब्दाच्चापत्ये यत्प्रत्ययः स्यादित्यर्थः। क्रमेण अणिञोरपवादः। राज्ञो जातावेवेति। जातिः समुदायवाच्या चेदित्यर्थः। ये चाभावकर्मणोः। "अन्" इति पूर्वसूत्रमनुवर्तते। "प्रकृत्यैकाच्" इत्यतः प्रकृत्येति। अङ्गाधिकारलब्धप्रत्ययो यकारेण विशेष्यते। तदादिविधिः। तदाह—यादाविति। क्षत्रियात् क्षत्रियायां स्वभार्यायामुत्पन्नो 'राजन्यः' इति। यत्प्रत्यये प्रकृतिभावान्न टिलोपः। जातिमात्राभावे राज्ञोऽपत्यम् इत्यत्र "तस्यापत्यम्" इत्यणि णलोपे "अन्" इत्यनः प्रकृतिभावे विभक्तिकार्ये च कृते 'राजनः' इति। श्वशुर्यः। श्वशुरस्यापत्यम् इत्यत्र "राजश्वशुराद्यत्" इति यति तलोपे भत्वे अलोपे, विभक्तिकार्ये 'श्वशुर्यः' इति। अन्। "इनण्यनपत्ये" इत्यतः अणीत्यनुवर्तते। "प्रकृत्यैकाच्" इत्यतः प्रकृत्येति च। तदाह—अणीति। राजनः। जातिमात्राभावे "राज्ञोऽपत्यम्" इत्यत्र "तस्यापत्यम्" इत्यणि, णलोपे "अन्" इत्यनः प्रकृति भावे विभक्तिकार्ये 'राजनः' इति सिद्धम्। क्षत्राद्घः। अपत्ये इति शेषः। क्षत्रिय इति। क्षत्रस्यापत्यम् 'क्षत्रियः' इत्यत्र "क्षत्राद्घः" इति घे, 'क्षत्र घ' इति जाते "आयनेयीनीयियः" इति घस्य इयादेशे, भत्वे, अलोपे, विभक्तिकार्ये च कृते तत्सिद्धिः। क्षात्रिरन्यत्रेति। जात्यभावे क्षत्रस्यापत्यम् 'क्षात्रिः' इत्यत्र "अत इञ्" इति इञि, अलोपे, भत्वे, अलोपे, आद्यचो वृद्धौ, विभक्तिकार्ये च तत्सिद्धिः। रेवत्यादिभ्यष्ठक्। अपत्ये इति शेषः। ढगाद्यपवादः। ठस्येकः। "अङ्गस्य" इत्यधिकृतं पञ्चम्या विपरिणम्यते। तदाह—अङ्गात्परस्य ठस्येति। ठकारस्येत्यर्थः। रैवतिकः। रेवत्याः अपत्यमिति विग्रहः। ठकि ककार इत् अकार उच्चारणार्थः। ठकारस्य इकः अदन्त आदेशः। जनपदशब्दात्। जनपदो देशः, तद्वाचकशब्दो जनपदशब्दः, तथाभूतो यः क्षत्रियवाचकशब्दः, तस्मादित्यर्थः। फलितमाह—जनपदक्षत्रिययोरिति। पाञ्चालः।

नपदात्तस्य राजन्यपत्यवत् ) पञ्चालानां राजा पाञ्चालः । ( पूरोरण् वक्तव्यः ) पौरवः । ( पाण्डोर्ड्यण् ) पाण्ड्यः । **कुरुनादिभ्यो ण्यः ४।१।१७२** कौरव्यः । नैषध्यः ॥ **ते तद्राजाः ४।१।१७४** अञादयस्तद्राजसंज्ञाः स्युः ॥ **तद्राजस्य बहुषु तेनैवाऽस्त्रियाम् २।४।६२** बहुष्वर्थेषु तद्राजस्य लुक् स्यात् , तदर्थकृते बहुत्वे न तु स्त्रियाम् । इक्ष्वाकवः । पञ्चालाः । इत्यादि ॥ **कम्बोजाल्लुक् ४।१।१७५** अस्मात्तद्राजस्य लुक् स्यात् । कम्बोजः । कम्बोजौ । ( कम्बोजादिभ्य इति वक्तव्यम् ) चोलः । शकः । केरलः । यवनः ॥ इत्यपत्याधिकारः ॥

---

## अथ रक्ताधिकारः ।

**तेन रक्तं रागात् ४।२।१** अण् स्यात् । रज्यतेऽनेनेति रागः । कषायेण रक्तं

---

पञ्चालो नाम देशः, राजा च । तस्य राज्ञोऽपत्यमिति विग्रहे "जनपदशब्दात् क्षत्रियादञ्" इत्यञि ञलोपे, भत्वे, अलोपे, आद्यचो वृद्धौ, विभक्तिकार्ये च तत्सिद्धिः । क्षत्रियसमानेति । क्षत्रियवाचकशब्देन समानशब्दो जनपदवाचकः, तस्मात् षष्ठ्यन्तात् राजन्यर्थे अपत्यवत्प्रत्यया भवन्तीत्यर्थः । पाञ्चालः । पञ्चालानां राजा इत्यत्र "क्षत्रियसमानशब्दात्" इति वार्तिकेनाञ् । पूरोरणिति । पूरुशब्दस्य जनपदवाचित्वाभावात्प्राग्दीव्यतीये अणि सिद्धे तद्राजसंज्ञार्थं वचनम् । पौरवः । पूरोरपत्यमिति विग्रहः । "पूरोरण्" इत्यणि, भत्वे, ओर्गुणे, आद्यचो वृद्धौ, विभक्तिकार्ये च तत्सिद्धम् । पाण्डोर्ड्यणिति । वाच्य इति शेषः । पाण्ड्यः । पाण्डोरपत्यम्, पाण्डुदेशस्य राजा वेत्यर्थः । कुरुनादिभ्यो ण्यः । कुरुशब्दात् नकारादिभ्यश्च जनपदक्षत्रियवाचकेभ्योऽपत्ये राजनि च ण्यः स्यादित्यर्थः । कौरव्यः । कुरोरपत्यं कुरूणां राजेति वा विग्रहः । कुरुशब्दात् षष्ठ्यन्तात् "कुरुनादिभ्यो ण्यः" इति ण्ये, सुपो लुकि, णलोपे भत्वे, ओर्गुणे, "वान्तो यि" इति वान्तादेशे, आद्यचो वृद्धौ विभक्तिकार्ये च कृते 'कौरव्यः' इति । नैषध्यः । निषधशब्दो देशे राजनि च । ते तद्राजाः । ते इत्यनेन जनपदशब्दादित्यारभ्य विहिता अञादयः परामृश्यन्ते । तदाह—अञादय इति । तद्राजस्य । "ण्यक्षत्रियार्ष" इत्यतो लुगित्यनुवर्तते । तेनेत्यनन्तरं कृते बहुत्वे इत्यध्याहार्यम् । तदाह—बहुष्विति । तदर्थकृतबहुत्वे इति । अञादिप्रत्ययान्तमात्रार्थगतबहुत्वे सतीत्यर्थः । इक्ष्वाकवः । पञ्चालाः । "जनपदशब्दात्" इति विहितस्य अञो लुकि, आदिवृद्धिनिवृत्तिः । इत्यादीति । अङ्गाः, वङ्गाः इत्यादि बोध्यम् । कम्बोजाल्लुक् । तद्राजा इत्यनुवृत्तं षष्ठ्या विपरिणम्यते । कम्बोजात्परस्य तद्राजस्य लुक् स्यादित्यर्थः । अबहुत्वार्थं सूत्रम् । कम्बोजः, कम्बोजौ । जनपदशब्दादिति विहितस्य यञो लुक् । चोलः शक इति । चोलशकौ देशविशेषौ राजविशेषौ च । केरल इति । केरलयवनशब्दौ देशराजोभयवाचिनौ । इति अपत्याधिकारः ।

तेन रक्तं रागात् । "प्राग्दीव्यतोऽण्" इत्यधिक्रियते । रागवाचकात् तृतीयान्ता-

वस्त्रं काषायम् । नक्षत्रेण युक्तः कालः ४।२।३ अण् स्यात् । ( तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम् ) पुष्येण युक्तं पौषमहः ॥ लुबविशेषे ४।२।४ पूर्वेण विहितस्य लुप् स्यात् । षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः ॥ दृष्टं साम ४।२।७ तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम ॥ वामदेवाड्ड्यड्ड्यौ ४।२।९ वामदेवेन दृष्टं साम वामदेव्यम् । परिवृतो रथः ४।२।१० अस्मिन्नर्थेऽण्प्रत्ययो भवति । वस्त्रेण परिवृतो वास्त्रो रथः ॥ तत्रोद्धृतममत्रेभ्यः ४।२।१४ शरावे उद्धृतः शाराव ओदनः ॥ संस्कृतं भक्षाः ४।२।१६ सप्तम्य-

---

न्तसमर्थात् संस्कृतमित्यस्मिन्नर्थे अण् प्रत्ययः स्यादित्यर्थः । काषायमिति । कषायेण रक्तं वस्त्रं काषायम् , इत्यत्र "तेन रक्तं रागात्" इत्यणि, सुपो लुकि, आद्यचो वृद्धौ, भत्वे, अलोपे, संयोगे विभक्तिकार्ये च कृते "काषायम्" इति रूपम् । नक्षत्रेण युक्तः कालः । "प्राग्दीव्यतोऽण्" इत्यधिक्रियते । नक्षत्रवाचकात् तृतीयान्तात् समर्थात् युक्त इत्यर्थे अण् स्यादित्यर्थः । तिष्येति । "नक्षत्रेण युक्तः कालः" "संधिवेलाद्यृतुनक्षत्रेभ्योऽण्" इति च विहिते नक्षत्रसम्बन्धिनि अणि परत तिष्यपुष्ययोर्यलोप इत्यर्थः । पौषमहः । पुष्येण युक्तम् पौषम् इत्यत्र "नक्षत्रेण युक्तः कालः" इत्यणि, सुपो लुकि, 'पुष्य अ' इति जाते, "यचि भम्" इति भत्वे "यस्येति च" इति अकारलोपे, "तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्" इति वार्तिकेन यलोपे, संयोगे, आद्यचो वृद्धौ, विभक्तिकार्य च तत्सिद्धम् । लुबविशेषे । षष्टिदण्डेति । षष्टिघटिकापरिच्छिन्ने काले एकैकस्मिन् एकैकेन चन्द्रमा युज्यते इति स्थितिः । तस्य षष्टिदण्डस्य कालस्य अवान्तरविशेषः अहर्वा रात्रिर्वेति न गम्यते चेदित्यर्थः । अद्य पुष्य इति । अद्येत्यव्ययम् । अहोरात्रवाचि अधिकरणशक्तिप्रधानम्, इह तु अधिकरणशक्तिविनिर्मुक्तः अहोरात्रः कालो विवक्षितः । तथा च अयमहोरात्रः पुष्ययुक्तचन्द्रमसा युक्त इत्यर्थः । अहर्वा रात्रिर्वेति विशेषानवगमादणो लुप् । दृष्टं साम । तृतीयान्तात्समर्थात् दृष्टमित्यर्थे अण् स्यात् दृष्टं साम चेदित्यर्थः । वासिष्ठम् । वसिष्ठेन दृष्टं 'वासिष्ठम्' इत्यत्र "दृ ं साम" इत्यणि, भत्वे, अलोपे, आद्यचो वृद्धौ, विभक्तिकार्ये च कृते 'वासिष्ठं साम' इति । वामदेवाड्ड्यड्ड्यौ । तृतीयान्तात् वामदेवशब्दात् दृष्टमित्यर्थे ड्यत्, ड्य एतौ प्रत्ययौ स्याताम्, दृष्टंसामचेदित्यर्थः । वामदेव्यम् । वामदेवशब्दात् प्रकृतसूत्रेण ड्यत्, डतयोर्लोपः, डित्वाट्टिलोपः । परिवृतो रथः । तेनेत्यनुवर्तते । तृतीयान्तात् परिवृत इत्यर्थेऽण् स्यादित्यर्थः । वास्त्रः । वस्त्रेण परिवृत इत्यर्थे "परिवृतो रथः" इत्यणि सुपो लुकि, भत्वे, अलोपे, आद्यचो वृद्धौ, विभक्तिकार्ये रूप सिद्धम् । तत्रोद्धृतम् । तत्रोद्धृतमित्यर्थे अमत्रवाचकशब्दात् सप्तम्यन्तात् अण् प्रत्ययः स्यादित्यर्थः । अमत्रं भाजनं शरावादि । शारावः । शरावशब्दात् सप्तम्यन्तात् , "तत्रोद्धृतममत्रेभ्यः" इत्यणि, सुपो लुकि, णगते, भत्वे, अलोपे, आद्यचो वृद्धौ, विभक्तिकार्ये तत्सिद्धिः । संस्कृतं भक्षाः । तत्रेत्यनुवर्तते । भ्राष्ट्राः यवाः

न्तादण् स्यात्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रेषु संस्कृता भ्राष्ट्राः यवाः ॥ **साऽस्य देवता ४।२।२४** इन्द्रो देवता अस्येति ऐन्द्रं हविः । पाशुपतम् । वार्हस्पत्यम् ॥ **शुक्राद् घन् ४।२।२६** शुक्रियम् ॥ **सोमाट्ट्यण् ४।२।३०** सौम्यम् ॥ **वाय्वृतुपित्रुषसो यत् ४।२।३१** वायव्यम् । ऋतव्यम् ॥ **रीङ् ऋतः ७।४।२७** अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः स्यात् । "यस्येति च" । पित्र्यम् । उषस्यम् ॥ **पितृव्यमातुलमातामहपितामहाः ४।२।३६** एते निपात्यन्ते । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । मातुः पिता मातामहः ।

---

सप्तम्यन्तात् भ्राष्ट्रशब्दाद् "संस्कृतं भक्षाः" इत्यणि, जगते सुपो लुकि, भत्वे, अलोपे आद्यचो वृद्धौ, विभक्तिकार्ये च तत्सिद्धम् । साऽस्य देवता । प्रथमान्तात् देवताऽस्येत्यर्थे यथायथमणादयो भवन्तीति सूत्रार्थः । ऐन्द्रं हविः । इन्द्रशब्दात्प्रथमान्तात् "साऽस्य देवता" इत्यण्, सुपो लुकि, आद्यचो वृद्धौ, भत्वादलोपे विभक्तिकार्ये च तत्सिद्धिः । पाशुपतम् । पशुपतिर्देवताऽस्येत्यर्थः । अत्र "अश्वपत्यादिभ्यश्च" इत्यण् । वार्हस्पत्यम् । बृहस्पतिर्देवताऽस्येति विग्रहः । अत्र "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यः । साधनिका पूर्ववत् । शुक्राद्घन् । "साऽस्यदेवता" इत्यर्थे इति शेषः । शुक्रियम् । शुक्रो देवताऽस्येति विग्रहः । "शुक्राद् घन्" इति घनि, सुपो लुकि, नगते "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति घस्य इयादेशे भत्वे, अलोपे, विभक्तिकार्ये च 'शुक्रियम्' इति । सोमाट्ट्यण् । अणोऽपवादः । णकारो वृद्ध्यर्थः । टकारो ङीबर्थः । सौम्यम् । सोमो देवताऽस्य इत्यत्र "सोमाट्ट्यण्" इति ट्यणि, टणयोर्लोपे, भत्वे, अलोपे आद्यचो वृद्धौ, विभक्तिकार्ये च तत्सिद्धिः । वाय्वृतुपित्रुषसो यत् । वायु, ऋतु, पितृ, उपस् एभ्यो यदित्यर्थः । वायव्यमिति । वायुर्देवताऽस्येति विग्रहः । यति ओर्गुणः । "वान्तो यि प्रत्यये" इत्यवादेशः । एवं ऋतव्यमिति । ऋतुः देवताऽस्येति विग्रहः । रीङ् ऋतः । "अङ्गस्य" इत्यधिकृतम् ऋता विशेष्यते । तदन्तविधिः । "अयङ् यि क्ङिति" इत्यतः यि इत्यनुवर्तते । "अकृत्सार्वधातुकयोः" इत्यतः अकृत्सार्वधातुकयोरिति "च्वौ च" इति सूत्रं च । तदाह—अकृदित्यादिना । पित्र्यम् । पिता देवताऽस्येति विग्रहः । अतः प्रथमान्तात् पितृशब्दाद् "वाय्वृतुपित्रुषसो यत्" इति यति, तगते सुपो लुकि, 'पितृ य' इति जाते, "रीङ् ऋतः" इति रीङादेशे "ङिच्च" इत्यन्ते जाते 'पित्री य' इति भूते भत्वे "यस्येति च" इतीकारलोपे, संयोगे विभक्तिकार्ये च तत्सिद्धम् । उपस्यम् । उषः देवता अस्येति विग्रहः । भत्वेन पदत्वाभावात् सकारस्य न रुत्वादि । पितृव्यमातुल । समर्थविभक्तिः, प्रत्ययः प्रत्ययार्थोऽनुबन्ध इति सर्वं निपातनाद्विज्ञेयम् । पितृव्यः। पितुर्भ्राता 'पितृव्यः' इत्यत्र षष्ठ्यन्तात् पितृशब्दात् भ्रातर्यर्थे "पितृव्यमातुलमातामहपितामहाः" इति व्यति, तगते, सुपो लुकि, विभक्तिकार्ये च तत्सिद्धम् । मातुल इति ।

पितुः पिता पितामहः । **तस्य समूहः ४।२।३७** काकानां समूहः काकम् ॥ **भिक्षादिभ्योऽण् ४।२।३८** भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । इह "भस्याढे तद्धिते" इति पुंवद्भावे कृते । **इनण्यनपत्ये ६।४।१६४** अनपत्यार्थेऽणि परे इन्प्रकृत्या स्यात् । तेन "नस्तद्धिते" इति टिलोपो न । युवतीनां समूहो यौवनम् । यौवतम् । **ग्रामजनबन्धुभ्यस्तल ४।२।४३** तलन्तं स्त्रियाम् । ग्रामता । जनता । बन्धुता । ( **गजसहायाभ्यां चेति वक्तव्यम्** ) गजता । सहायता । ( **अह्नः**

---

मातृशब्दात् डुलचि "टेः" इति टिलोपः । मातामह इति । मातृशब्दात् डामहचि, टिलोपः । एवं पितामहः । तस्य समूहः । तस्येति षष्ठीसमर्थात्समूह इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । "इनित्रकटयचश्च" इति यावत्समूहाधिकारः । काकम् । काकशब्दात् षष्ठ्यन्तात् समूह इत्यस्मिन्नर्थे "तस्य समूहः" इत्यणि, णगते सुपो लुकि, भत्वे अलोपे, आद्यचो वृद्धौ, विभक्तिकार्ये च तत्सिद्धम् । एवं बकानां समूहः 'बाकम्' इत्यत्रापि बोध्यम् । समूहप्रत्ययान्तानां नपुंसकत्वं लोकात् । भिक्षादिभ्योऽण् । तस्य समूहः इत्येव । भैक्षम् । भिक्षाणां समूहः भैक्षम् इत्यत्र "तस्य समूहः" इत्यणि प्राप्ते "अचित्तहस्तिधेनोष्ठक्" इत्यचित्तत्वाट्ठकि च प्राप्ते तं प्रबाध्य "भिक्षादिभ्योऽण्" इत्यणि सुपो लुकि भत्वे अलोपे, आद्यचो वृद्धौ विभक्तिकार्ये च 'भैक्षम्' इति । गार्भिणम् । गर्भिणीनां समूहः 'गार्भिणम्' इत्यत्र "स्त्रीभ्यो ढक्" इति ढकि प्राप्ते तं प्रबाध्य "भिक्षादिभ्योऽण्" इत्यणि सुपो लुकि, भत्वे, भत्वात् "भस्याढे तद्धिते" इति पुंवद्भावे कृते 'गार्भिण् अ' इति जाते "नस्तद्धिते" इति नान्तटिलोपे प्राप्ते "इनण्यनपत्ये" इत्यणि इनः प्रकृतिभावे वृद्धौ विभक्तिकार्ये च कृते तत्सिद्धिः । इनण्यनपत्ये । इन् अणीति छेदः । प्रकृत्येति । "प्रकृत्यैकाच्" इत्यतस्तदनुवृत्तेरित्यर्थः । टिलोपो नेति । अणि तु प्रकृतिभावाऽप्रवृत्तेः टिलोपः स्यादिति भावः । यौवनम् । युवतीनां समूहः 'यौवनम्' इत्यत्र भिक्षादित्वादणि, सुपो लुकि, भत्वे पुंवद्भावे वृद्धौ विभक्तिकार्ये च 'यौवनम्' इति । अन्नन्तादनुदात्तादेरञि 'यौवतम्' इति । ग्रामजन । समूह इत्येव । ग्रामतेत्यादि । ग्रामाणां जनानां बन्धूनां च समूह इति विग्रहः । तलन्तानां स्त्रीत्वं लोकात् । "तलन्तं स्त्रियाम्" इति लिङ्गानुशासनाच्च । गजसहायाभ्यां चेति । आभ्यामपि समूहे तलिति वक्तव्यमित्यर्थः । गजता, सहायता । गजानां सहायानां च समूहः इत्यत्र "गजसहायाभ्यां चेति वक्तव्यम्" इति वार्तिकेन तलि, लकार लोपे, सुपो लुकि, टापि, विभक्तिकार्ये च 'गजता' 'सहायता' इति रूपे । अह्नः खः क्रतौ । षष्ठ्यन्तात् अहन्शब्दात् समूह इत्यर्थे खः प्रत्ययः स्यात्, समूहः क्रतुसाधकश्चेत्यर्थः । अहीनः । अह्नः समूहः 'अहीनः' इत्यत्र "अह्नः खः क्रतौ" इति खे, सुपो लुकि, 'अहन् ख' इति जाते "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति खस्य

खः क्रतौ ) अहीनः ॥ अचित्तहस्तिधेनोष्ठक् ४।२।४७ इसुसुक्तान्तात्कः ७।३।५१ इसुउसुउक्तान्तात्परस्य ठस्य कः स्यात् । साक्तुकम् । हास्तिकम् । धैनुकम् । तदधीते तद्वेद ४।२।५९ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ७।३।३। पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः, किं तु ताभ्यां पूर्वौ क्रमादैजागमौ स्तः । व्याकरणमधीते वेद वा वैयाकरणः ॥ क्रमादिभ्यो वुन् ४।२।६१ क्रमकः । पदकः । शिक्षकः । मीमांसकः ॥ इति रक्ताधिकारः ।

---

ईनादेशे 'अहन् ईन् अ' इति जाते भत्वे, "नस्तद्धिते" इति टिलोपे, संयोगे विभक्तिकार्ये च कृते 'अहीनः' इति रूपम् । अचित्तहस्ति । अचित्ताः—अप्राणिनः, तद्वाचिभ्यः, हस्तिशब्दात् धेनुशब्दाच्च समूहे ठक् स्यादित्यर्थः । इसुसुकृतान्तात्कः । इसुसुक्ताः अन्ता यस्येति विग्रहः । तकारादकार उच्चारणार्थः । ठस्य कः स्यादिति । ठकि ककार इत्, अकार उच्चारणार्थः, ठकारस्य शिष्टस्य ककार आदेश इत्यर्थः । साक्तुकम् । सक्तूनां समूहः 'साक्तुकम्' इत्यत्र "अचित्तहस्तिधेनोष्ठक्" इति ठकि, कलोपे सुपो लुकि, 'सक्तु ठ' इति भूते "इसुसुक्तान्तात् कः" इति ठस्य कादेशे "किति च" इत्याद्यचो वृद्धौ, विभक्तिकार्ये च कृते 'साक्तुकम्' इति । हास्तिकम् । हस्तिनां समूह इति विग्रहः । "इसुसुक्तान्तात्" इत्युकः परत्वात् ठस्य कः । आदिवृद्धिः । धैनुकमिति । धेनूनां समूह इति विग्रहः । उकः परत्वात् ठस्येकः । आदिवृद्धिः । तदधीते तद्वेद । द्वितीयान्तात् समर्थात् अधीते इत्यर्थे वेद इत्यर्थे वा उक्ता अणादयो वक्ष्यमाणाश्च प्रत्यया वा स्युरित्यर्थः । न य्वाभ्यामिति । य् च वश्च य्वाविति विग्रहः । वकारादकार उच्चारणार्थः । तदाह—यकारवकाराभ्यामिति । परस्येत्यध्याहारलभ्यम् । न वृद्धिरिति । "मृजेर्वृद्धिः" इत्यतस्तदनुवृत्तेरिति भावः । तुशब्दो विशेषप्रदर्शनार्थं इत्याह—किन्त्विति । ताभ्यामिति । यकारवकाराभ्यामित्यर्थः । पूर्वाविति । पूर्वावयवावित्यर्थः । तेन आगमत्वं लभ्यते । तदाह—ऐजागमाविति । ऐच् प्रत्याहारः । यथासंख्यं यकारात्पूर्वम् ऐकारः, वकारात्पूर्वम् औकारः । वैयाकरणः । व्याकरणमधीते वेद वा वैयाकरणः इत्यत्र "तदधीते तद्वेद" इत्यणि, सुपो लुकि, भत्वे, अलोपे, 'व्याकरण् अ' इति भूते "तद्धितेष्वचामादेः" इति प्राप्तां वृद्धिं बाधित्वा "नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामच्" इति वकारादुत्तरं यकारात्पूर्वम् ऐकारे जाते विभक्तिकार्ये च कृते 'वैयाकरणः' इति सिद्धम् । क्रमादिभ्यो वुन् । द्वितीयान्तेभ्यः क्रमादिभ्योऽधीते वेद इत्यर्थे वुन् स्यादित्यर्थः । क्रमकः । क्रममधीते वेद वा इत्यत्र "क्रमादिभ्यो वुन्" इति वुनि, नलोपे, सुपो लुकि, 'क्रम वु' इति जाते "युवोरनाकौ" इति वुस्थाने अकादेशे भत्वे अलोपे, विभक्तिकार्ये च कृते 'क्रमकः' इति सिद्धम् । एवं पदकः, शिक्षकः, मीमांसकः, इत्यादि । इति रक्ताधिकारः ।

## अथ चातुरर्थिकाः ।

तदस्मिन्नस्तीति देशे तन्नाम्नि ४।२।६७ उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः ॥ तेन निर्वृत्तम् ४।२।६८ कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी ॥ तस्य निवासः ४।२।६९ शिवीनां निवासो देशः शैवः ॥ अदूरभवश्च ४।२।७० विदिशाया अदूरभवं नगरं वैदिशम् ॥ जनपदे लुप् ४।२।८१ जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात् ॥ लुपि युक्तवद्व्यक्तिवचने १।२।५१ लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः ॥ वरणादिभ्यश्च ४।२।८२ अजनपदार्थ आरम्भः । वरणानामदूरभवं

---

तदस्मिन्नस्तीति । तदस्मिन्नस्तीत्यर्थे प्रथमोच्चारितात्प्रथमान्तादणादयः स्युः । प्रत्ययान्तेन प्रकृतिनामके देशे गम्ये इत्यर्थः । प्रसिद्धदेशग्रहणार्थं इति शब्दः । अलुपोऽपवादः । औदुम्बरो देशः । उदुम्बराः सन्त्यत्र देशे औदुम्बरः इत्यत्र "तदस्मिन्नस्तीति देशे तन्नाम्नि" इत्यणि, भत्वे भत्वादलोपे वृद्धौ, विभक्तिकार्ये च 'औदुम्बरो देशः' इति । तेन निर्वृत्तम् । तेनेति तृतीयासमर्थान्निर्वृत्तमस्मिन् विषये यथाविहितं प्रत्ययो भवति, देशनामधेये गम्यमाने । देशे तन्नाम्नीति चतुर्ष्वपि योगेषु सम्बध्यते । कौशाम्बी । कुशाम्बेन निर्वृत्ता 'कौशाम्बी' इत्यत्र "तेन निर्वृत्तम्" इत्यणि, वृद्धौ, भत्वे अलोपे, 'कौशाम्ब' इति जाते "टिड्ढाणञ्" इत्यणन्तत्वाद् ङीपि, ङपयोर्लोपे, भत्वे अलोपे संयोगे, विभक्तिकार्ये च कृते 'कौशाम्बी नगरी' इति सिद्धम् । तस्य निवासः । तस्येति षष्ठीसमर्थान्निवास इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, देशनामधेये गम्यमाने । निवसन्त्यस्मिन्निति निवासः । शैवः । अत्र "तस्य निवासः" इति षष्ठ्यन्तादणि, सुपो लुकि, अलोपे, आद्यचो वृद्धौ विभक्तिकार्ये च तत्सिद्धिः । अदूरभवश्च । तस्येति तन्नाम्नि देशे, इति चानुवर्तते । तस्य अदूरभव इत्यर्थे षष्ठ्यन्तादणादयः स्युः, तन्नाम्नि देशे इत्यर्थः । चकारेण 'अदूरभवः' इति विध्यनन्तरं प्रागुक्तास्त्रयोऽर्थाः पुनरुपस्थाप्यन्ते इत्यर्थः । वैदिशम् । अत्र "अदूरभवश्च" इत्यणि, वृद्धौ, अलोपे, विभक्तिकार्यञ्च । जनपद इति । देशस्तु जनपदैर्व्याप्तः, जनपदव्याप्यनगरादिश्च । जनपदस्तु बहुनगरग्रामव्याप्तमण्डलाधिकरणस्थानम् इति विग्रहः । लुपि युक्तवद्व्यक्तिवचने । युक्तशब्दः प्रकृतिवाची, व्यक्तिशब्दो लिङ्गवाची तदाह—प्रकृतिवत् लिङ्गवचने स्त इति । लुबिति प्रत्ययादर्शनमुच्यते । लुपः प्रवृत्तेः प्राक् प्रत्ययप्रकृतेर्यल्लिङ्गं वचनं ते एव लुपि सति भवतः । न तु प्रत्ययार्थविशेष्यमनुसृत्येत्यर्थः । पञ्चालानामिति । पञ्चालसंज्ञकानां राज्ञामित्यर्थः । पञ्चाला इति । "तस्य निवासः" इति विहितस्याणः "जनपदे लुप्" इति लुपि, प्रकृतिवत् बहुवचनमिति भावः । कुरव इत्यादि । कुरूणाम् अङ्गानां वङ्गानां कलिङ्गानां च निवासो जनपद इति । वरणादिभ्यश्च । "जनपदे

नगरं वरणाः ॥ **कुसुदनडवेतसेभ्यो ड्मतुप् ४।२।८७** **झयः ८।२।१०** झयन्तान्मतोर्मस्य वः । कुमुद्वान् । नड्वान् ॥ **मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९** मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः । वेतस्वान् ॥ **नडशादाड्ड्वलच् ४।२।८८** न ड्वलः । शाद्वलः ॥ **शिखाया वलच् ४।२।८९** शिखावलः ॥ इति चातुरर्थिकाः ॥

---

लुप्" इत्युत्तरमिदं सूत्रम् । वरणादिभ्यः परस्य चातुरर्थिकप्रत्ययस्य लुप् स्यादित्यर्थः । पूर्वणैव सिद्धे किमर्थमिदमत आह–अजनपदार्थ आरम्भ इति । वरणानामिति । वरणा नाम नदी काश्या उत्तरतः प्रसिद्धा । अवयवाभिप्रायं पूजार्थं वा बहुवचनम् । वरणानामदूरभवं नगरं वरणाः । अत्र लुप्प्रत्ययान्तस्य वरणाशब्दस्य नगरे वाच्ये प्रकृतिवत्स्त्रीलिङ्गं वहुवचनं च । कुमुदनड । कुमुद नड वेतस एतेभ्यः ड्मतुप् स्यादित्यर्थः । डः उपौ च इतः । अयं मत्वर्थ एवेति "नपदान्त" इति सूत्रे भाष्यकैयटयोः स्थितम् । झयः । "पदात्" इत्यधिक्रियते, तच्च विशेष्यं, झय इति विशेषणं ततस्तदन्तविधिः । "मादुपधायाश्च मतोर्वः" इत्यतो मतोर्वः इत्यनुवर्तते । तदाह—झयन्तान्मतोर्मस्य व इति । कुमुद्वानिति । कुमुदाः अस्मिन् सन्तीति विग्रहः । ड्मतुपि, डित्वात् टिलोपः । "कुमुद्वान् कुमुदप्राये" इत्यमरः । नड्वानिति । नडाः अस्मिन् सन्तीति विग्रहः । "कुमुदनडवेतसेभ्यः" इति ड्मतुपि" टिलोपः । मादुपधायाश्चेति । मात् उपधायाश्चेति छेदः । मादित्यावर्तते । म् च अश्चेति समाहारद्वन्द्वात्पञ्चम्येकवचनम् । मतुप्प्रत्ययाक्षिप्तप्रातिपदिकविशेषणत्वात्तदन्तविधिः । मवर्णान्तादवर्णान्तात्प्रातिपदिकात्परस्य मतोर्मस्य वः स्यादित्येकोऽर्थः । मादित्युपधाविशेषणम् । मकारात्मिका अकारात्मिका च या उपधा ततः परस्य मतोर्मस्य वः स्यादित्यन्योऽर्थः । फलितमाह–मवर्णेत्यादिना । वेतस्वान् । वेतसाः अस्मिन् सन्तीति विग्रहे वेतसशब्दात्प्रथमान्तात् । "कुमुदनडवेतसेभ्यो ड्मतुप्" इति ड्मतुपि, डलोपे, सुपो लुकि च, 'वेतस मत्' इति स्थिते, डित्वाट्टिलोपे "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मस्य वत्वे 'वेतस्वत्' इति जाते तस्मात्सौ, "उगिदचां सर्वनामस्थाने" इति नुमि, उमि गते, मित्वादन्त्यादचः परे, "हल्ङ्याब्भ्यः" इत्यनेन सुलोपे, "अत्वसन्तस्य चाधातोः" इत्युपधादीर्घे "संयोगान्तस्य लोपः" इति तलोपे च कृते 'वेतस्वान्' इति रूपम् । नडशादाड्ड्वलच् । नडशादशब्दाभ्यां ड्वलच् प्रत्ययो भवति चातुरर्थिकः । नड्वलः । नडाः सन्ति यस्मिन् इत्यत्र "नडशादाड्ड्वलच्" इति ड्वलचि, सुपो लुकि, भत्वे, टिलोपे विभक्तिकार्ये च कृते 'नड्वलः' इति । शाद्वलः । शादाः अस्मिन् सन्तीति विग्रहः । शिखाया वलच् । निर्वृत्ताद्यर्थं सूत्रं देशे तन्नाम्नि अणो बाधनार्थं च । "दन्तशिखात्संज्ञायाम्" इति पञ्चमे वक्ष्यमाणं तु अदेशेऽपि 'शिखावलः' इति रूपा-

## अथ शेषाधिकारः ।

**शेषे ४।२।९२** अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषः, तत्राणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । "तस्य विकारः" इत्यतः प्राक् शेषाधिकारः ॥ **राष्ट्राऽवारपाराद् घखौ ४।२।९३** आभ्यां क्रमाद् घखौ स्तः शेषे । राष्ट्रे जातादिः राष्ट्रियः । अवारपारीणः । ( अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ) अवारीणः । पारीणः । पारावारीणः । इह प्रकृतिविशेषात् घादयष्ट्युलन्ताः प्रत्यया उच्यन्ते, तेषां जाताद-

---

र्थम् । शिखावलः । शिखाऽस्यास्तीत्यत्र "शिखाया वलच्" इति वलचि, चलोपे, सुपो लुकि, विभक्तिकार्ये च कृते 'शिखावलः' इति सिद्धम् । इति चातुरर्थिकाः ।

शेषे । अणादय इति । "प्राग्दीव्यतोऽण्" इत्यादिसाधारणाः प्रत्ययाः । चाक्षुषं रूपमिति । चक्षुषा गृह्यते चाक्षुषम् इत्यत्र "शेषे" इत्यणि, सुपो लुकि, "तद्धितेष्वचामादेः" इत्याद्यचो वृद्धौ विभक्तिकार्ये च 'चाक्षुषम्' इति रूपम् । श्रावणः शब्दः । श्रवणेन गृह्यते इति विग्रहः। अणि, आद्यचो वृद्धौ, अलोपे, विभक्तिकार्ये च तत्सिद्धिः । औपनिषदः । उपनिषदा गृह्यते इति विग्रहः । "शेषे" इत्यणि आद्यचो वृद्धौ, विभक्तिकार्ये च तत्सिद्धिः। राष्ट्रावारपाराद्घखौ। आभ्यामिति । राष्ट्रशब्दादवारपारशब्दाच्चेत्यर्थः। राष्ट्रिय इति । राष्ट्रे जातः, राष्ट्रे भवः, इत्यादिरर्थो यथायोगं बोध्यः । सप्तम्यन्तात् राष्ट्रशब्दात् घे,सुपो लुकि, "आयनेयीनीयियः" इति घस्य इयादेशे, भत्वे, अलोपे, विभक्तिकार्ये च तत्सिद्धिः । अवारपारीणः । अवारपारे जातः इत्यर्थे "राष्ट्रावारपाराद्घखौ" इति खे, "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति खस्य ईनादेशे भत्वे अलोपे विभक्तिकार्ये च 'अवारपारीणः' इति सिद्धम् । अवारपाराद्विगृहीतादपीति । अवारशब्दात्पारशब्दाच्च पृथग्भूतादपि खो वक्तव्य इत्यर्थः । विपरीताच्चेति । पारावारशब्दादपीत्यर्थः । अवारीणः । अवारे जातः 'अवारीणः' इत्यत्र "अवारपाराद् विगृहीतादपि विपरीताच्चेति वक्तव्यम्" इति खे खस्थाने ईनादेशे भत्वे अलोपे नस्य णत्वे विभक्तिकार्ये च तत्सिद्धिः । एवं पारे जातः 'पारीणः' इत्यत्रापि बोध्यम् । पारावारीणः । पारावारे जातः 'पारावारीणः' इत्यत्र विपरीतत्वात्खे, खस्य ईनादेशे शेषं पूर्ववत् । इह प्रकृतीत्यादिना । "राष्ट्रावारपार" इत्यादिसूत्राणां प्रकृतिविशेषेभ्यः केवलप्रत्ययविधीनाम् अर्थविशेषविभक्तिविशेषाकाङ्क्षायां "तत्र जातः" इत्यादिसूत्राणां च केवलमर्थविशेषनिर्देशपराणां "समर्थानाम्" इति सूत्रलब्धतत्तद्विभक्तिकप्रकृतिविशेषाणां विधेयप्रत्ययविशेषाकाङ्क्षायां परस्परमेकवाक्यत्वे सति "तत्र जातः" इत्याद्यर्थेषु प्रथमोच्चारिततत्तद्विभक्त्यन्तेभ्यः राष्ट्रादिशब्देभ्यो घादयः ष्ट्युट्युलन्ताः प्रत्ययाः

योऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते॥ ग्रामाद्यखञौ ४।२।९४ ग्राम्यः, ग्रामीणः। नद्यादिभ्यो ढक् ४।२।९७ नादेयम् । माहेयम् । वाराणसेयम् ॥ दक्षिणापश्चात्पुरसस्त्यक् ४।२।९८ दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः। द्युप्रागपागुदक्प्रतीचो यत् ४।२।१०१ दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ॥ अव्ययात्त्यप् ४।२।१०४ ( अमेहक्वतसित्रेभ्य एव ) अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। ( त्यब्नेर्ध्रुव इति वक्तव्यम् ) नित्यः॥ वृद्धिर्यस्याचामादिस्तद् वृद्धम् १।१।७३ यस्य समुदायस्याचां मध्ये आदिर्वृ-

---

-द्धिरिति लभ्यत इति भावः। राष्ट्राद्यन्तेभ्यस्तु प्रकृतिभ्यो जाताद्यर्थेषु अणादयः साधारणा भवन्त्येव। ग्रामाद्यखञौ। ग्राम्य इति। "ग्राकाद्यखञौ" इति यप्रत्यये "यस्येति च" इति अलोपः। ग्रामीणः। "ग्रामाद्यखञौ" इति खञि, अलोपे, "आयनेयी-नीयियः" इति खस्य ईनादेशे आद्यचो वृद्धौ, "यस्येति च" इति अलोपे, णत्वम्। नद्यादिभ्यो ढक्। नदी, मही वाराणसी श्रवस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफरी खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी इति नद्यादिगणः। नादेयम्। नद्यां जातम् नादेयम् इत्यत्र "नद्यादिभ्यो ढक्" इति ढकि कलोपे सुपो लुकि "आयनेयीनीयियः" इति ढस्य एयादेशे भत्वे इलोपे, "किति च" इति आद्यचो वृद्धौ विभक्तिकार्ये च कृते 'नादेयम्' इति। एवं 'माहेयम्' इति। वाराणसेयम्। वाराणस्यां जातादीत्यर्थः। दक्षिणापश्चात्। दक्षिणा इति आजन्तमव्ययम्। अव्यय-साहचर्यादाजन्तं गृह्यत इति भावः। दक्षिणा पश्चात् पुरस् एभ्योऽव्ययेभ्यो जाताद्य-र्थेषु त्यक् प्रत्ययः स्यादित्यर्थः। दाक्षिणात्यः। दक्षिणा भवः "दाक्षिणात्यः" इत्यत्र दक्षिणाशब्दात् "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यकि कगते, वृद्धौ विभक्तिकार्ये च तत्सिद्धम्। एवं पश्चाद्भवः 'पाश्चात्यः' पुरो भवः 'पौरस्त्यः' इति बोध्यम्। द्युप्रागपाक्। दिव् प्राञ्च् अपाञ्च् उदञ्च् प्रत्यञ्च् एभ्यो यत्स्यादित्यर्थः। सूत्रे "दिव उत्" इत्युत्वेन निर्देशः। दिव्यम्। दिवि जातादीत्यर्थः। प्राच्यमि-ति। प्राचि प्रदेशे जातादीत्यर्थः। तद्धितोत्पत्तौ सुब्लुकि 'प्राञ्च् य' इति स्थिते "अनिदिताम्" इति नलोपे "अचः" इत्यकारलोपे "चौ" इति दीर्घे 'प्राच्यम्' इति रूपम्। अपाच्यमिति। इदमपि पूर्ववत्। उदीच्यमिति। अत्र "उद ईत्" इति ईत्वं विशेषः। प्रतीच्यमिति। प्राच्यवद्रूपम्। अव्य-यात्त्यप्। अमेर्हेति। अमा इह क्व तसि त्र एभ्य एव अव्ययेभ्यः त्यप्प्रत्यय इति परिगण-नवार्तिकमिदम्। अमात्यः। समीपे सह वा जातः इत्यर्थः। अत्र अमाशब्दात् "अव्ययात्त्यप्" इति त्यपि, पलोपे विभक्तिकार्ये च कृते 'अमात्यः' इति। एवमेव इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। इत्यत्र बोध्यम्। त्यब्नेरिति। नि इत्यव्ययात् त्यप् स्याद् ध्रुवे गम्ये इत्यर्थः। नित्यः। अत्र "त्यब्नेर्ध्रुव इति वक्तव्यम्" इति निरूपाद-

द्विस्तद् वृद्धसंज्ञं स्यात् ॥ त्यदादीनि च १।१।७४ वृद्धसञ्ज्ञानि स्युः ॥ वृद्धाच्छः ४।२।११४ शालीयः । मालीयः । तदीयः । ( वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ) । देवदत्तीयः, दैवदत्तः ॥ गहादिभ्यश्च ४।२।१३८ गहीयः ॥ युष्मदस्मदोरन्यतरस्यां खञ् च ४।३।१ चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वाऽयं युष्मदीयः । अस्मदीयः ॥ तस्मिन्नणि च युष्माकास्माकौ ४।३।२ युष्मदस्मदोरेतावादेशौ

---

व्ययात् त्यपि, पगते विभक्तिकार्ये च कृते 'नित्यः' इति सिद्धम् । वृद्धिर्यस्य । अचामिति बहुत्वमनेकत्वोपलक्षणम् । तेन शालाशब्दस्यापि वृद्धत्वं सिद्धयति । व्यपदेशिवद्भावेन ञाशब्दस्यापि वृद्धत्वम् । त्यदादीनि च । शेषपूरणेन सूत्रं व्याचष्टे—वृद्धसंज्ञानि स्युरिति । आदेरचो वृद्धिसंज्ञकत्वाभावादारम्भः । वृद्धाच्छः । वृद्धसंज्ञकात् छः स्यात् जातादिष्वर्थेषु । अणोऽपवादः । शालीय इति । शालायां भवः 'शालीयः' इत्यत्र "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" इति शालाशब्दस्य वृद्धसंज्ञायां "वृद्धाच्छः" इति छप्रत्यये सुपो लुकि, "आयनेयीनीयियः" इति छस्य ईयादेशे भत्वे, अलोपे, विभक्तिकार्ये च तत्सिद्धिः । एवं मालायां जातादि 'मालीयः' इति सिद्धम् । तदीयः । "त्यदादीनि च" इति वृद्धसंज्ञायां "वृद्धाच्छः" इति छे, छस्य ईयादेशे संयोगे विभक्तिकार्ये च कृते 'तदीयः' इति सिद्धम् । वा नामधेयस्येति । रूढशब्दत्वमिह नामत्वम् । न त्वाधुनिकसङ्केतितत्वमेव । तेन घटीयमित्यादि सिद्धम् । देवदत्तीयः । देवदत्तस्यायमिति विग्रहः । "वा नामधेयस्य वृद्धसंज्ञा वक्तव्या" इति वा वृद्धसंज्ञायां "वृद्धाच्छः" इति छे, छस्य ईयादेशे, भत्वे अलोपे संयोगे विभक्तिकार्ये च कृते 'देवदत्तीयः' इति सिद्धम् । वृद्धसंज्ञाभावे "शेषे" इत्यणि भत्वे अलोपे आद्यचो वृद्धौ विभक्तिकार्ये च–'दैवदत्तः' इति । गहादिभ्यश्च । "गर्त्तोत्तरपदाच्छः" इत्यतश्छ इत्यनुवर्तते । गहीय इति । गहो देशविशेषः । तत्र जातः 'गहीयः' इत्यत्र "गहादिभ्यश्च" इति छे, "आयनेयीनीयियः" इति छस्य ईयादेशे, भत्वे अलोपे, संयोगे विभक्तिकार्ये च तत्सिद्धिः । युष्मदस्मदोरन्यतरस्यां खञ् च । युष्मदस्मच्छब्दयोरिह शब्दस्वरूपपरत्वात् "त्यदादीनि सर्वैर्नित्यम्" इत्येकशेषो न भवति । पञ्चम्यर्थे षष्ठी । युष्मच्छब्दादस्मच्छब्दाच्च जाताद्यर्थेषु खञ् स्यादित्यर्थः । चाच्छः । गर्तोत्तरपदादित्यधिकृतः छः चकारेण समुच्चीयत इत्यर्थः । पक्षेऽणिति । अन्यतरस्यां ग्रहणादिति भावः । युष्मदीयः । युवयोर्युष्माकं वाऽयम् 'युष्मदीयः' इत्यत्र "युष्मदस्मदोरन्यतरस्यां खञ् च" इति छे, "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति छस्य ईयादेशे विभक्तिकार्य च कृते 'युष्मदीयः' इति रूपम् । एवमावयोरस्माकं वाऽयम् 'अस्मदीयः' इत्यत्रापि बोध्यम् । तस्मिन्नणि च । पूर्वसूत्रे निर्दिष्टः खञ् तच्छब्देन परामृश्यते । तदाह—खञि अणि चेति । अत्र स्थानिनोरादेशयोश्च यथासंख्यम्, न तु परनिमित्तयोः, तस्मिन्नणि

स्तः खञि अणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः । तवकममकावेकवचने ४।३।३ एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च । तावकीनः, तावकः । मामकीनः, मामकः । छे तु-प्रत्ययोत्तरपदयोश्च ७।२।९८ मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः । त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः ॥ मध्यान्मः ४।३।८ मध्यमः ॥ कालाट्ठञ्

---

इति व्यस्तनिर्देशात् । यौष्माकीणः । युवयोर्युष्माकं वा अयमिति विग्रहः । खञ्, ईनादेशः, युष्माकादेशः, आदिवृद्धिः, णत्वम् । आस्माकीनः । आवयोरस्माकं वा अयमिति विग्रहः । खञ्, ईनादेशः, अस्माकादेशः आदिवृद्धिः । यौष्माकः । आस्माकः । युवयोर्युष्माकं वा, आवयोरस्माकं वा अयमिति विग्रहः । अत्र "युष्मदस्मदोरन्यतरस्यां खञ् च" इति अणि, णलोपे, सुपो लुकि "तस्मिन्नणि च युष्माकास्माकौ" इति 'युष्माक' 'अस्माक' आदेशे भत्वे अलोपे आद्यचो वृद्धौ विभक्तिकार्ये च सति ते रूपे स्तः । तवकममकौ । एकवचने इति युष्मदस्मदोः प्रकृत्योर्विशेषणम् । एकस्य वचनम्, एकवचनम् । एकस्योक्तौ व्याप्रियमाणयोरिति लभ्यते । तदाह—एकार्थवाचिनोरिति । तावकीनः । तव अयं 'तावकीनः' इत्यत्र "युष्मदस्मदोरन्यतरस्यां खञ्" इति खञि, सुपो लुकि, "तवकममकावेकवचने" इति युष्मद् स्थाने तवकादेशे खस्य ईनादेशे भत्वे अलोपे संयोगे विभक्तिकार्ये च कृते 'तावकीनः' इति । अण्पक्षे "तवकममकावेकवचने" इति युष्मदस्तवकादेशे भत्वे अलोपे वृद्धौ संयोगे विभक्तिकार्ये च 'तावकः' इति सिद्धम् । मामकीनः । "युष्मदस्मदोरन्यतरस्यां खञ्" इति खञि, "तवकममकावेकवचने" इति ममकादेशे खस्य ईनादेशे भत्वे अलोपे, विभक्तिकार्ये च तत्सिद्धिः । पक्षे अणि ममकादेशे च 'मामकः' इति । छे त्विति । एकार्थवृत्तयोर्विशेषो वक्ष्यत इति शेषः । प्रत्ययोत्तरपदयोश्च । साप्तमिकमिदम् । "त्वमावेकवचने" इत्यनुवर्तते । "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरित्यनुवर्तते । मपर्यन्तस्येत्यधिकृतम् । तदाह—मपर्यन्तयोरित्यादि । त्वदीयः, मदीयः । तव अयम् त्वदीयः, मम अयं मदीयः इत्यत्र "युष्मदस्मदोरन्यतरस्यां खञ्" इति चाच्छे, सुपो लुकि छस्य ईयादेशे "प्रत्ययोत्तरपदयोश्च" इति युष्मदो मपर्यन्तस्य त्वादेशे, अस्मदो मपर्यन्तस्य च मादेशे 'त्व अद् ईय' 'म अद् ईय' इति जाते "अतो गुणे" इति पररूपत्वे संयोगे विभक्तिकार्ये च कृते 'त्वदीयः' 'मदीयः' इति सिद्धम् । त्वत्पुत्रः, मत्पुत्रः । तव पुत्रः त्वत्पुत्रः, मम पुत्रः मत्पुत्रः इति षष्ठीतत्पुरुषसमासे कृते सुपो लुकि, अत्र "प्रत्ययोत्तरपदयोश्च" इति पुत्रशब्दे उत्तरपदे त्वादेशे मादेशे च 'त्व अद् पुत्र' इति 'म अद् पुत्र' इति च जाते "अतो गुणे" इति पररूपत्वे "खरि च" इति दस्य तकारे च कृते 'त्वत्पुत्रः' 'मत्पुत्रः' इति स्तः । मध्यान्मः । स्पष्टम् । मध्यमः । मध्ये जातः 'मध्यमः' इत्यत्र "मध्यान्मः" इति मप्रत्यये विभक्तिकार्ये च तत्सिद्धम् । कालाट्ठञ् । 'कालशब्दस्यैव न ग्रहणम्,

४।३।११ कालवाचिभ्यष्ठञ् स्यात्। कालिकम्। मासिकम्। सांवत्सरिकम् (अव्ययानां भमात्रे टिलोपः) सायंप्रातिकः। पौनःपुनिकः॥ प्रावृष एण्यः ४।३।१७ प्रावृषेण्यः॥ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४।३।२३ सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च। सायन्तनम्। चिरन्तनम्। प्राह्णेप्रगेऽनयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। दोषातनम्॥ तत्र जातः ४।३।२५ सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः॥ स्रुघ्ने जातः स्रौघ्नः। उत्से जात औत्सः। राष्ट्रे जातो राष्ट्रियः। अवारपारे

---

किन्तु कालशब्दस्य कालविशेषवाचकानां च ग्रहणम्' इति "तदस्य परिमाणम्" "संख्यायाः" इति सूत्रभाष्ये स्पष्टम्। तदाह—कालवाचिभ्य इति। कालिकम्। काले जातम् 'कालिकम्' इत्यत्र "कालाट्ठञ्" इति ठञि, अनुबन्धलोपे "ठस्येकः" इति ठस्येकादेशे सुपो लुकि, 'काल इक' इति जाते भत्वे अलोपे संयोगे विभक्तिकार्ये च कृते 'कालिकम्' इति। एवं 'मासिकम्' 'सांवत्सरिकम्' इति। सायम्प्रातिकः। सायम्प्रातर्भवः 'सायम्प्रातिकः' इत्यत्र "कालाट्ठञ्" इति ठञि, ठस्य इकादेशे 'सायम्प्रातर् इक' इति जाते भत्वे "अव्ययानां भमात्रे टिलोपः" इति टिलोपे संयोगे विभक्तिकार्ये च कृते 'सायम्प्रातिकः' इति। एवं पुनःपुनः भवः—'पौनःपुनिकः' इति बोध्यम्। प्रावृष एण्यः। ठञ्‌त्वणोऽपवादः। प्रावृषेण्य इति। प्रावृट् वर्षर्तुः। तत्र भवादिरित्यर्थः। 'प्रावृष् ङि एण्य' इति स्थिते सुपो लुकि, भत्वे अलोपे संयोगे विभक्तिकार्ये च कृते तत्सिद्धिः। सायंचिरम्। चतुर्भ्य इति। सायं चिरं प्राह्णे प्रगे इत्येभ्य इत्यर्थः। कालवाचिभ्य इति। "कालाट्ठञ्" इत्यतस्तदनुवृत्तेरिति भावः। तयोरिति। ट्युट्युलोरित्यर्थः। सायन्तनम्। इत्यत्र "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च" इति ट्युट्युल्प्रत्यये तुडागमे उभयोः अनुबन्धलोपे, टित्वादाद्यवयवे जाते,' सायम् तु यु' इति जाते "युवोरनाकौ" इति योरनादेशे प्रकृतेर्मान्तत्वे निपातिते संयोगे विभक्तिकार्ये च कृते 'सायन्तनम्' इति रूपम्। चिरन्तनम्। अत्रापि प्रकृतेर्मान्तत्वं निपात्यते। शेषं पूर्ववत्। प्राह्णेतनम्। प्राह्णः सोढोऽस्येति विग्रहः। साधनिका पूर्ववत्। प्रगेतनम्। प्रगच्छतीति प्रगः, तस्मिन् जातादिरित्यर्थः। दोषातनमिति। दोषेत्याकारान्तमव्ययं रात्रौ। तत्र जातः। सप्तमीसमर्थादिति। सप्तम्यन्तात्कृतसन्धेरित्यर्थः। तत्रेत्यनेन सप्तम्यन्तस्यैव प्रथमानिर्दिष्टत्वादिति भावः। अणादय इति। अपत्यादिविकारान्तार्थसाधारणा इत्यर्थः। घादयश्चेति। "राष्ट्रावारपार" इत्यादिभिः विशेषविहिता इत्यर्थः। स्रौघ्नः। अत्र "तत्र जातः" इत्यण्। एवम्—'औत्सः' इत्यत्रापि। राष्ट्रियः। अत्र "तत्र जात" इति सूत्रोक्तार्थे "राष्ट्रावारपाराद्घखौ" इति घे "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति घस्य इयादेशे सुपो लुकि, भत्वे अलोपे विभक्तिकार्ये च

जातः अवारपारीणः। इत्यादि॥ प्रावृषष्ठप् ४।३।२६ एण्यापवादः। प्रावृषिकः॥ प्रायभवः ४।३।३९ तत्रेत्येव। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः॥ सम्भूते ४।३।४१ स्रुघ्ने सम्भवति स्रौघ्नः॥ कोशाड्ढञ् ४।३।४२ कौशेयं वस्त्रम्॥ तत्र भवः ४।३।५३ स्रुघ्ने भवः स्रौघ्नः। औत्सः। राष्ट्रियः॥ दिगादिभ्यो यत् ४।३।५४ दिश्यम्। वर्ग्यम्। शरीरावयवाच्च ४।३।५५ दन्त्यम्। कण्ठ्यम्। (अध्यात्मादेष्ठञिष्यते) अध्यात्मं भवमाध्यात्मिकम्॥ अनुशतिकादीनां च ७।३।२०। एषामुभयपदवृद्धिः स्यात् ञिति णिति किति च। आधिदैविकम्। आधिभौति-

---

तत्सिद्धिः। अवारपारीणः। अवारपारे जातः 'अवारपारीणः' इत्यत्र "तत्र जातः" इति सूत्रोक्तार्थे "राष्ट्रावारपाराद्घखौ" इति खे "आयनेयीनीयियः" इति खस्य ईनादेशे सुपो लुकि, भत्वे अलोपे विभक्तिकार्ये च कृते तत्सिद्धिः। प्रावृषष्ठप्। ठपः पित्त्वम् "अनुदात्तौ सुप्पितौ" इति स्वरार्थम्। एण्यापवाद इति। "प्रावृष एण्यः" इति विहित-स्येत्यर्थः। प्रावृषिकः। प्रावृषि जातः 'प्रावृषिकः' इत्यत्र "तत्र जातः" इति सूत्रो-क्तार्थे "प्रावृषष्ठप्" इति ठपि पलोपे सुपो लुकि, "ठस्येकः" इति ठस्य इकादेशे विभक्तिकार्ये च कृते 'प्रावृषिकः' इति सिद्धम्। प्रायभवः। तत्रेत्येवेति। प्रायभवः इत्यर्थे सप्तम्यन्तादणादयो घादयश्च यथायथं स्युरित्यर्थः। प्रायशब्दस्य व्याख्यानम्— बाहुल्येनेति। स्रौघ्नः। "प्रायभवः" इति सूत्रोक्तार्थे अनेनैव सूत्रेण अण्। सम्भूते। तत्रेत्येव। सप्तम्यन्तात्सम्भूतेऽर्थे अणादयो घादयश्च यथायथं स्युरित्यर्थः। स्रौघ्नः। स्रुघ्नशब्दात्सप्तम्यन्तात्सम्भूतेऽर्थे "सम्भूते" इति सूत्रेण अण्। कोशाड् ढञ्। कौशेयं वस्त्रमिति। कृमिविशेषकोशस्य विकार इत्यर्थः। "विकारे कोशाड्ढञ्" इति वार्ति-कात् 'कोश ङस् ढञ्' इति स्थिते सुपो लुकि, अगते "आयनेयीनीयियः" इति ढस्य एयादेशे, भत्वे अलोपे आद्यचो वृद्धौ संयोगे विभक्तिकार्ये च 'कौशेयम्' इति सिद्धम्। तत्र भवः। कालादिति निवृत्तम्। अस्मिन्नर्थे सप्तम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। भवनं सत्ता, जननमुत्पत्तिरिति भेदः। स्रौघ्न इति। औत्सर्गिकोऽण्। राष्ट्रिय इति। "राष्ट्रावार" इति घः। दिगादिभ्यो यत्। भवः इत्यर्थे सप्तम्यन्तेभ्य इति शेषः। दिश्यमिति। दिशि भवमित्यर्थः। शरीरावयवाच्च। भव इत्यर्थे सप्तम्यन्तेभ्य इति शेषः। दन्त्यमिति। दन्ते भवमित्यर्थः। "यस्येति च" इत्यकारलोपः। एवं कण्ठ्यम्। आध्यात्मिकम्। आत्मनि इत्यध्यात्मम्। अध्यात्मं भवम् 'आध्यात्मिकम्' इत्यत्र "तत्र भवः" इति सूत्रोक्तार्थे "अध्यात्मादेष्ठञिष्यते" इति ठञि ठस्येकादेशे आद्यचो वृद्धौ विभक्तिकार्ये च 'आध्यात्मिकम्' इति सिद्धम्। अनुशतिकादीनाञ्च। आदिवृद्धिप्रकरणे उत्तरपदस्य, पूर्वपदस्येत्यधिकारे इदं सूत्रम्। तदाह—एषामिति। आधिदैविकम्। देवेष्वित्यधिदेवम्। तत्र भवमित्यर्थः। "अध्यात्मादेष्ठञिष्यते" इति ठञ्। उभयपद-

कम् । ऐहलौकिकम् । पारलौकिकम् । आकृतिगणोऽयम् ॥ **जिह्वामूलाङ्गुलेश्छः ४।३।६२** जिह्वामूलीयम् । अङ्गुलीयम् ॥ **वर्गान्ताच्च ४।३।६३** कवर्गीयम् ॥ **तत आगतः ४।३।७४** स्रुघ्नादागतः स्रौघ्नः ॥ **ठगायस्थानेभ्यः ४।३।७५** शुल्कशालाया आगतः शौल्कशालिकः ॥ **विद्यायोनिसम्बन्धेभ्यो वुञ् ४।३।७७** औपाध्यायकः । पैतामहकः ॥ **हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ४।३।८१** समादागतं समरूप्यम् । पक्षे गहादित्वाच्छः । समीयम् । विषमीयम् । देवदत्तरूप्यम् । दैवदत्तम् ॥ **मयट् च ४।३।८२** सममयम् । देवदत्तमयम् ॥ **प्रभवति ४।३।८३**

---

वृद्धिः । आधिभौतिकमिति । भूतेष्वधिभूतम् । तत्र भवमित्यर्थः । "अध्यात्मादेष्ठञ् इष्यते" इति ठञि, ठस्येकादेशे, उभयपदवृद्धिः । ऐहलौकिकम् । इह लोके भवमित्यर्थः । ठञ्, उभयपदवृद्धिः । पारलौकिकमिति । परलोके भवमित्यर्थः । ठञ्, उभयपदवृद्धिः । जिह्वामूलाङ्गुलेश्छः । "शरीरावयवाच्च" इति यतोऽपवादः । जिह्वामूलीयम् । जिह्वामूले भवम् 'जिह्वामूलीयम्' इत्यत्र "जिह्वामूलाङ्गुलेश्छः" इति छे, "आयनेयीनीयियः" इति छस्य ईयादेशे भत्वे अलोपे विभक्तिकार्ये च तत्सिद्धिः । एवम् अङ्गुल्यां भवम् 'अङ्गुलीयम्' इति । वर्गान्ताच्च । कवर्गीयम् । कवर्गे भवमिति विग्रहः । अत्र "वर्गान्ताच्च" इति छप्रत्यये, सुपो लुकि, छकारस्य स्थाने ईयादेशे भत्वे अलोपे विभक्तिकार्ये च तत्सिद्धिः । तत आगतः । अस्मिन्नर्थे पञ्चम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । स्रौघ्न इति । औत्सर्गिकोऽण् । ठगायस्थानेभ्यः । तत आगतः इत्यर्थे इति शेषः । हट्टादिषु स्वामिग्राह्यो भागः आयः । स अस्मिन् गृह्यते तदायस्थानम् , तद्वाचिभ्य इत्यर्थः । शौल्कशालिकः । शुल्कशालाया आगतः 'शौल्कशालिकः' इत्यत्र "ठगायस्थानेभ्यः" इति ठकि कलोपे "ठस्येकः" इति ठस्येकादेशे भत्वे अलोपे "किति च" इत्याद्यचो वृद्धौ विभक्तिकार्ये च कृते 'शौल्कशालिकः' इति रूपम् । विद्यायोनि । तत आगत इत्येव । औपाध्यायकः । उपाध्यायादागतः 'औपाध्यायकः' इत्यत्र "विद्यायोनिसम्बन्धेभ्यो वुञ्" इति वुञि अलोपे सुपो लुकि, "युवोरनाकौ" इति वुस्थाने अकादेशे भत्वे अलोपे आद्यचो वृद्धौ विभक्तिकार्ये च तत्सिद्धिः । एवं पितामहादागतः 'पैतामहकः' इत्यत्रापि बोध्यम् । हेतुमनुष्येभ्यः । तत आगत इत्येव । हेतुभ्य उदाहरति—समरूप्यमिति । अत्र "हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः" इति रूप्ये, सुपो लुकि, विभक्तिकार्यम् । समीयम् । पक्षे "गहादिभ्यश्च" इति छे, छस्य ईयादेशः । एवं विषमादागतम्-'विषमरूप्यम्' 'विषमीयम्' इति । मनुष्यवाचिन उदाहरति—देवदत्तरूप्यम् । पक्षे "तत आगतः" इत्यणि, सुपो लुकि, भत्वे अलोपे, वृद्धौ विभक्तिकार्ये च 'दैवदत्तम्' इति । मयट् च । उक्तविषये इति शेषः । सममयम् । समादागतम् सममयम् इत्यत्र "मयट् च" इति मयटि टलोपे सुपो लुकि

हिमवतः प्रभवति हैमवती गङ्गा । तद्गच्छति पथिदूतयोः ४।३।८५ स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा ॥ अभिनिष्क्रामति द्वारम् ४।३।८६ स्रुघ्नमभिगच्छति स्रौघ्नं कान्यकुब्जद्वारम् । अधिकृत्य कृते ग्रन्थे ४।३।८७ शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः ॥ सोऽस्य निवासः ४।३।८९ स्रुघ्नो निवासोऽस्य स्रौघ्नः । तेन प्रोक्तम् ४।३।१०१ पाणिनिना प्रोक्तं पाणिनीयम् ॥ तस्येदम् ४।३।१२० उपगोरिदम् औपगवम् ॥ इति शैषिकाः ।

---

विभक्तिकार्ये च 'समयम्' इति । एवं 'देवदत्तमयम्' इत्यत्रापि । प्रभवति । तत इत्येव । आगत इति तु निवृत्तम् । प्रभवतीत्यर्थे पञ्चम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । प्रभवः प्रथमप्रकाशः । हिमवतः प्रभवतीति । हिमवति प्रथमं प्रकाशत इत्यर्थः । "भुवः प्रभवः" इत्यपादानत्वम् । हैमवती गङ्गा । अत्र "प्रभवति" इत्यणि, सुपो लुकि, "तद्धितेष्वचामादेः" इत्याद्यचो वृद्धौ संयोगे हैमवत इति जाते "टिड्ढाणञ्" इति ङीपि, ङपयोर्लोपे भत्वे अलोपे संयोगे विभक्तिकार्ये च कृते 'हैमवती गङ्गा' इति सिद्धम् । तद्गच्छति पथिदूतयोः । गच्छतीत्यर्थे द्वितीयान्तात्प्रत्ययाः स्युः, स चेद्गन्ता पन्थाः दूतो वा, इत्यर्थः । स्रौघ्नः । अत्र द्वितीयान्तात् "तद्गच्छति पथिदूतयोः" इत्यण् । अभिनिष्क्रामति । तदित्येव । द्वितीयासमर्थादभिनिष्क्रामतीत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्तदभिनिष्क्रामति द्वारं चेद्भवति । स्रौघ्नमिति । अत्र द्वितीयान्ताद् स्रुघ्नशब्दात् निष्क्रामति इत्येतस्मिन्नर्थे "अभिनिष्क्रामति द्वारम्" इत्यनेन सूत्रेण अण् । कान्येति । कान्यकुब्जाख्यजनपदस्य द्वारमित्यर्थः । अधिकृत्य । तदित्येव । अधिकृत्य कृतो ग्रन्थः इत्यर्थे द्वितीयान्तात्प्रत्ययाः स्युरित्यर्थः । शारीरकमिति । शरीरस्यायं शारीरः जीवात्मा, तमित्यर्थः । "तस्येद"मित्यणन्तात् स्वार्थे कः । शारीरकीय इति । अत्र "अधिकृत्य कृते ग्रन्थे" इति सूत्रोक्तार्थात् द्वितीयान्तात् शारीरकशब्दात् "वृद्धाच्छः" इति छे, सुपो लुकि, "आयनेयीनीयियः" इति छस्य ईयादेशे भसंज्ञायाम् अलोपे संयोगे विभक्तिकार्ये च कृते 'शारीरकीयः' इति सिद्धम् । सोऽस्य निवासः । स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं निवासश्चेत्स भवति । निवसन्त्यस्मिन्निवासो देश उच्यते । स्रुघ्नो निवास इति । निवासाधिकरणमित्यर्थः । स्रौघ्नः । "सोऽस्य निवासः" इति अण् । तेन प्रोक्तम् । तेन इति तृतीयासमर्थात्प्रोक्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । पाणिनीयम् । अत्र "तेन प्रोक्तम्" इति सूत्रोक्तार्थात् तृतीयान्तात् पाणिनीयशब्दात् प्रोक्तमित्येतस्मिन्नर्थे "वृद्धाच्छः" इति छे, छस्य ईयादेशे सुपो लुकि, भत्वे अलोपे विभक्तिकार्ये च कृते 'पाणिनीयम्' इति सिद्ध्यति । तस्येदमिति । इदमित्यर्थे षष्ठ्यन्तादणादयः साधारणप्रत्ययाः राष्ट्रावारेत्यादिभिर्विशिष्य विहिताः घादयश्च प्रत्यया यथाविहितं स्युरित्यर्थः । औपगवमिति । उपगुशब्दात्षष्ठ्यन्तात् इदमित्यस्मिन्नर्थे "तस्येदम्" इति सूत्रेण अणि, णगते सुपो लुकि, भसंज्ञायाम्

## अथ प्राग्दीव्यतीयाः।

तस्य विकारः ४।३।१३४ ( अश्मनो विकारे टिलोपो वक्तव्यः ) अश्मनो विकार आश्मः। भास्मनः। मार्तिकः॥ अवयवे च प्राण्योषधिवृक्षेभ्यः ४।३।१३५ चाद्विकारे। मयूरस्यावयवो विकारो वा मायूरः। मौर्वं काण्डं भस्म वा। पैप्पलम्। मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ४।३।१४३ प्रकृतिमात्रान्मयड् वा स्यात्, विकारावयवयोः। अश्ममयम्, आश्मनम्। अभक्ष्येत्यादि किम्?

---

"ओर्गुणः" इति उवर्णान्त-उपगुशब्दस्य गुणे अवादेशे आद्यचो वृद्धौ संयोगे विभक्तिकार्ये च कृते तत्सिद्धिः। इति शैषिकप्रकरणम्।

तस्य विकारः। विक्रियते इति विकारः, कर्मणि घञ्। प्रकृतेरवस्थान्तरात्मिका विक्रिया, तस्यामित्यर्थः। तस्येति षष्ठ्यन्तात् विकारेऽर्थे अणादयः साधारणा वक्ष्यमाणाश्च वैशेषिका यथाविहितं स्युरित्यर्थः। अश्मनो विकार इति। विकारार्थकप्रत्यये परे अश्मन् शब्दस्य टिलोपो वक्तव्य इत्यर्थः। "अन्" इति प्रकृतिभावापवादः। आश्मः। अश्मनो विकारः—आश्मः इत्यत्र "तस्य विकारः" इत्यणि "नस्तद्धिते" इति टिलोपे प्राप्ते "अन्" इति टिलोपाऽभावे "अश्मनो विकारे टिलोपो वक्तव्यः" इति वार्तिकेन टिलोपे संयोगे "तद्धितेष्वचामादेः" इति वृद्धौ विभक्तिकार्ये च कृते 'आश्मः' इति सिद्धम्। भास्मनः। अश्मनो विकारः—भास्मनः इत्यत्र "तस्य विकारः" इत्यणि, णन्ते भत्वे "नस्तद्धिते" इति टिलोपे प्राप्ते "अन्" इति टिलोपाऽभावे वृद्धौ विभक्तिकार्ये च कृते 'भास्मनः' इति सिद्धम्। मार्तिकः। मृत्तिकाया विकारः 'मार्तिकः' इत्यत्र "तस्य विकारः" इति अणि, सुपो लुकि भत्वे आलोपे आद्यचो वृद्धौ विभक्तिकार्ये च कृते 'मार्तिकः' इति सिद्धम्। अवयवे च प्राण्योषधि। प्राणिवाचिन ओषधिवाचिनो वृक्षवाचिनश्च षष्ठ्यन्तेभ्योऽवयवे विकारे च अणादयः साधारणा उक्ताः वक्ष्यमाणाश्च प्रत्ययाः यथाविहितं स्युः। अन्येभ्यस्तु विकारमात्र इत्यर्थः। मायूरः। अत्र प्रकृतसूत्रेण अण्। मौर्वमिति। मूर्वा ओषधिविशेषः। तस्या अवयवो विकारो वेत्यर्थः। औत्सर्गिकोऽण्। पैप्पलम्। पिप्पलः-अश्वत्थः, तस्यावयवो विकारो वेत्यर्थः। पिप्पलशब्दात् षष्ठ्यन्तात् "अवयवे च प्राण्योषधिवृक्षेभ्यः" इत्यणि, सुपो लुकि, भत्वे अलोपे आद्यचो वृद्धौ, विभक्तिकार्ये च तत्सिद्धिः। मयड्वैतयोः। अधिकारादेव विकारावयवयोरिति सिद्धेरेतयोरिति वचनम् उक्तवक्ष्यमाणापवादविषयेष्वपि पक्षे मयडर्थम्, इति भाष्ये स्पष्टम्। तेन बिल्वमयं बैल्वमित्यादि सिद्ध्यतीत्यभिप्रेत्य आह—प्रकृतिमात्रादिति। सर्वस्याः प्रकृतेरित्यर्थः। अश्ममयम्। अश्मनो विकारः 'अश्ममयम्' इत्यत्र "मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" इति मयटि, सुपो लुकि, अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् "नलोपः प्रातिपदिकान्तस्य" इति नलोपे

मौद्गः सूपः । कार्पासमाच्छादनम् ॥ नित्यं वृद्धशरादिभ्यः ४।३।१४४ आम्रमयम् ॥ गोश्च पुरीषे ४।३।१४५ गोः पुरीषं गोमयम् ॥ गोपयसोर्यत् ४।३।१६० गव्यम् । पयस्यम् ॥ इति विकारार्थाः ( प्राग्दीव्यतीयाः ) ।

## अथ ठगधिकारः ।

प्राग्वहतेष्ठक् ४।४।१ तद्वहतीत्यतः प्राक् ठगधिक्रियते ॥ तेन दीव्यतिखनतिजयतिजितम् ४।४।२ अक्षैर्दीव्यति खनति जयति जितं वा आक्षिकः ॥ संस्कृतम्

विभक्तिकार्ये च कृते 'अश्ममयम्' इति सिद्धम् । आश्मनम् । अश्मनो विकारोऽवयवो वेत्यर्थः । "अन्" इति प्रकृतिभावान्न टिलोपः । मौद्गः सूपः । मुद्गानां विकारः इत्यत्र भक्ष्यत्वान्मयडभावे "तस्य विकारः" इत्यणि वृद्धौ च सत्यां शेषं पूर्ववत् । कार्पासम् । कार्पासानां विकारः इत्यत्र आच्छादनत्वान्मयडभावे "तस्य विकारः" इत्यणि वृद्धौ, विभक्तिकार्ये च पूर्ववत् । नित्यं वृद्धशर । मयडिति शेषः । उक्तविकल्पस्यापवादः । आम्रमयम् । आम्राणां विकारोऽवयवो वा 'आम्रमयम्' इत्यत्र "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" इत्याम्रशब्दस्य वृद्धसंज्ञत्वे "नित्यं वृद्धशरादिभ्यः" इति मयटि टलोपे सुपो लुकि विभक्तिकार्ये च तत्सिद्धिः । गोश्च पुरीषे । नित्यं मयडित्यनुवर्तते । गोमयमिति । गोः पुरीषम् 'गोमयम्' इत्यत्र गोशब्दात् षष्ठ्यन्तात् पुरीष इत्यस्मिन्नर्थे मयटि सुपो लुकि, टगते विभक्तिकार्ये च 'गोमयम्' इति रूपम् । यद्यपि पुरीषं न गोर्विकारो नाप्यवयवः । तथापि तस्येदमित्यर्थेऽयं प्रत्ययः । गोपयसोर्यत् । गव्यमिति । गोर्विकारोऽवयवो वेत्यर्थः । "वान्तो यि" इत्यवादेशः । पयस्यम् । पयसो विकारः 'पयस्यम्' इत्यत्र "गोपयसोर्यत्" इति यति विभक्तिकार्ये च तत्सिद्धिः ।

इति प्राग्दीव्यतीयाः ।

प्राग्वहतेष्ठक् । वहतीत्येकदेशेन "तद्वहति रथयुगप्रासङ्गम्" इति सूत्रं परामृश्यते इत्यभिप्रेत्याह—तद्वहतीत्यत इति । तेन दीव्यति । तेनेति तृतीयासमर्थाद्दीव्यति खनति जयति जितमित्येतेष्वर्थेषु ठक् प्रत्ययो भवति । आक्षिकः । अक्षशब्दात् तृतीयान्तात् दीव्यति, खनति, जयति, जितम् , इत्येतेषु अर्थेषु "तेन दीव्यतिखनतिजयतिजितम्" इति ठकि कृते 'अक्ष भिस् ठक्' इति जाते कलोपे "सुपो धातुप्रातिपदिकयोः" इति भिसो लुकि, "ठस्येकः" इति ठस्य इकादेशे "यचि भम्" इति भसंज्ञायां "यस्येति च" इति अलोपे संयोगे च कृते "किति च" इति आद्यचो वृद्धौ "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसंज्ञायां तस्मात्सौ, सस्य रुत्वे रेफस्य विसर्गत्वे च 'आक्षिकः' इति सिद्धम् । संस्कृतम् । तेनेति तृतीयासमर्थात्संस्कृतमित्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दाधिकम् । 'दधि टा' इत्यस्मात् "संस्कृतम्" इति सूत्रेण ठकि, कलोपे सुपो लुकि, ठस्येकादेशे भत्वे "यस्येति च" इति इलोपे, "किति च" इति आद्यचो वृद्धौ, संयोगे विभक्तिकार्ये च

४।४।३ दध्ना संस्कृतं दाधिकम्। मारीचिकम्। तरति ४।४।५ तेनेत्येव। उडुपेन तरति औडुपिकः॥ चरति ४।४।८ तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात्। हस्तिना चरति हास्तिकः। दध्ना चरति दाधिकः॥ संसृष्टे ४।४।२२ दध्ना संसृष्टं दाधिकम्॥ उञ्छति ४।४।३२ बदराण्युञ्छति बादरिकः॥ रक्षति ४।४।३३ समाजं रक्षति सामाजिकः॥ शब्ददर्दुरं करोति ४।४।३४ शब्दं करोति शाब्दिकः। दर्दुरं करोति दार्दुरिकः॥ धर्मं चरति ४।४।४१ धार्मिकः (अधर्माच्चेति वक्तव्यम्) आधर्मिकः॥ शिल्पम् ४।४।५५ मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः॥

---

तत्सिद्धिः। एवं मरीचेन संस्कृतस्य 'मारीचिकम्' इति। तरति। तेनेति तृतीयासमर्थात् तरति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। औडुपिकः। "तरति" इत्यनेन ठकि, 'उडुप टा ठक्' इति स्थिते पूर्ववत्साधनिका। चरति। गच्छति—भक्षयतीति। 'चर गतिभक्षणयोः' इति चरधातोरर्थद्वये वृत्तेरिति भावः। हास्तिक इति। ठकि इके "नस्तद्धिते" इति टिलोपः। दाधिकः। दध्ना चरति—भक्षयति इत्यर्थे, ठकि, इके, इलोपे वृद्धिः। संसृष्टे। संसृष्टमित्यर्थे तृतीयान्तात् ठक् इत्यर्थः। दाधिकम्। "संसृष्टे" इति ठकि पूर्ववत् साधनिका। उञ्छति। "तत्प्रत्यनुपूर्वमीपलोमकूलम्" इत्यतस्तत् इत्यनुवर्तते। तत् इति द्वितीयान्तात् उञ्छतीत्यर्थे ठगित्यर्थः। बादरिकः। अत्र द्वितीयान्तात् बदरशब्दात् "उञ्छति" इति ठकि, कगते, सुपो लुकि, ठस्येकादेशे भत्वे अलोपे "किति च" इति आद्यचो वृद्धौ विभक्तिकार्ये च तत्सिद्धिः। रक्षति। तदिति द्वितीयासमर्थात् रक्षतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। सामाजिकः। 'समाज अम्' इत्यस्मात् "रक्षति" इत्यनेन ठकि, शेषं पूर्ववत्। शब्ददर्दुरं करोति। शब्दं करोति दर्दुरं करोतीति विग्रहे द्वितीयान्ताट्ठगित्यर्थः। इह शब्दविषये प्रकृतिप्रत्ययविभागपूर्वकज्ञाने करोतिर्वर्तते, व्याख्यानात्। तेनेह न, शब्दं करोति खरः। शाब्दिकः। शब्दं करोतीत्यर्थे ठक्। दार्दुरिकः। दर्दुरं करोति इत्यर्थे प्रकृतसूत्रेण ठक् शेषं पूर्ववत्। धर्मं चरति। धर्मशब्दात्तदिति द्वितीयासमर्थाच्चरतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। धार्मिकः। धर्मं चरतीति धार्मिकः इति विग्रहः। अत्र प्रकृतसूत्रेण ठक्। शेषं पूर्ववत्। अधर्माच्चेति। 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तदन्ताग्रहणादप्राप्ते आरम्भः। आधर्मिकः। अधर्ममाचरति आधर्मिकः इत्यत्र 'अधर्माच्चेति वक्तव्यम्' इति वार्तिकेन ठकि, ठस्येकादेशे भत्वे, अलोपे वृद्धौ संयोगे विभक्तिकार्ये च 'आधर्मिकः' इति सिद्धम्। शिल्पम्। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं शिल्पं चेत्तद्भवति। मार्दङ्गिकः। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः इत्यत्र "शिल्पम्" इति ठकि कलोपे, सुपो लुकि, ठस्येकादेशे भत्वे, अलोपे, संयोगे वृद्धौ, विभक्तिकार्ये च 'मार्दङ्गिकः' इति सिद्धम्। प्रहरणम्। तदस्येत्येव। तदिति प्रथमासमर्थादस्येति

प्रहरणम् ४।४।५७ तदस्येत्येव। असिः प्रहरणमस्य आसिकः। धानुष्कः॥ शील-म् ४।४।६१ अपूपभक्षणं शीलमस्य आपूपिकः॥ निकटे वसति ४।४।७३ नैक-टिको भिक्षुकः। इति ठगधिकारः॥ (प्राग्वहतीयाः)।

## अथ यदधिकारः।

प्राग्घिताद्यत् ४।४।७५ तस्मै हितमित्यतः प्राग् यदधिक्रियते॥ तद्वहति रथयुगप्रासङ्गम् ४।४।७६ रथं वहति रथ्यः। युग्यः। प्रासङ्ग्यः॥ धुरो यड्ढकौ ४।४।७७ "हलि च" इति दीर्घे प्राप्ते। न भकुर्छुराम् ८।२।७९ भस्य कुर्छु-

---

षष्ठ्यर्थे ठ प्रत्ययो भवति, यत्तत्प्रथमासमर्थं प्रहरणं चेत्तद्भवति। प्रह्रियतेऽनेनेति प्रहरणमायुधम्। आसिकः। असिः प्रहरणमस्य 'आसिकः' इत्यत्र "प्रहरणम्" इति ठकि, ठस्येकादेशे सुपो लुकि, भत्वे, अलोपे, संयोगे, वृद्धौ विभक्तिकार्ये च तत्सिद्धिः। धानुष्कः। धनुः प्रहरणमस्य 'धानुष्कः' इत्यत्र "प्रहरणम्" इति ठकि, कगते, सुपो लुकि, "इसुसुक्तान्तात्कः" इति ठस्य क आदेशे "इणः षः" इति विसर्गस्य षत्वे "किति च" इत्याद्यचो वृद्धौ, संयोगे विभक्तिकार्ये च तत्सिद्धिः। शीलम्। तदस्येत्येव। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं शीलं चेद्भवति। शीलं स्वभावः। भक्षणक्रिया तद्विशेषणं च शीलं तद्धितवृत्त्या-वन्तर्भवति। आपूपिकः। अत्र अपूपशब्दात्प्रथमान्तात् "शीलम्" इति ठकि, ठस्येकादेशे, आद्यचो वृद्धिः, शेषं पूर्ववत्। निकटे वसति। निकटशब्दात्सप्तमीसमर्था-द्वसतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। यस्य शास्त्रतो निकटवासो निषिद्धस्तत्रायं विधिः। आरण्यकेन भिक्षुणा ग्रामात्क्रोशे वस्तव्यमिति शास्त्रम्। नैकटिको भिक्षुः। अत्र "निकटे वसति" इति ठकि, ठस्येकादेशे, आद्यचो वृद्धिः, शेषं पूर्ववत्। इति ठगधिकारः॥ (प्राग्वहतीयाः)।

प्राग्घिताद्यत्। हितशब्दः तद्धितसूत्रपरः। तदाह—तस्मै हितमिति। तद्वहति रथ। रथादिवहतीत्यर्थे द्वितीयान्तात् रथ युग प्रासङ्ग इति त्रयात् यत्स्यादित्यर्थः। रथ्यः। रथं वहति इत्यत्र "तद्वहति रथयुगप्रासङ्गम्" इति यति, तलोपे सुपो लुकि "यचि भम्" इति भत्वे "यस्येति च" इति अकारलोपे विभक्तिकार्ये च कृते 'रथ्यः' इति सिद्धम्। एवं युगं वहति 'युग्यः'। प्रासङ्गं वहति 'प्रासङ्ग्यः' इत्यत्र बोध्यम्। धुरो यड्ढकौ। धुर् शब्दाद्द्वितीयान्तात् वहतीत्यर्थे यत् ढक् च स्यादित्यर्थः। न भकुर्छुराम्। "र्वोरुपधायाः" इत्यतः उपधाया इति दीर्घ इति चानुवर्तते। तदाह—भस्येत्यादिना। धुर्यः। धुरं वहति 'धुर्यः' इत्यत्र "धुरो यड्ढकौ" इति यति, "हलि च" इत्युपधा-दीर्घत्वे प्राप्ते "न भकुर्छुराम्" इति भत्वात् दीर्घाभावे विभक्तिकार्ये च कृते 'धुर्यः' इति सिद्धम्। ढकि, "आयनेयीनीयियः" इति ढस्य स्थाने एयादेशे "किति च" इति

रोश्चोपधाया इको दीर्घो न स्यात् । धुर्यः, धौरेयः ॥ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु ४।४।९१ नावा तार्यं नाव्यं जलम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन आनाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् ॥ तत्र साधुः ४।४।९८ अग्रे साधुः अग्रयः । सामसु साधुः सामन्यः । "ये चाभावकर्मणोः" इति प्रकृतिभावः । कर्मण्यः । शरण्यः । सभाया यः ४।४।१०५ सभ्यः । इति यतोऽवधिः । ( प्राग्घितीयाः ) ।

---

## अथ छयतोरधिकारः ।

प्राक् क्रीताच्छः ५।१।१। तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ॥ उगवादिभ्यो यत् ५।१।२। प्राक् क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्च यत् स्याच्छस्या-

---

वृद्धौ विभक्तिकार्ये च 'धौरेयः' इति सिद्धम् । नौवयोधर्म । नौ, वयस्, धर्म, विष, मूल, मूल, सीता, तुला एभ्योऽष्टभ्यः क्रमात् तार्ये, तुल्ये, प्राप्ये, वध्ये, आनाम्ये, समे, समिते, सम्मिते चार्थे यत्स्यादित्यर्थः। नाव्यम् । नावा तार्यं 'नाव्यम्' इत्यत्र "नौवयोधर्मविषमूल" इत्यादिना यति "वान्तो यि प्रत्यये" इत्यावादेशे विभक्तिकार्ये च 'नाव्यम्'—जलम् । वयस्यः । अत्र तुल्येऽर्थे प्रकृतसूत्रेण यत् । शेषं सुगमम् । तत्र साधुः । तत्रेति सप्तमीसमर्थात्साधुरित्येतस्मिन्नर्थे यत्प्रत्ययो भवति । साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकारकः । अग्रयः । अग्रे साधुः 'अग्र्यः' इत्यत्र "तत्र साधुः" इति यति, भत्वे, अलोपे विभक्तिकार्ये च तत्सिद्धिः । सामन्यः । सामसु साधुः 'सामन्यः' इत्यत्र "तत्र साधुः" इति यति, तल्लोपे सुपो लुकि, भत्वे "नस्तद्धिते" इति टिलोपे प्राप्ते "ये चाऽभावकर्मणोः" इति प्रकृतिभावे संयोगे विभक्तिकार्ये च तत्सिद्धिः । एवं कर्मणि साधुः—'कर्मण्यः' शरणे साधुः 'शरण्यः' इति बोध्यम् । सभाया य इति । सभाशब्दाद् यः प्रत्ययो भवति "तत्र साधुः" इत्येतस्मिन्नर्थे । यतोऽपवादः । स्वरे विशेषः । सभ्यः । सभायां साधुः 'सभ्यः' इत्यत्र "सभाया यः" इति यप्रत्यये सुपो लुकि, भत्वे अलोपे विभक्तिकार्ये च तत्सिद्धिः । इति यतोऽवधिः । ( प्राग्घितीयाः ) ।

प्राक्क्रीताच्छः । क्रीतशब्दस्तद्घटितसूत्रपरः । तदाह—तेन क्रीतमिति । "तेन क्रीतम्" इत्यतः प्राक् येषु सूत्रेषु अर्था एव निर्दिश्यन्ते न तु प्रत्ययाः, तेषु छ इत्युपस्थितं भवतीति यावत् । उगवादिभ्यो यत् । उश्च गवादयश्च इति द्वन्द्वात्पञ्चमी । उवर्णान्तादिति । प्रातिपदिकविशेषणत्वात् तदन्तविधिः । "उगिद्वर्णग्रहणवर्जम्" इत्युक्तेः प्रत्ययविधावपि तदन्तविधिरिति भावः । शङ्कव्यम् । शङ्कवे हितं 'शङ्कव्यम्' इत्यत्र "प्राक् क्रीताच्छः" इति छे प्राप्ते तं सम्बाध्य "उगवादिभ्यो यत्" इति यति, तगते सुपो लुकि,

पवादः । शङ्कवे हितं शङ्कव्यं दारु । गव्यम् । ( नाभि नभं च ) । नभ्योऽक्षः । नभ्यमञ्जनम् ॥ **तस्मै हितम् ५।१।५।** वत्सेभ्यो हितो वत्सीयो गोधुक् ॥ **शरीरावयवाद्यत् ५।१।६।** दन्त्यम् । कण्ठ्यम् । नस्यम् ॥ **आत्मन्विश्वजनभोगोत्तरपदात् खः ५।१।९।** **आत्माध्वानौ खे ६।४।१६९।** एतौ खे प्रकृत्या स्तः। आत्मने हितम् आत्मनीनम् । विश्वजनीनम् ॥ मातृभोगीणः । छयतोः पूर्णोऽवधिः ।

( प्राग्घितीयाः ) ॥

---

"यचि भम्" इति भत्वे भत्वात् "ओर्गुणः" इति गुणे "वान्तो यि प्रत्यये" इत्यवादेशे विभक्तिकार्ये च कृते 'शङ्कव्यम्' इति। एवं गवे हि 'गव्यम्' इति। अत्र यति परे "वान्तो यि प्रत्यये" इति वान्तादेशो बोध्यः। नाभि नभं चेति। नाभिशब्दो यतं लभते नभादेशं चेत्यर्थः। नभ्योऽक्षः। नाभये हितम् 'नभ्यः' इत्यत्र "उगवादिभ्यो यत्" इति यति, सुपो लुकि, "नाभिनभं च" इति नाभेर्नभादेशे भत्वे, अलोपे विभक्तिकार्ये च 'नभ्योऽक्षः' इति। एवं नभ्यम्–अञ्जनम्। तस्मै हितम्। तस्मै इति चतुर्थीसमर्थाद्धितमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। वत्सीयो गोधुक्। वत्सेभ्यो हितम् 'वत्सीयः' इत्यत्र "तस्मै हितम्" इति छे सुपो लुकि, "आयनेयीनीयियः" इति छस्य स्थाने ईयादेशे, भत्वे अलोपे विभक्तिकार्ये च तत्सिद्धिः। शरीरावयवाद्यत्। शरीरं प्राणिकायः। शरीरावयववाचिनः प्रातिपदिकाद्यत्प्रत्ययो भवति तस्मै हितमित्येतस्मिन्न्विषये। छस्यापवादः। दन्त्यम्। दन्तेभ्यो हितम् 'दन्त्यम्' इत्यत्र "शरीरावयवाद्यत्" इति यति तलोपे भत्वे अलोपे विभक्तिकार्ये च 'दन्त्यम्' इति भवति। एवं कण्ठ्यम्। नस्यम्। नासिकायै हितम् 'नस्यम्' इत्यत्र "शरीरावयवाद्यत्" इति यति "पद्दन्नोमास्" इति नासिकायाः स्थाने नसादेशे शेषं पूर्ववत्। आत्मन्विश्वजन। आत्मन्, विश्वजन, भोगोत्तरपद एभ्यो हितमित्यर्थे खः स्यादित्यर्थः। छस्यापवादः। आत्माध्वानौ खे। प्रकृत्या स्त इति। "प्रकृत्यैकाच्" इत्यतस्तदनुवृत्तेरिति भावः। आत्मनीनम्। आत्मने हितम् 'आत्मनीनम्' इत्यत्र "आत्मन्विश्वजनभोगोत्तरपदात्खः" इति खे, "आयनेयीनीयियः" इति खस्य स्थाने ईनादेशे भत्वे, भत्वाद् "नस्तद्धिते" इति टेर्लोपे प्राप्ते "आत्माध्वानौ खे" इति प्रकृतिभावे संयोगे विभक्तिकार्ये च कृते तत्सिद्धिः। विश्वजनाय हितम् विश्वजनीनम्, अत्र प्रकृतसूत्रेण खे, खस्य ईनादेशः। मातृभोगीणः। मातुर्भोगः शरीरं तस्मै हितम्—मातृभोगाय हितम् इत्यत्र "आत्मन्विश्वजनभोगोत्तरपदात् खः" इति खे "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति खस्य ईनादेशे भत्वे अलोपे संयोगे नस्य णत्वे विभक्तिकार्ये च कृते 'मातृभोगीणः' इति सिद्धम्।

इति छयतोः पूर्णोऽवधिः। ( प्राग्घितीयाः )।

## अथ ठञधिकारः ।

प्राग्वतेष्ठञ् ५।१।१८। तेन तुल्यमिति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते ॥ तेन क्रीतम् ५।१।३७। सप्तत्या क्रीतं साप्ततिकम् । प्रास्थिकम् ॥ तस्येश्वरः ५।१।४२। सर्वभूमिपृथिवीभ्यामणञौ स्तः । अनुशतिकादीनां च ७।३।२०। सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः ॥ पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ५।१।५९। एते रूढिशब्दा निपात्यन्ते ॥ तदर्हति

---

प्राग्वतेष्ठञ् । वतिशब्दस्तद्धटितसूत्रपरः । तदाह—तेन तुल्यमिति । "तेन तुल्यम्" इत्यतः प्राक् येषु सूत्रेषु अर्था एव निर्दिश्यन्ते न तु प्रत्ययाः, तत्र ठञित्युपतिष्ठत इति यावत् । तेन क्रीतम् । ठञादयस्त्रयोदश प्रत्ययाः प्रकृतास्तेषामितः प्रभृति समर्थविभक्तयः, अर्थाश्च निर्दिश्यन्ते । तेनेति तृतीयासमर्थात् क्रीतमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । साप्ततिकम् । अत्र "तेन क्रीतम्" इति ठञि, ञलोपे सुपो लुकि "ठस्येकः" इति ठस्येकादेशे भत्वे "यस्येति च" इति इकारलोपे, "तद्धितेष्वचामादेः" इति वृद्धौ विभक्तिकार्ये च कृते 'साप्ततिकम्' इति सिद्धम् । प्रास्थिकम् । प्रस्थेन क्रीतमिति विग्रहः । प्रकृतसूत्रेण ठञि शेषं पूर्ववत् । तस्येश्वरः । तस्येश्वरः इत्यर्थे षष्ठ्यन्तात् तत्र विदितः इत्यर्थे तु सप्तम्यन्तात् अणञौ स्त इत्यर्थः । अत्र "सर्वभूमिपृथिवीभ्याम्" इत्यनेनेति भावः । अनुशतिकादीनाञ्च । शैषिके व्याख्यातम् । सार्वभौमः । सर्वभूमेरीश्वरः 'सार्वभौमः' इत्यत्र "तस्येश्वरः" इत्यणि णकारे सुपो लुकि भत्वे इलोपे "अनुशतिकादीनाञ्च" इत्युभयपदवृद्धौ, संयोगे विभक्तिकार्ये च कृते "सार्वभौमः' इति सिध्यति । एवं पृथिव्याः ईश्वरः 'पार्थिव' इत्यत्र बोध्यम् । पङ्क्तिविंशति । रूढिशब्दा निपात्यन्ते इति । तदस्य परिमाणमित्यर्थे इति शेषः । पञ्च पादाः परिमाणमस्येत्यर्थे पञ्चन्शब्दात् तिप्रत्ययः प्रकृतेष्टिलोपः, चकारस्य कुत्वम् , अनुस्वारपरसवर्णौ, पङ्क्तिरिति रूपम् । दशानां वर्गः दशत् । "पञ्चद्दशतौ वर्गे वा" इति वक्ष्यते । द्वौ दशतः परिमाणमस्य सङ्घस्य इति 'विंशतिः' शतिच्प्रत्ययः प्रकृतेर्विन् भावः अनुस्वारश्च । त्रयो दशतः परिमाणमस्य 'त्रिंशत्' । त्रयाणां दशतां त्रिन् भावः शच्च प्रत्ययः। चत्वारो दशतः परिमाणमस्य सङ्घस्येति 'चत्वारिंशत्' । शत्प्रत्ययः प्रकृतेः चत्वारिंशद्भावश्च । पञ्च दशतः परिमाणमस्य सङ्घस्य 'पञ्चाशत्' शत्प्रत्ययः प्रकृतेः पञ्चादेशः । षड् दशतः परिमाणमस्य सङ्घस्य 'षष्टिः' । तिप्रत्ययः प्रकृतेः षष् जश्त्वाभावश्च । सप्त दशतः परिमाणमस्य सङ्घस्य 'सप्ततिः' तिप्रत्ययः, प्रकृतेः सप्तादेशः । अष्टौ दशतः परिमाणमस्य सङ्घस्य 'अशीतिः' तिप्रत्ययः, प्रकृतेः अशी इत्यादेशः । नव दशतः परिमाणमस्य सङ्घस्य 'नवतिः' तिप्रत्ययः प्रकृतेः नवादेशः । दश दशतः परिमाणमस्य सङ्घस्य 'शतम्' तप्रत्ययः प्रकृतेः शादेशश्च । एतत्सर्वं भाष्ये स्पष्टम् । 'एतान्यव्युत्पन्नप्रातिपदिकानि' इति तु भाष्यनिष्कर्षः । तदर्हति । अर्हतीत्यस्य योग्यो भवतीत्यर्थे अकर्मकत्वात्तदिति

५।१।६३। लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः। **दण्डादिभ्यो यत् ५।१।६६।** एभ्यो यत् स्यात्। दण्डमर्हति दण्ड्यः। अर्घ्यः। वध्यः। **तेन निर्वृत्तम् ५।१।७९।** अह्ना निर्वृत्तम् आह्निकम्॥ इति ठञोऽवधिः॥ (प्राग्वतीयाः)।

---

### अथ नञ्स्नञधिकारः।

**तेन तुल्यं क्रिया चेद्वतिः ५।१।११५।** ब्राह्मणेन तुल्यं ब्राह्मणवत् अधीते। क्रिया चेदिति किम्? गुणतुल्ये माभूत्, पुत्रेण तुल्यः स्थूलः। **तत्र तस्येव ५।१।११६।** मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। चैत्रस्येव चैत्रवन्मैत्रस्य भावः॥ **तस्य भावस्त्वतलौ ५।१।११९** प्रकृतिजन्यबोधे प्रकारो भावः। गोर्भावो गोत्वम्,

---

द्वितीया न स्यात्। इष्यते तु द्वितीयान्तादेव प्रत्ययः। तत्राह—लब्धुमिति। श्वैतच्छत्रिकः। श्वेतच्छत्रमर्हति 'श्वैतच्छत्रिकः' इत्यत्र "तदर्हति" इति ठञि, अगते सुपो लुकि, ठस्येकादेशे भत्वे अलोपे आद्यचो वृद्धौ विभक्तिकार्ये च तत्सिद्धिः। दण्डादिभ्यः। अर्हतीत्यर्थे द्वितीयान्ताद्दण्डादिगणपठिताद्यत् स्यादित्यर्थः। दण्ड्यः। दण्डमर्हति 'दण्ड्यः' इत्यत्र "दण्डादिभ्यो यत्" इति यति तगते सुपो लुकि, भत्वे अलोपे विभक्तिकार्ये च तत्सिद्धिः। अर्घ्य इति। मूल्यं पूजाविधिं वार्हतीत्यर्थः। 'मूल्ये पूजाविधावर्घः' इत्यमरः। वध्य इति। वधमर्हतीत्यर्थः। तेन निर्वृत्तम्। तेनेति तृतीयासमर्थात्कालवाचिनः प्रातिपदिकान्निर्वृत्तमित्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। आह्निकम्। अह्ना निर्वृत्तम् 'आह्निकम्' इत्यत्र "तेन निर्वृत्तम्" इति ठञि, अलोपे, "ठस्येकः" इति ठस्येकादेशे भत्वे "नस्तद्धिते" इति टिलोपे प्राप्ते "अह्नष्टखोरेव" इति नियमात् टिलोपे वारिते संयोगे आद्यचो वृद्धौ विभक्तिकार्ये च कृते 'आह्निकम्' इति सिद्धम्।

इति ठञोऽवधिः। (प्राग्वतीयाः)।

तेन तुल्यम्। तेनेति तृतीयासमर्थात्तुल्यमित्यर्थे वतिः प्रत्ययो भवति। यत्तुल्यं क्रिया चेत्सा भवति। ब्राह्मणवत्। ब्राह्मणेन तुल्यं 'ब्राह्मणवत्' इत्यत्र "तेन तुल्यं क्रिया चेद्वतिः" इति वतौ, इलोपे, सुपो लुकि, "कृत्तद्धितसमासाश्च" इति प्रातिपदिकत्वे सौ समागते "तसिलादिष्वाकृत्वसुचः" इति अव्ययत्वे "अव्ययादाप्सुपः" इति सोर्लुकि च 'ब्राह्मणवत्' इति भवति। तत्र तस्येवेति। तत्रेवेति तस्येवेति चार्थे सप्तम्यन्तात् षष्ठ्यन्ताच्च वतिः स्यादित्यर्थः। मथुरावत्। मथुरायामिव 'मथुरावत्' अत्र "तत्र तस्येव" इति वतौ इलोपे सुपो लुकि विभक्तिकार्ये च तत्सिद्धिः। चैत्रवत्। अत्र षष्ठ्यन्ताद्वतिर्बोध्या। तस्य भावः। षष्ठ्यन्ताद्भाव इत्यर्थे त्वतलौ स्त इत्यर्थः। प्रकृतिजन्यबोधे इति। त्वतल्प्रत्ययौ यत उत्पत्स्येते तस्मात्प्रकृतिभूतशब्दात् व्यक्तिबोधे

गोता । त्वान्तं क्लीबम् । तलन्तं स्त्रियाम् ॥ आ च त्वात् ५।१।१२०। ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थमिदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रियाः भावः स्त्रैणम्, स्त्रीत्वम् , स्त्रीता । पौंस्नम्, पुंस्त्वम्, पुंस्ता ॥ पृथ्वादिभ्य इमनिज्वा ५।१।१२२। वावचनमणादिसमावेशार्थम् । र ऋतो हलादेर्लघोः ६।४।१६१ हलादेर्लघोर्ऋकारस्य रः स्यात् इष्ठेमेयस्सु परतः ॥ टेः ६।४।१५५। भस्य टेर्लोपः स्यात् इष्ठेमेयस्सु । पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् । पृथोर्भावः प्रथिमा, पार्थवम् । म्रदिमा, मार्दवम् ॥ वर्णदृढादिभ्यः ष्यञ्च

---

जायमाने यत् जात्यादिकं विशेषणतया भासते तद्व्यक्तिविशेषणं भावशब्देन विवक्षितमित्यर्थः । गोत्वम् । गोता । गोर्भावः इत्यर्थे "तस्य भावस्त्वतलौ" इति त्वे विभक्तिकार्ये च 'गोत्वम्' इति । तलि "अजाद्यतष्टाप्" इति टापि, विभक्तिकार्ये च तत्सिद्धिः । आ च त्वात् । त्वतलावित्यनुवर्तते । आङ्मर्यादायाम् । तदाह—ब्रह्मणस्त्व इत्यतः प्रागिति । ननु "तस्य भावस्त्वतलौ" इत्यतः त्वतलोरुत्तरसूत्रेष्वनुवृत्त्यैव सिद्धेः अधिकारोऽयं व्यर्थ इत्यत आह—अपवादैरिति । "पृथ्वादिभ्य इमनिज्वा" इत्यादिविहितैरिमनिजादिभिरपवादैः समुच्चयार्थमित्यर्थः । स्त्रैणम् । स्त्रियो भावः 'स्त्रैणम्' इत्यत्र "तस्य भावस्त्वतलौ" इति त्वतलौ प्राप्तौ तौ सम्बाध्य "स्त्रीपुंसाभ्यां नञ्स्नञौ" इति नञि वृद्धौ विभक्तिकार्ये च 'स्त्रैणम्' इति । पक्षे "आ चत्वात्" इति त्वतलौ प्राप्तौ–स्त्रीत्वम् । स्त्रीता । एवमेव–पौंस्नम् , पुंस्त्वम् , पुंस्ता इति । पृथ्वादिभ्य इमनिज्वा । "तस्य भावः" इत्यनुवर्तते । पृथ्वादिभ्यः षष्ठ्यन्तेभ्यो भावे इमनिज्वा स्यादित्यर्थः । वावचनमणादिसमावेशार्थमिति । पृथुमृदुप्रभृतिषु "इगन्ताच्च लघुपूर्वात्" इत्यणः, चण्डखण्डादिषु गुणवचनलक्षणष्यञः, बालवत्सादिषु वयोवचनलक्षणस्य अञश्च औत्सर्गिकस्य समावेशार्थमित्यर्थः । र ऋतो हलादेः । र इति प्रथमान्तम् । इष्ठेमेयस्स्विति शेषपूरणम् । "तुरिष्ठेमेयस्सु" इत्यतस्तदनुवृत्तेरिति भावः । "अङ्गस्य" इत्यधिकृतम् । हलादेरङ्गस्य लघोः ऋकारस्य र इति रेफाकारसंघात आदेशः स्यात्, इष्ठनि इमनि ईयसि च परे इत्यर्थः । टेः । इष्ठेमेयस्सु इत्यनुवर्तते "अल्लोपोऽनः" इत्यतः लोप इति च । तदाह—टेर्लोपः स्यादिष्ठेमेयस्स्विति । प्रथिमा । अत्र "पृथ्वादिभ्य इमनिज्वा" इतीमनिचि, इचो लोपे 'पृथु इमन्' इति जाते "र ऋतो हलादेर्लघोः" इति ऋकारस्य स्थाने रेफादेशे भत्वे सत्वात् "टेः" इति थकारोत्तरवर्त्युकारलोपे संयोगे 'प्रथिमन्' इति जाते, तद्धितान्तत्वात्प्रातिपदिकत्वे सौ, सोर्लोपे, उपधादीर्घे नलोपे च कृते 'प्रथिमा' इति रूपम् । पक्षे–अणि सुपो लुकि, आद्यचो वृद्धौ, रपरे च भत्वात् "ओर्गुणः" इति गुणे अवादेशे विभक्तिकार्ये च 'पार्थवम्' इति । एवम् मृदोर्भावः—म्रदिमा, मार्दवम् । इत्यपि बोध्यम् । वर्णदृढादिभ्यः ष्यञ्च । षष्ठ्यन्तेभ्यो वर्णवाचिभ्यो दृढादिभ्यश्च भावे ष्यञ् च स्यादित्यर्थः । गुणवचनादेव सिद्धे इमनिजर्थं वचनम् । यो

५।१।१२३। चादिमनिच् । शौक्ल्यम्, शुक्लिमा । दार्ढ्यम्, द्रढिमा ॥ गुणवचनब्राह्मणादिभ्यः कर्मणि च ५।१।१२४। चात् भावे । जडस्य भावः कर्म वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् । आकृतिगणोऽयम् ॥ सख्युर्यः ५।१।१२६। सख्युर्भावः कर्म वा सख्यम् ॥ कपिज्ञात्योर्ढक् ५।१।१२७। कापेयम् । ज्ञातेयम् ॥ पत्यन्तपुरोहितादिभ्यो यक् ५।१।१२८। सैनापत्यम् । पौरोहित्यम् । इति त्वतलोरधिकारः । इति नञ्स्नञोरधिकारः ॥

## अथ भवनाद्यर्थकाः ।

धान्यानां भवने क्षेत्रे खञ् ५।२।१। भवन्त्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् ॥ व्रीहिशाल्योर्ढक् ५।२।२। व्रैहेयम् । शालेयम् ॥ हैय-

---

डीपर्थः । शौक्ल्यम् । शुक्लस्य भावः शौक्ल्यम् इत्यत्र "वर्णदृढादिभ्यः ष्यञ्च" इति ष्यञि "षः प्रत्ययस्य" इति षस्येत्संज्ञायां लोपे च ञलोपे भत्वे अलोपे आद्यचो वृद्धौ विभक्तिकार्ये च तत्सिद्धिः । पक्षे इमनिचि—शुक्लिमा । एवं दार्ढ्यम्, द्रढिमा । इत्यत्रापि ज्ञेयम् । गुणवचन । गुणोपसर्जनद्रव्यवाचिभ्यो ब्राह्मणादिभ्यश्च षष्ठ्यन्तेभ्यो भावे कर्मणि च अर्थे ष्यञित्यर्थः । जाड्यम् । जडस्य भावः कर्म वा 'जाड्यम्' इत्यत्र "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञि षञयोर्लोपे भत्वे अलोपे वृद्धौ विभक्तिकार्ये च 'जाड्यम्' इति । एवं मौढ्यम्, ब्राह्मण्यम् । सख्युर्यः । सखिशब्दात् षष्ठ्यन्तात् भावकर्मणोर्यः स्यादित्यर्थः । सख्यम् । प्रकृतसूत्रेण यः । कपिज्ञात्योर्ढक् । पञ्चम्यर्थे षष्ठी । आभ्यां षष्ठ्यन्ताभ्यां भावकर्मणोः ढगित्यर्थः । कापेयम् । कपेर्भावः कर्म वा 'कापेयम्' अत्र षष्ठ्यन्तात् प्रकृतसूत्रेण ढकि सुपो लुकि, कगते "आयनेयीनीयियः" इति ढस्य स्थाने एयादेशे भत्वे अलोपे "किति च" इति आद्यचो वृद्धौ विभक्तिकार्ये च कृते 'कापेयम्' इति सिद्धम् । एवम्—ज्ञातेयम् । पत्यन्त । पत्यन्तेभ्यः पुरोहितादिभ्यश्च षष्ठ्यन्तेभ्यो भावकर्मणोर्यक् स्यादित्यर्थः । सैनापत्यम् । सेनापतेर्भावः कर्म वा 'सैनापत्यम्' इत्यत्र "पत्यन्तपुरोहितादिभ्यो यक्" इति यकि, भत्वे इलोपे "किति च" इति वृद्धौ संयोगे विभक्तिकार्ये च तत्सिद्धम् । एवं, पौरोहित्यम् ।

इति नञ्स्नञोरधिकारः ।

धान्यानां भवने । धान्यवाचिभ्यः षष्ठ्यन्तेभ्यो भवने क्षेत्रेऽर्थे खञित्यर्थः । मौद्गीनम् । मुद्गशब्दात्षष्ठ्यन्तात् खञि, खस्य ईनादेशे, आद्यचो वृद्धिः । व्रीहिशाल्योर्ढक् । व्रीहिशब्दात् शालिशब्दाच्च षष्ठ्यन्ताद्भवने क्षेत्रेऽर्थे ढगित्यर्थः । खञोऽपवादः । व्रैहेयम् । व्रीहीणां भवनं क्षेत्रम् 'व्रैहेयम्' इत्यत्र "व्रीहिशाल्योर्ढक्" इति ढकि, "आयनेयीनी०" इति ढस्य स्थाने एयादेशे भत्वे अकारलोपे 'किति च' इति वृद्धौ विभक्तिकार्ये च कृते तत्सिद्धिः । एवं शालीनां भवनं क्षेत्रम् 'शालेयम्' इत्यत्र बोध्यम् ।

ङ्गवीनं संज्ञायाम् ५।२।२३। ह्योगोदोहशब्दस्य हियङ्गुरादेशः स्यात् विकारार्थे खञ् निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारः हैयङ्गवीनं नवनीतम् । तदस्य सञ्जातं तारकादिभ्य इतच् ५।२।३६। तारकाः सञ्जाता अस्य तारकितं नभः । पण्डितः । आकृतिगणोऽयम् ॥ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५।२।३७। तदस्येत्यनुवर्तते । ऊरु प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् । यत्तदेतेभ्यः परिमाणे वतुप् ५।२।३९। यत् परिमाणमस्य यावान् । तावान् । एतावान् ॥ किमिदंभ्यां वो घः ५।२।४०। आभ्यां वतुप् स्यात् वकारस्य घश्च । इदंकिमोरीश्की ६।३।९०। दृग्दृशवतुषु इदम ईश् किमः की । कियान् । इयान् ॥ सङ्ख्याया अवयवे

---

हैयङ्गवीनम् । ह्यस् इत्यव्ययं पूर्वेद्युरित्यर्थे । तत्रोत्पन्नो गोदोहः—गोपयः, ह्योगोदोहः । तस्मात् षष्ठ्यन्तात् विकारार्थे खञि ईनादेशे प्रकृतेः हियङ्गु इत्यादेशे ओर्गुणे अवादेशे आदिवृद्धौ हैयङ्गवीनमिति भवति, संज्ञायाम् इति भाष्यम् । तदाह—ह्योगोदोहस्येत्यादिना । तदस्य । प्रथमान्तेभ्यस्तारकादिभ्यः अस्य तत्संजातमित्यर्थे इतच् स्यादित्यर्थः । तारकितं नभः । तारका अस्य सञ्जाताः इति विग्रहे तारकाशब्दात् प्रथमान्तात् "तदस्य सञ्जातं तारकादिभ्य इतच्" इति इतचि, चगते सुपो लुकि, भत्वे अलोपे संयोगे विभक्तिकार्ये च तत्सिद्धिः । एवं पण्डा—बुद्धिः अस्य सञ्जाता असौ 'पण्डितः' इत्यत्र बोध्यम् । प्रमाणे । अनुवर्तत इति । ततश्च अस्य प्रमेयस्य तत्प्रमाणमित्यर्थे-प्रमाणे, विद्यमानात्प्रथमान्तात् द्वयसच् , दघ्नञ् , मात्रच् एते प्रत्ययाः स्युः । ऊरुद्वयसम् । ऊरु प्रमाणमस्य 'ऊरुद्वयसम्' इत्यत्र "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति द्वयसचि, चगते सुपो लुकि, विभक्तिकार्यं च कृते "ऊरुद्वयसम्' इति । एवं दघ्नञि ऊरुदघ्नम् । मात्रचि–ऊरुमात्रम् , इति बोध्यम् । यत्तदेतेभ्यः । तदस्येत्यनुवर्तते । अस्य तत्परिमाणमित्यर्थे परिमाणवाचिभ्यः प्रथमान्तेभ्यः यद् तद् एतद् एभ्यः वतुप् स्यादित्यर्थः । यावान् । यत् परिमाणमस्य 'यावान्' इत्यत्र "यत्तदेतेभ्यः परिमाणे वतुप्" इति वतुपि उपो लोपे सुपो लुकि, 'यत् वत्' इति जाते "आ सर्वनाम्नः" इति तस्य आत्वे सवर्णदीर्घत्वे प्रातिपदिकत्वात्सौ "अत्वसन्तस्य चाधातोः" इत्युपधादीर्घत्वे "उगिदचाम्" इति नुमि, उमि गते सोर्लोपे, "संयोगान्तस्य" इति तलोपे च कृते 'यावान्' इति रूपम् । एवं तत्परिमाणमस्येति तावान् । एतत्परिमाणमस्येति 'एतावान्' इत्यपि बोध्यम् । किमिदंभ्यां वो घः । तदस्य इति, परिमाणे वतुविति चानुवर्तते । तदाह—आभ्यां वतुप् स्यादिति । आभ्यां प्रथमान्ताभ्याम् अस्य तत्परिमाणमित्यर्थे वतुप् स्यादित्यर्थः । वस्य च घ इति । वकारस्य घकार इत्यर्थः । इदंकिमोरीश्की । ईश् की इति द्वे पदे । "दृग्दृशवतुषु" इति पूर्वसूत्रमनुवर्तते । तदाह—दृग्दृशवतुष्विति । कियान् । किम्परिमाणमस्य 'कियान्' इत्यत्र "किमिदंभ्यां वो घः" इति वतुपि, वस्य

तयप् ५।२।४२। पञ्च अवयवा अस्य पञ्चतयम् ॥ द्वित्रिभ्यां तयस्यायज्वा ५।२। ४३। द्वयम्, द्वितयम् । त्रयम्, त्रितयम् ॥ उभादुदात्तो नित्यम् ५।२।४४। उभशब्दात्तयपोऽयच् स्यात् स चाद्युदात्तः ॥ उभयम् । तस्य पूरणे डट् ५।२।४८। एकादशानां पूरणः एकादशः ॥ नान्तादसंख्यादेर्मट् ५।२।४९। डटो मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् । ति विंशतेर्डिति ६।४।१४२। विंशते-

---

घादेशे ऽपि गते, 'किम् घत्' इति जाते "आयनेयीनीयियः" इति घस्य इयादेशे "इदंकिमोरीश्की" इति किमः स्थाने क्यादेशे 'की इयत्' इति जाते, भत्वे अलोपे लुकि, उभो लोपे उपधादीर्घत्वे विभक्तिकार्ये च कृते 'कियान्' इति । एवम् इदं परिमाणमस्य 'इयान्' इत्यत्र बोध्यम् । अत्र इदमः इश् आदेश इति विशेषः, शेषं पूर्ववत् । संख्याया अवयवे । तदस्येत्यनुवर्तते । द्वित्र्यादिसंख्याका अवयवाः अस्यावयविनः इति विग्रहे अवयवीभूतसंख्यावाचिनः प्रथमान्तात् अस्यावयविन इत्यर्थे तयबित्यर्थः । पञ्चतयम् । पञ्च अवयवा अस्य 'पञ्चतयम्' इत्यत्र "संख्याया अवयवे तयप्" इति तयपि, पलोपे, सुपो लुकि, विभक्तिकार्ये च कृते 'पञ्चतयम्' इति सिद्धम् । द्वित्रिभ्याम् । पूर्वेण विहितस्य तयस्य द्वित्रिभ्यां परस्य वाऽयजादेशो भवति । चकारः स्वरार्थः । द्वयम् । द्वाववयवौ अस्य 'द्वयम्' इत्यत्र "संख्याया अवयवे तयप्" इति तयपि, पलोपे, सुपो लुकि च 'द्वि तय' इति भूते, अत्र "द्वित्रिभ्यां तयस्यायज्वा" इति तयस्य स्थाने अयजादेशे चगते भत्वे इलोपे विभक्तिकार्ये च तत्सिद्धम् । अयजादेशाभावे 'द्वितयम्' इति । एवं त्रयम्, त्रितयम् , इति बोध्यम् । उभादुदात्तो नित्यम् । स चोदात्त इति । आद्युदात्त इत्यर्थः । उभयम् । उभौ अवयवौ अस्य 'उभयम्' इत्यत्र "संख्याया अवयवे तयप्" इति तयपि, "उभादुदात्तो नित्यम्" इति तयपोऽयजादेशे चगते भत्वे अलोपे संयोगे विभक्तिकार्ये च कृते 'उभयम्' इति । तस्य पूरणे डट् । तस्येति षष्ठीसमर्थात्संख्यावाचिनःप्रातिपदिकात्पूरण इत्यस्मिन्नर्थे डट् प्रत्ययो भवति । एकादशः । एकादशानां पूरणः 'एकादशः' इत्यत्र "तस्य पूरणे डट्" इति डटि, टगते सुपो लुकि, भत्वे "टेः" इति टिलोपे "कुसीददशैकादशात् ष्ठन्ष्ठचौ" इति निपातनात् एकशब्दस्य दीर्घत्वे संयोगे विभक्तिकार्ये च तत्सिद्धिः । नान्तादसंख्यादेः । नान्तादिति पञ्चमी डट आगमसम्बन्धे षष्ठीं प्रकल्पयति । डडिति वर्तते । पञ्चमः । पञ्चानां पूरणः 'पञ्चमः' इत्यत्र "तस्य पूरणे डड्" इति डटि, अनुबन्धलोपे सुपो लुकि च 'पञ्चन् अ' इति जाते "नान्तादसंख्यादेर्मट्" इति डटो मडागमे टलोपे टित्वादाद्यावयवे जाते अन्तर्वर्तिनीं विभक्तिमाश्रित्य परत्वाद् "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'पञ्च म् अ' इति भूते संयोगे विभक्तिकार्ये च तत्सिद्धिः । तिविंशतेर्डिति । तीति लुप्तषष्ठीकम् । "भस्य" इत्यधिकृतम् । "अल्लोपोऽन" इत्य-

अन्त्य तिशब्दस्य लोपः स्यात् डिति परे। विंशः। असंख्यादेः किम्? एकादशः।
षट्कतिकतिपयचतुरां थुक् ५।२।५१। एषां थुगागमः स्याड्डटि। षण्णां पूरणः षष्ठः। कतिथः। कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट्। कतिपयथः। चतुर्थः।
द्वेस्तीयः ५।२।५४। डटोऽपवादः। द्वयोः पूरणो द्वितीयः॥ त्रेः सम्प्रसारणं च ५।२।५५। तृतीयः॥ श्रोत्रियंश्छन्दोऽधीते ५।२।८४। श्रोत्रियः। वेत्यनुवृत्तेश्छान्दसः॥
पूर्वादिनिः ५।२।८६। पूर्वं कृतमनेनेति पूर्वी। सपूर्वाच्च ५।२।८७। कृतपूर्वी॥

---

स्मान्लोप इत्यनुवर्तते। तदाह—विंशतेभस्येति। विंशः। विंशतीनां पूरणः विंशः, इत्यत्र "तस्य पूरणे डट्" इति डटि, डटयोर्लोपे सुपो लुकि, 'विंशति अ' इति जाते "ति विंशतेर्डिति" इति तिलोपे भत्वादलोपे संयोगे विभक्तिकार्ये च 'विंशः' इति सिद्धम्। असंख्यादेः किमिति। एकादश इत्यत्र नान्तत्वेऽपि संख्यादित्वान्न डट्। षट्कति। थुकि ककार इत्। उकार उच्चारणार्थः। कित्वादन्त्यावयवः। षष्ठः। षण्णां पूरणः 'षष्ठः' इत्यत्र "तस्य पूरणे डट्" इति डटि, अनुबन्धलोपे सुपो लुकि, 'षष अ' इति भूते "षट्कतिकतिपयचतुरां थुक्" इति थुकि, उको लोपे कित्वात् "आद्यन्तौ टकितौ" इत्यनेन अन्तावयवे जाते 'षष्थ् अ' इति जाते ष्टुत्वे संयोगे विभक्तिकार्ये च तत्सिद्धिः। कतिथः। कतीनां पूरणः 'कतिथः' इत्यत्र "तस्य पूरणे डट्" इति डटि, "षट्कतिकतिपयचतुरां थुक्" इत्यादि पूर्ववत्। एवं कतिपयानां पूरणः। कतिपयथः। चतुर्णां पूरणः—चतुर्थः, इति बोध्यम्। अत्र अपदान्तत्वान्न रेफस्य विसर्गः। द्वेस्तीयः। द्विशब्दात् षष्ठ्यन्तात् पूरणे तीयप्रत्ययः स्यादित्यर्थः। द्वितीयः। अत्र डटं बाधित्वा तीयप्रत्ययः। त्रेः सम्प्रसारणञ्च। त्रेस्तीयः स्यात् प्रकृतेः सम्प्रसारणञ्चेत्यर्थः। तृतीयः। त्रयाणां पूरणः 'तृतीयः' इत्यत्र "त्रेः सम्प्रसारणञ्च" इति तीयप्रत्यये कृते त्रेरित्यस्य सम्प्रसारणेन ऋकारे जाते "सम्प्रसारणाच्च" इति इकारस्य पूर्वरूपत्वेन ऋकारे भूते विभक्तिकार्ये च कृते 'तृतीयः' इति सिद्धम्। श्रोत्रियंश्छन्दोऽधीते। द्वितीयान्ताच्छन्दश्शब्दात् अधीते इत्यर्थे घन्, प्रकृतेः श्रोत्रादेशश्च निपात्यते। श्रोत्रियः। छन्दोऽधीते इत्यर्थे "श्रोत्रियंश्छन्दोऽधीते" इति सूत्रेण घन्प्रत्यये छन्दस्स्थाने श्रोत्रादेशे भत्वे अलोपे विभक्तिकार्ये च 'श्रोत्रियः' इति रूपम्। पूर्वादिनिः। अनेनेति प्रत्ययार्थः। कर्ताऽनुवर्तते। न च क्रियामन्तरेण कर्ता सम्भवतीति यां काञ्चित् क्रियामध्याहृत्य प्रत्ययो विधेयः। पूर्वादनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति। पूर्वी। पूर्वं कृतमनेन 'पूर्वी' इत्यत्र "पूर्वादिनिः" इति इनि कृते इलोपे सुपो लुकि, भत्वे अलोपे 'पूर्विन्' इति भूते तस्मात्सौ, "सौ च" इत्युपधादीर्घत्वे हल्ङ्यादिना सलोपे नलोपे च तत्सिद्धिः। सपूर्वाच्च। विद्यमानं पूर्वं यस्मादिति सपूर्वं प्रातिपदिकम्। तस्य पूर्वशब्देन तदन्तविधिः। सपूर्वात्प्रातिपदिकात्पूर्वशब्दान्तादनेनेत्यस्मिन्नर्थे इनिः प्रत्ययो भवति।

**इष्टादिभ्यश्च ५।२।८८** इष्टमनेन इष्टी। अधीती॥ इति भवनाद्यर्थकाः।

## अथ मत्वर्थीयाः।

**तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४।** गावोऽस्यास्मिन्वा सन्ति गोमान्॥

**तसौ मत्वर्थे १।४।१९** तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। "वसोः सम्प्रसारणम्"। विदुष्मान्। **( गुणवचनेभ्यो मतुपो लुगिष्टः )**। शुक्लो गुणोऽस्या-

---

कृतपूर्वी। कृतं पूर्वमनेनेत्यत्र "सपूर्वाच्च" इति इनिः, शेषं पूर्ववत्। इष्टादिभ्यश्च। अनेनेत्येव। इष्टादिभ्यः प्रातिपदिकेभ्योऽनेनेत्यस्मिन्नर्थे इनिः प्रत्ययो भवति। इष्टी। इष्टमनेन 'इष्टी' इत्यत्र "इष्टादिभ्यश्च" इति इनिः, शेषं पूर्ववत्। एवम् अधीतमनेन इति 'अधीती' इत्यत्र बोध्यम्। इति भवनाद्यर्थकाः।

तदस्यास्त्यस्मिन्निति मतुप्। तदिति प्रथमासमर्थविभक्तिः। अस्यास्मिन्निति प्रत्ययार्थः। अस्तीति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। तदिति प्रथमासमर्थाद् स्येति षष्ठ्यर्थे अस्मिन्निति सप्तम्यर्थे वा मतुप् प्रत्ययो भवति यत्तत्प्रथमासमर्थमस्ति चेत्तद्भवति। अस्त्यर्थोपाधिकं चेत्तद्भवतीत्यर्थः। "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः।" भूम्नि तावत्-गोमान्, निन्दायाम्-कुष्ठी। प्रशंसायां रूपवती कन्या। नित्ययोगे-क्षीरिणो वृक्षाः। अतिशायने—उदरिणी कन्या। संसर्गे-दण्डी। अस्तिविवक्षायाम्-अस्तिमान्। गोमान्। गावोऽस्यास्मिन्वा सन्ति 'गोमान्' इत्यत्र "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुपि, उपो लोपे सुपो लुकि सौ च 'गोमत् सु' इति जाते "अत्वसन्तस्य" इत्युपधादीर्घत्वे "उगिदचाम्" इति नुमि उमो लोपे 'गोमान् त् सु' इति जाते सोर्लोपे "संयोगान्तस्य लोपः" इति तलोपे च कृते 'गोमान्' इति सिद्धम्। तसौ मत्वर्थे। भमिति वर्तते। मत्वर्थप्रत्ययाक्षिप्तप्रातिपदिकविशेषणत्वात्तदन्तविधिमभिप्रेत्याह—तान्तसान्ताविति। तकारसकारान्तावित्यर्थः। विदुष्मान्। विद्वांसः सन्ति अस्य अस्मिन् वा देशे 'विदुष्मान्' इत्यत्र "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुपि उपो लोपे सुपो लुकि 'विद्वस् मत्' इति जाते "तसौ मत्वर्थे" इति भत्वे भत्वाद् "वसोः सम्प्रसारणम्" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपत्वे 'विदुस् मत्' इति भूते प्रातिपदिकत्वात्सौ "उगिदचाम्" इति नुमि, उमो लोपे "अत्वसन्तस्य चाऽधातोः" इत्युपधादीर्घत्वे सोर्लोपे "आदेशप्रत्यययोः" इति सस्य षत्वे "संयोगान्तस्य लोपः" इति तलोपे च कृते 'विदुष्मान्' इति रूपम्। गुणवचनेभ्य इति। वार्तिकमिदम्। गुणे गुणवति च ये प्रसिद्धाः शुक्लादिशब्दाः त एव गृह्यन्ते, न तु रूपादिशब्दा अपि। तेन रूपं वस्त्रमित्यादि न भवति। शुक्लः पटः। शुक्लो गुणोऽस्यास्तीति 'शुक्लः' पटः इत्यत्र "तदस्यास्त्यस्मिन्" इति मतुपि, उपो लोपे "गुणवचनेभ्यो मतुपो लुगिष्टः" इति मतुपो लुकि विभक्ति-

तीति शुक्लः पटः । कृष्णः । **प्राणिस्थादातो लजन्यतरस्याम् ५।२।९६।** चूडालः, चूडावान् । प्राणिस्थात्किम् ? शिखावान् दीपः । प्राण्यङ्गादेव । नेह, मेधावान् ॥ **लोमादिपामादिपिच्छादिभ्यः शनेलचः ५।२।१००।** लोमादिभ्यः शः । लोमशः, लोमवान् । रोमशः, रोमवान् । पामादिभ्यो नः । पामनः । **अङ्गात्कल्याणे ।** अङ्गना । **लक्ष्म्या अच्च ।** लक्ष्मणः । पिच्छादिभ्य इलच् । पिच्छिलः, पिच्छवान् ॥ **दन्त उन्नत उरच् ५।२।१०६।** उन्नता दन्ताः सन्त्यस्य दन्तुरः ॥ **केशाद्वोऽन्यतरस्याम् ५।२।१०९।** केशवः, केशी, केशिकः, केशवान् । ( **अन्येभ्योऽपि दृश्यते** ) ।

---

कार्ये च 'शुक्लः पटः' इति सिद्धम् । एवं कृष्णः पटः । प्राणिस्थात । आदन्तात्प्राणिस्थवाचिनः शब्दात् मत्वर्थे लच् वा स्यादित्यर्थः । चूडालः । चूडाऽस्यास्तीति "प्राणिस्थादातो लजन्यतरस्याम्" इति लचि चलोपे, सुपो लुकि, विभक्तिकार्ये च तत्सिद्धिः । पक्षे मतुपि "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मस्य स्थाने वत्वे "अत्वसन्तस्य" इत्युपधादीर्घत्वे सौ "उगिदचाम्" इति नुमि उमो लोपे सोर्लोपे तलोपे च कृते 'चूडावान्' इति सिद्धम् । शिखावान् दीपः । अत्र प्राणिस्थत्वाभावात् न लच्, किन्तु मतुप् । मेधावान् । अत्र प्राण्यङ्गत्वाभावात् न लच् । लोमादि । लोमादिभ्यः, पामादिभ्यः, पिच्छादिभ्यश्च त्रिभ्यो गणेभ्यो यथासंख्यं श, न, इलच्, इत्येते प्रत्यया भवन्ति, मत्वर्थे मतुप् च । लोमशः । लोमवान् । लोमान्यस्य सन्ति 'लोमशः' इत्यत्र "लोमादिपामादिपिच्छादिभ्यः शनेलचः" इति शे, विभक्तिकार्ये च कृते 'लोमशः' इति, पक्षे मतुपि लोमवान् । एवं रोमशः, रोमवान् । पामनः । पामाऽस्यास्ति इति 'पामनः' इत्यत्र "लोमादिपामादि" इति पामादित्वान्ने विभक्तिकार्ये च 'पामनः' इति । अङ्गात्कल्याणे । पामादिगणसूत्रम् । कल्याणं सुन्दरं तद्विशेषणकादङ्गशब्दात् मत्वर्थे न प्रत्यय इत्यर्थः । अङ्गनेति । कल्याणानि अङ्गानि अस्याः इति विग्रहः । लक्ष्म्या अच्चेति । इत्यपि पामादिगणसूत्रम् । लक्ष्मीशब्दात् मत्वर्थे न प्रत्ययः स्यात्, प्रकृतेरकारोऽन्तादेशश्च । लक्ष्मण इति । लक्ष्मीरस्यास्तीति विग्रहः । नप्रत्यये प्रकृतेरकारे अन्तादेशे णत्वम् । पिच्छिलः । पिच्छान्यस्य सन्ति 'पिच्छिलः' इत्यत्र "लोमादिपामादि" इति पिच्छादित्वादिलचि भत्वे भत्वादलोपे विभक्तिकार्ये च कृते 'पिच्छिलः' इति रूपम् । मतुपि-'पिच्छावान्' इति । दन्त उन्नत उरच् । उन्नत इति प्रकृतिविशेषणम् । दन्तशब्दादुन्नतोपाधिकादुरच् प्रत्ययो भवति मत्वर्थे । दन्तुरः । उन्नता दन्ताः सन्ति यस्य सः 'दन्तुरः' इत्यत्र "दन्त उन्नत उरच्" इत्युरचि, चलोपे, भत्वे, भत्वादलोपे, विभक्तिकार्ये च 'दन्तुरः' इति सिद्धम् । केशाद्व इति । केशशब्दाद्वः प्रत्ययो भवति मत्वर्थेऽन्यतरस्याम् । केशवः । केशाः सन्त्यस्य 'केशवः' इत्यत्र "केशाद्वोऽन्यतरस्याम्" इति वे विभक्तिकार्ये च कृते 'केशवः' । पक्षे मतुपि 'केशवान्' इति । "अत इनिठनौ" इति इनि 'केशी' इति । ठनि ठस्येकादेशे भत्वे भत्वादलोपे संयोगे विभक्तिकार्ये च कृते

मणिवः । ( अर्णसो लोपश्च ) अर्णवः ॥ अत इनिठनौ ५।२।११५। दण्डी, दण्डिकः ॥ व्रीह्यादिभ्यश्च ५।२।११६। व्रीही, व्रीहिकः ॥ अस्मायामेधास्रजो विनिः ५।२।१२१। यशस्वी, यशस्वान् । मायावी । व्रीह्यादिपाठादिनिठनौ । मायी, मायिकः, मायावान् । मेधावी । स्रग्वी ॥ वाचो ग्मिनिः ५।२।१२४। वाग्मी । अर्श-आदिभ्योऽच् ५।२।१२७। अर्शोऽस्य विद्यते अर्शसः । आकृतिगणोऽयम् । अहं-शुभमोर्युस् ५।२।१४०। अहंयुः, अहंकारवान् । शुभंयुस्तु शुभान्वितः ॥ इति मत्वर्थीयाः ॥

---

'केशिकः' इति । दृश्यन्त इति । व इत्यनुवर्तते । मणिव इति । मणिरस्यास्ति 'मणिवः' इत्यत्र "अन्येभ्योऽपि दृश्यन्ते" इति वे 'मणिवः' इति । अर्णव इति । अर्णांसि— जलानि सन्त्यस्मिन् सः 'अर्णवः' इत्यत्र "अन्येभ्योऽपि दृश्यते" इति ।वे "अर्ण-सो लोपश्च" इति सलोपे विभक्तिकार्ये च कृते 'अर्णवः' इति रूपम् । अत इति । अकारान्तात्प्रातिपदिकादिनिठनौ प्रत्ययौ भवतः । दण्डी, दण्डिक इति । दण्डोऽस्यास्ति 'दण्डी' इत्यत्र "अत इनिठनौ" इति इनि भत्वे अलोपे विभक्ति-कार्ये च कृते 'दण्डी' इति । ठनि, ठस्येकादेशे भत्वे अलोपे संयोगे विभक्तिकार्ये च कृते 'दण्डिकः' इति । व्रीह्यादिभ्यश्च । व्रीह्यादिभ्यः प्रातिपदिकेभ्य इनिठनौ प्रत्ययौ भवतो मत्वर्थे । व्रीही । व्रीहिकः । व्रीहयः सन्त्यस्यासौ 'व्रीही' इत्यत्र "व्रीह्यादिभ्यश्च" इति इनि, इलोपे भत्वे, भत्वादिलोपे संयोगे उपधादीर्घत्वे नलोपे च कृते 'व्रीही' इति । ठनि—व्रीहिकः । अस्मायामेधा । असन्तात्प्रातिपदिकान्मायामेधास्रज्इत्येतेभ्यश्च विनिः प्रत्ययो भवति मत्वर्थे । मतुप् सर्वत्र समुच्चीयत एव । मायाशब्दाद् व्रीह्या-दिषु पाठादिनिठनावपि भवतः । यशस्वी, यशस्वान् । यशोऽस्यास्तीत्यत्र "अस्मायामे-धास्रजो विनिः" इति विनिप्रत्यये इलोपे, सौ, "सौ च" इति दीर्घत्वे सोर्लोपे नलोपे च कृते 'यशस्वी' इति । पक्षे—"तदस्यास्त्यस्मिन्निति मतुप्" इति मतुपि उपो लोपे "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मस्य वत्वे सौ "अत्वसन्तस्य" इति दीर्घत्वे "उगिदचाम्" इति नुमि, उमो लोपे सोर्लोपे "संयोगान्तस्य लोपः" इति तलोपे च कृते 'यशस्वान्' इति । एवं 'मायावी' इत्यादौ बोध्यम् । वाचो ग्मिनिः । वाच्शब्दात् मत्वर्थे ग्मिनिप्रत्ययः स्यादित्यर्थः । नकारादिकार उच्चारणार्थः । अत-द्धित इति पर्युदासात् मकारस्य नेत्संज्ञा । वाग्मी । वागस्यास्ति 'वाग्मी' इत्यत्र "वाचो ग्मिनिः" इति ग्मिनिप्रत्यये "स्कोः संयोगाद्योरन्ते च" इति कलोपे सौ, उपधादीर्घे सुलोपे नलोपे च 'वाग्मी' इति सिद्धम् । अर्शआदिभ्योऽच् । अर्शस्इत्ये-वमादिभ्यः प्रातिपदिकेभ्योऽच् प्रत्ययो भवति मत्वर्थे । अर्शसः । अर्शोऽस्यास्तीति 'अर्शसः' इत्यत्र "अर्शआदिभ्योऽच्" इत्यचि, चलोपे संयोगे विभक्तिकार्ये च कृते

## अथ प्राग्दिशीयाः ।

**प्राग्दिशो विभक्तिः ५।३।१।** दिक्शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः ॥ **किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ५।३।२।** किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते ॥ **पञ्चम्यास्तसिल् ५।३।७।** पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात् ॥ **कु तिहोः ७।२।१०४।** किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः । कुतः, कस्मात् ॥ **इदम इश् ५।३।३।** प्राग्दिशीये परे । इतः । **एतदोऽन् ५।३।५।** प्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः । अतः । अमुतः । यतः । ततः । बहुतः । द्व्यादेस्तु-द्वाभ्याम् ॥ **पर्यभि-**

---

'अर्शसः' इति । अहंशुभमोर्युस् । अहमिति मान्तमव्ययमहङ्कारे । शुभमिति शुभे । अहंयुः । अहमहङ्कारोऽस्यास्तीति 'अहंयुः' इत्यत्र "अहंशुभमोर्युस्" इति युसि, विभक्तिकार्ये च 'अहंयुः' इति सिद्धम् । इति मत्वर्थीयाः ।

प्राग्दिशो विभक्तिः । दिक्शब्देन तद्घटितं सूत्रं विवक्षितमित्यभिप्रेत्याह-दिक्शब्दे-भ्य इत्यत इति । विभक्तिसंज्ञका इति । तत्फलं तु "न विभक्तौ तुस्माः" इति निषेधः, त्यदाद्यत्वम्, इदमः "ऊडिदंपदादि" इति स्वरश्च । स्वार्थिका इति । स्वीयप्रकृत्यर्थं भवा इत्यर्थः । किंसर्वनाम । अद्व्यादिभ्य इति छेदः । प्राग्दिश इत्यनुवर्तते । तदाह—प्राग्दिशोऽधिक्रियत इति । पञ्चम्यास्तसिल् । किमादिभ्य इति । किंसर्वनामबहुभ्य इत्यर्थः । वा स्यादिति । "समर्थानाम्" इत्यतो वाग्रहणस्यानुवृत्तेरिति भावः । कुतिहोः । कु इति लुप्तप्रथमाकम् । "किमः कः" इत्यस्मात् 'किमः' इत्यनुवर्तते । "अष्टन आ" इत्यतो विभक्ताविति । तिश्च ह च तयोरिति द्वन्द्वः, इकार उच्चारणार्थः । ताभ्यां विभक्तिर्विशेष्यते । तदादिविधिः, तदाह-किमः कुः स्यादित्यादिना । कुतः । कस्मादिति कुतः इत्यत्र "पञ्चम्यास्तसिल्" इति तसिलि इलो लोपे सुपो लुकि, "प्राग्दिशो विभक्तिः" इति तसिलो विभक्तित्वे "कुतिहोः" इति किमः कु आदेशे कु तस् इति जाते "कृत्तद्धितसमासाश्च" इति प्रातिपदिकत्वे प्रातिपदिकत्वात्सुबुत्पत्तौ "तद्धितश्चासर्वविभक्तिः" इति अव्ययत्वे "अव्ययादाप्सुपः" इति सुपो लुकि, सस्य रुत्वे रेफस्य विसर्गत्वे च 'कुतः' इति सिद्धम् । इदम इश् । प्राग्दिशीये परे इति शेषपूरणम् । प्रकरणलभ्यमिदम् । शित्वात्सर्वादेशः । इतः । अस्मादिति इतः इत्यत्र "पञ्चम्यास्तसिल्" इति तसिलि इलो लोपे सुपो लुकि 'इदम् तस्' इति जाते "इदम इश्" इत्यनेन शित्वादिदमः सर्वस्य स्थाने इशादेशे शलोपे सस्य रुत्वे रस्य विसर्गत्वे च कृते 'इतः' इति रूपम् । एतदोऽन् । प्राग्दिशीये प्रत्यये परे एतद्शब्दस्य अन् स्यादित्यर्थः । अतः । एतस्मादिति 'अतः' इत्यत्र "पञ्चम्यास्तसिल्" इति तसिलि इलो लोपे सुपो लुकि "एतदोऽन्" इत्यनेन एतदः सर्वस्य स्थाने अनादेशे नलोपे सस्य रुत्वे रेफस्य विसर्गत्वे च कृते

भ्यां च ५।३।९। आभ्यां तसिल् स्यात्। (सर्वोभयार्थाभ्यामेव) परितः, सर्वतः इत्यर्थः। अभितः, उभयत इत्यर्थः। सप्तम्यास्त्रल् ५।३।१०। कुत्र। यत्र। तत्र। बहुत्र॥ इदमो हः ५।३।११। त्रलोऽपवादः। इह॥ किमोऽत् ५।३।१२। वा ग्रहणमपकृष्यते। सप्तम्यन्तात्किमोऽद्वा स्यात्। पक्षे त्रल्॥ क्वाति ७।२।१०५। किमः क्वादेशः स्यादति। क्व, कुत्र॥ इतराभ्योऽपि दृश्यन्ते ५।३।१४। पञ्चमी-सप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रहणाद्भवदादियोग एव। स भवान्। ततो भवान्। तत्र भवान्। तं भवन्तम्। ततो भवन्तम्। तत्र भवन्तम्।

---

'अतः' इति रूपम्। अमुतः। अमुष्मादिति 'अमुतः' इत्यत्र "पञ्चम्यास्तसिल्" इति तसिलि, इलो लोपे सुपो लुकि, 'अदस् तस्' इति जाते "त्यदादीनामः" इत्यत्वे 'अद अ तस्' इति जाते "अतो गुणे" इति पररूपत्वे "अदसोऽसेर्दादुदोमः" इति दस्य मत्वे, अस्य उत्वे, सस्य रुत्वे रेफस्य विसर्गत्वे च 'अमुतः' इति। यतः। यस्मादिति 'यतः' इत्यत्र "पञ्चम्यास्तसिल्" इति तसिलि "त्यदादीनामः" इति अत्वे "अतो गुणे" इति पररूपत्वे सस्य रुत्वे रेफस्य विसर्गे च कृते 'यतः' इति। एवं 'ततः, बहुतः' इति। पर्यभिभ्यां च। सर्वोभयार्थे वर्त्तमानाभ्यां प्रत्यय इष्यते। परितः। परीत्यव्ययात् "पर्यभिभ्यां च" इति तसिलि, परितः। एवमभितः। सप्तम्यास्त्रल्। किमादिभ्यः सप्तम्यन्तेभ्यः अद्व्यादिभ्यस्त्रलित्यर्थः। कुत्र। कस्मिन्निति विग्रहे "सप्तम्यास्त्रल्" इति त्रलि, ललोपे, "कुतिहोः" इति किमः कु-आदेशे विभक्तिकार्ये च कृते 'कुत्र' इति। यत्र। यस्मिन्निति विग्रहः। अत्र त्रलि, "त्यदादीनामः" इत्यकारे "अतो गुणे" इति पररूपत्वे च कृते 'यत्र' इति। एवं तत्र। बहुषु बहुत्र। इदमो हः। इदं-शब्दात् सप्तम्यन्तात् हप्रत्ययः स्यादित्यर्थः। इह। अस्मिन्निति 'इह' अत्र "सप्तम्यास्त्रल्" इति त्रलि प्राप्ते तम्बाधित्वा "इदमो हः" इति हे कृते 'इदम् ह' इति जाते "इदम इश्" इति इशादेशे शलोपे शित्वात्सर्वादेशे च कृते रूपम्। किमोऽत्। अपकृष्यत इति। "वा ह च छन्दसि" इत्युत्तरसूत्रादिति शेषः। क्वाति। क्व अतीति छेदः। क्वेति लुप्तप्रथमाकं "किमः कः" इत्यतः किम इत्यनुवर्तते। तदाह—किमः क्वेति। किंशब्दात् सप्तम्यन्तात् अत्प्रत्ययः, तकार इत्, किमः क्वादेश इति भावः। क्व। कस्मिन्निति 'क्व' इत्यत्र "किमोऽत्" इत्यति तलोपे सुपो लुकि 'किम् अ' इति जाते "क्वाति" इति किमः क्वादेशे 'क्व अ' इति जाते अत्वे अलोपे संयोगे विभक्तिकार्ये च तत्सिद्धम्। इतराभ्योऽपि दृश्यन्ते। पञ्चमीसप्तमीतरविभक्तिभ्योऽपीत्यर्थः। फलितमाह—पञ्चमीसप्तमीतरविभक्त्यन्तादपीति ततोभवान्। स भवानिति ततोभवान् इत्यत्र "इतराभ्योऽपि दृश्यन्ते" इति तसिलि, सुपो लुकि, तद् तस् भवान् इति जाते "त्यदादीनामः" इत्यत्वे "अतो गुणे" इति पररूपत्वे सस्य रुत्वे रोरुत्वे गुणे च कृते 'ततोभवान्' इति। एवं त्रलि—तत्रभवान्। ततो-

एवं दीर्घायुः । देवानां प्रियः । आयुष्मान् ॥ **सर्वैकान्यकियत्तदः काले दा ५।३।१५।** सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् । **सर्वस्य सोऽन्यतरस्यां दि ५।३।६।** दादौ प्राग्दिशीये सर्वस्य सो वा स्यात् । सर्वस्मिन् काले सदा । सर्वदा । अन्यदा । कदा । यदा । तदा । काले किम्? सर्वत्रदेशे ॥ **इदमोर्हिल् ५।३।१६।** सप्तम्यन्तात् काले इत्येव ॥ **एतेतौ रथोः ५।३।४।** इदम् शब्दस्य एत इत् इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । अस्मिन्काले एतर्हि । काले किम्? इह देशे । **अनद्यतने र्हिलन्यतरस्याम् ५।३।२१।** कर्हि, कदा । यर्हि, यदा । तर्हि, तदा ॥ **एतदोऽन् ५।३।५।** योगविभागः कर्त्तव्यः । एतदः एतेतौ रथोः । अन् । एतद इत्येव । एतस्मिन्काले एतर्हि ॥ **प्रकारवचने**

---

भवन्तम् । अत्र द्वितीयान्तात्तसिल् । तत्रभवन्तम् । अत्र द्वितीयान्तात् त्रल् । एवं ततोदीर्घायुः, तत्रदीर्घायुः । ततोदेवानाम्प्रियः, तत्रदेवानाम्प्रियः । ततआयुष्मान्, तत्रायुष्मान् । इत्यत्रापि बोध्यम् । सर्वैकान्य । सप्तम्यन्तेभ्य इति सर्वादिभ्य इति शेषः । सप्तम्या इत्येवानुवर्तते, व्याख्यानादिति शेषः । सदा । सर्वस्मिन् काले इति सदा इत्यत्र "सर्वैकान्यकिंयत्तदः काले दा" इति दाप्रत्यये सुपो लुकि, 'सर्वदा' इति जाते "सर्वस्य सोऽन्यतरस्यां दि" इति सर्वस्य सादेशे विभक्तिकार्यै च कृते 'सदा' इति । सादेशाभावे 'सर्वदा' इति । एवम्–'अन्यदा' इत्यादौ बोध्यम् । इदमो र्हिल् । इदमः सप्तम्यन्तात्काले वर्तमानाद् र्हिल् प्रत्ययो भवति । एतेतौ रथोः । रेफेऽकार उच्चारणार्थः । एतर्हि । अस्मिन् काले 'एतर्हि' इत्यत्र "इदमो र्हिल्" इति र्हिलि, सुपो लुकि, 'इदम् र्हिल्' इति जाते "एतेतौ रथोः" इति इदम एतादेशे च कृते रूपम् । अनद्यतने । छन्दसीति न स्वर्यते, सामान्येन विधानम् । किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने कालविशेषे वर्त्तमानेभ्यो र्हिल् प्रत्ययो भवत्यन्यतरस्याम् । कर्हि । कस्मिन् काले 'कर्हि' इत्यत्र "अनद्यतने र्हिलन्यतरस्याम्" इति र्हिलि, 'किम् र्हि' इति जाते "किमः कः" इति किमः कादेशे च कृते 'कर्हि' इति । पक्षे दाप्रत्यये कदा । एवं यर्हि, यदा । तर्हि, तदा । इत्यादौ बोध्यम् । एतदोऽन् । प्राग्दिशीये प्रत्यये परे एतद्शब्दस्य अन् स्यादित्यर्थः । योगविभाग इति । एतद इति । प्रथमसूत्रमिदम् । तस्य शेषपूरणम् "एतेतौ रथोः" इति । एतच्छब्दस्य एतेतौ स्तो रेफथकारादौ प्रत्यये परे इत्यर्थः । अन् । एतद इत्येवेति । रथोः इति तु नानुवर्तते इति भावः । तथा च एतद इत्यस्य अन् स्यात्प्राग्दिशीये परे इति फलति । अस्य 'अतः, अन्' इत्युदाहरणम् । एतर्हि । एतस्मिन् काले 'एतर्हि' इत्यत्र "अनद्यतने र्हिलन्यतरस्याम्" इति र्हिलि, ललोपे सुपो लुकि, "एतदोऽन्" इत्येतद एतादेशे च एकः अच् यस्येति रूपम् । प्रकारवचने । किंसर्वनामबहुभ्योऽद्व्यादिभ्य इति भावः । ५४ । अतिश-

थाल् ५।२।२३। प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे । तेन प्रकारेण तथा । यथा ॥ इदमस्थमुः ५।३।२४। थालोऽपवादः । ( एतदोऽपि वाच्यः ) अनेन एतेन वा प्रकारेण इत्थम् ॥ किमश्च ५।३।२५। केन प्रकारेण कथम् ॥ इति प्राग्दिशीयाः ॥

---

## अथ प्रागिवीयाः ।

अतिशायने तमबिष्ठनौ ५।३।५५। अतिशयविशिष्टार्थवृत्तेः सुबन्तात् स्वार्थे एतौ स्तः । अयमेषामतिशयेनाढ्यः आढ्यतमः । लघुतमः, लघिष्ठः ॥ तिङश्च ५।३।५६। तिङन्तादतिशये द्योत्ये तमप् स्यात् ॥ तरप्तमपौ घः १।१।२२ एतौ घसंज्ञौ स्तः ॥ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५।४।११ किम एदन्तात्तिङ-

---

इति च निवृत्तम् । सामान्यस्य विशेषो भेदकः प्रकारः, प्रकृत्यर्थविशेषणं चैतत् । प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति । तथा । तेन प्रकारेण 'तथा' इत्यत्र "प्रकारवचने थाल्" इति थालि, ललोपे, सुपो लुकि, "त्यदादीनामः" इत्यत्वे, "अतो गुणे" इति पररूपत्वे च कृते 'तथा' इति रूपम् । एवं येन प्रकारेण इति 'यथा' इत्यत्रापि बोध्यम् । इदमस्थमुः । इदं-शब्दात्प्रकारवृत्तेः थमुप्रत्ययः स्यादित्यर्थः । प्रत्यये उकार उच्चारणार्थः । मकारस्य उपदेशे अन्त्यत्वाभावान्नेत्वम् । इत्थम् । अनेन प्रकारेण 'इत्थम्' इत्यत्र "इदमस्थमुः" इति थमौ, सुपो लुकि, 'इदम् थम्' इति जाते "एतेतौ रथोः" इति थपरत्वादिदम इतादेशे च कृते 'इत्थम्' इति । एतदोऽपि वाच्य इति । एतेन प्रकारेण इति 'इत्थम्' अत्र प्रकृतवार्तिकेन थमुः "एतेतौ रथोः" इति इतादेशः । किमश्च । प्रकारवृत्तेस्थमुरिति शेषः । कथम् । केन प्रकारेण 'कथम्' इत्यत्र "किमश्च" इति थमौ, सुपो लुकि, "किमः कः" इति कादेशे च कृते 'कथम्' इति रूपम् । इति प्राग्दिशीयाः ।

अतिशायने । अतिपूर्वकः शीङ्धातुरुपसर्गवशादुत्कर्षे वर्तते । 'बाहुलकः कर्तरि ल्युट्' इति भाष्यम् । अत एव निपातनाद्दीर्घः । अतिशायने इति प्रकृत्यर्थविशेषणम् । अतिशयितरि विद्यमानात् प्रातिपदिकात् स्वार्थे तमप् इष्ठन् च स्यादित्यर्थः । फलितमाह—अतिशयविशिष्टार्थवृत्तेरिति । आढ्यतमः । 'अतिशयेन आढ्यः आढ्यतमः' इत्यत्र "अतिशायने तमबिष्ठनौ" इति तमपि, पगते सुपो लुकि, विभक्तिकार्य च कृते [illegible]आढ्यतमः' इति रूपम् । एवम् अतिशयेन लघुः—लघुतमः । इष्ठनि तु भत्वे "टेः" न । स भवानि[illegible] संयोगे विभक्तिकार्ये च कृते 'लघिष्ठः' इति रूपम् । तिङश्च । अत्राप्रातिप लुकि, तद् तस् भवान् [illegible]नम् । तमप् स्यादिति । 'अजादी गुणवचनादेव' इति नियमादिष्ठ मत्वे तस्य रत्वे रोरुत्वे गुणे च [illegible] तरप्तमपौ घः । स्पष्टम् । किमेत्तिङव्यय । आमु इति छेदः ।

ऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किन्तमाम् । प्राह्णेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः ॥ **द्विवचनविभज्योपपदे तरबीयसुनौ** ५।३।५७ द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुर्लघुतरः, लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः, पटीयांसः ॥ **प्रशस्यस्य श्रः** ५।३।६० अस्य श्रादेशः स्यादजाद्योः परतः ॥ **प्रकृत्यैकाच्** ६।४।१६३ इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः, श्रेयान् ॥ ज्य च

---

ङकार उच्चारणार्थः । किम् , एत् , तिङ् , अव्यय एषां चतुर्णां द्वन्द्वः । "किमेत्तिङव्ययप्रकृतिको घः" इति मध्यमपदलोपी समासः । फलितमाह—किम एदन्तादित्यादिना । पुंस्य इत्यर्थः । किन्तमाम् । अत्यन्तस्वार्थिकोऽयं तमप् । किम्शब्दात् "अतिशायने तमबिष्ठनौ" इति तमपि, पलोपे, किम् तम इति जाते "तरप्तमपौ घः" इति तमपो घसंज्ञायाम् "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यामौ 'किम् तम आम्' इति भूते "अकः सवर्णे दीर्घः" इति दीर्घत्वे च 'किन्तमाम्' इति रूपम् । एवं प्राह्णेतमाम् । पचतितमाम् । "तिङश्च" इति तिङन्तात् 'पचति' इत्यस्मात् "तिङश्च" इति तमपि, पलोपे "तरप्तमपौ घः" इति घत्वे "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यामौ उलोपे सवर्णदीर्घत्वे च तत्सिद्धिः । एवमेव 'उच्चैस्तमाम्' इत्यत्रापि । उच्चैस्तमस्तरुः । अत्र द्रव्यप्रकर्षत्वान्न आमुः । द्विवचन । उच्यतेऽनेनेति वचनम् । द्वयोरर्थयोर्वचनं द्विवचनम् । द्व्यर्थप्रतिपादकमिति यावत् । विभक्तव्यं विभज्यम् । "ऋहलोः" इति ण्यतं बाधित्वा निपातनाद्यत् । द्विवचनं च विभज्यं चेति समाहारद्वन्द्वः । द्विवचनविभज्यं च तदुपपदं चेति कर्मधारयः । द्व्यर्थप्रतिपादके विभक्तव्यविषयके च उपपदे सतीति फलितम् । प्रातिपदिकादिति तिङ इति चानुवर्तते । सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात् सुबन्तत्वं प्रातिपदिकविशेषणं लभ्यते । फलितमाह—द्वयोरेकस्येत्यादिना । द्वयोर्मध्ये अन्यतरापेक्षया अतिशयविशिष्टस्वार्थवृत्तेः विभागप्रयोजकीभूतधर्मवाचकाच्च शब्दात्स्वार्थे तरबीयसुनौ स्त इति यावत् । लघुतरः । अनयोर्मध्ये अतिशयेन लघुः इति लघुतरः इत्यत्र "द्विवचनविभज्योपपदे तरबीयसुनौ" इति तरपि, सुपो लुकि पलोपे विभक्तिकार्ये च कृते 'लघुतरः' इति । लघीयान् । लघुशब्दात् ईयसुनि उनो लोपे सुपो लुकि, 'लघु ईयस्' इति जाते "उगिदचाम्" इति नुमि, उमो लोपे, "टेः" इति टिलोपे संयोगे "अत्वसन्तस्य" इति दीर्घत्वे सोर्लोपे, "संयोगान्तस्य लोपः" इति सलोपे, विभक्तिकार्ये च कृते 'लघीयान्' इति रूपम् । एवमेव 'पटीयान्' इति, तस्य जसि—पटीयांसः । प्रशस्यस्य श्रः । अजाद्योरिति । इष्ठन्नीयसुनोरित्यर्थः । अजादी इत्यनुवृत्तं सप्तम्या विपरिणम्यत इति भावः । प्रकृत्यैकाच् । एकः अच् यस्येति बहुव्रीहिः । ६।४।१५६ इति । "तुरिष्ठेमेयःसु" इत्यतः तदनुवृत्तेरिति भावः । श्रेष्ठः । अतिश-

५।३।६१ प्रशस्यस्य ज्यादेशः स्यात् इष्ठेयसोः । ज्येष्ठः ॥ ज्यादादीयसः ६।४।१६० ज्यादुत्तरस्येयसुन आकारादेशः । "आदेः परस्य" । ज्यायान् ॥ बहोर्लोपो भू च बहोः ६।४।१५८ बहोः परयोरिमेयसोर्लोपः स्यात् बहोश्च भूरादेशः । भूमा ॥ इष्ठस्य यिट् च ६।४।१५९ बहोः परस्य इष्ठस्य लोपः स्यादिडागमश्च । भूयिष्ठः ॥ विन्मतोर्लुक् ५।३। ६५ विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः, स्रजीयान् । अति-

---

येन प्रशस्यः 'श्रेष्ठः' इत्यत्र "अतिशायने तमबिष्ठनौ" इतीष्ठनि, 'प्रशस्य—इष्ठ' इति जाते "प्रशस्यस्य श्रः" इति प्रशस्यस्य स्थाने आदेशे 'श्र इष्ठ' इति स्थिते, अत्र "टेः" इति टिलोपे प्राप्ते "आद्गुणः" इति गुणे विभक्तिकार्ये च कृते 'श्रेष्ठः' इति रूपम् । श्रेयान् । द्वयोर्मध्ये अतिशयेन प्रशस्यः 'श्रेयान्' इत्यत्र "द्विवचनविभज्योपपदे तरबीयसुनौ" इति ईयसुनि, उनि गते "प्रशस्यस्य श्रः" इति आदेशे "टेः" इति टिलोपे प्राप्ते "प्रकृत्यैकाच्" इति टिलोपाऽभावे गुणे श्रेयस् इति जाते ततः सौ, नुमि, "अत्वसन्तस्य" इति दीर्घे हल्ङ्यादिना प्रथमसलोपे, "संयोगान्तस्य" इति द्वितीयसलोपे च तत्सिद्धिः । ज्य च । 'ज्य' इति लुप्तप्रथमाकम् । प्रशस्यस्येति अजादी इति चानुवर्तते । तदाह—प्रशस्यस्येति । ज्येष्ठः । "अतिशायने तमबिष्ठनौ" इति इष्ठनि, "ज्य च" इति प्रशस्यस्य स्थाने 'ज्य' इत्यादेशे "प्रकृत्यैकाच्" इति टिलोपाभावे गुणे विभक्तिकार्ये च तत्सिद्धिः । ज्यादादीयसः । ज्यात् आत् इति छेदः । ज्यात् परस्य ईयसः आकारः स्यादित्यर्थः । अन्त्यादेशत्वे प्राप्ते आह—आदेः परस्येति । ज्यायान् । द्वयोर्मध्ये अतिशयेन प्रशस्यः 'ज्यायान्' इत्यत्र "द्विवचनविभज्योपपदे तरबीयसुनौ" इति ईयसुनि, उनो लोपे "ज्य च" इति प्रशस्यस्य स्थाने ज्यादेशे "ज्यादादीयसः" इति अन्त्यस्यादादेशे प्राप्ते "आदेः परस्य" इति ईकारस्याकारादेशे कृते सवर्णदीर्घे च कृते 'ज्यायस्' इति भूते तद्धितान्तत्वात्प्रातिपदिकत्वे, ततः सौ, नुमि, उपधादीर्घे, सकारद्वयस्य लोपे च कृते तत्सिद्धिः । बहोर्लोप इति । भू इति लुप्तप्रथमाकम् । इष्ठेमेयस्स्वित्यनुवृत्तम् । तत्र इष्ठन उत्तरसूत्रे कार्यान्तरविधानादिह तस्य न सम्बन्धः । तदाह—बहोः परयोरिति । "आदेः परस्य" इति प्रत्ययोरादिलोपः । भूमा । बहुत्वमित्यर्थः । बहुशब्दात् पृथ्वादित्वादिमनिचि, प्रकृतेर्भूभावः, प्रत्ययादेरिकारस्य लोपः । विभक्तिकार्यञ्च । इष्ठस्य यिट् च । पूर्वसूत्रं सम्पूर्णमनुवर्तते, तदाह—बहोरित्यादि । भूयिष्ठः । अतिशयेन बहुः 'भूयिष्ठः' इत्यत्र "अतिशायने तमबिष्ठनौ" इति इष्ठनि, "इष्ठस्य यिट् च" इति इष्ठन इकारलोपे, बहोः स्थाने भू इत्यादेशे यिटि च कृते विभक्तिकार्ये च 'भूयिष्ठः' इति रूपम् । विन्मतोर्लुक् । इष्ठेयसोरिति । अजादी इत्यनुवृत्तस्य सप्तम्या विपरिणामादिति भावः । स्रजिष्ठः । अतिशयेन स्रग्वी 'स्रजिष्ठः' इत्यत्र "अतिशायने" इति इष्ठनि, नलोपे, 'स्रग्वी + इष्ठ' इति जाते । "विन्मतोर्लुक्" इति विनो लोपे संयोगे विभक्तिकार्ये च

शयेन स्वग्वान् स्वचिष्ठः, स्वचीयान् ॥ ईषदसमाप्तौ कल्पप्देश्यदेशीयरः ५।३। ६७ ईषदूनो विद्वान् विद्वत्कल्पः, विद्वद्देश्यः, विद्वद्देशीयः। पचतिकल्पम् ॥ विभाषा सुपो बहुच् पुरस्तात्तु ५।३।६८ ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव न तु परतः। ईषदूनः पटुर्बहुपटुः। पटुकल्पः। सुपः किम्? यजतिकल्पम् ॥ प्रागिवात्कः ५।३।७० इवे प्रतिकृताविच्यतः प्राक्काधिकारः ॥ अव्ययसर्वनाम्नामकच् प्राक् टेः ५।३।७१ कापवादः। तिङश्चेत्यनुवर्तते। अज्ञाते ५।३।७३ कस्यायमश्वोऽश्वकः। उच्चकैः। नीचकैः। सर्वकैः ॥ कुत्सि-

---

कृते 'स्रजिष्ठः' इति रूपम्। पक्षे—"द्विवचनविभज्योपपदे तरबीयसुनौ" इति ईयसुनि, उनो लोपे "विन्मतोर्लुक्" इति विनो लुकि, विभक्तिकार्ये च कृते 'स्रजीयान्' इति। एवं 'स्वचिष्ठः' 'स्वचीयान्' इति। ईषदसमाप्तौ। सम्पूर्णता पदार्थानां समाप्तिः। स्तोकेनासम्पूर्णता ईषदसमाप्तिः। प्रकृत्यर्थविशेषणं चैतत्। ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् कल्पब्देश्यदेशीयर् इत्येते प्रत्यया भवन्ति। विद्वत्कल्पः। ईषदूनो विद्वान् 'विद्वत्कल्पः' इत्यत्र "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पपि, पलोपे, सुपो लुकि, 'विद्वस् कल्प' इति जाते "वसुस्रंसुध्वंस्वनडुहां दः" इति सस्य दत्वे "खरि च" इति दस्य तत्वे विभक्तिकार्ये च कृते रूपम्। एवं देश्यप्रत्यये—विद्वद्देश्यः। देशीयरि—विद्वद्देशीयः। एवं किञ्चिदूनं पचतीत्यत्र कल्पपि—'पचतिकल्पम्' इति। विभाषा सुपो। ईषदसमाप्तावित्यनुवर्तते। तदाह—ईषदसमाप्तिविशिष्ट इति। बहुपटुः। ईषदूनः पटुः 'बहुपटुः' इत्यत्र "विभाषा सुपो बहुच्पुरस्तात्तु" इति पटुशब्दात्पुरस्तात् बहुचि कृते 'बहुपटुः' इति। पक्षे—कल्पपि—पटुकल्पः। यजतिकल्पमिति। अत्र सुबन्तत्वाभावान्न बहुच्। प्रागिवात्कः। इवशब्दस्तद्घटितसूत्रपरः इति मत्वा आह—इवे प्रतीति। अव्ययसर्व। अव्ययानां सर्वनाम्नां तिङन्तानां च प्रागिवीयेष्वर्थेष्वकच् प्रत्ययो भवति, स च प्राग्टेः, न परतः। तत्राभिधानतो व्यवस्था भवति। क्वचित्प्रातिपदिकस्य प्राक्टेः प्रत्ययो भवति, क्वचित्सुबन्तस्य। युष्मकाभिः, अस्मकाभिः। युष्मकासु, अस्मकासु। युवकयोः, आवकयोः इत्यत्र प्रातिपदिकस्य। त्वयका, मयका। त्वयकि, मयकि, इत्यत्र सुबन्तस्य। अज्ञाते। अज्ञातविशेषोऽज्ञातः। अज्ञातत्वोपाधिकेऽर्थे वर्तमानात्प्रातिपदिकात्तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति। स्वेन रूपेण ज्ञाते पदार्थे विशेषरूपेणाज्ञाते प्रत्ययविधानमेतत्। अश्वकः। कस्यायमश्वः, अश्वकः इत्यत्र "अज्ञाते" इति कप्रत्यये सुपो लुकि, विभक्तिकार्ये च कृते 'अश्वकः' इति। उच्चकैः। नीचकैः। अत्र "अव्ययसर्वनाम्नामकच् प्राक् टेः" इति टेः पूर्वमकचि, सस्य रुत्वे, रस्य विसर्गत्वे च कृते 'उच्चकैः, नीचकैः' इति। सर्वकैः। अत्र सर्वनामत्वाट्टेः पूर्वमकच्। एवं 'युष्मकाभिः'

ते ५।३।७४ कुत्सितोऽश्वोऽश्वकः ॥ किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ५।३।९२ अनयोः कतरो वैष्णवः । यतरः । ततरः ॥ वा बहूनां जातिपरिप्रश्ने डतमच् ५।३।९३ बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात् । 'जातिपरिप्रश्ने' इति प्रत्याख्यातमाकरे । कतमो भवतां कठः । ततमः । वाग्रहणमकजर्थम् । यकः । सकः ॥ इति प्राग्दिवीयाः ॥

---

## अथ तद्राजाः ।

इवे प्रतिकृतौ ५।३।९६ कन्स्यात् । अश्व इव प्रतिकृतिरश्वकः । सर्वप्रातिपदिकेभ्यः स्वार्थे कन् । अश्वकः । तत्प्रकृतवचने मयट् ५।४।२१ प्राचुर्येण प्रस्तु-

---

इत्यादौ बोध्यम् । कुत्सिते । कुत्सितो गर्हितो निन्दितः । प्रकृत्यर्थविशेषणं चैतत् । कुत्सितत्वोपाधिकेऽर्थे वर्तमानात्प्रातिपदिकात् यथाविहितं प्रत्ययो भवति । अश्वकः । कुत्सितोऽश्वः 'अश्वकः' इत्यत्र "कुत्सिते" इति कः प्रत्ययः । किंयत्तदोः । किं यत् तद् इत्येतेभ्यः प्रातिपदिकेभ्यो द्वयोरेकस्य निर्द्धारणे डतरच् प्रत्ययो भवति । निर्द्धार्यमाणवाचिभ्यः स्वार्थे प्रत्ययः । जात्या क्रियया गुणेन वा संज्ञया वा समुदायादेकदेशस्य पृथक् करणं निर्द्धारणम् । महाविभाषयाऽत्र प्रत्ययो विकल्प्यते । अनयोः कतरो वैष्णवः । अत्र किम्शब्दात् "किंयत्तदो निर्द्धारणे०" इति डतरचि, चलोपे सुपो लुकि, डस्येत्संज्ञायां लोपे च भत्वे डित्वाट्टिलोपे संयोगे विभक्तिकार्ये च तत्सिद्धिः । एवम् अनयोर्यः 'यतरः' अनयोः सः 'ततरः' इत्यत्र डतरचि टिलोपः । वा बहूनाम् । किंयत्तद् इति वर्तते, निर्द्धारणे एकस्येति च । बहूनामिति निर्द्धारणे षष्ठी । वा वचनमकजर्थम् । तदाह—बहूनां मध्ये इति । प्रत्याख्यातमाकरे इति । क्षेपार्थस्य स्वनभिधानान्न ग्रहणमिति तदाशयः । कतमो भवतां कठः । एषां मध्ये 'कः' इत्यत्र "वा बहूनां जातिपरिप्रश्ने डतमच्" इति डतमचि, चलोपे डलोपे सुपो लुकि, भत्वाट्टेर्लोपे विभक्तिकार्ये च कृते 'कतमः' इति । एवम्—एषां मध्ये यः यतमः । एषां मध्ये सः ततमः । यकः, सकः । "अव्ययसर्वनाम्नामकच् प्राक् टेः" इति सर्वनामत्वादकच् । इति प्राग्दिवीयाः ।

इवे प्रतिकृतौ । कन् स्यादिति । "अवक्षेपणे कन्" इत्यतस्तदनुवृत्तेरिति भावः । इवार्थः उपमानत्वम् । तद्वति वर्तमानात्प्रातिपदिकात्कन् स्यात्प्रतिकृतिभूते उपमेये इति फलितम् । मृदा विनिर्मिता प्रतिमा प्रतिकृतिः । अश्वकः । अश्व इव प्रतिकृतिः 'अश्वकः' इत्यत्र "इवे प्रतिकृतौ" इति कनि नलोपे विभक्तिकार्ये च कृते 'अश्वकः' इति । प्रतिकृतेः स्त्रीत्वेऽपि "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते" इति पुंल्लिङ्गत्वम् । तत्प्रकृतवचने । तदिति प्रथमान्तनिर्देशः । प्राचुर्येणेति । बहुलतया उपस्थितं प्रकृतशब्देन विवक्षितमित्यर्थः । उपसर्गबलादिति भावः । प्रतिपादनमिति । बोधनमित्यर्थः । भावे इति । तथाच प्रकृतस्य बोधने सतीत्यर्थः । प्राचुर्यविशेषणकवस्तुवृत्तेः

तं तस्य वचनं प्रकृतं प्रतिपादनम् । भावे अधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नमन्नमयम् । द्वितीये तु अन्नमयो यज्ञः । अपूपमयं पर्व ॥ **प्रज्ञादिभ्यश्च ५।४।३८** अण् स्यात् । प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः ॥ **बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५।४।४२** बहूनि ददाति बहुशः, अल्पशः ( **आद्यादिभ्यस्तसेरुपसङ्ख्यानम्** ) आदौ आदितः । मध्यतः । अन्ततः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण स्वरतः । वर्णतः॥ **कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ५।४।५०** ( **अभूततद्भाव इति वक्तव्यम्** ) विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात् स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे । **अस्य च्वौ ७।४।३२** अवर्णस्य ईत्स्यात् च्वौ । वेर्लोपे च्व्यन्तत्वादव्ययत्वम् । अकृष्णः कृष्णः सम्पद्यते तं करोति कृष्णीकरोति । ब्रह्मीभवति । गङ्गीस्यात् ( **अव्ययस्य च्वावीत्वं नेति**

---

प्रथमान्तात्स्वार्थे मयडिति फलति । अत्र प्राचुर्यविशिष्टं वस्तु प्रकृतेरर्थः । प्रत्ययस्तु तद्द्योतकः । अधिकरणे वेति । तथाच प्राचुर्यविशेषणकं यद्वस्तु यस्मिन्नुच्यते, तदधिकरणे वाच्ये तादृशवस्तुवृत्तेः शब्दात् मयडिति फलितम् । अन्नमयम् । आद्ये प्रकृतमन्नम् अन्नमयम् इत्यत्र "तत्प्रकृतवचने मयट्" इति मयटि, टलोपे विभक्तिकार्ये च कृते 'अन्नमयम्' इति । एवम् अपूपमयम् । द्वितीये तु-प्राचुर्येण अन्नं यस्मिन् सः अन्नमयो यज्ञः, अपूपमयं पर्व । प्रज्ञादिभ्यश्च । स्वार्थेऽणिति शेषः । प्राज्ञः । अत्र प्रकृतसूत्रेण अणि शेषं पूर्ववत् । प्राज्ञी स्त्री । अणन्तत्वात् "टिड्ढाणञ्" इति ङीप् । दैवतः । देवता एव दैवतः, "प्रज्ञादिभ्यश्च" इत्यण् । बान्धवः । बन्धुरेव बान्धवः । प्रज्ञादित्वादणि, "ओर्गुणः" इति गुणः । बह्वल्पार्थादिति । बह्वल्पार्थाच्च कारकाभिधायिनः शब्दात्स्वार्थे शस्प्रत्ययो वा स्यादित्यर्थः । बहुशः । बहूनि ददाति 'बहुशः' अत्र "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्" इति शसि, सस्य रुत्वे रेफस्य विसर्गत्वे च कृते 'बहुशः' इति । एवम्—अल्पशः । आद्यादिभ्य इति । अयं सार्वविभक्तिकस्तसिः । आदितः । आदौ 'आदितः' इत्यत्र "आद्यादिभ्यस्तसेरुपसंख्यानम्" इति तसि 'आदितः' इति । एवं 'मध्यतः' इत्यादावपि । कृभ्वस्तियोगे । अभूतेति । येन रूपेण प्रागभूतं यद् वस्तु तस्य तद्रूपप्राप्तावित्यर्थः । करोत्यादिभिरिति । 'डुकृञ् करणे, भूसत्तायाम्, 'अस भुवि, इति धातुभिर्योगे सतीत्यर्थः । च्विप्रत्यये चकार इत्, इकार उच्चारणार्थः । अस्य च्वौ । ईत्स्यादिति । "ई घ्राध्मोः" इत्यतस्तदनुवृत्तेरिति भावः । वेर्लोप इति । "वेरपृक्तस्य" इत्यनेनेति शेषः । च्व्यन्तत्वादव्ययत्वमिति । "ऊर्यादिच्विडाचश्च" इति निपातत्वात् "स्वरादिनिपात"मित्यव्ययत्वमित्यर्थः । कृष्णीकरोति । अकृष्णः कृष्णः सम्पद्यते तं करोति 'कृष्णीकरोति' इत्यत्र "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः" इति च्वौ, 'कृष्ण च्वौ' इति जाते, च्वेः सर्वस्य लोपे, स्थानिवद्भावेन च्वौ परे "अस्य च्वौ" इति ईत्वे संयोगे च्व्यन्तत्वा-

वाच्यम् )। दोषाभूतमहः। दिवाभूता रात्रिः। **विभाषा साति कार्त्स्न्ये ५।४।५२** च्विविषये सातिर्वा स्यात्साकल्ये॥ **सात्पदाद्योः ८।३।१११** पदाद्योः सस्य षत्वं न स्यात्। दधि सिञ्चति। कृत्स्नं शस्त्रमग्निः सम्पद्यतेऽग्निसाद्भवति॥ **च्वौ च ७।४।२६** च्वौ च परे पूर्वस्य दीर्घः स्यात्। अग्नीभवति॥ **अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ५।४।५७** द्व्यजेवावरं न्यूनं द्व्यजवरं न तु ततो न्यूनमनेकाजिति यावत्तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे। ( **डाचि विवक्षिते द्वे बहुलम्** ) डाचि विवक्षिते द्वित्वम्। ( **नित्यमाम्रेडिते डाचीति वक्तव्यम्** ) डाच् परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति तकारपकारयोः पकारः। पटपटाकरोति। अव्यक्तानुकरणात्किम् ? ईषत्करोति। द्व्यज-

---

द्व्ययत्वे सुपो लुकि 'कृष्णीभवति' इति। एवं ब्रह्मीभवति, गङ्गीस्यात् इत्यत्र बोध्यम्। दोषाभूतमहः। दोषेत्याकारान्तमव्ययं रात्रावित्यर्थे वर्तते। अदोषा दोषाभूतमहः—बहुलमेघावरणान्धकारात् दोषाभूतमित्यर्थः। अत्र अव्ययत्वात् ईत्वं नेत्यर्थः। दिवाभूता रात्रिरिति। दिवेत्याकारान्तमव्ययम् अहनीत्यर्थे। इह तु अहरित्यर्थे वर्तते। चन्द्रिकातिशयवशात् अहर्भूतेत्यर्थः। विभाषा साति। सातीति लुप्तप्रथमाकम्। च्विविषये इति। अभूततद्भावे सम्पद्यकर्तरि कृभ्वस्तियोगे इत्यर्थः। सात्पदाद्योः। शेषपूरणेन सूत्रं व्याचष्टे—सस्य षत्वं न स्यादिति। सातेरवयवस्य पदादेश्च सस्य षत्वं न स्यादित्यर्थः। दधि सिञ्चति। षिचि धातोः "धात्वादेः षः सः" इति षस्य सः। तस्य "आदेशप्रत्ययोः" इति षत्वे प्राप्ते अनेन निषेधः। अग्निसाद् भवति। कृत्स्नं शस्त्रम् अग्निः सम्पद्यते 'अग्निसात्' इत्यत्र "कृभ्वस्तियोगे" इति च्वौ, च्वेः सर्वस्य लोपे "विभाषा सातिकार्त्स्न्ये" इति सातप्रत्यये, इलोपे विभक्तिकार्ये च कृते 'अग्निसाद्' भवति। पक्षे च्वौ, "च्वौ च" इति दीर्घत्वे 'अग्नीभवति' इति। च्वौ च। दीर्घः स्यादिति। "अकृत्सार्वधातुकयोः" इत्यतस्तदनुवृत्तेरिति भावः। अव्यक्तानुकरणात्। यत्र ध्वनौ अकारादयो वर्णविशेषाः न व्यज्यन्ते सः अव्यक्तो ध्वनिः। तस्यानुकरणम् अव्यक्तानुकरणम्। द्व्यजवरार्धशब्दं व्याचष्टे—द्व्यजिति। द्वावचौ यस्येति विग्रहः। अवरशब्दं व्याचष्टे—न्यूनमिति। द्व्यजेव अवरं न्यूनसङ्ख्याकमिति सामानाधिकरण्येनान्वयः। न तु ततो न्यूनमिति। एकाच्कमित्यर्थः। फलितमाह—अनेकाजिति। यावदिति। तादृशमर्धमिति। अनेकाच्कम् अर्धं भागो यस्य तत् द्व्यजवरार्धम्, तस्मादित्यर्थः। कृभ्वस्तिभिर्योगे इति। मण्डूकप्लुत्या तदनुवृत्तेरिति भावः। तथाच—अनेकाच्कभागयुक्तादव्यक्तानुकरणात् शब्दात् कृभ्वस्तियोगे डाच् स्यादिति फलितम्। डाचि विवक्षिते। स्पष्टम्। नित्यमाम्रेडिते डाचीति। "एकः पूर्वपरयोः" इत्यधिकारे पररूपप्रकरणे "नाम्रेडितस्यान्त्यस्य तु वा" इति सूत्रभाष्ये इदं वार्तिकं पठितम्। डाच्परमिति। डाच्परं यस्मादिति विग्रहः।

वराधौ किम् ? श्रत्करोति । अवरेति किम् ? खरटखरटाकरोति । अनितौ किम् ? पटितिकरोति ॥ इति तद्धिताः । इति तद्धिताः ॥

## अथ स्त्रीप्रत्ययाः ।

**स्त्रियाम् ४।१।३** अधिकारोऽयं समर्थानामिति यावत् । **अजाद्यतष्टाप् ४।१।४** अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता । मेधा । इत्यादि । गङ्गा । सर्वा ॥ **उगितश्च ४।१।६** उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप् स्यात् ॥

---

पटपटाकरोति । पटत् पटत् करोति—'पटपटाकरोति' इत्यत्र "अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच्" इति डाचि, 'पटत् डाच्' इति भूते "डाचि विवक्षिते द्वे बहुलम्" इति द्वित्वे 'पटत् पटत्' इति जाते "नित्यमाम्रेडिते डाचीति वक्तव्यम्" इति वार्तिकेन पूर्वपटत्सम्बन्धितस्तस्य पररूपत्वं विधाय 'पट पटत्–डा' इत्यवशिष्टे डचयोरित्संज्ञायां लोपे च "यचि भम्" इति भसंज्ञायाम् "टेः" इति टिलोपे संयोगे विभक्तिकार्ये च कृते 'पटपटाकरोति' इति सिद्धम् । ईषत्करोति । अत्र अव्यक्तानुकरणत्वाभावात् न डाच् । श्रत्करोति । अत्र एकाच्त्वान्न डाच् । खरटखरटाकरोति । अत्र अवरत्वान्न डाच् । पटितिकरोति । अत्र इतिपरत्वान्न डाच् । इति तद्धिताः ।

इति श्रीकौण्डिन्यकुलावतंसजोशीत्युपाह्वदामोदरात्मजसदाशिवशास्त्रिकृतायां लघुसिद्धान्तकौमुदीव्याख्यायां सुधाख्यायां तद्धिताः ।

---

स्त्रियाम् । अधिकारोऽयमिति । "अजाद्यतष्टाप्" इत्याद्युत्तरसूत्रेष्वनुवृत्त्यर्थमिदं सूत्रं, न तु स्वतन्त्रविधिरित्यर्थः । कियत्पर्यन्तमधिकार इत्यत आह—समर्थेति । यावत्–इत्यवधौ । "समर्थानां प्रथमाद्वा" इत्यतः प्रागित्यर्थः । अजाद्यतष्टाप् । अज आदिर्यस्य सोऽजादिः, अजादिश्च अच्चेत्यनयोः समाहारः अजाद्यत् तस्य । सूत्रेऽत इति षष्ठ्यन्तस्य वाच्यवाचकभावोऽर्थः । स्त्रियामिति धर्मप्रधाननिर्देशः । तदाह—अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वमिति । अजाद्यकारान्तवाच्ये स्त्रीत्वे द्योत्ये सति प्रत्ययास्याऽजाद्यकारान्तरूपप्रातिपदिकादित्यर्थः । सूत्रेऽजादिभिः स्त्रीत्वस्य विशेषणात् 'पञ्चाजी' इत्यत्र टाब् नेति बोध्यम् । अत्र समाहारनिष्ठं स्त्रीत्वं नत्वजानिष्ठम् । अजा । अत्र "अजाद्यतष्टाप्" इति टापि, टपयोरित्संज्ञायां लोपे च 'अज आ' इति जाते "अकः सवर्णे दीर्घः" इति दीर्घत्वे 'अजा' इति जाते "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति सौ, उलोपे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सलोपे 'अजा' इति सिद्धम् । एवम्–एडका, अश्वा, इत्यादौ । मूषिकेति । अजादीनां मूषिकान्तशब्दानां जातिलक्षणप्राप्तस्य ङीषो बाधनार्थोऽजादिगणे पाठः । विलाता । बालादिविलातान्तशब्दानां वयो-

भवती। भवन्ती। पचन्ती। **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४।१।१५** अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात्। कुरुचरी। नदट् नदी। देवट् देवी। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। (प्रास्थिकी)। लावणिकी। यादृशी।

---

लवणप्राप्तस्य ङीपो बाधनार्थोऽजादिगणे पाठः। उगितश्च। "प्रातिपदिकात्" इत्यधिकृतं विशेष्यम्, उगिदिति विशेषणं तस्मात्तदन्तविधिः। "स्त्रियाम्" इत्यधिक्रियते। "ऋन्नेभ्यो ङीप्" इत्यतो ङीवनुवर्तते। तदाह–उगिदन्तात्प्रातिपदिकादिति। भवती। "भातेर्डवतुः" इति निष्पन्नभवतुशब्दस्य सर्वादिगणे पाठादुगित्त्वव्यपदेशः। तथाच भवत् शब्दात् "उगितश्च" इति ङीपि, ङपयोरित्संज्ञायां लोपे च कृते, संयोगे, विभक्तिकार्यं च कृते 'भवती' इति। भवन्ती। भवत् शब्दात् शत्रन्तात् "उगितश्च" इति ङीपि, ङपयोरित्संज्ञायां लोपे च "शप्श्यनोर्नित्यम्" इति नुमि, उमि गते, मित्वात् "मिदचोऽन्त्यात्परः" इति अन्त्याचः परे नस्यानुस्वारे परसवर्णे च कृते संयोगे विभक्तिकार्यं च कृते 'भवन्ती' इति। एवं 'पचन्ती' इति बोध्यम्। टिड्ढाणञ्। टिच्च ढश्च अण्चेत्येवं क्रमेणेतरेतरयोगद्वन्द्वः। टिड्ढादीनां प्रत्ययत्वात्तेभ्यस्तदन्तग्रहणम्। एतच्चानुवृत्तस्य प्रातिपदिकस्य विशेषणम्। "अजाद्यत" इति सूत्रादनुवृत्तमपि अत इति प्रातिपदिकविशेषणमतः पुनस्तदन्तविधिः। कुरुचरी। कुरुषु चरतीति 'कुरुचरी' इत्यत्र "चरेष्टः" इति टे, टित्वात् "टिड्ढाणञ्" इति ङीपि, ङपयोर्लोपे, भत्वे अलोपे संयोगे विभक्तिकार्ये च कृते 'कुरुचरी' इति। एवं नदट् टित्वाद् ङीपि नदी। देवट् टित्वाद् ङीपि, 'देवी' इति। सौपर्णेयी। सुपर्णाया अपत्यं स्त्रीति विग्रहः। ढान्तत्वात् सौपर्णेय शब्दात् प्रकृतसूत्रेण ङीपि, 'सौपर्णेयी' इति रूपम्। ऐन्द्री। इन्द्रो देवता अस्या इति विग्रहः। अत्र अणन्तत्वात् ङीप्। औत्सी। उत्से भवेति विग्रहः। "उत्सादिभ्योऽञ्" इत्यञन्तत्वात् औत्सशब्दात् ङीप्। ऊरुद्वयसी। ऊरू प्रमाणमस्या इति विग्रहः। "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति द्वयसच्। तदन्तत्वात् ङीप्। एवम्–ऊरुदघ्नी, ऊरुमात्री इत्यत्र। पञ्चतयी। पञ्च अवयवा अस्या इति विग्रहः। "संख्याया अवयवे तयप्" इति तयप्प्रत्ययान्तात् पञ्चतयशब्दात् "टिड्ढाणञ्" इत्यादिना ङीपि, ङपयोर्लोपे भत्वे अलोपे संयोगे विभक्तिकार्ये च तत्सिद्धिः। आक्षिकी। अक्षैर्दीव्यतीति विग्रहः। "तेन दीव्यति खनति जयति जितम्" इति ठक्। ठगन्तत्वात् ङीप्। लावणिकी। लवणं पण्यमस्या इति विग्रहः। "लवणाट्ठञ्" "ठस्येकः" आदिवृद्धिः, "यस्येति च" लावणिकशब्दात् ङीप्, "यस्येति च"। ठक्इत्येव सिद्धे ठक्ठञोः पृथक्करणं तु ठनो ञिठस्य व्यावृत्त्यर्थम्। यादृशी। "त्यदादिषु दृशः" इति यच्छब्दे उपपदे दृशः कञ्, "आ सर्वनाम्नः" इति यच्छब्दस्याकारः। ङीप्, "यस्येति च"। इत्वरी। 'इण् गतौ' "इण्नशजिसर्तिभ्यः क्वरप्" "ह्रस्वस्य पिति कृति" इति तुक्, इत्व-

इत्वरी । ( नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम् ) स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यंकरणी । तरुणी । तलुनी ॥ यञश्च ४।१।१६ यञन्तात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् । अकारलोपे कृते ॥ हलस्तद्धितस्य ६।४।१५० हलः परस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यात् ईति परे । गार्गी ॥ प्राचां ष्फ तद्धितः ४।१।१७ यञन्तात् ष्फो वा स्यात् स च तद्धितः ॥ षिद्गौरादिभ्यश्च ४।१।४१ षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात् । गार्ग्यायणी, नर्तकी । गौरी । अनडुही, अनड्-

---

रशब्दात् ङीप्, "यस्येति च"। नञ्स्नञीकक्। नञ् च स्नञ् च ईकक् च ख्युन् च तरुणश्च तलुनश्चैतेषामितरेतरद्वन्द्वस्तेषामपि ङीब्विधिवचनं कर्तव्यमित्यर्थः। स्त्रैणी, पौंस्नीति। "स्त्रीपुंसाभ्याम्" इति नञ्स्नञौ। तत्र स्त्रीशब्दान्नञि, आदिवृद्धिः, णत्वम्, ङीप् "यस्येति च"। पुंस्शब्दात् स्नञि, आदिवृद्धिः, ङीप्, "यस्येति च"। शाक्तीकीति। शक्तिः आयुधविशेषः प्रहरणम् अस्या इति विग्रहः। "शक्तियष्ट्योरीकक्"। आदिवृद्धिः, ङीप्, "यस्येति च"। आढ्यंकरणीति। अनाढ्यः आढ्यः क्रियते अनयेति विग्रहः। "आढ्यसुभग" इत्यादिना ख्युन्। "युवोः" इत्यनादेशः। "अरुर्द्विषत्" इति मुम्, णत्वम्, ङीप्। "यस्येति च"। तरुणी। तरुणशब्दाद् ङीपि—'तरुणी' इति। एवम् 'तलुनी' इति। यञश्च। यञ इति प्रत्ययत्वात्तदन्तग्रहणम्। "ऋन्नेभ्यो ङीप्" इत्यतो ङीबित्यनुवर्तते। स्त्रियामित्यधिकृतं। तदाह—यञन्तादिति। अकारलोपे कृते इति। "यस्येति च" इत्यनेनेति शेषः। हलस्तद्धितस्य। हल इति दिग्योगे पञ्चमी। परस्येत्यध्याहार्यम्। "यस्येति च" इति सूत्रात् ईतीत्यनुवर्तते, "सूर्यतिष्यागस्त्य" इत्यतः उपधाया इति, 'य' इति षष्ठ्यन्तं च, "ढे लोपोऽकद्र्वाः" इत्यतः लोप इति च। तदाह—हलः परस्येत्यादिना। गार्गी। गार्ग्यशब्दात् "यञश्च" इति ङीपि, ङपयोरित्संज्ञायां लोपे च "यचि भम्" इति भत्वे "यस्येति च" इति अकारलोपे "हलस्तद्धितस्य" इति यकारलोपे संयोगे विभक्तिकार्ये च तत्सिद्धिः। प्राचां ष्फ तद्धितः। यञ इत्यनुवर्तते, स्त्रियामित्यधिकृतम्। ष्फेति लुप्तप्रथमाकम्। तदाह—यञन्तादिति। षिद्गौरादिभ्यश्च। ष् इत् येषां ते षितः, गौरः आदिर्येषान्ते गौरादयः। षितश्च गौरादयश्चेति द्वन्द्वः। गार्ग्यायणी। गार्ग्यशब्दात् "प्राचां ष्फ तद्धितः" इति ष्फे, षइत् तस्य लोपे फस्य "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति आयनादेशे भत्वे अलोपे णत्वे च 'गार्ग्यायण' इति भूते तस्मात् "षिद्गौरादिभ्यश्च" इति ङीषि, ङषयोर्लोपे भत्वे अलोपे विभक्तिकार्ये च तत्सिद्धिः। नर्तकी। नृती गात्रविक्षेपे, "शिल्पिनि ष्वुन्" "षः प्रत्ययस्य" इति षकार इत्। "हलन्त्यम्" इति नकारश्च इत्, "युवोरनाकौ" इति अकादेशः, लघूपधगुणः, रपरत्वम्। नर्तक इत्यस्मात् षित्वात् "षिद्गौरादिभ्यश्च" इति ङीषि, अनुबन्धलोपे भत्वे अलोपे विभक्तिकार्ये च तत्सिद्धिः। गौरीति। अत्र गौरादित्वात् ङीष्। अनड्वाही। अनडु-

वाही । आकृतिगणोऽयम् ॥ **वयसि प्रथमे ४।१।२१** प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप् स्यात् । कुमारी ॥ **द्विगोः ४।१।२२** अदन्तात् द्विगोर्ङीप् स्यात् । त्रिलोकी । अजादित्वात्त्रिफला । त्र्यनीका सेना ॥ **वर्णादनुदात्तात्तोपधात्तो नः ४।१।३९** वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात् प्रातिपदिकाद्वा ङीप् तकारस्य नकारादेशश्च । एता, एनी । रोहिता, रोहिणी ॥ **वोतो गुणवचनात् ४।१।४४** उदन्ताद् गुणवाचिनो वा ङीष् स्यात् । मृद्वी, मृदुः ॥ **बह्वादिभ्यश्च ४।१।४५**

---

हशब्दात् "षिद्गौरादिभ्यश्च" इति ङीषि, अनुबन्धलोपे "आमनडुहः स्त्रियां वा" इति वा आमि, मित्वादन्त्यादचः परे यणि, संयोगे विभक्तिकार्ये च कृते 'अनड्वाही' इति रूपम् । आमभावे—'अनडुही' इति । वयसि प्रथमे । प्रथमे वयसीत्यनन्तरं विद्यमानादिति शेषः । "अजाद्यत टाप्" इत्यतः अत इत्यनुवृत्तेन प्रातिपदिकादित्यधिकृतं विशेष्यते । तदन्तविधिः । स्त्रियामित्यधिकृतम् । "ऋन्नेभ्यः" इत्यतो ङीबित्यनुवर्तते । तदाह—प्रथमवयोवाचिन इति । कुमारी । कुमारशब्दात् "वयसि प्रथमे" इति ङीप् । द्विगोः । "स्त्रियाम्" इति 'अत' इति ङीबिति चानुवर्तते । तदाह—अदन्तादिति । त्रिलोकी । त्रयाणां लोकानामिति च विग्रहे "तद्धितार्थ" इति द्विगुः । "अकारान्तोत्तरपदः" इति स्त्रीत्वम् , त्रिलोकशब्दात् टापपवादो ङीप् । "यस्येति च" इति अकारलोपः । अजादित्वात् त्रिफला, त्र्यनीकेति । भवतीति शेषः । त्रयाणां फलानां समाहारः इति, त्रयाणामनीकानामिति च विग्रहे "तद्धितार्थ" इति द्विगुः । "अकारान्तोत्तरपदः" इति स्त्रीत्वम् , "द्विगोः" इति ङीपं बाधित्वा अजादित्वाट्टाबिति भावः । वर्णादनु । वेति ङीबिति चानुवर्तते । अनुदात्तादिति वर्णादित्यस्य विशेषणम् , तदन्तविधिः ।तोपधादित्यपि वर्णादित्यत्रान्वेति, तकारः उपधा यस्येति विग्रहः। तकारादकार उच्चारणार्थः । वर्णादित्येतत्प्रातिपदिकादित्यस्य विशेषणम् । तदन्तविधिः । त इति षष्ठी, तकारस्येत्यर्थः । न इत्यत्र नकारादकार उच्चारणार्थः,नकार इत्यर्थः । तदाह—वर्णवाचीत्यादिना । तदन्तादनुपसर्जनादिति । अनुपसर्जनादित्यनुवृत्तं वर्णान्तेऽन्वेति, न तु वर्णादित्यत्रेति भावः । एनी, एता । 'एनी' इत्यत्र वर्णवाचकात् एतशब्दात् "वर्णादनुदात्तात्तोपधात्तो नः" इति ङीपि, तकारस्य नत्वे भत्वादलोपे संयोगे विभक्तिकार्ये च कृते 'एनी' इति रूपम् । पक्षे टापि 'एता' इति । एवं रोहितशब्दात् ङीपि, तस्य नत्वे, नस्य णत्वे 'रोहिणी' इति । पक्षे टापि 'रोहिता' इति । वोतो गुणवचनात् । प्रातिपदिकादित्यनुवृत्तम् । वा उत् इति छेदः । उता गुणवचनस्य प्रातिपदिकस्य विशेषणात् तदन्तविधिः । तदाह—उदन्तादिति । वा ङीबिति । ङीपिति नात्रानुवर्तते । मृद्वी, मृदुः । मृदुशब्दात् "वोतो गुणवचनात्" इति ङीपि, "इको यणचि" इति यणि विभक्तिकार्ये च 'मृद्वी' इति । पक्षे—मृदुः । बह्वादिभ्यश्च । गुणवचनत्वाभावादप्राप्तस्य

एभ्यो वा ङीष् स्यात् । बह्वी, बहुः । (कृदिकारादक्तिनः) रात्रिः, रात्री । (सर्वतोऽक्तिन्नर्थादित्येके) शकटी, शकटिः ॥ **पुंयोगादाख्यायाम् ४।१।४८** या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष् स्यात् । गोपस्य स्त्री गोपी । (पालकान्तान्न) गोपालिका । अश्वपालिका ॥ **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७।३।४४** प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि स आप् सुपः परो न चेत् । सर्विका । कारिका । अतः किम् ? नौका । प्रत्ययस्थात्किम् ? शक्नोतीति शका । असुपः किम् ? बहुपरिव्राजका नगरी । (सूर्याद्देवतायां चाप् वाच्यः) सूर्यस्य स्त्री देवता सूर्या । देवतायां किम् ? (सूर्यागस्त्ययोश्छे च ङ्यां च)

---

ङीषो विधानार्थमिति भावः । बह्वी, बहुः । "बह्वादिभ्यश्च" इति वा ङीष्, "इको यणचि" इति यण् । कृदिकारादिति । गणसूत्रमिदम् । रात्रिः, रात्रीति । "राशदिभ्यां त्रिप्" इति राधातोरौणादिकस्त्रिप् । गुणवचनत्वाभावात् उदन्तत्वाभावाच्चाप्राप्ते वचनम् । सर्वतोऽक्तिन्नर्थादिति । इदमपि गणसूत्रम् । कृदिकारान्तादकृदिकारान्तादपि ङीप् वा स्यात्, न तु क्तिन्नर्थकप्रत्ययान्तादित्यर्थः । शकटिः, शकटी । शकटिशब्दात् 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीषि, भस्यादिलोपे 'शकटी' इति । पक्षे-शकटिः । पुंयोगादाख्यायाम् । पुंसा योगः पुंयोगः । हेतौ पञ्चमी । आख्यायामिति पञ्चम्यर्थे सप्तमी । आख्याशब्दो बोधकपरः । आख्या चोपस्थितत्वात्पुंस एव न स्त्रियाः । स्त्रियां वर्तमानस्य स्त्र्याख्यत्वाव्यभिचारादाख्यापदवैयर्थ्यापत्तेः । पुंस्येव यः प्रसिद्धः शब्द इत्यर्थः । पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेण स्त्रियां वर्तमानात्पुरुबोधकाच्छब्दात् ङीषित्यर्थः । गोपी । "अत्र पुंयोगादाख्यायाम्" इति गोपशब्दाद् ङीषि भस्याद-लोपे विभक्तिकार्ये 'गोपी' इति । गोपालिका, अश्वपालिका । अत्र "पुंयोगादाख्यायाम्" इति ङीषि प्राप्ते "पालकान्तान्न" इति निषेधे "अजाद्यतष्टाप्" इति टापि, टपयोर्लोपे 'गोपालक आ' इति जाते "अकः सवर्णे दीर्घः" इति दीर्घत्वे "प्रत्ययस्थात्" इति लकारोत्तरवर्त्यकारस्य इत्वे विभक्तिकार्ये च कृते ते रूपे सिद्ध्यतः । प्रत्ययस्थात् । ककारादिति । क् इति वर्णादित्यर्थः । अकार उच्चारणार्थः । स आबिति । इत्वविधौ यः परनिमित्तत्वेनोपात्तः स आबित्यर्थः । सुपः परो न चेदिति । सूत्रे असुप इति पञ्चम्यन्तम्, असमर्थसमासः । आपि सुपः परस्मिन् सति इत्वं न भवतीत्यर्थो विवक्षित इति भावः । सर्विका । सर्वकशब्दात् "अजाद्यतष्टाप्" इति टापि, टपयोर्लोपे सवर्णदीर्घ "प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः" इति वकारोत्तरवर्त्यकारस्य इत्वे विभक्तिकार्ये च कृते 'सर्विका' इति । एवं 'कारिका' इत्यत्र । सूर्याद्देवतायामिति । देवताभूतायां स्त्रियां पुंयोगाद्वर्तमानात् सूर्यशब्दात् चाप् वक्तव्य इत्यर्थः । "पुंयोगात्" इति ङीषोऽपवादः । चपावितौ । सूर्या । अकृतसूत्रेण चापि, सवर्णदीर्घः । सूर्यागस्त्ययोश्छे च ङ्यां चेति ।

यलोपः । सूरी । कुन्ती, मानुषीयम् ॥ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४।१।४९ एषामानुगागमः स्यात् ङीष् च । इन्द्रस्य स्त्री इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी । ( हिमारण्ययोर्महत्त्वे ) महद्धिमं हिमानी । महदरण्यमरण्यानी । ( यवाद्दोषे ) दुष्टो यवो यवानी । ( यवनाल्लिप्याम् ) यवनानां लिपिर्यवनानी । ( मातुलोपाध्याययोरानुग्वा ) मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी । ( आचार्यादणत्वं च )

---

सूरीयः । सूरी । अगस्तीयः । अगस्ती । नेह, सौर्यम् । आगस्त्यम् । सूरी कुन्ती । सूर्यस्य स्त्री मानुषी इत्यत्र "पुंयोगादाख्यायाम्" इति ङीपि, भत्वाद्लोपे, "सूर्यागस्त्ययोश्छे च ङ्यां च" इति यलोपे रेफस्य ईकारेण सह संयोगे च कृते 'सूरी' इति । इन्द्रवरुण । आनुगागम इति । कित्वादागमलिङ्गादिति भावः । ङीष् चेति । "अन्यतो ङीष्" इत्यतस्तदनुवृत्तेरिति भावः । इन्द्राणी । इन्द्रस्य स्त्री 'इन्द्राणी' इत्यत्र इन्द्रशब्दात् "इन्द्रवरुणभव" इति ङीषि, आनुगागमे च कृते, उकि गते, कित्वादन्त्यावयवे जाते 'इन्द्र आन् ई' इति स्थिते "अकः सवर्णे दीर्घः" इति दीर्घत्वे नस्य णत्वे संयोगे विभक्तिकार्ये च कृते 'इन्द्राणी' इति रूपम् । एवं वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी । इत्यत्र बोध्यम् । हिमारण्ययोर्महत्त्वे । इति वार्तिकम् । महत्वविशिष्टे हिमे अरण्ये च वर्तमानयोरानुङ्ङीषावित्यर्थः । हिमानी । महद्धिमं 'हिमानी' अत्र "इन्द्रवरुणभव०" इत्यादिना प्राप्तौ आनुङ्ङीषौ प्रबाध्य महत्वेऽर्थे "हिमारण्ययोर्महत्वे" इति आनुगागमे, ङीषि च कृते, तद्रूपम् । अरण्यानी । महदरण्यमित्यर्थः । यवाद्दोषे । इति वार्तिकम् । आनुङ्ङीषाविति शेषः । दुष्टयवे वृत्तौ स्त्रीत्वमत एव बोध्यम् । यवनाल्लिप्याम् । इत्यपि वार्तिकम् । लिपिरक्षरविन्यासः । तत्र लक्षणया वृत्तौ आनुङ्ङीषावित्यर्थः । यवनानी । यवनानां लिपिः 'यवनानी' अत्र "यवनाल्लिप्याम्" इति ङीषि, आनुकि च 'यवनानी' इति सिद्धम् । मातुलोपाध्याययोरानुग्वा । इदमपि वार्तिकम् । अत्र पुंयोगादित्ति सम्बध्यते, हिमादिष्विवात्र असम्भवाभावात् । अत्र आनुगेव तु विकल्प्यते, आनुगभावेऽपि पक्षे ङीष् भवत्येव । मातुलान्नित्यं प्राप्ते उपाध्यायादप्राप्ते विभाषेयम् । मातुलानी, मातुली । मातुलस्य स्त्री इत्यत्र "इन्द्रवरुणभवशर्व" इत्यादिना ङीषि, आनुकि च मातुलानी । पक्षे—"मातुलोपाध्याययोरानुग्वा" इति आनुगभावे "पुंयोगादाख्यायाम्" इति ङीपि च 'मातुली' इति । एवम् उपाध्यायस्य स्त्री 'उपाध्यायानी' 'उपाध्यायी' इति । आचार्यादणत्वञ्च । इत्यपि वार्तिकम् । चकारः आनुङ्ङीषोः समुच्चयार्थः । आचार्यानी । आचार्यस्य स्त्री 'आचार्यानी' इत्यत्र "इन्द्रवरुण" इति ङीपि, आनुकि च "अट्कुप्वाङ्" इति नस्य णत्वे प्राप्ते "आचार्यादणत्वञ्च" इति णत्वाऽभावे विभक्तिकार्ये च

आचार्यस्य स्त्री आचार्यानी। (अर्यक्षत्रियाभ्यां वा स्वार्थे) अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया॥ **क्रीतात् करणपूर्वात् ४।१।५०** क्रीतादद‌न्तात् करणादेः स्त्रियां ङीष् स्यात्। वस्त्रक्रीती। क्वचिन्न—धनक्रीता॥ **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४।१।५४** असंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्तादद‌न्तात् ङीष् वा स्यात्। केशानतिक्रान्ता अतिकेशी, अतिकेशा। चन्द्रमुखी, चन्द्रमुखा। असंयोगोपधात् किम्? सुगुल्फा। उपसर्जनात्किम्? शिखा॥ **न क्रोडादिबह्वचः ४।१।५६** क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्। कल्याणक्रोडा। आकृतिगणोऽयम्॥ नखमुखात्सं-

---

इते 'आचार्यानी' इति। अर्यक्षत्रियाभ्यां वा। इति वार्तिकम्। आनुङ्ङीषाविति शेषः। स्वार्थे इति व्याख्यानलभ्यम्। तेन पुंयोगनिरासः। अर्याणी। अर्यशब्दात्स्वार्थे "अर्यक्षत्रियाभ्यां वा स्वार्थे" इति विकल्पेन ङीषि आनुकि णत्वे च 'अर्याणी' इति। पक्षे—अर्या। एवं क्षत्रियाणी, क्षत्रिया इति। क्रीतात्करणपूर्वात्। प्रातिपदिकादित्यनुवृत्तम्, अत इत्यनुवृत्तेन क्रीतादित्यनेन च विशेष्यते, तदन्तविधिः। तदाह—क्रीतान्तादित्यादिना। करणमादिर्यस्येति विग्रहः। प्रातिपदिकशब्दो विशेष्यम्, तेन करणादेरिति पुंस्त्वमुपपन्नम्। वस्त्रक्रीती। वस्त्रैः क्रीता 'वस्त्रक्रीती' अत्र "क्रीतात्करणपूर्वात्" इति ङीषि, "यस्येति च" इत्यकारलोपः। क्वचिन्नेति। "कर्तृकरणे कृता बहुलम्" इति बहुलग्रहणेन "गतिकारकोपपदानाम्" इत्यस्य क्वचिदप्रवृत्त्यवगमादिह सुबन्तेन समासः। तत्र च सुपः प्रागेवान्तरङ्गत्वात् टापि सति ततः सुपि टाबन्तप्रकृतिकसुबन्तेन समासे सुब्लुकि धनक्रीता शब्दस्य अदन्तत्वाभावान्न ङीषित्यर्थः। स्वाङ्गाच्च। उपसर्जनादिति असंयोगोपधादिति च स्वाङ्गादित्यत्रान्वेति। स्वाङ्गादित्येतत् अत इत्यनुवृत्तं च प्रातिपदिकादित्यनुवृत्तस्य विशेषणम्, तदन्तविधिः। तदाह—असंयोगोपधमित्यादिना। वा ङीषिति। "अस्वाङ्गपूर्वपदाद्वा" इत्यतो वेति "अन्यतो ङीष्" इत्यतो ङीषित्यस्य चानुवृत्तेरिति भावः। अतिकेशी। केशानतिक्रान्ता 'अतिकेशी' इत्यत्र अतिकेशशब्दात् "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीषि सति 'अतिकेशी'। पक्षे—अतिकेशा। एवं चन्द्रमुखी, चन्द्रमुखा। सुगुल्फेति। सु शोभनौ गुल्फौ यस्या इति विग्रहः। अत्र संयोगोपधत्वान्न ङीष्। उपसर्जनात् किमिति। केवलकेशादिशब्दानाम् अनुपसर्जनानां स्त्रीत्वविरहादेवाप्राप्तेः प्रश्नः। शिखेति। अत्र स्वाङ्गान्तत्वात् केवलशिखाशब्दात् ङीष् निवृत्त्यर्थमुपसर्जनग्रहणमित्युक्तम्। अन्यथा टापं बाधित्वा पक्षे ङीष् स्यादिति भावः। स्वाङ्गं त्रिधा—अद्रवंमूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। अतस्थं तत्र दृष्टं च, तेन चेत्तत्तथायुतम्। इति भाष्ये स्थितम्। न क्रोडादिबह्वचः। क्रोडा आदिर्यस्येति, बहवः अचः यस्येति च विग्रहः। क्रोडादिश्च बह्वच् च इति समाहारद्वन्द्वः। क्रोडादेरिति। क्रोडादिर्गणः, बह्वच च यत् स्वाङ्गं तदन्तात् ङीष् नेत्यर्थः। कल्याणक्रोडा।

ज्ञायाम् ४।१।५८ ङीष् न स्यात् ॥ पूर्वपदात्संज्ञायामगः ८।४।३ पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् संज्ञायाम् , न तु गकारव्यवधाने । शूर्पणखा । गौरमुखा । संज्ञायां किम् ? ताम्रमुखी कन्या ॥ जातेरस्त्रीविषयादयोपधात् ४।१।६३ जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् । तटी । वृषली । कठी । बह्वृची । जातेः किम् ? मुण्डा । अस्त्रीविषयात्किम् ? बलाका । अयोपधात्किम् । क्षत्रिया । ( योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः ) हयी । गवयी । मुकयी । "हलस्तद्धितस्य" इति यलोपः । मनुषी ( मत्स्य-

---

कल्याणी क्रोडा यस्या इति विग्रहः । "स्त्रियाः पुंवत्" इति कल्याणीशब्दस्य पुंवद्भावः । अत्र कल्याणक्रोडशब्दात् "स्वाङ्गाच्चोपसर्जनात्" इति ङीषि प्राप्ते "न क्रोडादिबह्वचः" इति ङीषो निषेधे, टापि च कृते 'कल्याणक्रोडा' इति । नखमुखात्संज्ञायाम् । नखमुखादिति समाहारद्वन्द्वः । शेषपूरणेन सूत्रं व्याचष्टे—ङीब् नेति । "स्वाङ्गाच्च" इति प्राप्तस्य निषेधोऽयम् । पूर्वपदात् । रषाभ्याम् इत्यनुवृत्तम् । पूर्वपदशब्देन पूर्वपदस्थं लक्ष्यते । "रषाभ्याम्" इत्यनेन लब्धो रेफः षश्च प्रत्येकमन्वेति । तदाह—पूर्वपदस्थान्निमित्तादिति । शूर्पणखा । अत्र "स्वाङ्गाच्चोपसर्जनात्" इति ङीषि प्राप्ते "नखमुखात्संज्ञायाम्" इति ङीषो निषेधे, टापि, सवर्णदीर्घे 'शूर्पनखा' इति भूते "पूर्वपदात्संज्ञायामगः" इति णत्वे विभक्तिकार्ये च 'शूर्पणखा' इति रूपम् । एवं "गौरमुखा' इत्यत्रापि । ताम्रमुखी कन्या । अत्र संज्ञाया अभावान्न ङीषः प्रतिषेधः । जातेरस्त्री । अर्थे कार्यासम्भवाच्छब्दे कार्यं विज्ञायत इत्याह—जातिवाचीति । न च स्त्रियां नियतमिति । स्त्रीविषयः नियमेन वाच्यो यस्याः इति बहुव्रीहिणा स्त्रीविषयशब्दो नियतस्त्रीलिङ्गपरः । तथा च अस्त्रीविषयादित्यनेन अनियतस्त्रीलिङ्गादिति विवक्षितम्, नैयत्यलाभायैव विषयग्रहणम् । अन्यथा अस्त्रिया इत्येवावक्ष्यदिति भावः । जातिलक्षणम्—"आकृतिग्रहणा जातिः, लिङ्गानाञ्च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या, गोत्रं च चरणैः सह" इति । तटी । तटशब्दात् "जातेरस्त्रीविषयादयोपधात्" इति ङीषि, अत्वाद्यलोपे, संयोगे विभक्तिकार्यं च कृते 'तटी' इति रूपम् । वृषली । द्वितीयलक्षणघटितत्वात् जातित्वेन ङीष्–कठी, बह्वृची । अत्र "गोत्रं च चरणैः सह" इति जातित्वम् । मुण्डा । जातित्वाभावान्न ङीष् । बलाका । नित्यस्त्रीलिङ्गत्वान्न ङीष् । क्षत्रिया । योपधत्वान्न ङीष् । योपधप्रतिषेधे हयगवयेति । वार्तिकमिदम् । हयादीनां योपधत्वेऽपि ङीष् वाच्य इत्यर्थः । हयीति । हयशब्दस्य जातित्वेऽपि योपधत्वादप्राप्ते ङीषि, "हयगवयमुकय" इत्यनेन योपधप्रतिषेधाभावे "जातेरस्त्रीविषयादयोपधात्" इति ङीषि, अनुबन्धलोपे अत्वे अलोपे, संयोगे विभक्तिकार्यं च तत्सिद्धिः । हयीति अश्वा प्रसिद्धा । गवयीति । गोसदृशश्चतुष्पाज्जातिविशेषः । मुकयी । चतुष्पाज्जातिविशेषः । हल इति । मनुष्यशब्दात्

स्य ङ्यां ) यलोपः। मत्सी॥ इतो मनुष्यजातेः ४।१।६५ ङीप् स्यात्॥ दाक्षी॥ ऊङुतः ४।१।६६ उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्। कुरूः। अयोपधात्किम्? अध्वर्युर्ब्राह्मणी॥ पङ्गोश्च ४।१।६८ पङ्गूः ( श्वशुरस्योकाराकारलोपश्च ) श्वश्रूः॥ ऊरूत्तरपदादौपम्ये ४।१।६९ उपमानवाचि पूर्वं पदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात्। करभोरूः॥ संहितशफलक्षणवा-

---

स्त्रियां ङीषि, 'मनुष्य ई' इति स्थिते "हलस्तद्धितस्य" इति यकारस्य लोपे "यस्येति च" इत्यकारलोपे 'मनुषी' इति रूपम्। मत्स्यस्य ङ्यामिति। "सूर्यतिष्य" इति सूत्रे वार्तिकमिदम्। मत्स्यस्यावयवस्य यकारस्य लोपः स्यात् ङ्यामेवेति नियमार्थमिदम्। मत्सीति। ङीषि, यकारलोपे "यस्येति च" इत्यलोप इति भावः। इतो मनुष्यजातेः। शेषपूरणेन सूत्रं व्याचष्टे—ङीप् स्यादिति। इदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङीप् स्यादित्यर्थः। स्त्रीप्रत्ययविधिषु अत इत्यनुवृत्तेरिदन्तात् "जातेरस्त्रीविषयादयोपधात्" इत्यस्मादप्राप्तौ वचनम्। दाक्षीति। दक्षस्यापत्यं स्त्री इत्यर्थे "अत इञ्" इति इञि, अल्लोपः, आदिवृद्धिः, 'दाक्षि' इति जाते तस्मात् "इतो मनुष्यजातेः" इति ङीपि, भत्वे "यस्येति च" इति इकारलोपे, संयोगे विभक्तिकार्ये च कृते 'दाक्षी' इति रूपम्। अत्र "गोत्रं च चरणैः सह" इति जातित्वम्। दक्षः—प्रजापतिविशेषः। ऊङुतः। 'अयोपधात्' इति मनुष्यजातेरिति चानुवर्तते, उत इति तद्विशेषणम्, तदन्तविधिः। तदाह-उकारान्तादित्यादिना। कुरूः। कुरुक्षेत्रस्य राजा कुरुः, तस्यापत्यं स्त्रीत्यर्थः। "गोत्रं च चरणैः सह" इति जातित्वम्। कुरुशब्दात् ऊङि सवर्णदीर्घः। अध्वर्युः। अत्र चरणत्वाज्जातित्वेऽपि योपधत्वान्न ऊङ्। पङ्गोश्च। ऊङिति सूत्रशेषः। अयजातित्वम्—पङ्गुत्वं न जातिः। अत "ऊङुतः" इत्यप्राप्तौ वचनमिदम्। पङ्गूः। पङ्गुशब्दात् "पङ्गोश्च" इत्यूङि, "अकः सवर्णे दीर्घः" इति दीर्घत्वे विभक्तिकार्ये च कृते 'पङ्गूः' इति रूपम्। श्वशुरस्येति। चकारात् ऊङनुकृष्यते। श्वशुरस्य स्त्री इत्यर्थे पुंयोगलक्षणे ङीषि प्राप्ते तदपवाद ऊङ्, तत्संनियोगेन रेफादकारस्य शकारादुकारस्य च लोप इत्यर्थः। श्वश्रूः। अत्र श्वशुरशब्दात् "श्वशुरस्योकाराकारलोपश्च" इत्यनेन ऊङि, शकारोत्तरवर्त्युकारस्य अकारस्य च लोपे संयोगे विभक्तिकार्ये च कृते 'श्वश्रूः' इति रूपम्। ऊरूत्तर। ऊरुः उत्तरपदं यस्येति बहुव्रीहिः। प्रातिपदिकादित्यनुवर्तते। उत्तरपदेत्यनेन पूर्वपदमाक्षिप्तम्। औपम्ये इति तत्रान्वेति, उपमीयते अनयेत्युपमा-उपमानम्, उपमैव औपम्यं स्वार्थे ष्यञ्। तदाह—उपमानवाचीति। करभोरूः। करभोरुशब्दात् "ऊरूत्तरपदादौपम्ये" इत्यूङि, "अकः सवर्णे दीर्घः" इति दीर्घत्वे विभक्तिकार्ये च कृते 'करभोरूः' इति रूपम्। संहितशफ। संहित, शफ, लक्षण, वाम एतत्पूर्वपदादप्यूरूत्तरपदादूङ् स्यादित्यर्थः। पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह—अनौपम्यार्थमिति। संहितोरूः। संहितौ—संश्लिष्टौ ऊरू यस्या इति

मादेश्च ४।१।७० अनौपम्यार्थं सूत्रम् । संहितोरूः । शफोरूः । लक्षणोरूः। वामोरूः। शाङ्गरवाद्यञो ङीन् ४।१।७३ शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् । शार्ङ्गरवी । बैदी । ब्राह्मणी । ( नृनरयोर्वृद्धिश्च ) नारी ॥ यूनस्तिः ४।१।७७ युवन् शब्दात् स्त्रियां तिः प्रत्ययः स्यात् । युवतिः ॥ इति ङीप्रत्ययाः ॥

शास्त्रान्तरेऽप्रविष्टानां बालानां चोपकारिका ।

कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥ १ ॥

इति श्रीवरदराजकृता लघुसिद्धान्तकौमुदी समाप्ता ॥

---

विग्रहः । अत्र संहितोरुशब्दात् "संहितशफलक्षणवामादेश्च" इत्यूङि दीर्घत्वे विभक्तिकार्ये च कृते 'संहितोरूः' इति रूपम् । एवं शफोरूः, लक्षणोरूः, वामोरूः, इत्यत्र बोध्यम् । शार्ङ्गरवाद्यञो ङीन् । शार्ङ्गरवादीति लुप्तपञ्चमीकम् । अञ इति षष्ठी । अत इत्यनुवृत्तं पञ्चम्यन्ते अन्वेति । जातेरित्यनुवृत्तमतो विशेष्यते । तदन्तविधिः । तदाह— शार्ङ्गरवादेरित्यादिना । शार्ङ्गरवी । शृरोरपत्य स्त्र्यर्थे अण्, आदिवृद्धिः, रपरत्वम्, ओर्गुणः, अवादेशः, 'शार्ङ्गरव' इत्यस्मात् "गोत्रं च चरणैः सह" इति जातित्वात् ङीषि प्राप्ते तम्प्रबाध्य "शार्ङ्गरवाद्यञो ङीन्" इति ङीनि, भत्वे अलोपे संयोगे च कृते 'शार्ङ्गरवी' इति सिद्धम् । बैदीति । विदस्यापत्यं स्त्र्यर्थः । "अनृष्यानन्तर्ये विदादिभ्योऽञ्" । गोत्रत्वेन जातित्वात् ङीषि प्राप्ते प्रकृतसूत्रेण ङीन् । एवं 'ब्राह्मणी' इति । नृनरयोर्वृद्धिश्च । चात् ङीन् । नारीति । नृनरशब्दाभ्यां "नृनरयोर्वृद्धिश्च" इत्यनेन ङीनि, अनुबन्धलोपे नृशब्दस्य वृद्धौ रपरत्वे संयोगे विभक्तिकार्ये च कृते 'नारी' इति । नरशब्दात् ङीनि, भत्वे अलोपे पूर्वाकारस्य वृद्धौ विभक्तिकार्ये च तत्सिद्धिः । यूनस्तिः । "तद्धिताः" इत्यनुवृत्तमेकवचनेन विपरिणम्यते । तदाह—युवन्शब्दात् तिप्रत्ययः स्यात्स च तद्धित इति । स्त्रियामिति शेषः । "समर्थानाम्" इत्यतः प्राक् तदधिकारस्योक्तत्वादिति भावः । नान्तलक्षणङीपोऽपवादः । युवतिः । युवन्शब्दात् "ऋन्नेभ्यो ङीप्" इति प्राप्तं ङीपं प्रबाध्य "यूनस्तिः" इति तिप्रत्यये, "स्वादिष्वसर्वनामस्थाने" इति पदसंज्ञायाम् "नलोपः प्रातिपदिकान्तस्य" इति नलोपे 'युवति' इति भूते "कृत्तद्धितसमासाश्च" इति तद्धितान्तत्वात्प्रातिपदिकत्वे सौ, रुत्वे विसर्गे च 'युवतिः' इति रूपम् ।

इति श्रीकौण्डिन्यकुलावतंसनारायणोपाह्वदामोदरात्मजव्याकरणाचार्यपण्डितसदाशिवशास्त्रिकृतायां लघुसिद्धान्तकौमुदीव्याख्यायां सुधाख्यायां स्त्रीप्रत्ययाः ।

---

* समाप्तश्चायं ग्रन्थः *

# टीकाकर्तुः परिचयः ।

आसीन्नासिकमण्डलान्तरलसत् श्री 'गाळणे' नामक-
ग्रामे सर्वमनोहरे बुधवरश्रेणीसमाराधितः ।
श्रौतस्मार्तचणः सुधीः किल महादेवाऽभिधानः श्रुतः
तज्जन्मा खलु विश्रुतः श्रुतयुतो दामोदरो मोददः ॥ १ ॥

तस्याऽयं तनयः सदाशिव इति ख्यातो धराभूषणात्
मोकाटे कुलसम्भवात् गणपतेर्विद्याम्बुधेः श्रीगुरोः ।
सानन्दं समधीत्य सद्गुरुकृपाऽऽतस्त्वाद्विधत्ते विदां
चेतोरञ्जनहेतवे बहुविधं लेखात्मकं चापलम् ॥ २ ॥

तेनेयं लघुकौमुद्यां बालानां बोधहेतवे ।
विस्तृता सरला टीका सुधानाम्नी मनोहरा ॥ ३ ॥

सप्ताङ्कनन्दभूवर्षे वैक्रमे दशमीतिथौ ।
ज्येष्ठेऽसिते भृगुदिने काशिकायां समापिता ॥ ४ ॥

सदाशिवकृपादृष्ट्या सदाशिवविनिर्मिता ।
सदा शिवाय बालानां भूयादेषा 'सुधा'ऽन्वहम् ॥ ५ ॥

---

॥ श्रीः ॥

# अथ पाणिनीयशिक्षा ।

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा ।
शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोः ॥ १ ॥
प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः ।
पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् ॥ २ ॥
त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥ ३ ॥
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ ४ ॥
अनुस्वारो विसर्गश्च ≍क ≍पौ चापि पराश्रितौ ।
दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥ ५ ॥ १ ॥
आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितम् ॥ ७ ॥
कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥ ८ ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ॥
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥ ९ ॥
स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः ।
इति वर्णविदः प्राहुर्निपुणं तन्निबोधत ॥ १० ॥ २ ॥
उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥ ११ ॥
उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ ।
स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥ १२ ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ १३ ॥
ओभावश्च विवृत्तिश्च शषसा रेफ एव च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४ ॥

यद्योभावप्रसंधानमुकारादिपरं पदम् ।
स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ १५ ॥ ३ ॥
हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
औरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥
कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ।
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥ १७ ॥
जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
एऐ तु कण्ठतालव्या ओऔ कण्ठोष्ठजौ स्मृतौ ॥ १८ ॥
अर्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् ।
ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९ ॥
संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ।
घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥ २० ॥ ४ ॥
स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् ।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ २१ ॥
अनुस्वारयमानां च नासिकास्थानमुच्यते ।
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ २२ ॥
अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वराननु ।
अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥ २३ ॥
अनुस्वारे विवृत्त्यान्तु विरामे चाक्षरद्वये ।
द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः ॥ २४ ॥
व्याघ्री यथा हरेत्पुत्रान्दंष्ट्राभ्यां न च पीडयेत् ।
भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ २५ ॥ ५ ॥
यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते ।
एवं रङ्गाः प्रयोक्तव्याः खेअराँ इव खेदया ॥ २६ ॥
रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् ।
दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥ २७ ॥
हृदये चैकमात्रस्त्वर्धमात्रस्तु मूर्धनि ।
नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥
हृदयादुत्करे तिष्ठन्कांस्येन समनुस्वरन् ।
मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥ २९ ॥
मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समौ भवेत् ।
सरङ्गं कम्पयेत्कम्पं रथीवेति निदर्शनम् ॥ ३० ॥
एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ।

सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ ३१ ॥ ६
गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ ३२ ॥
माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ।
धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥
शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् ।
काकस्वरं शिरसि गतं तथा स्थानविवर्जितम् ॥ ३४ ॥
उपांशु दष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् ।
निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम् ॥ ३५ ॥
प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ।
मध्यन्दिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ॥ ३६ ॥
तारं तु विद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् ।
मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥ ३७ ॥ ७ ॥
अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शरः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥ ३८ ॥
ञमोऽनुनासिका नह्रौ नादिनो हझषः स्मृताः ।
ईषन्नादा यणो जश्च श्वासिनस्तु खफादयः ॥ ३९ ॥
ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत्प्रचक्षते ।
दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं भुवि ॥ ४० ॥
छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ ४१ ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ ४२ ॥ ८ ॥
उदात्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा ।
उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥ ४३ ॥
उदात्तं प्रदेशिनीं विद्यात्प्रचयं मध्यतोऽङ्गुलिम् ।
निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥ ४४ ॥
अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् ।
मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति नवपदशय्या ॥ ४५ ॥

अग्निः सोमः प्र वो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती ।
अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं व इत्यनुदात्तं वीर्यंनीचस्वरितम् ।
हविषां मध्योदात्तं स्वरिति स्वरितम् ।
बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम् ॥ ४७ ॥

अनुदात्तो हृदि ज्ञेयो मूर्धन्युदात्त उदाहृतः ।
स्वरितः कर्णमूलियः सर्वास्ये प्रचयः स्मृतः ॥ ४८ ॥ ९ ॥
चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः ।
शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥ ४९ ॥
कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् ।
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥
सुतीर्थादागतं व्यक्तं स्वाम्नाय्यं सुव्यवस्थितम् ।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ ५१ ॥
मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥
अक्षरं हतायुष्यं विस्वरं व्याधिपीडितम् ।
अक्षता शस्त्ररूपेण वज्रं पतति मस्तके ॥ ५३ ॥
हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ ५४ ॥
हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥ ५५ ॥ १० ॥
शंकरः शांकरीं प्रादाद्दाक्षीपुत्राय धीमते ।
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥ ५६ ॥
येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ५७ ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥
अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥ ५९ ॥
त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः ।
स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति दिवीति ॥ ६० ॥

अथ शिक्षामात्मोदात्तश्च हकारं स्वराणां
यथागीत्यचोऽस्पृष्टोदात्तं चाषस्तु शंकर एकादश ॥

इति पाणिनीयशिक्षा समाप्ता ॥

# अथ लघुसिद्धान्तकौमुदीस्थसूत्राणाम्

## अकारादिवर्णानुक्रमेण सूची।

इति श्रीलघुसिद्धान्तकौमुदीस्थसूत्राणामकारादिवर्णानुक्रमसूची ।

* श्रीः *

# अथ लघुसिद्धान्तकौमुदीस्थवार्त्तिकानाम्—

## अकारादिक्रमसूची ।

---

## परिभाषा सूची



---

# अथ गणपाठः ।

## अजन्तपुँल्लिङ्गेः—

पृ० अं० ३५ ॐसर्वादीनि सर्वनामानिॐ १।१।२७ सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम ( पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ( स्वमज्ञातिधनाख्यायाम् ) ( अन्तरं वहिर्योगोपसंव्यानयोः ) त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् । इति सर्वादिः ।

## अव्ययीभा० स०

पृ० अं० ४०२ ॐअव्ययीभावे शरत्प्रभृतिभ्यःॐ ५।४।१०७ शरद् विपाश् अनस् मनस् उपानह् अनडुह् दिव् हिमवत् हिरुक् विद् दिश दृश् विश् चतुर् त्यद् तद् यद् कियत् ( जराया जरस् ) ( प्रतिपरसमनुभ्योऽक्ष्णः ) पथिन् । इति शरदादिः ।

## तत्पु० स०

पृ० अं० ४०७ ॐसप्तमी शौण्डैःॐ २।१।४० शौण्ड धूर्त कितव व्याड प्रवीण संवीन अन्तर अधि पटु पण्डित कुशल चपल निपुण इति शौण्डादिः ॥

पृ० अं० ४१० ॐऊर्यादिच्विडाचश्चॐ १।४।६१ ऊरी उररी कन्थी ताली आताली वेताली धूली धूशी शकला संकला ध्वंसकला भ्रंसकला गुलुगुधा सजूः फलफली विक्ली आक्ली आलोष्टी केवाली कवासी सेवासी पर्याली शेवाली अत्यूमनसा वश्मसा मस्मसा मस्मसा श्रौषट् वौषट् वषट् स्वाहा स्वधा वन्धा प्रादुस् एते ऊर्यादयः ।

## तद्धिते

पृ० अं० ४२३ ॐअश्वपत्यादिभ्यश्चॐ ४।१।८४ अश्वपति स्थानपति ज्ञानपति यज्ञपति बन्धुपति शतपति धनपति राष्ट्रपति कुलपति गृहपति पशुपति भाग्यपति धर्मपति धन्वपति सभापति प्राणपति क्षेत्रपति इत्यश्वपत्यादिः ।

पृ० अं ४२४ ॐउत्सादिभ्योऽञ्ॐ ४।१।८६ उत्स उदपान विकिर विनद महानद महानस् महाप्राण तरुण तलुन वष्कयास धेनु पृथ्वी पंक्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्मपीलु कुण पृषदंश मल्लकीय रथन्तर मध्यन्दिन बृहत् महत् सत्वत् कुरुपञ्चाल इन्द्रावरुण उष्णीह ककुभसवर्ण देवग्रीष्माद् छन्दसि ! इत्युत्सादिः ।

पृ० अं० ४२६ ❀गर्गादिभ्यो यञ्❀ ४।१।१०५ गर्ग, वत्स । वाजासे । संकृति अज व्याघ्रपात् विदभृत प्राचीनयोग ( अगस्ति ) पुलस्ति चमस रैभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस् धनञ्जय वृक्ष विश्वावसु जरमाण लोहित संशित बभ्रु वग्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु इत्यादि ।

पृ० अं० ४२७ ❀अनृष्यानन्तर्ये बिदादिभ्योऽञ्❀ ४।१।१०४ बिद ऊर्व कश्यप कुशिक भरद्वाज उपमन्यु किलात किंदर्भ विश्वानर ऋष्टिषेण ऋतभाग हर्यश्व प्रियक आपस्तम्ब कूचवार शरद्वत् शुनक धेनु गोपवन इत्यादि ।

पृ० अं० ४२८ ❀शिवादिभ्योऽण्❀ ४।१।११२ शिव प्रौष्ठ प्रौष्ठिक चण्ड जम्भ भूरि दण्ड कुठार ककुभ ( ककुभा ) अनभिम्लान लोहित सुख सुख संधि मुनि ककुत्थ कहोड कोहड कयहु कहय रोध कपिञ्जल ( कुपिञ्जल ) वतण्ड तृणकर्ण क्षीरहद जलहद परिल ( पथिक ) पिष्ट हैहय ( पार्षिक ) गोपिका कपिलिका जटिलिका इत्यादि ।

पृ० अं ४२९ ❀रेवत्यादिभ्यष्ठक्❀ ४।१।१४६ रेवती अश्वपाली मणिपाली द्वारपाली वृकपाली वकग्राह दण्डग्राह कर्णग्राह चामरग्राह । इति रेवत्यादिः ।

पृ० अं० ४३३ ❀भिक्षादिभ्योऽण्❀ ४।२।३८ भिक्षा गर्भिणी क्षेत्र करीष अङ्गार चर्मिन् धर्मिन् सहस्र युवति पदाति पद्धति अथर्वत् दक्षिणाभूत विषय श्रोत इति भिक्षादिः ।

पृ० अं० ४३४ ❀क्रमादिभ्यो वुन्❀ ४।२।६१ क्रमक पदक शिक्षक मीमांसक । इति क्रमादिः ।

पृ० अं० ४३५ ❀वरणादिभ्यश्च❀ ४।२।८२ वरणा शृङ्गी शाल्मलि शुण्डी शयाण्डी ताम्रपर्णी गोदा अलिङ्ग्यायनी जालपदी जम्बू पुष्कर चम्पा पम्पा वल्गु उज्जयिनी गया मथुरा तक्षशिला उरसा गोमती वलभी । इति वरणादिः ।

पृ० अं० ४३६ ❀मादुपधायाश्च मतोर्वोऽयवादिभ्यः❀ ८।२।९ यव दल्मि ऊर्मि भूमि कृमि कुञ्चा वशा द्राक्षा ध्राक्षा ध्राज ( ध्रजि ) ध्वजि निजि सिजि सञ्जि हरित् ककुद् मरुत् शरुत इक्षु द्रु मधु । आकृतीगणोऽयं यवादिः ।

पृ० अं० ४३८ ❀नद्यादिभ्यो ढक्❀ ४।२।९७ नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफरी खादिरी पूर्वनगरा पाठा माया शल्वा दार्वा सेतकी ( वडवाया वृषे ) इति नद्यादिः ।

पृ० अं० ४३९ ❀त्यदादीनि च❀ १।१।७४ त्यदादिः सर्वाद्यन्तर्गणः ।

पृ० अं ०४३६ ❀गहादिभ्यश्च❀ ४।२।१३८ गृह अन्तस्थ सम विषम ( मध्यमध्यं दिनचरणे ) उत्तम गवंग भूगर्भ पूर्वपक्ष अपरपक्ष अधमशाख समानग्राम एकवृक्ष एकपलाश अवस्यन्दन कामप्रस्थ सौमित्रि व्याडि इत्यादि । आकृतिगणोऽयम् । इति गहादिः ।

पृ० अं० ४४२ ❀दिगादिभ्यो यत्❀ ४।३।५४ दिक् वर्ग पूग गण पक्ष धाय्य मित्र

सेवा अन्तर पथिन् रहस् अलीक उखा साचिन् देश आदि अन्तमुख जघन मेघ यूथ (उदकात्संज्ञायाम्) न्याय वंश वेश काल आकाश इति दिगादिः।

पृ० अं० ४४२ ॐअनुशतिकादीनां चॐ ७।३।२० अनुशतिक अङ्गारवेणु असिहत्य बध्योग पुष्करसत् कुरुकत् उदकशुद्ध इहलोक सर्वपुरुष प्रयोग परस्त्री राजपुरुषात्ष्यञि सूत्रनड आकृतिगणोऽयम्। तेन अनुहोड अनुसवरण इत्यादयोऽन्येऽपि इत्यनुशतिकादिः।

पृ० अं० ४४६ ॐउगवादिभ्यो यत् ॐ ५।१।२ गो हविस् अक्षर विष विष बर्हिष् अष्टका स्खदा युग मेधा स्रुच (नाभिनभं) (शुनः सम्प्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम्) (ऊधसोऽनङ्च) कूप् खद दर खुर असुर अध्वनक्षरवेदः। इति गवादिः।

पृ० अं० ४५२ ॐदण्डादिभ्यो यत्ॐ ५।१।६६ दण्ड मुसल मधु कशा अर्घ मेघ मेधा सुवर्ण उदक वध युगगुहा भाग इभ भङ्ग इति दण्डादिः।

पृ० अं० ४५३ ॐपृथ्वादिभ्य इमनिज्वाॐ ५।१।१२२ पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु बहुल खण्ड दण्ड चण्ड अकिंचन बाल वत्स होड पाक मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु। इति पृथ्वादिः।

पृ० अं० ४५३ *वर्णदृढादिभ्यः ष्यञ्चॐ ५।१।१२३ दृढ वृढ परिवृढ भृश कृश वक्र शुक्र चुक्र आम्र कृष्ट लवण ताम्र शीत उष्ण जड बधिर पण्डित मधुर मूर्ख मूक स्थिर 'वेर्यातलातमतिमनःशारदानाम्' 'समो मतिमनसोः' जवन इति दृढादिः।

पृ० अं० ४५४ ॐगुणवचनब्राह्मणादिभ्यः कर्मणि चॐ ५।१।१२४ ब्राह्मण वाडव माणव 'अर्हतो नुम् च' चोर धूर्त अराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव इत्यादिः।

पृ० अं० ४५५ ॐतदस्य सञ्जातं तारकादिभ्य इतच्ॐ ५।२।३६ तारका पुष्प कणक मञ्जरी ऋजीष क्षण सूत्र मूत्र निष्क्रमण पुरीष उच्चार प्रचार विचार कुड्मल कण्टक मुसल मुकुल कुसुम कुतूहल स्तबक किसलय पल्लव खण्ड वेग निद्रा मुद्रा बुभुक्षा इत्यादि।

पृ० अं० ४५८ ॐइष्टादिभ्यश्चॐ ५।२।८८ इष्ट पूर्त उपासादित निगदित परिगदित परिवादित निकथित निषादित निपठित संकलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत इत्यादि।

पृ० अं० ४५९ ॐलोमादिपामादिपिच्छादिभ्यः शनेलचःॐ ५।२।१०० लोमन् रोमन् वभ्र अरि गिरि कर्क कपि मुनि तरु इति लोमादिः।

अथ पामादिः—पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रुवलि सामन् ऊष्मन् कृमि। (अङ्गात्कल्याणे) (शाकपलाली तद्रूणां ह्रस्वत्वं च) (विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः) (लक्ष्म्या अच्च) इति पामादिः।

अथ पिच्छादिः—( पिच्छा उरस् ध्रुवक् ध्रुवक जटा घटा कालाक्षेपे ) पण उदक पङ्क प्रज्ञा इति पिच्छादिः ।

पृ० अं० ४६० ॐव्रीह्यादिभ्यश्चॐ ५।२।११६ व्रीहि माया शाला शिखा माला मेखला केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा वडवा कुमारी नौ वीणा बलाका यवखद इति व्रीह्यादिः ।

पृ० अं० ४६० ॐअर्शआदिभ्योऽच्ॐ ५।२।१२० अर्शस् उरस् तुन्द चतुर पलित जटा घटा घाटा अघ कर्दम अम्ल लवण ( स्वाङ्गाद्धीनात् ) ( वर्णात्) अर्श आदिराकृतिगणः ।

पृ० अं० ४६९ ॐप्रज्ञादिभ्यश्चॐ ५।४।३८ प्रज्ञ वणिज उशिज उष्णिज प्रत्यक्ष विद्वस् विदन् षोडस् विद्या मनस् (श्रोत्रशरीर) जुहुवत्कृष्णमृगे ) चिकीर्षत् चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च सत्वत् दशार्ह वयस् असुर रक्षस् पिशाच अशनि कार्षापणम् देवता बन्धु इति प्रज्ञादिः ।

पृ० अं० ४६९ ॐआद्यादिभ्यः तसउपसंख्यानम्ॐ अयमेव सर्वविभक्तिस्तसिः । आदितः मध्यतः अन्ततः पार्श्वतः पृष्ठतः आकृतिगणोऽयम् स्वरेण स्वरतः ।

पृ० अं० ४७१ ॐअजाद्यतष्टाप्ॐ ४।१।४ अज एडक अश्व चटक मूषक बाल वत्स होढ पाक मन्द विलात पूर्वापहाण उत्तरापहाण क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा मध्यमेति पुंयोगेऽपि कोकिलाजातौ, दंष्ट्रा एतेऽजादयः आकृतिगणोऽयम् ।

पृ० अं० ४७३ ॐषिद्गौरादिभ्यश्चॐ ४।१।४१ गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य ( पूट तूण ) द्रुण हरिण कोकय( काकण )पटर उणक ( आमल ) आमलक कुवल बिम्ब बदरफर्करक (कर्कर) तकरि शकरि पुष्कर पिषण्ढसलद शष्कण्ड सनन्द सुषम सुषव अलन्द गड्डुल षाण्डश आढक आनन्द आश्वत्थ इति गौरादिः ।

पृ० अं० ४७४ ॐबह्वादिभ्यश्चॐ ४।१।४२ बहु पद्धति अञ्च अङ्कति अंहति शकटि शक्ति शास्त्र शारि वारि राति राधि इत्यादिः, आकृतिगणोऽयम् ।

पृ० अं० ४७८ ॐनक्रोडादिबह्वचःॐ ४।१।५६ क्रोड नखखुर गोखा उखा शिखा वाल शफशुक्र आकृतिगणोऽयम् , तेन भागगल घोण नाल भुज गुद कर इति क्रोडादिः ।

पृ० अं० ४८० ॐशार्ङ्गरवाद्यञोङीन्ॐ ४।१।७३ शार्ङ्गरव कापटव गाग्गलव ब्राह्मण वेद गौतम कामण्डलेय ब्रह्मणकृतेय आनिचेय आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकस काप्य काव्य शैव्य एहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड भोगवत् गौरमत् एता संज्ञायाम् नृनरयोर्वृद्धिश्च । पुत्र इति शार्ङ्गरवादिः ।

इति गणपाठः समाप्तः ।



॥ श्रीः ॥

# धातूनामकारादिक्रमसूची ।

इति धातूनामकारादिक्रमसूची ।

॥ श्रीः ॥

# लघुकौमुदीस्थोदाहरणानां सार्थानुक्रमणिका ।

### अच्सन्धिः ।

पृष्ठः ८–सुद्ध्युपास्यः–विद्वानों के उपासनीय- भगवान् विष्णु,

मध्वरिः–'मधु' दैत्य के शत्रु भगवान् विष्णु ।

धात्रंशः–ब्रह्मा का अंश

लाकृतिः–'ऌ' यह स्वरूप । अथवा 'ऌ' के समान टेढी आकृति वाला मनुष्य,

हरये–पापहारी लये

९–विष्णवे–विष्णु भगवान् के लिये

नायकः–नेता, प्रधान ।

पावकः–पवित्रकर्ता या अग्नि

गव्यम्–गौ का विकार दुग्ध, दधि, घृत, गोमूत्र, गोबर आदि

नाव्यम्–नौका से तरने योग्य जल

गव्यूतिः–दो कोस

उपेन्द्रः–इन्द्र के छोटे भाई वामन भगवान् ।

गङ्गोदकम्–गङ्गा का उदक जल

१०–कृष्णर्द्धिः–भगवान् श्रीकृष्ण की समृद्धि

हर इह–हे हरि! यहां तवल्कारः–तेरा ऌकार

विष्ण इह–हे विष्णु ! यहां

११–कृष्णैकत्वम्–भगवान् श्रीकृष्ण की एकता

गङ्गौघः–गङ्गा का प्रवाह

देवैश्वर्यम्–देवताओं का ऐश्वर्य

कृष्णौत्कण्ठ्यम्–श्रीकृष्ण भगवान् में उत्कण्ठा

उपैति–पास आता है

उपैधते–समीप बढ़ता है

प्रष्ठौहः–सिखाने के लिये जिस के गले में काष्ठ बांध देते हैं ऐसे बछड़े को 'प्रष्ठवाट्' कहते हैं, ( तस्य प्रष्ठौहः ) प्रष्ठवाट् का

उपेतः–समीप आया हुआ, या प्राप्त हुआ

मा भवान् प्रेदिधत्–आप अधिक न बढ़ाइए

अक्षौहिणी–सेनाविशेष ।

प्रौहः–अधिक तर्क या उत्तम तर्क करने वाला

प्रौढः–पोढा, अधेड़, प्रौढिः–प्रौढता

प्रैषः–प्रेरणा । प्रैष्यः–नौकर

१२–सुखार्तः–सुख से प्राप्त हुआ, सुखी

परमार्तः–परम प्राप्त, मुक्त

प्रार्णम्–अधिक ऋण ( कर्जा )

वत्सतरार्णम्–बछड़े का ऋण

कम्बलार्णम्–कम्बल का ऋण

वसनार्णम्–वस्त्र का ऋण

ऋणार्णम्–एक ऋण को उतारने के लिये लिया गया दूसरा ऋण

दशार्णः–दस किले जिस देश में हों ऐसा देश

प्रार्च्छति–अधिक चलता है

प्रेजते–अधिक कांपता है, उपोषति–जलाता है

शकन्धुः–शक देश का कूप–( कुआं ) .

कर्कन्धुः–बदरी फल–( बेर )

मनीषा–बुद्धि । मार्तण्डः–सूर्य

१३–शिवायोंनमः–शिवजी को नमस्कार हो

शिवेहि–हे शिवजी ! आइये

दैत्यारिः–दैत्यों का शत्रु-विष्णु भगवान्

श्रीशः–लक्ष्मीपति भगवान् विष्णु

विष्णूदयः–भगवान् विष्णु का अभ्युदय

होतॄकारः–होता का ऋकार

हरेऽव–हे हरि ! रक्षा करो

विष्णोऽव–हे विष्णु ! रक्षा करो

गो अग्रम्–गौ का अग्रभाग

चित्रग्वग्रम्–विचित्र गौए हैं जिसके उस पुरुष का अग्रभाग, गोः–गौ का

१४-गवाग्रम्-गौ का अग्रभाग
गवि-गौ में। गवेन्द्रः-गोस्वामी
आगच्छ कृष्ण ३ अत्र गौश्चरति- हे
श्रीकृष्ण ! आइये यहां गौ चरती है।
हरी एतौ-ये दोनों हरि हैं, सिंह हैं
विष्णू इमौ-ये दोनों विष्णु हैं
गङ्गे अमू-ये दोनों गङ्गायें हैं
अमी ईशाः-ये अधिपति हैं
रामकृष्णावमू आसाते-ये बलराम और
श्रीकृष्णचन्द्र बैठे हैं
अमुकेऽत्र-ये यहां हैं ?
१५-इ इन्द्रः-ओह ! यह इन्द्र है !
उ उमेशः-क्या ये महादेवजी हैं ?
आ एवं नु मन्यसे-क्या तुम ऐसा
मानते हो ?
आ एवं किल तत्-हां वह बात ऐसी ही है
ओष्णम्-कुछ गर्म
अहो ईशाः-अहो ये अधिपति हैं
विष्णो इति-हे विष्णु ! ऐसा
किम्वुक्तम्-क्या कहा ?
चक्रि अत्र-विष्णु यहां हैं
१६-गौर्यौ-दो गौरी ये हैं
वाप्यश्वः-वापी पर घोड़ा
ब्रह्मर्षिः-ब्रह्म ऋषि, वसिष्ठ
आर्च्छत्-चला गया

इत्यच्सन्धिः।

## अथ हल्सन्धिप्रकरणम्।

रामश्शेते-राम सोते हैं
रामश्चिनोति-श्रीराम चुनते हैं
सच्चित्-सत् और ज्ञानस्वरूप
शार्ङ्गिञ्जय-हे शार्ङ्गधनुर्धारी भगवन् !
आप की जय हो
विश्नः-विचलना या गति विशेष
प्रश्नः-पूछना
१७-रामष्षष्ठः-राम छठा है
रामष्टीकते-राम जाता है
पेष्टा-पीसने वाला। तट्टीका-वह टीका
चक्रिण्ढौकसे-हे चक्रधारी ! आप जाते हैं
षट् सन्तः-छः सत्पुरुष
षट् ते-वे छै। ईट्टे-स्तुति करता है
सर्पिष्टमम्-सर्वोत्कृष्ट घृत
षण्णाम्-छै ( पुरुषों ) का
षण्णवतिः-छियानवें ( ९६ )
षण्णगर्यः-छै नगरीयें
सन् षष्ठः-छठा श्रेष्ठ [है] वागीशः-बृहस्पति
१८-एतन्मुरारिः-ये भगवान् मुरारि हैं
तन्मात्रम्-केवल वही। चिन्मयम्-ज्ञानस्वरूप
तल्लयः-उसमें लय-लीन होना
विद्वांल्लिखति-पण्डित लिखता है
१९-उत्थानम्-उठना, उन्नति
उत्तम्भनम्-उठाना, उभारना
वाग्घरिः-बोलने में शेर
तच्छिवः-वह शिव ( है )
तच्छ्लोकेन-उस श्लोक से या उसकी कीर्ति से
हरिं वन्दे-हरि को मैं नमस्कार करता हूँ।
यशांसि-बहुत से यश
आक्रंस्यते-आक्रमण करेगा
२०-मन्यते-मानता है
शान्तः-शान्त। अङ्कितः-चिह्नित
अञ्चितः-पूजित या गत। कुण्ठितः-रुका हुआ
दान्तः-जितेन्द्रिय। गुम्फितः-गुथा हुआ।
त्वङ्करोषि-तुम करते हो
सँव्वत्सरः-वर्ष ( सम्वत् )
सम्राट्-चक्रवर्ती राजा
किं ह्मलयति-क्या चलाया जाता है ?
किं ह्यः-कल क्या था ?

किं हलयति—क्या चलाया जाता है ?
किं ह्लादयति—कौन वस्तु प्रसन्न करती है ?
२१—किं ह्नुते—क्या छिपाता है ?
षट्सन्तः—छै सज्जन
षष्ठः षष्ठः—छठा पूजित है
सुगण् षष्ठः—छठा अच्छा गणितज्ञ है
२२—सन्त्सः—वह सत्पुरुष है
सन्च्छम्भुः—शम्भु सत्स्वरूप है
प्रत्यङ्ङात्मा—अन्तरात्मा ( जीवात्मा )
२३—सुगण्णीशः—अच्छा गणितज्ञों का ईश
सन्नच्युतः—भगवान् अच्युत सत्स्वरूप हैं
संस्कर्ता—संस्कार करने वाला
पुंस्कोकिलः—नरकोकिल ( कोयल )
२४—चक्रिंस्त्रायस्व—हे चक्रधारी, विष्णो ! रक्षा करो। प्रशान्तनोति—शान्त पुरुष विस्तार करता है। हन्ति—मारता है
नॄँ पाहि—मनुष्यों की रक्षा करो
२५—काँस्कान्—किन २ को
शिवच्छाया—शिवजी की छाया
लक्ष्मीच्छाया—लक्ष्मी की छाया या शोभा

इति हल्सन्धिः।

## अथ विसर्गसन्धिः।

विष्णुस्त्राता—श्री विष्णु रक्षक हैं
हरिश्शेते—हरि सोते हैं
२६—शिवोऽर्च्यः—शिवपूजनीय हैं
शिवो वन्द्यः—शिवजी वन्दनीय हैं
देवा इह—देवता यहां
भो देवाः !—हे देवताओं !
भगो नमस्ते—हे भगवन् ! आपको नमस्कार है
अघो याहि—पाप दूर हट ( यहाँ से )
अहरहः—प्रतिदिन
२७—अहर्गणः—दिनसमूह,
पुना रमते—फिर खेलता है
हरी रम्यः—हरि रमणीय हैं
शम्भू राजते—शम्भु विराजते हैं
अजर्घाः—तुमने वारंवार ग्रहण किया
तृढः—हिंसित। वृढः—उद्यत, तैय्यार हुआ
२८—मनोरथः—इच्छा
एष विष्णुः—यह विष्णु भगवान् हैं
स शम्भुः—वह शम्भु भगवान् हैं
एषको रुद्रः—ये भगवान् रुद्र हैं
असः शिवः—शिव वह नहीं हैं
एषोऽत्र—यह यहां है
२९—सेमामविड्ढि प्रभृतिम्—इसे देने में आप समर्थ हैं वह आप हमें इस प्रभृति प्रकृष्टधारणा प्राप्त करावे
सैष दाशरथी रामः—ये वे दशरथ के पुत्र श्रीरामचन्द्रजी हैं

इति विसर्गसन्धिः।

## अथाजन्तपुँल्लिङ्गप्रकरणम्।

३०—रामः—भगवान्—श्रीराम
३१—कृष्णः—भगवान्—श्रीकृष्ण
सर्वः—सब। विश्वः—सब
३२—उभौ—दोनों। उभयः—दो अवयववाला
अन्यः—दूसरा, अन्यतरः—दो में से एक
इतरः—इतर, त्वत्—अन्य
त्वः—भिन्न, नेमः—आधा
समः—सब, सिमः—सब
३७—पूर्वः—पहला। परः—दूसरा
अवरः—अधम, दक्षिणः—दक्षिण
उत्तरः—उत्तर, अपरः—दूसरा, अधरः—नीचा
स्वः—आप और अपना
३८—अन्तरः—बाहर या पहिननेका कपड़ा
३९—प्रथमः—पहला
चरमः—अन्तिम। कतिपयः—कई एक
द्वितयः—दूसरा। अल्पः—थोड़ा

अर्धः—आधा। निर्जरः—देवता
४०—विश्वपाः—विश्व का पालन करने वाले विष्णु
४१—शङ्खध्माः—शङ्ख बजाने वाला
४२—हाहाः—देव गन्धर्व
हरिः—पापहर्त्ता विष्णु भगवान्
४४—कविः—कविता करने वाला। सखा—मित्र
४५—पतिः—पति या मालिक
४६—भूपतिः—राजा
४७—कति—कितने ?। त्रयः—तीन
प्रियत्रिः—जिसको तीन प्यारे हैं वह
४८—द्वौ—दो। पपीः—सूर्य। वातप्रमीः—मृग
४९—बहुश्रेयसी—बहुत कल्याण चाहने वाली स्त्रियों वाला पुरुष
५०—अतिलक्ष्मीः—लक्ष्मी को अति क्रमण करने वाला, लक्ष्मी से श्रेष्ठ
प्रधीः—प्रकृष्ट ध्यानवाला
५१—ग्रामणीः—मुखिया
नीः—लेजाने वाला
५२—सुश्रीः—सुन्दर श्री वाला
यवक्रीः—जौ खरीदने वाला
शुद्धधीः—पवित्र बुद्धिवाला। सुधीः—पण्डित
सुखीः—सुख चाहने वाला
सुतीः—पुत्र चाहने वाला।
५३—शम्भुः—शिव। भानुः—सूर्य्य
क्रोष्टा—गीदड़
५५—हूहूः—गन्धर्व
अतिचमूः—सेना को अतिक्रमण करने वाला।
५६—खलपूः—खलिहान को मार्जन करने वाला
५७—सुलूः—अच्छा काटने वाला
स्वभूः—स्वयम्भू ब्रह्मा,। वर्षाभूः—मेंढक
दृम्भूः—सर्प, कपि वज्र और सूर्य
करभूः—हाथ में पैदा हुआ, (नख)। धाता—ब्रह्मा
५८—नप्ता—दौहित्र या पौत्र
पिता—पिता। जामाता—जमाई। ना—मनुष्य
५९—गौः—गौ। राः—धन। ग्लौः—चन्द्रमा

इत्यजन्ताः पुँल्लिङ्गाः।

## अथाजन्तस्त्रीलिङ्गप्रकरणम्।

६०—रमा—लक्ष्मीजी
६१—दुर्गा—दुर्गा। अम्बिका—दुर्गा
सर्वा—सब स्त्रियां। विश्वा—सब स्त्री
६२—उत्तर पूर्वा—ईशान कोण
द्वितीया—दूसरा। तृतीया—तीसरी
अम्बा—माता या दुर्गा। अल्ला—माता
अक्का—माता। जरा—वृद्धावस्था (बुढापा)
गोपाः—गोपी। मतिः—बुद्धि
६३—बुद्धिः—बुद्धि। तिस्रः—तीन स्त्रियाँ
चतस्रः—चार स्त्रियां
६४—द्वे—दो स्त्रियाँ। गौरी—पार्वती या गौर स्त्री
नदी—नदी। लक्ष्मीः—लक्ष्मी
तरीः—नौका। स्त्री—स्त्री
६५—श्रीः—लक्ष्मी
६६—धेनुः—नई ब्याई गौ। भ्रूः—भ्रुकुटि
स्वयम्भूः—माया प्रकृति।
स्वसा—बहिन। ननान्दा—ननन्द। दुहिता—पुत्री
याता—देवराणी, जेठानी। माता—माता
द्यौः—आकाश। राः—धन। नौः—नौका

इत्यजन्तस्त्रीलिङ्गप्रकरणम्।

## अथाजन्तनपुंसकलिङ्गप्रकरणम्।

६७—ज्ञानम्—ज्ञान
६८—धनं—धन। वनम्—वन। फलम्—फल
६९—कतरत्—दो में से कौन सा ?
कतमत्—बहुतों या तीनों में से कौन सा ?
इतरत्—इतर या दूसरा। अन्यत्—और
अन्यतरत्—दो में से एक
अन्यतमम्—इन सब में से एक
एकतरम्—दोनों में से एक (कुल)

श्रीपम्-धनरक्षक ( कुल )
द्वे-दो कुल । त्रीणि-तीनों ( नक्षत्रें )
वारि-जल
७१-दधि-दही । अस्थि-हड्डी
सक्थि-ऊरू, सांथल-जांघ
अक्षि-आंख, सुधि-बुद्धिमान् कुल
७२-मधु-शहद, मदिरा
सुलु-अच्छा काटने वाला (शस्त्र)
धातृ-धारण या पोषण करने वाला (कुल)
७३-ज्ञातृ-ज्ञानी कुल ।
प्रद्यु-सुन्दर आकाशयुक्त दिन
प्ररि-धनिक कुल
सुनु-सुन्दर नौका वाला कुल
इत्यजन्तनपुंसकलिङ्गप्रकरणम् ॥

## अथ हलन्तपुंल्लिङ्गप्रकरणम् ॥

७४-लिट्-चाटने वाला । धुक्-दूहने वाला
७५-ध्रुक्-द्रोह करने वाला
मुक्-मुग्ध या मोहित करने वाला
स्नुक्-वमन कारी । स्निक्-स्नेहकरनेवाला
७६-विश्ववाट्-विश्वम्भर । अनड्वान्-बैल
७७-विद्वान्-ज्ञाता ( पण्डित )
स्रस्तत्-गिरा हुआ । ध्वस्तत्-नष्ट हुआ
तुराषाट्-इन्द्र
सुद्यौः-सुन्दर आकाश वाला दिवस
चत्वारः-चार
७८-प्रशान्-शान्तः । कः-कौन ?
७९-अयम्-यह सन्निकृष्ट
८१-राजा-राजा
८२-ब्रह्मनिष्ठः-ब्रह्म में जिस की निष्ठा हो
यज्वा-यज्ञ करने वाला । ब्रह्मा-ब्रह्मा
८३-वृत्रहा-इन्द्र
८४-शार्ङ्गी-शार्ङ्गधनुर्धारी विष्णु
यशस्वी-यश वाला

अर्यमा-सूर्य या देवविशेष
पूषा-सूर्य । मघवान्-इन्द्र
८५-श्वा-कुत्ता । युवा-जवान युवक
८६-अर्वा-घोड़ा । पन्थाः-मार्ग, रास्ता
मन्थाः-दही मथन का दण्डा
८७-ऋभुक्षाः-इन्द्र
पञ्च-पांच । अष्टौ-आठ
८८-ऋत्विक्-ऋत्विज् ( यज्ञ करनेवाला )
युङ्-योगी ।
८९-सुयुक्-सुयोगी
खञ्-लंगड़ा । राट्-राजा
विभ्राट्-बड़ा, अत्यन्त शोभा युक्त
देवेट्-देवपूजक । विश्वसृ्-ब्रह्मा
९०-परिव्राट्-संन्यासी
विश्वाराट्-विश्वेश्वर भगवान्, सूर्य
भृट्-भूजने वाला । स्यः-वह । सः-वह ।
यः-जो, एषः-यह ( अत्यन्त निकट स्थित )
९१-त्वम्-तू । अहम्-मैं
९६-सुपात्-सुन्दर पैर वाला
अग्निमत्-अग्निमन्थन करने वाला
प्राङ्-अच्छा चलने वाला या पूज्य
९७-प्रत्यङ्-पीछे । उदङ्-उत्तर
९८-सम्यङ्-ठीक चलने वाला ।
सध्र्यङ्-साथी, मित्र
तिर्यङ्-टेढा चलने वाले पशु पक्षी
९९-कुङ्-क्रौञ्चपक्षी । पयोमुक्-मेघ
१००-महान्-बड़ा । धीमान्-बुद्धिमान्
भवान्-आप । भवत्-होता हुआ
१०१-ददत्-देता हुआ
जक्षत्-खाता व हंसता हुआ
जाग्रत्-जागता हुआ
शासत्-शासन करता हुआ
चकासत्-दीप्त होता हुआ
गुप्-रक्षक । तादृक्-वैसा

१०२-विट्-बनिया। नक्-नष्ट होने वाला
घृतस्पृक्-घृतस्पर्श करने वाला
दधृक्-तिरस्कर्ता
१०३-रत्नमुट्-रत्न का चोर। षट्-छै।
पिपठीः-पढने की इच्छा वाला
१०४-चिकीः-करने की इच्छा वाला
विद्वान्-पण्डित
१०५-पुमान्-पुरुष
उशना-शुक्राचार्य। अनेहा-समय
१०६-वेधाः-ब्रह्मा। असौ-वह (पुरुष)

इति हलन्तपुंलिङ्गप्रकरणम् ॥

## अथ हलन्तस्त्रीलिङ्गप्रकरणम्।

१०८-उपानत्-जूता। उष्णिक्-पगड़ी या छन्द
१०९-द्यौः-आकाश। गीः-वाणी
पूः-पुरी, नगरी। चतस्रः-चार स्त्रियाँ
का-कौन स्त्री। इयम्-यह स्त्री
१११-स्या-वह स्त्री। सा-वह स्त्री
एषा-यह स्त्री (अत्यन्तनिकट)
११२-वाक्-वाणी। आपः-जल
दिक्-दिशा। दृक्-आँख।
त्विट्-कान्ति। सजूः-मित्र।
आशीः-आशीर्वाद। असौ-वह स्त्री

इति हलन्ताः स्त्रीलिङ्गाः।

## अथ हलन्तनपुंसकलिङ्गप्रकरणम्।

११४-स्वनडुत्-अच्छे बैलों वाला (कुल)
११५-वाः-जल। चत्वारि-चार
किम्-क्या? इदम्-यह
एनत्-यह। अहः-दिन
११६-दण्डि-दण्ड वाला कुल
सुपथि-सुमार्ग वाला वन
११७-ऊर्क्-तेज और बल। तत्-वह।
यत्-यह। एतत्-यह
गवाक्-गोपूजक, गौके पीछे जानेवाला
शकृत्-मल (टट्टी)
११८-ददत्-देता हुआ।
११९-तुदत्-दुःख देता हुआ
पचत्-पाचन करता हुआ (कुल)
दीव्यत्-खेलता हुआ। धनुः-धनुष।
१२०-चक्षुः-आँख। हविः-हवि, घी
पयः-दूध या जल
सुपुम्-सुपुरुषों वाला कुल। अदः-वह वस्तु

इति हलन्तनपुंसकलिङ्गप्रकरणम् ॥

## अथ अव्ययसंग्रहः।

१२१ स्वर्-स्वर्ग। अन्तर्-बीच में
प्रातर्-प्रातः काल
पुनर्-फिर। सनुतर्-अन्तर्धान
उच्चैस्-ऊंचा। नीचैस्-नीचा
शनैस्-धीरे धीरे। ऋधक्-सच मुच
ऋते-विना। युगपत्-एक साथ
आरात्-दूर या समीप
पृथक्-भिन्न (अलहदा)
ह्यस्-बीता हुआ दिन। श्वस्-आगामी दिन
दिवा-दिन। रात्रौ-रात
सायम्-सायंकाल। चिरम्-देर
मनाक्-किञ्चित्। ईषत्-थोड़ा
जोषम्-चुप। तूष्णीम्-चुप
बहिस्-बाहर। अवस्-बाहर
अधस्-नीचे। समया-समीप
निकषा-समीप। स्वयम्-आप
वृथा-व्यर्थ। नक्तम्-रात्रि
न-नहीं
नञ्-नहीं। हेतौ-कारण
इद्धा-प्रकाश। अद्धा-स्फुट व निश्चय
सामि-आधा। ब्राह्मणवत्-ब्राह्मण के समान
क्षत्रियवत्-क्षत्रिय के समान
१२२-सना सनत् सनात्-नित्य

उपधा—भेद वा घूस। लिट्—ढेढा
अन्तरा—मध्य में। अन्तरेण—विना
ज्योक्—शीघ्र। कम्—जल, सिर, सुख
शम्—कल्याण। सहसा—अकस्मात्
विना—विना। नाना—अनेक
स्वस्ति—मङ्गल व कल्याण
स्वाहा—देवदान में। स्वधा—पितृदान में
अलम्—बस। वषट् श्रौषट् वौषट्—देवदान में
अन्यत्—और। अस्ति—विद्यमान
उपांशु—गुप्त। क्षमा—क्षमा ( माफ करना )
विहायसा—आकाश से। दोषा—रात्रि
मृषा, मिथ्या—झूठ। मुधा—व्यर्थ ही
पुरा—पहिले। मिथो—आपुस में
मिथस्—परस्पर। प्रायस्—प्रायः
मुहुस्—बार बार
प्रवाहुकम् प्रवाहिका—एकसाथ
आर्यहलम्—जबरदस्ती
अभीक्ष्णम्—बारं बार। साकम् सार्धम्—साथ
नमस्—नमस्कार। हिरुक्—विना
धिक्—धिक्कार। अथ—अनन्तर, मङ्गल
अम्—शीघ्र। आम्—स्वीकार, हाँ
प्रताम्—ग्लानि। प्रशान्—समान
मा माङ्—नहीं। च—और
वा—विकल्प। ह—प्रसिद्ध
अह—स्पष्ट। एव—अवश्य
एवम्—ऐसे। नूनम्—अवश्य
शश्वत्—सदा। युगपत्—एकसाथ
भूयस्—फिर, कूपत् सूपत्—प्रश्न व प्रशंसा
कुवित्—बहुत। नेत्—शङ्का
चेत् चण्—यदि। यत्र—जिसमें
कच्चित्—प्रश्न। नह—प्रत्यारम्भ
हन्तः—हर्ष व विषाद में
माकि माकिम् नकिः नकिम्—विना
१२३—नञ्—नहीं। यावत्—जितना,
तावत्—उतना
त्वै (न्वै) ह्रै—वितर्क। रै—दान
स्वाहा—देवहविर्दान। स्वधा—पितृदान
वषट्—देवदान। तुम्—तूं
तथाहि—जैसे कि—। खलु—निश्चय
किल—ऐतिह्य में। अथो—अथ अनन्तर
सुष्ठु—अच्छा। स्म—अतीत काल
आदह—निन्दा। अवदत्तम्—दिया
अहंयुः—अहंकारी
अस्तिक्षीरा—विद्यमानदुग्धवाली गौ
अ—आ—इ—ई—उ—ऊ—सम्बोधन
ए—ऐ—ओ—औ—सम्बोधन
पशु—सम्यक्। शुकम्—शीघ्र
यथाकथाच—अनादर में
प्याट—अङ्ग—है—हे—सम्बोधन
भोः—अये। पाट्—सम्बोधन
द्य—हिंसा। विषु—नाना
एकपदे—सहसा। युत—निन्दा
आतः—इस कारण। अतः—इस कारण
स्मारं स्मारम्—स्मरण कर २ के
१२४—जीवसे—जीने के लिये,
पिबध्यै—पीने के लिये
कृत्वा—करके। उदेतोः—उदय होकर
विसृपः—फैलकर। अधिहरि—हरि में
वाचा—वाणी। निशा—रात्रि
दिशा—दिशा। वगाहः—स्नान
पिधानम्—ढकना।

इत्यव्ययार्थनिर्देशः।

## अथ स्वादिगणप्रकरणम्।

१२५—भू—होना
१२६—अत—निरन्तर गमन

१४१–बिध–जाना
१४३–चिती–चेतना
१४४–शुच्–शोक करना, गद्–स्पष्ट बोलना
१४५–णद्–नाद करना
१४७–टुनदि–समृद्धि
१४८–अर्च–पूजामें, व्रज–जाना
१४९–कटे–बरसना और-ढकना
१५०–गुपू–पालन करना
१५५–क्षि–नाश होना
१५८–तप–संताप करना। क्रमु–चलना
१५९–पा–पीना
१६१–ग्लै–ग्लानि
१६२–ह्वृ–कुटिलता
१६४–श्रु–सुनना
१६६–गम्लृ–जाना–( गमन )
१६९–एध–वृद्धि–बढ़ना
१७७–क्रमु–इच्छा करना
१८३–अय–चलना
१८४–द्युत–दीप्त होना
१८६–श्विता–सफेद करना,
ञिमिदा–ञिक्ष्विदा–चिकना होना
ञिष्विदा–पसीना आना और छोडना
रुच–चमकना व अच्छा लगना
घुट–घोटना, शुभ–शोभित होना
क्षुभ–लुब्ध होना, णभ–तुभ–हिंसा
स्रंसु–भ्रंसु–ध्वंसु–गिरना या नष्ट होना
ध्वंसु–चलना, स्रम्भु–विश्वास करना।
वृतु–वर्तना
१८७–दद–देना
१८८–त्रपूष्–लज्जित होना
१९०–श्रिञ्–सेवा करना
१९२–भृञ्–पालन करना। भरना
१९४–हृञ्–हरना, चोराना
१९५–धृञ्–धारण करना। णीञ्–लेजाना
डुपचष्–पकाना
१९६–भज–भजन करना,
यज–पूजा करना, संग करना, दान देना
१९९–वह–वहन करना

इति भ्वादिगणप्रकरणम् ॥१॥

## अथ अदादिगणप्रकरणम्।

२०३–अद–खाना
२०६–हन–मारना, चलना
२०९–यु–मिलना या अलग होना
२१०–या–पहुंचना, जाना
२११–वा–बहना, चुगली करना
२१२–भा–चमकना
ष्णा–स्नान करना, पवित्र होना
श्रा–पकाना सीजाना, द्रा–निन्दित गमन
प्सा–खाना, रा–देना
ला–लेना, दाप्–काटना
पा–रक्षा करना, ख्या–कहना
विद्–जानना
२१५–अस–होना
२१७–इण्–जाना
२१८–शीङ्–सोना
२२०–इङ्–पढ़ना
२२२–दुह–दुहना
२२६–दिह–बढना। लिह–चाटना
२२९–ब्रूञ्–बोलना
२३२–ऊर्णुञ्–ढकना

इत्यदादिधात्वर्थाः ॥ २ ॥

## अथ जुहोत्यादयः।

२३४–हु–होम करना, खाना या लेना
२३५–ञिभी–डरना
२३७–ह्री–लज्जित होना
पृ–पालन करना, पूरा करना

२४० – ओहाक् – छोड़ना
२४१ – माङ् – मापना, शब्द करना
२४२ – ओहाङ् – जाना
२४३ – डुभृञ् – धारण करना, पालना पोसना
२४४ – डुदाञ् – देना
२४६ – डुधाञ् – धारण करना, पालना पोषण करना
२४७ – णिजिर् – साफ करना, पोषण करना

इति जुहोत्यादयः ॥ ३ ॥

## अथ दिवादयः ।

२४९ – दिवु – खेलना, जय की इच्छा, लेन-देन का व्यवहार करना, चमकना, स्तुति करना, प्रसन्न होना, मदमत्त होना, सोना, इच्छा करना, जाना
२५० – षिवु – सीना । नृती – नाचना
त्रसी – घबराना, उद्विग्न होना
२५१ – शो – छीलना, तेजकरना
२५२ – छो – काटना । छाँगना
षो – नाश करना । दो – काटना
व्यध् – मारना ( वींधना )
पुष – पुष्ट करना
२५४ – शुष – सूखना । णश – नष्ट होना
२५५ – षूङ् – उत्पन्न करना
२५६ – दूङ् – दुःखी होना । दीङ् – क्षीण होना
२५७ – डीङ् – आकाश में उड़ना
पीङ् – पीना । माङ् – मापना
जनी – जन्मना प्रादुर्भाव
२५८ – दीपी – चमकना । पद – चलना
२५९ – विद – होना बुध – जानना
युध – लड़ना
२६० – सृज – छोड़ना, त्यागना
मृष – सहन करना
२६१ – णह – बाँधना

इति दिवादयः ॥ ४ ॥

## अथ स्वादयः ।

२६२ – षुञ् – स्नान कराना, सोमलता को कूटना, मद्य बनाना
चिञ् – इकट्ठा करना ( चुनना )
२६३ – स्तृञ् – ढकना
२६४ – धूञ् – काँपना

इति स्वादयः ॥ ५ ॥

## अथ तुदादयः ।

२६५ – तुद – कष्ट देना
णुद – प्रेरणा करना । भ्रस्ज – भूनना
२६७ – कृष – जोतना
२६९ – मिल – मिलना । मुच्लृ – छोड़ना
लुप्लृ – काटना । लोपकरना
२७० – विद्लृ – प्राप्त करना
षिच – सींचना । लिप – लीपना
२७१ – कृती – काटना । खिद – खिन्न होना
पिश – पीसना । ओव्रश्चू – काटना
२७२ – व्यच – ठगना
२७३ – उछि बीनना, चुनना
ऋच्छ – जाना । इन्द्रियों का शिथिल होना । जमना
उज्झ – त्यागना । लुभ – लुभाना
२७४ – तृप - तृम्फ – तृप्त होना
मृड – पृड – सुखी होना
शुन – जाना । इषु – इच्छा करना
कुट – कुटिलता करना
२७५ - पुट – मिलना, जोड़ना
स्फुट – खिलना, विकसित होना
स्फुर स्फुल – फरकना । णू – स्तुति करना
टुमस्जो – नहाना, मज्जन
२७७ – रुजो – तोड़ना, रोगीहोना
भुजो – टेढा होना । विश – प्रवेश करना
मृश – स्पर्श करना

षट्लृ-बिखरना, जाना, दुःखी होना
२७८ शट्लृ-छीलना। कॄ-बिखेरना
२७९-गॄ-निगलना
२८०-प्रच्छ-पूछना। मृङ्-मरना
२८१-पृङ्-उद्योग करना
जुषी-प्रीती तथा सेवा करना
ओविजी-डरना, कांपना उद्विग्न होना

इति तुदादयः ॥ ६ ॥

## अथ रुधादयः।

२८१-रुधिर्-रोकना
२८२-भिदिर्-भेदन करना। छिदिर्-तोड़ना
२८३-युजिर्-जोड़ना। रिचिर्-रिक्त होना
विचिर्-पृथक् होना। क्षुदिर्-पीसना
उच्छृदिर्-चमकना, खेलना
२८४-उतृदिर्-मारना, अनादर करना
कृती-कातना। तृह हिसि-हिंसा करना
२८६-उन्दी-भिगोना
२८७-अञ्जू-प्रकट करना, चिकना करना
सुन्दर होना, जाना
२८९-तञ्चू-संकुचित होना
ओविजी-भय करना, कांपना
शिष्लृ-विशेषित करना
२९१-पिष्लृ-पीसना। भञ्जो-तोड़ना
२९२-भुज-पालना, खाना
२९३-ञिइन्धी-चमकना, दीप्त होना
विद-विचार करना

इति रुधादिधात्वर्थाः ॥ ७ ॥

## अथ तनादयः।

२९४-तनु-विस्तार करना, फैलाना
२९६-षणु-दान देना
२९८-क्षणु क्षिणु-मारना
२९९-तृणु-खाना। डुकृञ्-करना
३०२-वनु-मांगना
३०३-मनु-जानना

इति तनादिधात्वर्थाः ॥ ८ ॥

## अथ क्र्यादयः।

३०४-डुक्रीञ्-अदल बदल करना,
खरीदना, बेचना
३०७-प्रीञ्-तृप्त करना, इच्छा करना
श्रीञ्-पकाना। मीञ्-मारना।
३०९-षिञ्-बांधना। स्कुञ्-उछलना, उठाना
३१०-स्तम्भु-स्तुम्भु-स्कम्भु-स्कुम्भु-रोकना
युञ्-बांधना। क्नू-शब्द करना
३११-दूञ्-मारना। दॄञ्-विदीर्ण करना।
पूञ्-पवित्र करना
३१२-लूञ्-काटना। स्तॄञ्-ढकना
३१३-कॄञ्-मारना
३१४-वॄञ्-स्वीकार करना
३१५-धूञ्-कंपाना
३१६-ग्रह-लेना
३१८-कुष-निकालना, खुरचना
३१९-अश-खाना। मुष-चुराना
३२०-ज्ञा-जानना
वृङ्-भजन करना, स्वीकार करना

इति क्र्यादयः ॥ ९ ॥

## अथ चुरादयः।

३२१-चुर-चोरी करना
३२२-कथ-कहना
३२३-गण-गिनना

इति चुरादयः ॥ १० ॥

## अथ ण्यन्तप्रक्रिया।

३२५-भावयति-होने के लिये प्रेरणा करता है।
स्थापयति-ठहराता है
३२६-घटयति-चेष्टा करवाता है
ज्ञपयति-बताता है

इति ण्यन्तप्रक्रिया।

### अथ सन्नन्तप्रक्रिया ।

३२७-पिपठिषति-पढ़ने की इच्छा करता है
जिघत्सति-खाना चाहता है
३२८-चिकीर्षति-करना चाहता है
बुभूषति-होना चाहता है

इति सन्नन्तप्रक्रिया ।

### अथ यङन्तप्रक्रिया ।

३२९-बोभूयते-बारंबार या अच्छी तरह से होता है । वावद्यते-टेढ़ा चलता है
३३०-बरीवृत्यते-बार बार या अच्छी तरह से होता है ।
३३१-नरीनृत्यते-बार बार व अच्छी तरह नाचता है
जरीगृह्यते-बारं बार वा अच्छी तरह से ग्रहण करता है

इति यङन्तप्रक्रिया ।

### अथ यङ्लुगन्तप्रक्रिया ।

३३२-बोभवीति-बारं बार वा अच्छी तरह से होता है

इति यङ्लुगन्तप्रक्रिया ।

### अथ नामधातुप्रकरणम् ।

३३७-पुत्रीयति-अपने लिए पुत्र चाहता है
राजीयति-अपने लिए राजा चाहता है
वाच्यति-गीर्यति-अपने लिए वाणी चाहता है
पूर्यति-अपने लिए नगरी चाहता है
दिव्यति-अपने लिये स्वर्ग चाहता है
३३९ समिध्यति-अपने लिये समिधा ( लकड़ी ) चाहता है ।
पुत्रीयति-अपने लिये पुत्र चाहता है
पुत्रकाम्यति-अपने लिये पुत्र चाहता है
विष्णूयति द्विजं-ब्राह्मण को विष्णु की तरह मानता है
३४०-स्वति-अपने समान व धनी की तरह मानता है
राजानति-राजा के समान मानता है
३४१-पथीनति-मार्ग की तरह मानता है
कष्टायते-पाप करना चाहता है
शब्दायते-शब्द करता है ।
घटयति-घड़ा बनाता है

इति नामधातुप्रकरणम् ।

### अथ कण्ड्वादयः ।

३४२-कण्डूयति-खुजलाता है

इति कण्ड्वादयः ।

### अथात्मनेपदप्रक्रिया ।

३४३-व्यतिलुनीते-अन्य के योग्य काटने को स्वयं काटता है
व्यतिगच्छन्ति-दूसरों के योग्य गमन को दूसरे करते हैं
व्यतिघ्नन्ति-अन्य के योग्य हनन को अन्य करते हैं
निविशते-प्रविष्ट होता है,
परिक्रीणीते-खरीदता है
विक्रीणीते-बेचता है,
अवक्रीणीते-खरीदता है
विजयते-विजय पाता है, पराजयते-हारता है
सन्तिष्ठते-ठहरता है,
अवतिष्ठते-ठहरता है । बैठता है
प्रतिष्ठते-जाता है, बैठता है,
वितिष्ठते-बैठता है
शतमपजानीते-सौ रुपयों को छिपाता है
सर्पिषो जानीते-घी से प्रवृत्त होता है
धर्ममुच्चरते-धर्म को उल्लङ्घन करता है
३४४-रथेन सञ्चरते-रथ से घूमता है
दास्या संयच्छते-दासी को देता है
एदिधिषते-बढ़ना चाहता है

विविविक्षते-प्रविष्ट होना चाहता है

श्येनो वर्त्तिकामुत्कुरुते-बाज चिड़िया पर झपटता है, उत्कुरुते-चुगुली करता है

हरिमुपकुरुते-हरि की सेवा करता है

३४५-परदारान् प्रकुरुते-परस्त्री में सहसा प्रवृत्त होता है बलात्कार करता है

एधो दकस्योपस्कुरुते-काष्ठ जल का गुणग्रहण करता है

कथाः प्रकुरुते-कथा कहता है

शतं प्रकुरुते-सौ रुपया धर्मार्थं लगाता है

कटं करोति-चटाई बनाता है

ओदनं भुङ्क्ते-भात खाता है

महीं भुनक्ति-पृथ्वी की रक्षा करता है

इत्यात्मनेपदप्रक्रिया।

## अथ परस्मैपदप्रक्रिया ।

अनुकरोति-नकल करता है

पराकरोति-दूर करता है

अभिक्षिपति-फेंकता है

प्रवहति-बहता है। परिमृषति-सहन करता है

विरमति-हटता है

यज्ञदत्तमुपरमति-यज्ञदत्त को हटाता है

इति परस्मैपदप्रक्रिया।

## अथ भावकर्मप्रक्रिया ।

३४६-भूयते-होना

अनुभूयते-अनुभव किया जाता है

३४९-भाव्यते-भावित किया जाता है

३५१बुभूष्यते-होने के लिये इच्छा की जाती है

३५२-बोभूय्यते-बार बार हुआ जाता है

स्तूयते-स्तुति किया जाता है

३५३-अर्यते-प्राप्त किया जाता है

स्मर्यते-स्मरण किया जाता है

३५४-स्रस्यते-गिरना। नन्द्यते-आनन्दित होना

इज्यते-यज्ञ किया जाता है

तायते-विस्तार किया जाता है

अनुतप्यते-पश्चात्ताप किया जाता है

३५५-दीयते-दिया जाता है

धीयते-धारण किया जाता है

भज्यते-भजन किया जाता है

३५६-लभ्यते-प्राप्त किया जाता है

इति भावकर्मप्रक्रिया।

## अथ कर्मकर्तृप्रक्रिया ।

३५७-पच्यते-पकता है, भिद्यते-टूटता है

इति कर्मकर्तृप्रक्रिया।

## अथ लकारार्थप्रक्रिया ।

३५८-स्मरसि कृष्ण ? गोकुले वत्स्यामः-हे कृष्ण ! क्या आपको स्मरण है कि हम लोग गोकुल में रहते थे।

अभिजानासि कृष्ण ! यद्वनेऽभु-ञ्ज्महि-हे कृष्ण ! याद है ? कि वनमें हम लोग खाया करते थे

यजति स्म युधिष्ठिरः—युधिष्ठिर ने यज्ञ किया

कदाऽऽगतोऽसि—कब आये ?

अयमागच्छामि-अयमागमं वा—यह आ ही रहा हूं

कदा गमिष्यसि-कब जाओगे ?

एष गच्छामि गमिष्यामि वा-यह (अभी) जा रहा हूं

३५९-कृष्णं नमेच्चेत्सुखं यायात्-यदि कृष्ण को नमस्कार करेगा तो सुखी होगा। कृष्णं ंस्यति चेत्सुखं यास्यति—श्रीकृष्ण को नमस्कार करेगा तो सुख पाएगा

हन्तीति पलायते-मारता है इस लिये भागता है

भजेत-यज्ञ करे। इह भुञ्जीत-यहां खावे

इहाऽऽसीत भवान्-( इच्छा हो तो ) आप

यहां बैठिये

पुत्रमध्यापयेद्भवान्-आप मेरे पुत्र को पढ़ाइये

किं भो ! वेदमधीयीय, उत तर्कम्-कहिये क्या मैं वेद पढ़ूं या तर्क ?

भो ! भोजनं लभेय-भाई ! भोजन मिले

इति लकारार्थप्रक्रिया ।

## अथ कृत्यप्रक्रिया ।

३६०-एधितव्यम्—बढ़ने योग्य है

एधनीयम्—बढ़ना चाहिये

चेतव्यः-चयनीयः-सञ्चय करना चाहिए

३६१-पचेलिमाः-पकाने योग्य

भिदेलिमाः-भेदन करने योग्य

स्नानीयम्-साबुन ( उबटन )

दानीयः-दान देने योग्य ब्राह्मण

चेयम्-चुनने योग्य । देयम्-देने योग्य ।

ग्लेयम्-ग्लानि के योग्य ।

शप्यम्-शाप देने योग्य

लभ्यम्-पाने लायक । इत्यः-जाने योग्य

स्तुत्यः-स्तुति योग्य

३६२-शिष्यः-शिक्षा देने योग्य ( छात्र )

वृत्यः-वर्तने योग्य । आदृत्यः-आदरणार्ह

जुष्यः-सेवनीय । मृज्यः-साफ करने योग्य

कार्यम्-कर्त्तव्य काम । हार्यम्-हरणीय

धार्यम्-धारण के योग्य

३६३-मार्ग्यः-शोधनीय

भोज्यम्-खाने लायक ।

भोग्यम्-भोगने योग्य

इति कृत्यप्रक्रिया ।

## अथ पूर्वकृदन्तम्

३६३-कारकः-करने वाला । कर्ता-कर्ता ।

३६४ नन्दनः-आनन्द करने वाला

ग्राही-ग्रहण करने वाला । स्थायी-स्थिर

मन्त्री-मन्त्री, सलाह देने वाला

बुधः-पण्डित ।

३६५-कृशः-कृश । ज्ञः-जाननेवाला

प्रियः-प्यारा । किरः-बखेरनेवाला

प्राज्ञः-पण्डित । सुबलः-जल्दी घबड़ानेवाला

गृहम्-घर । कुम्भकारः-कुम्हार

३६६-गोदः-गौ देनेवाला ।

धनदः-धन देनेवाला

कम्बलदः-कम्बल देनेवाला ।

गोसन्दायः-गो देनेवाला

मूलविभुजः-जड़को उखाड़नेवाला रथ

महीध्रः, कुध्रः-पर्वत

कुरुचरः-कुरु देश में घूमनेवाला

भिक्षाचरः-भिक्षु । सेनाचरः-सैनिक

आदायचरः-लेकर घूमनेवाला

३६७-यशस्करी-यशदेनेवाली विद्या

श्राद्धकरः-श्राद्ध करनेवाला

वचनकरः-आज्ञाकारी ।

जनमेजयः-जनमेजय राजा

प्रियंवदः-मीठा बोलनेवाला ।

३६८-वशंवदः-आज्ञाकारी

पण्डितम्मन्यः, पण्डितमानी-अपने को पण्डित मानने वाला

सुशर्मा-अच्छा मारनेवाला

प्रातरित्वा-प्रातःकाल जानेवाला

३६९ विजावा-जन्मनेवाला

अवावा-दूर करनेवाली ब्राह्मणी

रोट्, रेट्-हिंसक

सुगण्-गणित का अच्छा ज्ञाता

उखास्रत्-बटुए से गिरा हुआ

पर्णध्वत्-पत्ते से गिरा हुआ

वाहभ्रट्-घोड़े पर से गिरा

३७० उष्णभोजी-गर्म गर्म खाने वाला

दर्शनीयमानी-अपने को सुन्दर मानने वाला

कालीम्मन्या–अपने को काली मानने वाली स्त्री
सोमयाजी–सोम यज्ञ करने वाला
अग्निष्टोमयाजी–अग्निष्टोम यज्ञ करने वाला
३७१ पारदृश्वा–पारदर्शी, पारज्ञत
राजयुध्वा–राजा को जिसने युद्ध कराया
राजकृत्वा–राजा बनाने वाला
सहयुध्वा–साथ युद्ध करने वाला
सहकृत्वा–साथ करने वाला
३७२ सरसिजम्, सरोजम्–कमल
प्रजा–सन्तान या प्रजा
स्नातम्–स्नान किया
स्तुतः–स्तुति किया गया। कृतवान्–किया
३७३ शीर्णः–बखरा गया। भिन्नः–भिन्न
छिन्नः–काटा गया
द्राणः–टेढा मेढा गया। ग्लानः–उदास
लूनः–कटा। जीनः–वृद्ध। भुग्नः-टेढा
३७४ उच्छूनः–फूला हुआ
शुष्कः–सूखा। पक्वः–पका
क्षामः–कृश। भावितः–छौंक दिया हुआ
भावितवान्–भावना दिया। दृढः–दृढ
३७५ हितम्–रखा हुआ। दत्तः–दिया
चक्राणः–करने वाला। जगन्वान्–जाने वाला
३७६ पचन्तं-पचमानम्–पकाते हुए
सन् द्विजः–श्रेष्ठ ब्राह्मण। विद्वन्-विद्वान्
३७७ करिष्यन्तं करिष्यमाणम्–करने वाले को
कर्ता–करने वाला
३७८ जल्पाकः–अधिक बोलने वाला
भिक्षाकः–भिक्षु। कुट्टाकः–कूटने वाला
लुण्टाकः–लूटने वाला, डाकू
वराकः–बेचारा। वराकी–बेचारी
चिकीर्षुः–करने की इच्छा वाला
आशंसुः–आशा करने वाला। भिक्षुः–संन्यासी

३७९ विभ्राट्–अधिक शोभावाला
भाः–कान्ति। धूः–धुरी। विद्युत्–बिजली
ऊर्क्–बल वा तेज। पूः–पुरी
जूः–रोगी, ज्वरी
३८०–ग्रावस्तुत्–पत्थर की स्तुति करने वाला
प्राट्–प्रश्नकर्ता
आयतस्तूः–आयत की स्तुति करने वाला
कटप्रूः–चटाई बनाने वाला
श्रीः–लक्ष्मी। दात्रम्–दातली।
नेत्रम्–नेता, रस्सी, नेत्र। शस्त्रम्–आयुध
योत्रं योक्त्रम्–जोता,
स्तोत्रम्–स्तुति का साधन
तोत्रम्–चाबुक। सेत्रम्–बांधने की रस्सी
सेक्त्रम्–सेचन पात्र। मेढ्रम्–लिङ्ग
पत्त्रम्–वाहन, पत्ता
३८१- दंष्ट्रा–जाड, दाढ़, नध्री–चर्मरज्जु
अरित्रम्–नौका चलाने का दण्ड
लवित्रम्–काटने का साधन
धवित्रम् मृगचर्मनिर्मित पंखा
सवित्रम्–प्रसवसाधन यन्त्रविशेष
खनित्रम्–खननसाधन, खनती
सहित्रम्–रस निकालनेका साँचा
चरित्रम्–चरित्र। पवित्रम्–पवित्री

इति पूर्वकृदन्तम्।

## अथोणादयः।

३८२–कारुः–शिल्पी, कारीगर। वायुः–वायु
पायुः–गुदा। जायुः–औषध
मायुः–पित्त। स्वादुः–स्वादु। आशु–शीघ्र

इत्युणादयः।

## अथोत्तरकृदन्तम्।

३८३–द्रष्टुम्–देखने के लिये
३८४-दर्शकः–देखेगा इसलिये
भोक्तुम्–खाने के लिये। पाकः–पाक

### समिधिता—

समिधमात्मानमिच्छति इत्यर्थे "सुप आत्मनः क्यच्" इति क्यचि धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि कचयोर्लोपे "नः क्ये" इति नियमेन पदत्वाभावात् जश्त्वाभावे 'समिध्य' इति क्यजन्तस्य धातुत्वात् लुटि तिपि "स्यतासी लृलुटोः" इति तासौ 'समिध् य तास् ति' इति जाते "लुटः प्रथमस्य डारौ रसः" इति तिपो डात्वे डित्वसामर्थ्याद् अभस्यापि टेर्लोपे तासः आर्धधातुकत्वादिटि 'समिध् य इ ता' इति जाते "क्यस्य विभाषा" इति विभाषया यलोपे प्राप्ते "अलोन्त्यस्य" इति परिभाषां प्रबाध्य "आदेः परस्य" इत्यनेन यमात्रस्य लोपे "अतो लोपः" इत्यनेन अकारस्य च लोपे 'समिधिता' इति । क्यचो लोपाभावे 'समिध्यिता' इति भवति ।

### आरिता—

'ऋ गतौ' इति धातोः भावकर्मणि लुटि "भावकर्मणोः" इत्यात्मनेपदे तप्रत्यये "स्यतासी लृलुटोः" इति । तासि प्रत्यये "लुटः प्रथमस्य डारौ रसः" इत्यनेन तस्य डात्वे "डित्वसामर्थ्याद् अभस्यापि टेर्लोपः" इति तासष्टेर्लोपे 'ऋ ता' इति जाते "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इति सूत्रे उपदेशग्रहणात् इटि चिण्वद्भावे च जाते "अचो ञ्णिति" इति वृद्धौ रपरत्वे 'आरिता' इति ।

### पच्यते फलम्—

'कालः फलं पचति' इत्यत्र यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते, तदा कर्मण एव कर्तृत्वात् पच्धातुरकर्मकः । तस्मात् "लः कर्मणि च भावे चाऽकर्मकेभ्यः" इति कर्तृरूपेऽर्थे वर्तमानक्रियायां "वर्तमाने लट्" इति लटि "कर्मवत्कर्मणा तुल्यक्रियः" इति कर्मवद्भावात् आत्मनेपदे तप्रत्यये "सार्वधातुके यक्" इति यकि अनुबन्धलोपे "टित आत्मनेपदानां टेरे" इति टेरेत्वे 'पच्यते' इति कर्तरि लकारे कर्तुरुक्तत्वात् कर्तृवाचकफलशब्दात् प्रथमा ।

### उच्छूनः—

'टुओश्वि गतिवृद्ध्योः' इति धातुः । अत्र टुरोकारश्चेत् । ततश्च उदुपसर्गक-श्विधातोः वृद्ध्यर्थे "निष्ठा" इति सूत्रेण निष्ठाप्रत्यये प्राप्ते, का नाम निष्ठा इति जिज्ञासायां "क्तक्तवतू निष्ठा" इति निष्ठासंज्ञा क्तक्तवतोरिति उभयोः प्राप्तौ, "तयोरेव कृत्यक्तखलर्थाः" इति क्तप्रत्यये अनुबन्धलोपे 'उत् श्वि त' इति स्थिते 'ओदितश्च' इत्यनेन तकारस्य नत्वे "पूर्वत्राऽसिद्धम्" इति तस्यासिद्धत्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे 'उत् शु न' इति जाते "हलः" इत्यनेन दीर्घे "श्वीदितो निष्ठायाम्" इति इडभावे "शश्छोऽटि" इति छत्वे उदः तकारस्य श्चुत्वेन चकारे कृदन्तत्वात् सौ अनुबन्धलोपे सकारस्य रुत्वे विसर्गे 'उच्छूनः' इति ।

---

# लघुकौमुद्यां प्रश्नाः ।

## १९४६

१ अ-श-वर्णयोर्बाह्याभ्यन्तरप्रयत्नान् लिखित्वा, "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रस्य हिन्द्यामर्थं प्रयोजनञ्च लिखत । १०

अथवा

"तुल्यास्यप्रयत्नं सवर्णम्", "अणुदित्सवर्णस्ये"ति च सूत्रं किं किं कार्यं कुरुतः ।

२ विष्णो-इति, वाक-हरिः, भोस्-देवाः, हरिस्-राजते, सस्-शम्भुः, अत्र यथेष्टं त्रयाणां सिद्धिः कर्तव्या । १५

३ रामाय, विश्वपः, सखा, तिसृणाम्, पराभ्याम्, यूनः, प्रतीचः, अमुष्यै, सुपुमांसि, एषु स्वेच्छया चतुरः प्रयोगान् संसाध्य, पिधानम्, उदेतोः, इत्यत्र किं किं कार्यमिति लिखत । १८

४ त्रि, बहुश्रेयसी-शब्दयोः आमि, मति, दधि, पिपठिष-शब्दानां ङिविभक्तौ, वह्, तनु, शीङ, धूञ-धातूनाञ्च लुङि प्रथमपुरुषैकवचने रूपाणि लेख्यानि । १०

५ भवेत्, एधाञ्चकृषे, अगोप्ताम्, समङ कथ, रुधः, अतत, अचकथत्, एषु यथेष्टं चतुर्णां सिद्धिं प्रदर्श्य "नेर्गदे"ति समस्तसूत्रं लिखत । १५

६ अवीभवत्, जिघत्सति, नरीनृत्यते, इदामति, रथेन संचरते, अभाजि, यजति स्म युधिष्ठिरः, एषु केषामपि चतुर्णां साधनं कृत्वा यशस्करी, सन् द्विजः, चिकर्षा, देवित्वा, एषां द्वयोरेव कृत्प्रत्ययार्थप्रदर्शनपूर्वं सिद्धिः कार्या । १५

७ मातुः स्मरति, अध्यात्मम्, निष्कौशाम्बिः, राजन्यः, पटीयान्, मत्सी, एषु विशेषकार्याणि, विशेषसूत्रैर्दर्शनीयानि । १५

८ हरित, यवन, श्वशुर, आचार्य-शब्दानां द्वयोरेव कयाश्चित् स्त्रियां प्रथमैकवचने रूपाणि लिखत । २

---

## लघुकौमुद्यां प्रश्नाः ।

### १९५७

१ (क) च, प-वर्णयोः प्रत्येकं स्थानं बाह्यप्रयत्नम् आभ्यन्तरप्रयत्नञ्च लिखत । ६

(ख) अलोऽन्त्यस्य, ङिति ह्रस्वश्च, हल्न्तेर्जः, तस्य समूहः, एषु त्रयाणां सूत्राणां हिन्दीभाषायामर्थान् लिखत । ६

२ कृष्णर्द्धिः, गवाग्रम्, ब्रह्मर्षिः, एतन् मुरारिः, सच्छम्भुः, पुंस्कोकिलः, मनोरथः—एषु केषाञ्चित् पञ्चानां रूपाणां सिद्धिं कुरुत १५

३ रामाणाम्, पितरौ, स्त्रीम्, प्रशाम्याम्, विश्वौहः, अमुना, गिरः, धनूंषि एषु कानिचित् पञ्च रूपाणि साधयत । १५

४ आतीत्, चीयात्, भ्रियात्, दुदोह, देहि, जायते, चिकाय, गिलति, तृणेढि, मुषाण—एषु पञ्च रूपाणि साधयत । १५

५ ज्ञपयति, बुभूषति, वाव्रज्यते, पुत्रीयति, निविशते, विरमति, अभाजि, शिष्यः, जनमेजयः, शुष्कः, लवः, लिखित्वा, कटे आस्ते—एषां मध्ये पञ्चसु प्रयोगेषु विशेषसूत्रैर्विशेषकार्याणि प्रदर्शयत । १५

६ उपकृष्णम्, चोरभयम्, परमराजः, चित्रगुः, शिवकेशवौ, गार्ग्यः, पाशुपतम्, कौशाम्बी, त्वदीयः, कुमारी, युवतिः—एषु कांश्चित् पञ्च प्रयोगान् साधयत । १५

७ युष्मच्छब्दस्य सर्वासु विभक्तिषु कृधातोर्लुङि च रूपाणि प्रदर्शयत । १०

---

# लघुकौमुद्यां प्रश्नाः

## १९४८

१ (क) त—वर्णयोः स्थानं बाह्यप्रयत्नमाभ्यन्तरप्रयत्नञ्च लिखत ६

(ख) आदिरन्त्येन सहेता, कृन्मेजन्तः, ई च गणः, यञो ऽचि च, लट् स्मे, ज्य च—एषु त्रयाणां सूत्राणामर्थान् लिखत। ६

२ गव्यूतिः, प्रार्च्छति, चक्र्यत्र, उत्थानम्, षट्त्सन्तः, नॄँ पाहि, शिवो ऽर्च्यः। एषु केषाञ्चित् पञ्चानां रूपाणां सिद्धिं कुरुत। १५

३ सर्वेषाम्, नृणाम्, मत्यै, दध्ना, अनड्वान्, मघोनः, उपानत्, ददन्ति—एषु कानिचित् पञ्च रूपाणि साधयत। १५

४ अभूवन्, अगमत्, अचीकमत, अवधीत्, पप्रतुः, नर्तिष्यति, सुनोति, उपस्किरति, शिण्ढि, कुर्वन्ति—एषु षड् रूपाणि साधयत। १५

५ अतिष्ठिपत्, चिकीर्षति, बोभूयते, कष्टायते, विजयते, अनुकरोति, अलाभि, चेयम्, भिन्नः, जल्पाकः, चयः, भोजं भोजम्, विप्राय गां ददाति—एषां मध्ये पञ्चसु प्रयोगेषु विशेषसूत्रैर्विशेषकार्याणि प्रदर्शयत। ५१

६ उपशरदम्, राजपुरुषः, अर्धर्चम्, द्विमूर्धः, पितरौ, दाक्षिः, नड्वलः, आस्माकीनः, शरण्यः, मृद्वी, चन्द्रमुखी, युवतिः—एषु काँश्चित् षट् प्रयोगान् साधयत। १५

७ अदस्-शब्दस्य सर्वलिङ्गेषु सर्वासु विभक्तिषु च रूपाणि प्रदर्श्य क्रीधातोरर्थं लिटि रूपाणि च लिखत। १०

## लघुकौमुद्यां प्रश्नाः
## १९४९

१ (क) ख, ह—वर्णयोः स्थानं वाह्यप्रयत्नमाभ्यन्तरप्रयत्नञ्च लिखत । ६

(ख) तुल्यास्यप्रयत्नं सवर्णम्, अव्ययादाप्सुपः, ञितां ह्रस्वः, यङो वा, न यदि, तरप्तमपौ घः, प्रज्ञादिभ्यश्च—एषु त्रयाणामर्थांल्लिखत । ६

२ गव्यम्,शिवेहि, विष्णो इति, तल्लयः, तच्छिवः, लक्ष्मीच्छाया, मनोरथः एषु केषाञ्चित् पञ्चानां रूपाणां सिद्धिं कुरुत । १५

३ रामाणाम्, सखा, पितरौ, स्त्रियम्, ज्ञानानि, विश्वौहः, अमुना, अमुष्यै, दीव्यन्ती—एषु कानिचित् पञ्च रूपाणि साधयत १५

४ भवानि, अगोपीत्, पेधिष्ट, अवोचत्, नेनिजानि, अदीपि, अधावीत्, असिचत्, हिनस्ति, अतत, व्यष्टभत्, गणयति—एषु षडरूपाणि साधयत । १५

५ बुभूषति, नरीनृत्यते, पुत्रीयति, निविशते, प्रवहति, भूयते, शिष्यः, पण्डितं मन्यः, लवित्रम्, पचः, हित्वा, कटे आस्ते—एषां मध्ये षटसु प्रयोगेषु विशेषसूत्रैर्विशेषकार्याणि प्रदर्शयत १५

६ पञ्चगङ्गम्, पञ्चगवम्, परमराजः, अन्तर्लोमः, शिवकेशवौ, वैनतेयः, वैयाकरणः, आधिदैविकम्, सार्वभौमः, कुमारी, इन्द्राणी श्वश्रूः एषु कांश्चित् षट् प्रयोगान् साधयत १५

७ 'मघवन्'-शब्दस्य सर्वासु विभक्तिषु रूपाणि प्रदर्श्य, यज-धातोरर्थं लुङि च रूपाणि लिखत ।

